कल्याय नमः । कल्पकर्त्रे । कल्याणाद्रिधनुर्धराय । कल्परक्षणतत्पराय । कल्पाकल्पाकृतये । कल्पनाशनाय । कल्पकल्पकाय । कल्याणरूपाय । कल्याणसंश्रयाय । कलाधीशाय । कल्पनारहिताय । कल्पराजाय । कलयतां कालाय । कलिविवर्जिताय । कलिकल्मषदोषघ्ने । कल्पहृते । कल्पहारकाय । कलंकवते । कलंकरहिताय । कलानिधये नमः । १४६०

कलाकुशलाय नमः । कल्पान्तभैरवाय । कलुषविदूराय । कल्याणदाय । कल्याणमन्दिराय । कालकालाय । कालाभ्रकान्तिगरलांकितकन्धराय । कालयोगिने । कालकण्ठाय । कालज्ञानिने । कालभक्षाय । कालाय । कालकटंकटाय । कालदृशे । कालप्रमाथिने । कालरूपाय । कालब्रह्मपितामहाय । कालपूजिताय । कालानां प्रभवे । कालवेगाय नमः । १४८०

कालाग्निरुद्ररूपाय नमः । कालिकाकारणाय । कालकुठाराय । कालार्यादिसप्तमूर्तिप्रतिपादकदक्षिणवदनाय । कालारये । कालकूट विषादनाय । कालाग्निरुद्राय । कालाग्निनिभाय । कालानलप्रभाय । कालहन्त्रे । कालकूटविषाशिने । कालरूपिणे । कालचक्रप्रवर्तिने । कालग्रासाय । कालान्तकाय । कालात्पराय । कालरुद्राय । कालाग्नये । कालभैरवाय । कालदहनाय नमः । १५००

कालकलातिगाय नमः । कालकूटलसत्कण्ठाय । कालक्षयंकराय । कालातीताय । कालस्थाय । कालकूटप्रभाजालकलंकीकृतकन्धराय । कालधुरन्धराय । कालकृतां निधये । कालिका वरदाय । कालिकान्तिलसद्गलाय । कालकूटभयापहाय । कालाधिपतये । कालरूपधराय । कालदण्डधराय । कीलानेकसहस्रसंकुल शिखिस्तम्भ स्वरूपाय । कीलालावनिपावकानिल

नभश्चन्द्रार्कयज्वाकृतये। कुलुंचेशाय। कुलुंचानां पतये। कुलेशाय। कुलालेभ्यो नमः। १५२०

कुलशेखरभूपानां कुलदैवताय नमः । कुलगिरिसर्वस्वकवचितार्धाङ्गाय । कूलहारिणे । कूलकर्त्रे । कूल्याय। कैलासप्रियाय। कैलासाचलवासाय। कैलासवासिने। कैलासशृङ्गसंकाशमहोक्षवरवाहनाय। कैलासपतये। कैलासशिखरावासाय। कैलासगिरिशायिने । कैलासकल्प वृषभवाहनाय । कोलाहलमहोदारशरभाय। कोलाच्छच्छदमाधव सुरज्येष्ठाति दूरांघ्रिकाय। कवये। कव्यवाहनाय। कवचिने। कव्याय। कवाटकठिनोरस्काय नमः। १५४०

काव्याय नमः । कावेरीनर्मदासङ्गमे ओंकाराय । कुवलय सहस्पर्धिगलाय। कोविदाय। केवलाय। कैवल्याय। कैवल्यदाय। कैवल्यदायिने। कैवल्यदान निरताय। कैवर्ताय। कैवल्य परमानन्द दायकाय । काश्यपाय । काशीवासलोकपुण्यपाप शोधकाय । काशीविशुद्धदेहाय । काशीनाथाय । काश्यपदीक्षागुरुभूतोत्तरवदनाय। काशीशानाय। काशिकापुराधिनाथाय। काशीपतये। किशोरचन्द्र शेखराय नमः । १५६०

किंशिलाय नमः । कुशाचूडामणये । कुशलाय । कुशलागमाय। कृशानवे । कृशानुरेतसे । केशवाय । केशवब्रह्मसंग्रामवारकाय । केशवसेविताय। कौशिकदीक्षागुर्वगस्त्यादि दीक्षागुरुभूतोर्ध्व वदनाय । कौशिकाय। कौशिकदीक्षागुरुभूतपश्चिमवदनाय। कौशिकसंप्रदायज्ञाय। कौशाय। काष्ठानांप्रभवे। क्लिष्ट भक्तेष्टदायिने । कृष्णाय । कृष्णपिङ्गलाय । कृष्णवर्णाय । कृष्णवर्मिणे नमः। १५८०

कृष्णस्य जयदात्रे नमः । कृष्णानन्द स्वरूपिणे । कृष्णचर्मधराय । कृष्णकुञ्चितमूर्धजाय । कृष्णाजिनोत्तरीयाय । कृष्णाभिरताय । कस्तूरीविसलत्फालाय । कस्तूरीतिलकाय । कुसुमामोदाय । कुसुमाष्टकधराय । काहलिने । कक्षीशाय । कक्षाणांपतये । कक्ष्याय । कक्ष्यबन्धाप्तसुकरकटीतटविराजिताय । कांक्षितार्थसुरद्रुमाय । कुक्षिस्थाशेषभुवनाय नमः । १५९७

खकारस्य गरुडो देवता । पापविनाशने विनियोगः

खकाराय नमः । खगाय । खगेश्वराय नमः । १६००

खेचराय नमः । खचन्द्रकलाधराय । खचराय । खज्योतिषे । खट्वाङ्गिने । खट्वाङ्गहस्ताय । खट्वाङ्गधारिणे । खट्वाङ्गखड्ग-चर्मचक्राद्यायुधभीषणकराय । खट्वाङ्गपाणये । खेटकाय । खंडपरशवे । खड्गिने । खंडिताशेषभुवनाय । खड्गनाथाय । खड्गभासिताय । ख्याताय । खेदरहिताय । खद्योताय । खरशूलाय । खरान्तकृते नमः । १६२०

खल्याय नमः । खेलनाय नमः । १६२२

गकारस्य गणपतिर्देवता । राज्यसिद्धौ विनियोगः

गकाररूपाय नमः । गोकर्णाय । गगनरूपाय । गगनस्थाय । गगनेशाय । गगनगम्भीराय । गगनसमरूपाय । गंगाधराय । गङ्गातुङ्गतरङ्गरञ्जितजटाभाराय । गङ्गाप्लवोदकाय । गङ्गाजलाप्लावितकेशदेशाय । गङ्गासलिलधराय । गङ्गा-सम्मार्जितांहसे । गङ्गाधारिणे । गङ्गाजूटाय । गङ्गास्नानप्रियाय । गङ्गास्नानफलप्रदाय । गङ्गाभासितमौलये नमः । १६४०

गङ्गाचन्द्राकलाधराय नमः । गाङ्गेयाभरण प्रीताय । गाङ्गेयपरिपूजिताय । गोघ्नाय । गोघ्नघ्नाय । गोचराय ।

गोचर्मवसनाय। गजचर्माम्बराय । गजारये । गजेन्द्रगमनाय । गजेन्द्राणां ऐरावताय। गजासुरारये। गजाजिनावृताय। गजघ्ने। गजदैत्याजिनाम्बराय । गजचर्मपरीधानाय । गजाननप्रियाय । गजारूढाय । गजचर्मिणे । गण्डस्फुरद्भुजगकुण्डल मण्डिताय नमः । १६६०

गजराज विमर्दनाय नमः । गौडपाद निषेविताय । गाण्डीवधन्विने। गाण्डीविने। गुडान्नप्रीत मानसाय। गुडाकेश प्रपूजिताय । गाढाय । गूढस्वरूपाय । गूढमहाव्रताय । गूढपाद प्रियाय। गूढाय। गूढगुल्फाय। गूढतनवे। गूढजत्रवे। गणाय। गणकर्त्रे। गणपतये। गणाधिपतये। गणेश्वराय। गणनाथाय नमः। १६८०

गणकार्याय नमः। गणराशये। गणाधिपाय। गणकाराय। गणकोटिसमन्विताय । गणाधिपनिषेविताय । गणाधिप-स्वरूपाय। गणप्रियंकराय । गणौषधाय । गणनित्यवृताय । गणानां विनायकाय। गणनाथयूथ समावृताय । गणेशादि प्रपूजिताय। गणनाथसहोदरप्रियाय। गणेशाय। गणेशकुमार-वन्द्याय। गणपाय। गणानुयातमार्गाय। गणगाय। गणवृन्दरताय नमः। १७००

गणगोचराय नमः । गणाध्यक्षाय । गणानन्दपात्राय । गणगीताय । गाणापत्यागमप्रियाय । गुणाय । गुणात्मने । गुणाकराय । गुणकारिणे । गुणवते । गुणविच्छ्रेष्ठाय । गुणवित्प्रियाय। गुणाधाराय । गुणागाराय । गुणकृते । गुणोत्तमाय। गुणनाशकाय। गुणग्राहिणे। गुणत्रयस्वरूपाय। गुणाधिकाय नमः। १७२०

गुणातीताय नमः । गुणैरप्रमिताय । गुण्याय । गुणाष्टकप्रदाय । गुणिने । गुणत्रयोपरिस्थाय । गुणज्ञाय । गुणबीजाय । गुणात्मकाय । गुणीशाय । गुणिबीजाय । गुणिनां गुरवे । गुणवतां श्रेष्ठाय । गुणेश्वराय । गुणत्रयात्मकाय । गुणत्रय विभाविताय । गुणज्ञेयाय । गुणध्येयाय । गुणाध्यक्षाय । गुणगोचराय नमः । १७४०

गुणोज्ज्वलाय नमः । गुणबुद्धिबलालयाय । गुणत्रयात्मक-मायाशबलत्व प्रकाशकाय । गुणनामसुनृत्यकाय । गतये । गतागताय । गतिमतां श्रेष्ठाय । गतिगम्याय । गीतशीलाय । गीतपादाय । गीतप्रियाय । गीतागममूलदेशिकाय । गोत्रिणे । गोत्राणां पतये । गोत्राणतत्पराय । गौतमाय । गौतमदीक्षा-गुरुभूतपूर्ववदनाय । गौतमीतीर्थे त्रियम्बकाय । गदाहस्ताय । गदान्तकृते नमः । १७६०

गदाद्यायुधसम्पन्नाय नमः । गोदावरीप्रियाय । गन्धाघ्राण-कारिणे । गन्धर्वाय । गन्धपालिने । गन्धिने । गन्धर्वाणां पतये । गन्धर्वसेव्याय । गन्धर्वकुलभूषणाय । गन्धर्वगानसुप्रीताय । गन्धर्वाप्सरसां प्रियाय । गन्ध माल्यविभूषिताय । गन्धपतये । गाधाप्रियाय । गाधिपूजिताय । गान्धाराय । गन्धसाराभिषेक-प्रियाय । गोधराय । गन्धर्वकिन्नरसुगीतगुणाधिकाय । गोधनप्रदाय नमः । १७८०

गानलोलुपाय नमः । गुप्ताय । गोपतये । गोप्याय । गोप्त्रे । गोपालिने । गोपालाय । गोपनीयाय । गोप्रियाय । गंबीजजपसुप्रीताय । गभीराय । गभस्तये । गंभीराय । गंभीरनायकाय । गंभीरहृदयाय । गंभीरवाक्याय । गंभीरघोषाय । गंभीरबलवाहनाय । ग्रामण्ये । ग्रामाय नमः । १८००

गोमते नमः । गोमत्प्रियाय । गोमयाय । गोमातृपरिसेविताय । गयाप्रयागनिलयाय । गायकाय । गायत्रीवल्लभाय । गायत्र्यादि स्वरूपाय । गायत्रीजपतत्पराय । गायत्रीतुल्यरूपाय । गायत्रीमन्त्रजनकाय । गीयमान गुणाय । गेयाय । गरलग्रीवाय । गरुडाग्रजपूजिताय । गर्विताय । गराय । गर्वनाशकाय । गरुडोरगसर्पपक्षिणां पतये । गर्भचारिणे नमः । १८२०

गर्भाय नमः । गरीयसे । गारुडाय । गिरिधन्विने । गिरीशानाय । गिरिबान्धवाय । गिरिरताय । गिरित्राय । गिरिसुताप्रियाय । गिरिप्रियाय । गरुडध्वजवन्दिताय । गिरिसाधनाय । गिरिशाय । गिरिजासहायाय । गिरिजानर्मणे । गिरिजापतये । गिरीन्द्रधन्वने । गिरीन्द्रात्मजासंगृहीतार्धदेहाय । गिरौ संस्थिताय । गुरवे नमः । १८४०

गुरुमंत्रस्वरूपिणे नमः । गुरुमाया गहनाश्रयाय । गुरूणां गुरवे । गुरुरूपाय । गुरुनामकज्ञापकात्मने । गुरुप्रियाय । गुरुलक्ष्यस्वरूपाय । गुरुमण्डलसेविताय । गुरुमण्डलरूपिणे । गुरुध्यातपदद्वंद्वाय । गुर्वतीताय । गोरम्भापुष्परुचिराय । गोरोचनप्रियाय । गौरीभर्त्रे । गौरीशाय । गौरीहृदयवल्लभाय । गौरीगुरुगुहाश्रयाय । गौरीविलासदंभाय । गौरीपतये । गौरीकटाक्षार्हाय नमः । १८६०

गौराय नमः । गौरीवल्लभाय । गौरीवामाङ्कभूषणाय । गौरीमनोहराय । गौरीवदनाब्जवृन्दसूर्याय । गौरीप्रियाय । गौरीकुचपदोरसे । गौरीविलासभवनाय । गव्याय । गवांपतये । गोविद्घोषितसत्क्रियाय । गोवृषेश्वराय । गोवृषेन्द्रध्वजाय । गोवृषोत्तमवाहनाय । गोविंदाय । गोविदांपतये । गोवर्धनधराश्रयाय । गोविन्दपरिपूजिताय । गोविन्दवल्लभाय । गीष्पतये नमः । १८८०

ग्रीष्माय नमः । ग्रीष्मात्मने । ग्रीष्मकृते । ग्रीष्मवर्धकाय । ग्रीष्मनायकाय । ग्रीष्मनिलयाय । गोष्ठ्याय । गर्वहराय । गहनाय । गह्वरेष्ठाय । ग्रहाय । ग्रहाधाराय । ग्रहेश्वराय । ग्रहपतये । ग्रहकृते । ग्रहभिदे । ग्रहाग्रहविलक्षणाय । ग्रहवासिने । ग्रहमालिने । ग्रहाणां प्रभवे नमः । १९००

गुह्याय नमः । गुहप्रियाय । गुहगुरवे । गुहावासाय । गुहाध्यक्षाय । गुहपालकाय । गुह्यानां प्रकाशकृते । गुह्यानां प्रणवाय । गुह्येशाय । गुहावासिने । गुहेष्टदाय । गुह्याद्गुह्यतमाय । गृहान्तस्थाय । गृहगतये । गृहस्थाय । गृहस्थाश्रमकारणाय । गृह्याय । गेह्याय । गोहत्यादि प्रशमनाय । गोक्षीरधवलाकाराय नमः । १९२०

घकारस्य पर्जन्यो देवता । खेचरसिद्धौ विनियोगः

घ्रां नमः । घ्रीं । घ्रूं । घ्रैं । घ्रौंमन्त्ररूपधृते । घकाराय । घटाय । घटितसर्वांशाय । घटात्मजाय । घटेश्वराय । घटोत्कचाय । घण्टाहस्ताय । घण्टाप्रियाय । घण्टारवप्रियाय । घण्टिकारताय । घण्टाकराय । घण्टानिनादरुचिराय । घण्टाफलप्रियाय । घोटकाय । घोटकेश्वराय नमः । १९४०

घृणये नमः । घृणिमते । घृणिमन्त्रजपप्रीताय । घृतकम्बलाय । घृतयोनये । घृतप्रियाय । घनवाताय । घनमयाय । घनरुचये । घनश्यामाय । घनतनवे । घनाघनाय । घनाय । घनसारप्रियाय । घर्मदाय । घर्मनाशनाय । घर्मरश्मये । घर्घराय । घर्घरिकारवप्रीताय । घूर्णिताय नमः । १९६०

घोराय नमः । घोरपातकदावाग्नये । घोरापस्मारदनुजशमनाय । घोरनादाय । घोरशास्त्रप्रवर्तकाय । घोरतपसे । घोषरूपाय । घोषयुक्ताय नमः । १९६८

ङकारस्य भैरवो देवता। सर्वलाभार्थे विनियोगः

ङकाराय नमः । ङकारवाच्याय । ङदेवपूजिताय । ङपदप्रदाय। ङस्तोमपालकाय। ङनिवारकाय नमः। १९७४

चकारस्य चण्डिका देवता। आयुर्वृद्धौ विनियोगः

चक्रभ्रमणकर्त्रे नमः। चक्रेश्वराय। चक्रिणे। चक्राब्जध्वज-युक्तांघ्रिपङ्कजाय। चक्राय। चक्रदानमूर्तये नमः। १९८०

चक्रपाणये नमः । चक्रधराय । चक्रभृते । चेकितानाय । चंचरीकाय । चञ्चलाय । चिच्छक्तये । चण्डाय । चण्डवेगाय । चण्डसत्यपराक्रमाय । चण्डवदनाय । चण्डमुण्डहराय । चण्डरश्मये। चण्डदीप्तये । चण्डालदमनाय । चण्डिने । चण्डिकेशाय। चण्डदोषविच्छेदप्रवीणाय। चण्डीशवरदाय। चण्डीशाय नमः। २०००

चण्डीश्वराय नमः। चण्डहृदयनन्दनाय। चूडामणिधराय। चतुर्मुखाय। चतुर्बाहवे। चतुष्पथाय। चतुर्वेदाय। चतुर्भावाय। चतुराय। चतुरप्रियाय। चतुर्भोगाय। चतुर्हस्ताय। चतुर्मूर्तिधराय। चतुराननाय । चतुर्व्यूहात्मने । चतुर्विधसर्गप्रभवे । चतुष्षष्ट्यात्मतत्वाय। चतुर्वक्त्रात्मने। चतुर्भुजाय। चतुर्थार्घ्याय नमः। २०२०

चतुःषष्टिकलानिधये नमः । चतुर्मुखहराय । चतुर्थसंस्थिताय। चित्रवेषाय। चित्ताय। चित्त्याय। चित्राय। चित्रगर्भाय। चितये। चितिरूपाय। चित्रवर्णाय। चित्संस्थाय। चिन्त्याय। चिन्तनीयाय। चिन्तितार्थप्रदाय। चित्रफलप्रयोक्त्रे। चित्राध्वरभागभोक्त्रे। चिन्त्यागमपादाङ्गुलये। चित्स्वरूपिणे। चित्रचारित्राय नमः। २०४०

चित्रघंटाय नमः । चिन्तामणये । चिन्तितसारथये । चिन्तिताय । चिन्त्याचिन्त्याय । चिन्ताधराय । चित्तार्पिताय । चित्तमयाय । चित्साराय । चित्रविद्यामयाय । चूतालयाय । चेतनायासहारिणे । चेतनाय । चैतन्यविषयाय । चन्द्रमौलये । चन्द्रापीडाय । चन्द्रसंजीवनाय । चन्द्रचूडामणये । चन्द्राय । चन्द्रचूडाय नमः । २०६०

चन्द्रकोटिसुशीतलाय नमः । चन्द्रेश्वराय । चन्द्रमंडलवासिने । चन्द्रबिम्बस्थिताय । चन्दनलिप्ताय । चन्द्रवक्त्राय । चन्द्रमौलि विभूषणाय । चन्द्रार्धमकुटोज्ज्वलाय । चन्द्राग्निसूर्यात्मकनेत्राय । चन्द्रिकानिर्गमप्रायविलसत्सुस्मिताननाय । चन्द्रार्धमौलये । चन्द्रकलोत्तंसाय । चन्द्रार्धभूषिताय । चन्द्रसहस्रगोचराय । चन्द्रार्कवैश्वानरलोचनाय । चन्द्रावयवभूषणाय । चन्द्रभूषणाय । चन्द्रसौम्यवराननाय । चन्दरूपाय । चन्द्रशेखराय नमः । २०८०

चन्द्रकलावतंसाय नमः । चन्द्रार्धकृतशेखराय । चन्द्रावयवलक्षणाय । चन्द्रज्ञानागमवक्षसे । चन्द्रात्मने । चन्द्रिकाधाररूपिणे । चंदक्षिणकर्णभूषणाय । चन्द्रांकिताय । चिदात्मकाय । चिदानन्दमयाय । चिदात्मने । चिद्विग्रहधराय । चिदाभासाय । चिन्मात्राय । चिन्मयाय । चिन्मुद्रितकराय । चमूस्तम्भनाय । चामीकरमहाशैलकार्मुकाय । चामुण्डाजनकाय । चर्मिणे नमः । २१००

चराचरात्मने नमः । चराय । चराचरस्थूलसूक्ष्मकल्पकाय । चर्माङ्कुशधराय । चर्मविभवधारिणे । चराचराचारविचारवर्याय । चराचरगुरवे । चर्मवाससे । चराचराय । चराचरमयाय । चारुलिङ्गाय । चारुचामीकराभासाय । चारुचर्माम्बराय ।

चारुस्मिताय। चारुदीप्तये। चारुचन्द्रकलावतंसाय। चारुप्रसन्न-सुप्रीतवदनाय । चारुशीतांशुशकलशेखराय । चारुविक्रमाय । चारुधिये नमः। २१२०

चारवे नमः। चिरन्तनाय। चलाय। चक्षुष्याय। चक्षुःश्रवः कल्पितकण्ठभूषणाय नमः। २१२५

छकारस्य भद्रकाली देवता। ब्रह्मरक्षोहनने विनियोगः।

छत्राय नमः। छत्रिणे। छत्रप्रियाय। छत्रधारिणे। छत्रदाय। छात्राय । छात्रपालकाय । छन्दःसाराय । छन्दसां पतये । छन्दःशास्त्रविशारदाय । छन्दाय । छन्दोरूपाय । छन्दो-व्याकरणोत्तराय। छन्दोमयाय। छन्दोभेदाय नमः। २१४०

छान्दोग्याय नमः । छान्दोग्यस्तुताय । छंदोगाय । छद्मचारिणे। छद्मरहस्यविदे । छेदकृते । छन्नवीराय । छिन्नसंशयाय। छिन्नमस्ताय । छिन्नमस्ताप्रसादकाय । छिन्नतांडवसम्भूताय । छिन्नयोगविशारदाय । छ्रींबीजजप-तत्पराय। छलिने। छंवामकर्णभूषणाय। २१५५

जकारस्य इन्द्रो देवता। जरामृत्युविनाशने विनियोगः

जगत्पित्रे नमः। जगताम्पतये। जगद्धात्रे। जगदुद्धाराय। जगत्प्राणाय नमः। २१६०

जगदीशाय नमः । जगतां धात्रे । जगद्गुरवे । जगतस्तस्थुषस्पतये । जगत्संहारकाय । जगदाधारशरासाय । जगद्यन्त्रप्रवर्तिने। जगन्नाथाय। जगत्त्रयेशाय। जगद्व्यापिने। जगतःप्रभवे । जगद्बीजाय । जगदुत्पादनप्रवीणनियन्त्रे । जगतामेकजीवनाय। जगत्स्थावरमूर्तये। जगत्कालाय। जगतां हितकारिणे । जगद्विश्रामहेतवे । जगदानन्दकराय ।

जगत्सृष्टिस्थितिलयकारिणे नमः। २१८०

जगत्कारणाय नमः। जगदन्तरात्मने। जगतो हेतुभूताय। जगतामेकनाथाय । जगद्बन्धवे । जगतां परिपालकाय । जगद्योनये। जगद्वन्द्याय। जगत्स्रष्ट्रे। जगदवनकर्मठशरीराय। जगत्पतये। जगतां शर्मणे। जगद्गोप्त्रे। जगतां जनकाय। जगद्रूपिणे। जगदीशानाय। जगद्ध्वंसिने। जगन्मूर्तये। जगद्धेतवे। जगन्मयाय नमः। २२००

जगत्स्थावरजंगमाय नमः। जगत्त्रात्रे। जगत्स्थाय। जगदुज्जीवन कौतुकिने। जगद्धितैषिणे। जगत्त्रितयसंरक्षाजागरूकाय। जगदधिकाय। जंगमाय। जंगमात्मकाय। जंगमाजंगमात्मकाय। जैगिषव्येश्वराय। जगदादिजाय। जघन्याय। जटाधराय। जटामण्डलमण्डिताय। जटापटलकोटीरगंगापूरविराजिताय। जटिलाय। जटाजूटप्रशोभिताय। जटीशाय। जटामुकुटमण्डिताय नमः। २२२०

जटामण्डलगह्वराय नमः। जटाभस्मभूषिताय। जटाधाराय। जटाजूट गङ्गोत्तरङ्गैर्विशालाय। जटाकटाह संभ्रमभ्रमन्निलिंप निर्झरी विलोलवीचिवल्लरी विराजमानमूर्ध्ने। जटाभुजङ्गपिङ्गलस्फुरत्फणामणिप्रभाकदम्ब कुंकुमद्रव प्रलिप्तदिग्वधूमुखाय। जठराय। जठराग्निप्रवर्धकाय। जाड्यहराय। जातूकर्ण्याय। जातये। जातिनाथाय। जातिवर्णरहितायापि ब्राह्मणत्वेन विश्रुताय। जितशत्रवे। जितकामाय। जितप्रियाय। जितेन्द्रियाय। जितविश्वाय। जितश्रमाय। जितलोभाय नमः। २२४०

जितक्रोधाय नमः । जितनित्यशत्रुगणाय । जितारातये । जेत्रे । जैत्राय । ज्योतिःस्वरूपाय । ज्योतिष्मते । ज्योतिर्मयाय । ज्योतिषामयनाय । ज्योतिर्लिङ्गाय । ज्योतिषे । ज्योतिषामुत्तमाय । ज्योतीरूपदाय । ज्योतिषां पतये । ज्योतिःशास्त्रविचारधृते । ज्योत्स्नामयाय । ज्योत्स्नाजाल प्रवर्तकाय । ज्योतिर्मयानन्दघनाय । जं दक्षिणकर्ण कुण्डलाय । जनकाय नमः । २२६०

जन्याय नमः । जननाय । जन्मादये । जन्माधिपाय । जन्ममृत्युजरातिगाय । जनाधिपाय । जनाय । जनतपोरूपाय । जन्मनो गतिं दिशते । जननविनाशविहीनविग्रहाय । जन्महराय । जन्मादिकारणहेतवे । जन्मनाशादिवर्जिताय । जन्माद्याय । जनितानन्तलोकाय । जन्मभूमये । जन्मिने । जनितानन्दरूपिणे । जन्मकृतोदराय । जन्मवते नमः । २२८०

जन्मादिनाशकाय नमः । जन्मविवर्जिताय । जननीनाथाय । जन्मजदुःखविनाशकलिङ्गाय । जनयित्रे । जननीतिविशारदाय । जिनाय । जीनाय । जिननेत्रे । जिनशास्त्रप्रवर्तकाय । जैनमार्गरताय । जैनाय । जपाय । जपहोमस्वरूपिणे । जप्याय । जपापुष्पप्रियाय । जपादाडिमरागधृते । जपतत्पराय । जपमालिने । जाम्बूनदलताभूतनागयज्ञोपवीतिने नमः । २३००

जाबालि पूज्याय नमः । जाम्बवत्प्रियाय । जृम्भते । जमदग्नये । जमदग्निपूजिताय । जामदग्नये । जामदग्निसमर्चिताय । जामीफलप्रियाय । जीमूतवाहनाय । जीमूतवरदाय । जीमूताय । जयकालविदे । जयाय । जयस्तम्भाय । जयशालिने । जयन्ताय । जयशीलाय । जयप्रदाय । जीर्णाय । जराधिशमनाय नमः । २३२०

जरातिगाय नमः । जराहीनाय । जरठाय । जरत्क्षाराय । जरासंधसमर्चिताय । जराहराय । जाराय । जीर्णाजीर्णपतये ।

जलभूताय । जलशायिने । जलरूपाय । जलाय । जलेशाय । जलेश्वराय । जलोद्भवाय । जलंधरशिरश्छेत्रे । जलंधरासुरशिरश्छेदकाय । जालंधरपीठेश्वराय । ज्वलत् पावकलोचनाय । ज्वलज्ज्वालावली भीमविषघ्नाय नमः । २३४०

ज्वलनस्तंभमूर्तये नमः । ज्वलज्ज्वालामालिने । जलल्लाटभूषणाय । ज्वालिने । ज्वालामालावृताय । जालंधरहराय । जीवाय । जीवातवे । जीवनौषधाय । जीवनाधाराय । जीवितेशाय । जीवनाय । जीववरदाय । जीवितेशाय । जीवितेश्वराय । जीवितान्तकाय । जिष्णवे । ज्येष्ठाय । जिह्वायतनाय नमः । २३५९

झकारस्य ब्रह्मा देवता । धर्मार्थकाममोक्षार्थे विनियोगः ।

झंवामकर्ण भूषणाय नमः । २३६०

झरिणे । झर्घरिकाय । झंझावायुस्फारकण्ठध्वनये नमः । २३६३

ञकारस्य शूलायुधो देवता । मोहनार्थे विनियोगः।

ज्ञानगम्याय नमः । ज्ञानवते । ज्ञानस्कंधाय । ज्ञाननिधये । ज्ञानिने । ज्ञानाय । ज्ञानदीपाय । ज्ञानशक्तिक्रियाशक्ति नियुक्ताय । ज्ञानिनामीश्वराय । ज्ञानलिङ्गाय । ज्ञानवरप्रदाय । ज्ञानानन्दमयाय । ज्ञानरूपाय । ज्ञानबीजाय । ज्ञानचन्द्रकला शेखराय । ज्ञानमाल्यालंकृताय । ज्ञानदाय नमः । २३८०

ज्ञानमुद्रा लसद्बाहवे नमः । ज्ञानातीताय । ज्ञानेश्वराय । ज्ञानकैवल्यनाम्ने । ज्ञानमार्गपरायणाय । ज्ञानकाण्डाय । ज्ञानोदयकराय । ज्ञानविषयाय । ज्ञानगोचराय । ज्ञेयकाण्डाय । ज्ञेयाज्ञेयविवर्जिताय । ज्ञानाद्यनुग्रहनिमित्तसदाशिवादि नानारूपधृते नमः । २३९२

टकारस्य भूमिर्देवता। क्षोभणार्थे विनियोगः।

टकाराक्षर भूषिताय नमः । टंकाराय । टंकारकारिणे । टंकिकाप्रियाय। टंकास्त्रधारिणे। टिंटींध्वनिरताय। टंटनादप्रियाय। टांटींटूंजपसन्तुष्टाय नमः। २४००

टाकृतीष्टदाय नमः । टंवामकर्णतटस्थाय । टिट्टिभाय । टिट्टिभाननाय । टिट्टिभानन्तसहिताय । टीकाटिप्पणकारकाय नमः। २४०६

ठकारस्य चन्द्रो देवता। विघ्नमृत्युविनाशने विनियोगः

ठकुराय नमः। ठाकुराय। ठंग्रैवेयकाय। ठठबीजपरायणाय। ठस्थाय। ठमूर्तये नमः। २४१२

डकारस्य गरुडो देवता। विषनाशने विनियोगः

डंउरोभूषणाय नमः । डकाराय। डकारात्मने। डांकराय। डाकिन्यां भीमशङ्कराय । डिण्डिवादनतत्पराय । डामरीशक्तिरञ्जिताय। डामराय नमः। २४२०

डामरीशाय नमः। डमरुवादनतत्पराय नमः। २४२२

ढकारस्य ऐरावतो देवता। शंखपद्मनिधिदाने विनियोगः।

ढांकृतये नमः । ढक्कावादनतत्पराय । ढांढींढूंढैंढौंशब्द-तत्पराय। ढंकपूजिताय। ढक्कानादप्रियाय। ढं। ढां। ढांपतये। ढैं। ढकारकाय । ढूं । ढांशब्दतत्पराय । ढंकसेविताय । ढक्कालंकृतहस्ताय नमः। २४३६

णकारस्य कामधेनुर्देवता। सर्वार्थसिद्धौ विनियोगः।

णमूर्तये नमः। णाकाराय नमः। २४३८

तकारस्य धनदो देवता । धनधान्यादिलाभे विनियोगः ।

तकाररूपाय नमः । त्रिककुदे नमः । २४४०

त्रिकाग्निकालाय नमः । त्रिकलाय । त्रिकालज्ञानाय । त्रिकालज्ञाय । त्रिकालाय । त्रिकालज्ञमुनिप्रियाय । त्रिकालपूजनप्रीताय । त्रिकोणेशाय । त्रिकालज्ञानदाय । त्रिगुणाय । तिग्मायुधधराय । तिग्ममन्यवे । तिग्मायुधाय । तिग्मचक्षुषे । त्रिगुणनिर्मुक्ताय । त्रिगुणमर्दनाय । त्रिगुणात्मकाय । तिग्मांशवे । त्रिगुणसारथये । त्रिगुणस्वरूपाय नमः । २४६०

तुंगांशाय नमः । तुंगभद्रातीरवासाय । त्रिचक्षुषे । त्रिजटाय । त्रिजन्मने । तेजसे । तेजोमूर्तये । तेजसां भर्त्रे । तेजोधिव्यापिने । तेजसानुव्रताय । तेजस्कराय । तेजोपहारिणे । तेजोलिङ्गाय । तेजसां पतये । तेजोराशये । तेजोनिधये । तेजोमयाय । तेजसां निधये । तेजोमयस्फुरद्रूपाय । त्रिज्ञानमूर्तये नमः । २४८०

तटस्थाय नमः । तटिल्लतासमरुचये । ताण्डवप्रियाय । तण्डुवाहनाय । तण्डुदुर्गानाथाय । तृणावर्ताय । तृणीकृतमहाग्राहाय । तत्पुरुषाय । तत्पुरुषात्मकवदनाय । तत्पुरुषात्मकपूर्ववदनाय । तत्पुरुषात्मकललाटादिकाय । तत्पुरुषात्मने । तत्पदलक्ष्यार्थाय । तत्पदोपलक्ष्यार्थाय । तत्पदोपहितार्थाय । तत्वाय । तत्वविदे । तत्वलिंगाय । तत्वातीताय । तत्वानां मृत्यवे नमः । २५००

तत्वातत्वविवेकात्मने नमः । तत्वरूपाय । तत्वमूर्तये । तत्वाध्वास्थ्यादिकाय । तत्रैव ब्रह्ममयाय । तृतीयाय । त्रेताग्निमयरूपाय । तन्तुवर्धनाय । तन्त्रमार्गरताय । तन्त्राय ।

तन्त्ररूपाय। तन्त्रिणे। तन्त्रतन्त्रिणे। तन्त्रज्ञाय। तन्त्रसिद्धाय। तन्त्ररताय। तन्त्रमन्त्रफलप्रदाय। तन्त्रयन्त्रात्मकाय। तन्त्रलयविधानज्ञाय। तन्त्रमार्गप्रदर्शकाय नमः। २५२०

तन्त्रसाक्षिणे नमः। तान्त्रिकाय। तान्त्रिकोत्तमाय। तान्त्रिकभूषणाय। त्रात्रे। त्रितत्वधृते। तिंत्रिणीशाय। तिन्त्रिणीफलभाजनाय। तिन्त्रिणीफलभूषाढ्याय। तत्वस्थाय। तत्वज्ञाय। तत्वनिलयाय। तत्ववाच्याय। तत्वमर्थस्वरूपकाय। तत्वासनाय। तत्वमस्यादिवाक्यार्थाय। तत्वज्ञानप्रबोधकाय। तत्सवितुर्जपसन्तुष्टमानसाय। तत्पदार्थस्वरूपकाय। त्रेतायजनप्रीतमानसाय नमः। २५४०

तैत्तिरीयकाय नमः। तथ्याय। तिथिप्रियाय। तदन्तर्वर्तिने। तद्रूपाय। त्रिदशाय। त्रिदेवाय। त्रिदशाधिपाय। त्रिदशालयैरभिवन्दिताय। त्रिदोषाय। तुदते। त्रिधाम्ने। तनवे। तन्मात्रलिङ्गिने। तनूनपाते। तनूदराय। तनातनाय। त्रिनेत्राय। त्रिनयनाय। त्रिनाम्ने नमः। २५६०

तपसे नमः। तपस्विने। तपश्शीलाय। तपःस्वाध्यायनिरताय। तपस्विजनसेव्याय। तपोदानफलप्रदाय। तपोलोकजनस्तुत्याय। तप्तकाञ्चनभूषणाय। तपोनिधये। तपस्सक्ताय। तपसां फलदात्रे। तपोरूपाय। तपोबीजाय। तपोधनधनाय। तपसां निधये। तपनीयनिभाय। तापसाय। तापसाराध्याय। त्रपाकराय। त्रिपुरान्तकाय नमः। २५८०

त्रिपुंड्रविलसत्फालफलकाय नमः। त्रिप्रकारस्थिताय। त्रिपुरघ्नाय। त्रिपुरघातिने। त्रिपुरकालाग्नये। त्रिपुरभैरवाय। त्रिपुरार्दनाय। त्रिपुरारये। त्रिपुरसंहारकाय। त्रिपादाय। त्रिपंचन्यासंसंयुताय। ताम्बूलपूरितमुखाय। त्रिबन्धवे।

त्रिबीजेशाय। त्र्यम्बकाय। तुम्बवीणाय। तुम्बवीणाशालिने। तुम्बीफलप्राणाय। तुम्बुरुस्तुताय। तुभ्यं नमः। २६००

तमसे नमः। तमोगुणाय। तमोपहाय। तमसः पराय। तमोमयाय। तमिस्रघ्ने। तमिस्रमथनाय। तमिस्रानायकाय। तमीनचूडाय। तमालकुसुमाकृतये। तामसात्मने। तामसप्रियाय। ताम्रजिह्वाय। ताम्रचक्षुषे। ताम्रवक्त्राय। ताम्राधराय। ताम्राय। ताम्रोष्ठाय। ताम्रचूडाय। ताम्रवर्णबिलप्रियाय नमः। २६२०

ताम्रपर्णी जलप्रियाय नमः। ताम्रनेत्र विभूषिताय। ताम्रपर्णी समुद्रसंगमे सेतुबन्ध रामेश्वराय। त्रिमूर्तये। त्रिमधुराय। त्रिमल्लेशाय। त्रिमेखलाय। तुमुलाय। तोमराय। तंयज्ञोपवीताय। त्रयीमूर्तये। त्रयीतनवे। त्रयीमयाय। त्रयीवेद्याय। त्रयीवन्द्याय। त्र्यन्त निलयाय। तोयात्मने। तरुणाय। तरलाय। तरस्विने नमः। २६४०

तरुणार्क समद्युतये नमः। तरणये। तरणिमध्यस्थाय। तरणिनयनाय। तरंगिणीवतंसाय। तारकाय। तरुणेन्दुशिखाय। तरुणेन्दुशेखराय। तरुणादित्यसंकाशाय। तारकारिजनकाय। तारलोचनाय। तारकासुरविध्वंसिने। तारकान्ताय। तारानायकभूषाय। ताराय। ताराधिनाथाय। तारणाय। तारदन्त मध्यगाय। तारतम्यज्ञाय। तारानाथाय नमः। २६६०

तारदराय नमः। ताराधिपनिभाननाय। तारानाथ-समद्युतये। तारानाथकलामौलये। तारापतिनिषेविताय। तार्क्ष्याय। तार्क्ष्यविनुताय। तीर्थाय। तीर्थ्याय। तीर्थिने। तीर्थभूमिरताय। तीर्थश्राद्धफलप्रदाय। तीर्थदानपरायणाय। तीर्थप्रीतये। तीर्थरताय। तीर्थदेवाय। तीर्थपादाय। तीर्थतत्वाय। तीर्थदेवशिवालयाय। तुरंगवाहनारूढाय नमः। २६८०

तुरीयचैतन्याय नमः । तुर्याय । तोरणाय । तोरणेशाय । त्रिराशिकाय । त्रैराशिकफलप्रदाय । तर्क्यातर्क्यशरीराय । तलादिभुवनान्तस्थाय । तलाय । तल्प्याय । तालाय । तालुरन्ध्रस्थिताय । तालीप्रियाय । तालधराय । ताल्याय । तिलाक्षतप्रियाय । तिलान्नप्रीतमानसाय । तिलपर्वतरूपधृते । तिलपिष्टान्नभोजिने । तिलमनसे नमः । २७००

त्रिलोकवासिने नमः । त्रिलोकरक्षकाय । त्रिलोचनाय । त्रिलोकेशाय । त्रिलिङ्गरहिताय । त्रिलोकात्मने । त्रिलोकमुद्रिका-भूषाय । त्रैलोक्यसुन्दराय । त्रैलोक्यमोहनाय । त्रैलोक्यनाथाय । त्रैलोक्यपालिने । त्रैलोक्यवासिने । तुलसीबिल्वनिर्गुण्डीजंबीरा-मलकप्रियाय । तुलामाघस्नानतुष्टाय । तुलादानफलप्रदाय । तुलजापुरनायकाय । तुलापुरुषरूपधृते । तूलाय । तूलबुध्नाय । तैलमोदकतोषणाय नमः । २७२०

तैलप्रीताय नमः । तैलभोजनतत्पराय । तैलदीपप्रियाय । तैलपक्वान्नप्रीतमानसाय । तैलाभिषेकसन्तुष्टाय । तैलचर्वण-तत्पराय । तैलाहारप्रियप्राणाय । त्रिविष्टपेश्वराय । त्रिधागतये । त्रिविद्याय । त्रिवराय । त्रिविष्टपाय । त्रिविक्रमाय । त्रिविलोचनाय । त्रिविक्रमार्चिताय । त्रिविक्रमेश्वराय । त्रिवर्गयज्ञदाय । त्रिवर्गदाय । त्रिवर्गाय । तीव्राय नमः । २७४०

तीव्रवेदशब्दधृते नमः । तीव्रयष्टिकराय । त्रिशक्तियुताय । त्रिशिरसे । त्रिशूलाय । त्रिशुक्लसम्पन्नाय । त्रिशंकवे । त्रिशंकुवरदाय । त्रिशूलपाणये । त्रिशूलिने । त्रिशूलचर्मधारिणे । त्रिशूलपट्टसधराय । त्रिशूलधारिणे । त्रिशूलभीषणाय । त्रित्रिशब्दपरायणाय । त्वष्ट्रे । तिष्याय । तुष्टाय । तुष्टभक्तेष्टदायकाय । तुष्टिप्रदाय नमः । २७६०

तुषाराचलमध्यस्थाय नमः । तुषारवनभूषणाय । तुषमयाय। तुष्टातुष्टप्रसादकाय । तुषाराद्रिसुताप्रियाय । तोषिताखिलदेवौघाय। तस्मै। तस्मादपि वराय। तस्कराध्यक्षाय। तस्करशिक्षकाय । त्रिस्थाय । त्रिस्वरूपाय । त्रिसन्ध्याय । त्रिसुगन्धाय । त्रिहस्तकाय। तुहिनाद्रिचराय । तुहिनाचल-संकाशाय। तालिने। तक्षकक्रीडनाय। तक्षकाय नमः। २७८०

तक्षाय । तक्षिणे । त्र्यक्षाय । त्र्यक्षकाय । त्र्यक्षराय। तीक्ष्णवरप्रदाय । तीक्ष्णपरशवे । तीक्ष्णाय । तीक्ष्णतापाय । तीक्ष्णकृपाणाय। तीक्ष्णरश्मये। तीक्ष्णेषवे नमः। २७९२

थकारस्य धर्मराजो देवता। विषनाशे विनियोगः।

थकारकूटनिलयाय नमः । थाकाराय । थसुखप्रदाय । थशेखराय। थिमिन्थिमिने । थिमिरूपाय । थैंनाट्यनायकाय । थंदक्षिणबाहुभूषणाय नमः। २८००

दकारस्य महालक्ष्मीर्देवता। विषनाशने विनियोगः।

दकाराय नमः । दिक्पतये । दुःखहन्त्रे । दुःखदोष-विवर्जिताय। दिगंबराय । दिग्वाससे । दिग्वस्त्राय । दुग्धान्नप्रीतमानसाय। दुग्धाभिषेचनप्रीताय। दृग्रूपाय। दोग्ध्रे। द्विजोत्तमाय। दण्डाय। दण्डिने। दण्डहस्ताय। दण्डरूपाय। दण्डनीतये । दण्डकारण्यनिलयाय । दण्डप्रसादकाय । दण्डनाथप्रपूजिताय नमः। २८२०

दाडिमीपुष्पाभाय नमः । दाडिमीपुष्पभूषिताय । दाडिमीबीजरदनाय। दाडिमीकुसुमप्रियाय। दृढाय। दृढप्रज्ञाय। दृढायुधाय । दृढधन्विने । दृढवैद्यरताय । दृढचारिणे । द्रोणपुष्पप्रियाय। द्रोणाय । द्रोणपुष्पार्चनप्रियाय । दात्रे ।

दान्ताय। द्वात्रिंशत्तत्वरूपाय। दुत्तूरकुसुमप्रियाय। द्युतिमते। द्युतिधराय। दूताय नमः। २८४०

देदीप्यमानाय नमः। दैत्यघ्ने। दैत्यदानवरक्षसां पतये। दैत्यानामन्तकेशाय। दैत्याक्रन्दकराय। दैत्यानामन्तकाय। दैत्यदर्पनिषूदनाय। द्योताय। द्वन्द्वातीताय। द्वादशास्त्रासनाय। द्वादशात्मस्वरूपिणे। दुन्दुभाय। दुन्दुभ्याय। दुन्दुभये। दुन्दुभेर्मर्दनाय। दनुजारये। दानवारये। दानवनाशनाय। दानरूपाय। दानसन्तानतोषिताय नमः। २८६०

दानवान्तकाय नमः। दानाध्यक्षाय। दिननाथाय। दिनकरकोटिप्रभाकरलिङ्गाय। दीनाय। दीननाथाय। दीनार्तिहृते। दीनवल्लभाय। दीनसाधकाय। दीनोरुदायकाय। दीनदैन्यविमोचनाय। दैन्यहन्त्रे। दर्पघ्ने। दर्पिताय। द्वीपानां प्रभवे। दीप्ताय। दीप्तये। दीप्तिमते। दीप्तमूर्तये। दीप्तागमोरवे नमः। २८८०

दृप्ताय नमः। दंभाय। दंभरहिताय। दंभदाय। दंभनाशकाय। दंभविवर्जिताय। दमाय। दमनाय। दमयित्रे। दमात्मकाय। दामोदरप्रियाय। द्युमणये। दयालवे। दयाकराय। दयासिन्धवे। दयासुधानयनाय। दयासुधाम्बुधये। दयानिधये। दयावते। दयापराय नमः। २९००

दयावराय नमः। दर्पणाय। दर्परूपाय। दर्पनाशकाय। दरीसंस्थाय। दरदम्बुजलोचनाय। दरस्मेरमुखाम्बुजाय। दरांदोलितदीर्घाक्षाय। दारुकावनवासेश्वराय। दारुकावनमौनि-स्त्रीमोहनाय। दारुकारण्यनिलयाय। दारिद्र्यशमनाय। दारिद्र्यदुःखदहनाय। दारिद्र्यवडवानलाय। दारिद्र्यध्वंसकाय। दीर्घतपसे। दीर्घाय। दीर्घशृंगैकभृङ्गाय। दीर्घसूत्राय। दीर्घिकाजलमध्यगाय नमः। २९२०

दीर्घदर्शिने नमः । दुर्वाससे । दुरावासाय । दुरासदाय । दुर्गमाय । दुर्गाय । दुर्लभाय । दुर्ज्ञेयाय । दुराधाराय । दुर्भवाय । दुर्धर्षाय । दुर्जयाय । दुरतिक्रमाय । दुर्लंघ्याय । दुर्दमाय । दुर्दान्ताय । दुराराध्याय । दुरत्ययाय । दुर्धराय । दुराधर्षाय नमः । २९४०

दुरारोहाय नमः । दुरुत्तराय । दुरितापहारकाय । दुरितमत्तमतंगजपंचाननाय । दुर्गेशाय । दुर्गभवसागरतारणाय । दुर्गवरदायकाय । दुरितघ्ने । दुर्मतिनाशनाय । दुरितापहाय । दुर्वारभुजविक्रमाय । दुरार्तिघ्ने । दुर्वारविक्रमाय । दुराचार-प्रशमनाय । दूरश्रवसे । दूरेवधाय । दूर्वासमुनिपूजिताय । दूर्वायुग्मसमाराध्याय । द्रवते । द्रविणाय नमः । २९६०

द्रव्याणां प्रभवे नमः । द्रव्याय । द्रव्यस्वरूपधृते । दंवामबाहुभूषणाय । दिवस्पतये । दिव्याय । दिवाकराय । दिव्यनृत्ताय । दिवोदासेश्वराय । दिव्यभोगाय । दिव्यानन्दाय । दिवि सुपर्वणाय । दिव्यन्तरिक्षगमनाय । दिव्यमाल्याम्बर-विभूषिताय । दिव्यायुधधराय । दिव्यास्त्रविदे । दिव्यलोचनाय । दिव्यदेहप्रभाकूटसंदीपितदिगंतराय । दिव्यमालासमन्विताय । दिव्यलेपविराजिताय नमः । २९८०

दिव्यचन्दनचर्चिताय नमः । दिव्यादिसेव्याय । दिव्यचक्षुषे । दिव्यतरुवाटीकुसुमवृन्द निष्यन्दमानमकरन्दबिन्दुसन्दोह संक्लिद्यमान सकलांगाय । दिव्यशायिने । दिव्यनृत्तप्रवृत्ताय । दिव्यसहस्रबाहवे । दिव्याक्रंदकराय । देवाय । देवराजसेव्यमान पावनांघ्रिपंकजाय । देवदेवाय । देवेन्द्राय । देवयोग्याय । देवभोग्याय । देवभोगदाय । देवर्षिमण्डिताय । देवर्षिवर्ज्याय । देवतार्तिप्रशमनाय । देवेड्याय । देवताप्राणवल्लभाय नमः । ३०००

देवगङ्गाजटाजूटाय नमः । देवेन्द्ररक्षकाय । देवान्तकवरप्रदाय । देवासुराराध्याय । देवासुरवरप्रदाय । देवासुरतपस्तुष्टाय । देवासुरगणाग्रण्यै । देवासुरगणाध्यक्षाय । देवासुरेश्वराय । देवासुरगुरवे । देवासुरनमस्कृताय । देवासुरमहामात्राय । देवासुरमहाश्रयाय । देवासुरमहेश्वराय । देवर्षिदेवासुरवरप्रदाय । देवादिदेवाय । देवात्मने । देवनाथाय । देवप्रियाय । देवज्ञाय नमः । ३०२०

देवचिन्तकाय नमः । देवानां शतक्रतवे । देव्यादिप्रीतिकराय । देवदानवदैत्यानां गुरवे । देवगर्भाय । देवगणार्चितसेवितलिङ्गाय । देवसिंहाय । देवमुनिप्रवरार्चितलिङ्गाय । देवकीसुतकौन्तेयवरदाय । देवानामीश्वराय । देव्याः प्रियकराय । देवराजाय । देवाधिपतये । देवासुरपतये । देवदेवेन्द्रमयाय । देवासुरविनिर्मात्रे । देवसैन्यपतये । देवेशाय । देवासुरमहामान्याय । देवभृते नमः । ३०४०

देवमान्याय नमः । देवतानवकपंचब्रह्मात्मने । देवताप्रियाय । देवासुरगुरुस्तव्याय । देवदेवेशाय । देवभस्मकणप्रियाय । देवशिखामणये । देवशिखान्तकाय । देवसिन्धु तरङ्गशीकरसिक्त शीतजटाधराय । देवाधिदेवेशाय । देवराजारिमर्दनाय । देवानुगतलिंगिने । देवार्चितमूर्तये । देव्याःकार्यार्थदायिने । देवतात्मने । देवर्षये । देवासुरगणाश्रयाय । देवासुरपरायणाय । दैत्यगुरवे । दैवताय नमः । ३०६०

दैवतलिङ्गिने । दैवतनाथाय । दशबाहवे । दशहस्ताय । दशकराय । दशदिक्पालपूजिताय । दिशावस्त्राय । दिशा[illegible] । दिशांपतये । दृश्यादृश्याय । देशानां ब्रह्मावर्ताय । देशकालपरिज्ञात्रे । देशोपद्रवनाशकाय । दंष्ट्रिणे । दंष्ट्रात्मने ।

दंष्ट्राभ्रुकुटीधरश्यामप्रौढ दक्षिण वदनाय। दुष्कृतिघ्ने। दुष्प्रेक्ष्याय। दुष्प्रधर्षाय। दुष्टानां विलयाय नमः। ३०८०

दुष्टानां पतये नमः। दुष्प्रकंपाय। दुष्टमृत्यवे। दुष्टावग्रहवारकाय। दुष्टभूतनिषूदनाय। दुष्टभयदाय। दुष्टदूराय। दुष्टहन्त्रे। दृष्टिघ्नाय। दृष्टये। दृष्टिनिलयाय। दोषाकरकलामौलये। दुःस्वप्ननिवारकाय। दुःस्वप्ननाशनाय। दुस्सहाय। दुस्सहहर्षणाय। द्रुहिणाय। द्रुहिणांभोजनयनदुर्लभाय। देहाय। देहधावल्यशुद्धसत्वात्मकत्वप्रकटनाय नमः। ३१००

दलितारिनिकराय नमः। दलदम्बुजनेत्राय। दलदिन्द्रनील-ग्रीवाय। दलदञ्जनभासाय। दलघातिने। दक्षाय। दक्षसुयज्ञविनाशनलिङ्गाय। दक्षकन्यापतये। दक्षवरप्रदाय। दक्षमखध्वंसिने। दक्षाध्वरहराय। दक्षनाशकराय। दक्षयज्ञाय। दक्षाध्वरनाशकाय। दक्षयज्ञान्तकाय। दक्षयागापहारिणे। दक्षयज्ञहराय। दक्षमखान्तकाय। दक्षारये। दक्षाध्वरान्तकाय नमः। ३१२०

दक्षयज्ञप्रभंजकाय नमः। दक्षाध्वरविनाशनाय। दक्षाराध्याय। दक्षयज्ञविनाशनाय। दक्षिणाय। दक्षादक्ष समर्चिताय। दक्षिणावभृथाय। दक्षिणामूर्तये। दक्षिणाकराय। दक्षिणे। दक्षिणाराध्याय। दक्षिणप्रेमसन्तुष्टाय। दक्षिणावरदाय। दक्षिणामूर्तिरूपधृते। दाक्षिण्यशीलाय। दाक्षायणीसमाराध्याय। दीक्षाशालिने। दीक्षारये। दीक्षिताय। दीक्षिताभीष्टदाय नमः। ३१४०

धकारस्य धन्वतरिर्देवता। विषज्वरविनाशने विनियोगः।

ध्वजिने नमः। ध्वजिनीपतये। धृतिमते। धात्रे। धात्रीशाय। धातुमण्डिताय। धात्रीपतये। धितिकृते। धनदेशाय। धनदाय।

धनाधिपाय । धनदाध्यक्षाय । धनकृते । धनधान्यसमृद्धिदाय । धनुर्वेदाय । धन्विने । धन्याय । धनुषे । धनाध्यक्षाय । धनंजयाय नमः । ३१६०

धनुर्हस्ताय नम : । धनाय । धन्वन्तरये । धनेश्वराय । धनमालाधराय । धनाकराय । धनदप्रियाय । धनप्रियाय । धनुर्धराय । धनागमाय । धन्याय । ध्वनये । ध्यानगम्याय । ध्यानरूपाय । ध्यानाय । धीमते । धूम्राय । धूमकेतनाय । धूमकेतवे । धूमपाय नमः । ३१८०

धूम्रवर्णाय नमः । धूम्राक्षाय । ध्यायते । ध्येयाय । ध्येयगम्याय । ध्येयध्यानाय । ध्येयानामपि ध्येयाय । ध्येयतमाय । धर्माय । धर्मिष्ठाय । धर्मयुक्ताय । धर्मचारिणे । धर्मसेतुपालकाय । धर्माधाराय । धर्मधाम्ने । धर्मराजाय । धराय । धर्मपीठाय । धर्मार्थकामकैवल्य सूचकाय । धर्मवृक्षाय नमः । ३२००

धर्मसाधारणाय नमः । धर्माद्यष्टपरायणाय । धर्माध्यक्षाय । धर्माधिगम्याय । धर्मार्थकाममोक्षाणां बीजरूपाय । धर्मवक्त्रे । धर्मवते । धर्मनिपुणाय । धर्मप्रवर्तकाय । धर्माधर्मप्रवर्तकाय । धर्मकर्मणे । धर्मधेनवे । धर्मवर्धनाय । धर्मात्मने । धर्मदायिने । धर्मनायकाय । धर्मनिश्चयाय । धर्मौदनप्रदाय । धरणीधारकाय । धराय नमः । ३२२०

धर्षणात्मने नमः । धरोत्तमाय । धराधात्रे । धरणीधराय । धराधीशाय । धार्मिकाय । धारणाय । धारणाभिरताय । धारणाभ्यासिनां पुरः स्थिताय । धीराय । धीरविमोचकाय । धीधारकाय । धुर्याय । धुरीणाय । धुरन्धराय । धूर्जटये । धूर्वहाय । धैर्याग्रधुर्याय । धैर्यदाय । धैर्यवर्धकाय नमः । ३२४०

धैर्यविभूषिताय नमः । धौरेयाय । धवलश्यामरक्तानां मुक्तिदाय । ध्रुवाय । ध्रुवबद्धानामृषीणां प्रभवे । ध्रुवनिषण्णानामृषीणां पतये । धृष्टये । धृष्णवे । धृष्टेश्वराय । ध्वस्तमनोभवाय नमः । ३२५०

नकारस्य विनायको देवता । विघ्ननाशने विनियोगः ।

नकार रूपाय नमः । नक्ताय । नक्तंचराय । नाकेशपूज्याय । नैकस्मै । नैकसानुचराय । नैकात्मने । नैककर्मकृते । नैकशृंगाय । नखच्छिन्नात्मभूशीर्षाय नमः ३२६०

नखांशुचयनिर्धूततारेशाय । निखिलागमसंसेव्याय । नगरप्रियाय । नगाय । नग्नाय । नग्नवेषधराय । नग्नव्रतधराय । नगेन्द्रकन्यकापांगवीक्षिताय । नगेन्द्रतनयासक्ताय । नगेन्द्रतनयाप्राणवल्लभाय । नगेन्द्रतनयाप्रियाय । नगप्रवरमध्यस्थाय । नागवाहनाय । नागनाथाय । नागहाराय । नागहस्ताय । नागालंकृतपादाय । नागेश्वराय । नागनारीवृताय । नागचूडाय नमः । ३२८०

नागांगाभरणाय नमः । नागभोगोपवीताय । नागयज्ञोपवीताय । नागकंकणहस्ताय । नागरूपाय । नागकंकणाय । नागहारधृते । नागकुण्डलकर्णाय । नागाभरणभूषिताय । नागराजैरलंकृताय । नागेन्द्रयज्ञोपवीतशोभिताय । नागेन्द्रवदनाय । नागेन्द्रहाराय । नागेन्द्रदमनाय । नागेन्द्रभूषणाय । न्यग्रोधरूपाय । न्यग्रोधवृक्षकर्णस्थिताय । निगमाय । निगमालयाय । निगमाचारतत्पराय नमः । ३३००

निगमोच्छ्वासाय नमः । निग्रहाय । निचेरवे । निजाय । निजात्मने । निजपादाम्बुजासक्तसुलभाय । निजाक्षिजाग्नि-

संदग्धत्रिपुराय । नटाय । नटवराय । नटच्चर्याय । नटवर्याय । नटप्रियाय । नटनाख्योत्सवोल्लासहृदयाय । नित्याय । नित्यानां नित्याय । नित्यतृप्ताय । नित्यनर्तनाय । नित्यमाश्रमपूजिताय । नित्यनीतिशुद्धात्मने । नित्यवर्चस्विने नमः । ३३२०

नित्यनित्याय नमः । नित्यानन्दाय । नित्यमुक्ताय । नित्यशक्तिशिरसे । नित्यमुग्राय । नित्यमधिवासितसुवाससे । नित्यचरात्मने । नित्यमुद्बुद्धमकुटाय । नित्यसुन्दराय । नित्यज्ञानाय । नित्यवैराग्याय । नित्यैश्वर्याय । नित्यसत्याय । नित्यधृतधैर्याय । नित्यक्षमाय । नित्यस्वस्थाय । नित्यात्मबोधाय । नित्यादिष्टाश्रयत्वाय । नित्यशुद्धाय । नित्योत्साहाय नमः । ३३४०

नित्यानन्दस्वरूपकाय नमः । नित्यमंगलविग्रहाय । नित्यानपायमहिम्ने । नित्यबुद्धाय । नित्यक्रुद्धाय । नित्यमंगलाय । नित्यनीतिशुद्धात्मने । नीतिमते । नीतिकृते । नीतिविदे । नीतिवत्सलाय । नीतिस्वरूपाय । नीतिसंश्रयाय । नीतये । नीतिमतां श्रेष्ठाय । नीतिज्ञाय । नीतिकुशलाय । नीतिधराय । नीतिवित्तमाय । नीतिप्रदात्रे नमः । ३३६०

नीतिवित्प्रियाय नमः । नुतिप्रियाय । नृत्यते । नृत्यशीलाय । नृत्यप्रियाय । नृत्तस्थिताय । नित्यनृत्याय । नेत्रे । नेत्रसहस्रयुक्ताय । नदते । नदीप्रियाय । नदीधराय । नदीपुलिनसंस्थिताय । नदीरूपाय । नदीभर्त्रे । नदीनां प्रभवे । नदानां प्रभवे । नादाय । नादानुभवरूपाय । नादमध्ये स्थिताय नमः । ३३८०

नादाक्षरवदनाय नमः । नादरूपाय । नादबिन्दु कलातीताय । नादमनोहराय । नादबिन्दुकलात्मकाय । नादमार्गप्रबुद्धाय । नादाकाराय । नादान्ताय । नादात्मने । नन्दिने ।

नन्द्यावर्तसुमार्चिताय। नन्द्याय । नन्दिवाहनाय । नन्दिभृंगिमुखानेकसंस्तुताय। नन्दनाय। नन्दीश्वरप्रमथनाथमहेश्वराय। नन्दिवर्धनाय। नंदये। नन्दिविद्यास्वरूपाय। नन्दिकराय नमः। ३४००

नन्दीश्वराय नमः । नन्दिचक्रांकिताय। नन्दिवक्त्राय। नन्दिकेश्वराय । नन्दिनिलयाय । नन्दिताशेषभुवनाय । नन्दिकेशसमाराध्याय। नान्दीश्राद्धप्रियाय। निदाघाय। नेदिष्ठाय। नाथाय । निधये । निधिविदामर्थेश्वराय । निधिपतये । निधिप्रदाय। निधिरूपकाय । निधनाय । निधनाधिपाय । नानाभुवनाधिकर्त्रे। नानाजगतां विधात्रे नमः। ३४२०

नानाविधायुधोद्भासिदशबाहवे नमः । नानादिशैकनायकाय। नानागानविशारदाय । नानारूपधराय । नानामन्त्ररहस्यविदे । नानाशास्त्रविशारदाय । नानाक्रतुविधानज्ञाय। नानाभीष्टवरप्रदाय। नानाविधानेकरत्नलसत्कुण्डलमण्डिताय। नानाविद्यैकसंश्रयाय। नानाभूतधराय। नपुंसकाय। निपुणाय। निपुणप्रियाय । निपातिने। नीपप्रियाय । नभोरूपाय । नभःस्थलाय। नभस्याय। नभस्पतये नमः। ३४४०

नभोयोनये नमः । नाभये । नाभिमण्डलसंस्थाय । नमःशिवायमन्त्राधिदैवताय । नमस्कारप्रियाय । नम्राय । नमन्निलिंपनायकाय । नमिताचलनायकाय । नामरूपविवर्जिताय। नामसंकीर्तनप्रियाय । नामरहिताय । नामरूपक्रियात्मने । नामप्रियाय । नामपारायणप्रीताय । निमित्ताय । निमित्तस्थाय । निमिषाय । निमेषप्रभवे । नैमिशारण्यनिलयाय। नैमित्तिकार्चनप्रीताय नमः। ३४६०

नयाय नमः । नयज्ञाय । नयनोद्भूतदहनालीढमन्मथाय । नयनाग्निप्लुष्टमारशलभाय । नायकाय । न्यायाय । न्याय-निर्वाहकाय। न्यायनिर्वहणाय । न्यायगम्याय । नियताय । नियतात्मने । नियमाय। नियमाश्रयाय । नियतकल्याणाय । नियमाध्यक्षाय । नियन्त्रे । नियमितेन्द्रियवर्धनाय । नरनारी-शरीराय । नरसिंहमहाकोपशमनाय। नरनारायणाय नमः। ३४८०

नरसिंहाय नमः । नरसिंहनिपातनाय । नरसिंहमहादर्पघातिने। नरसिंहार्चितपदाय । नरवृषभाय । नरशिरोरचितमणिकुण्डलाय। नरवरयुवतीवपुर्धराय। नरकाय। नरवाहनाय । नरकक्लेशशमनाय । नरेशाय । नरकान्तकाय । नरनाथप्रियाय । नरकान्तकरामोघसायकाय । नरनारायणार्चि-ताय। नराय । नराधिपाय । नर्तकाय । नर्तनवित्प्रियकारिणे । नर्तनवादप्रियाय नमः । ३५००

नरापद्वारिदव्रातवातूलाय नमः । नर्मालापविशारदाय । नरकण्ठीरवध्वंससन्नद्धशरभाय। नारायणाय। नारीनरशरीराय। नारदादिमुनीश्वरस्तुतवैभवाय । नारायणप्रियाय । नारदादि-समाराध्याय । नारीमानसमोहनाय । नारदाय । नारदादि-महायोगिवृन्दसेविताय । नारायणसमाश्रिताय । निर्मलाय। निर्लेपाय। निर्विकल्पाय। निरहंकारिणे। निरंजनाय। निराधाराय। निरक्षराय। निरामयाय नमः । ३५२०

निरातंकाय नमः । निरालम्बाय । निरीशाय। निरवद्याय। निरीहाय । निर्वाणाय । निर्गुणाय । निर्मायाय । निरालयाय । निरालोकाय । निरवग्रहाय । निर्जीवजीवनाय । निरजाय । नीरजाय । निर्विकल्पार्थरूपिणे । निर्गुणतत्वरूपाय । निरंगाय । निरंतरपरमानन्दपदाय। निराभासाय। निर्मलज्ञानविग्रहाय नमः । ३५४०

निर्विकाराय नमः । निरुपद्रवाय । निरवधिककरुणाय । निर्द्वंद्वाय । निर्लिप्ताय । निरवधिविभवाय । निरुपाधिकाय । निराकाराय । निर्दयाय । निर्बीजाय । निराशिषे । निरुत्पत्तये । निरावरणधर्मज्ञाय । निर्व्याजाय । निर्व्यग्राय । निरवद्यपदोपायाय । निर्गुणस्थाय । निर्मलप्रभाय । निर्मलभासितशोभितलिङ्गाय । निरंकुशाय नमः । ३५६०

निर्मदाय नमः । निरानन्दाय । निर्मलस्फटिकाकृतये । निर्विशेषायापि वियदिन्द्रचापवत्तेजोमयवपुषे । निर्गुणायापि गुणत्रयात्ममाया शबलत्वप्रकटनाय । निर्वृतिकारणाय । निरास्पदायापि स्वयं सर्वाधाराय । निर्मर्यादाय । निरुद्योगाय । निरुपमाय । निर्भयाय । निरपायाय । निलिम्पनायकाय । नीलजीमूतनिस्वनाय । नीलचिकुराय । नीलरुचये । नीलकण्ठाय । नीललोहिताय । नीलकेशाय । नीलाय नमः । ३५८०

नीलमौलये नमः । नीलग्रीवाय । नीलशिखण्डाय । नीलगलाय । नवशक्तिमते । नवहाटकनिर्माणकिंकिणी-दामशोभिताय । नवनिधिप्रदाय । नवग्रहस्वरूपिणे । नवग्रहार्चितपदाय । नवरत्नगणोपेतकिरीटाय । नवरत्नगुणोपेत-दिव्य नूपुरभूषिताय । नवचक्रमहापद्मसंस्थिताय । नवस्थलस्थभक्तैकोपासिताय । नवलिङ्गमयाकारशोभिताय । नवकोटिगणाराध्यपादुकाय । नवनन्दीश्वरस्तोत्रपरीताय । नवनाथार्पितानन्दकटाक्षाय । नवब्रह्मशिखोत्तंसविज्ञाताय । नवनीतादिमृदुलमानसाय । नवनारायणाश्रांतनिध्येयाय । ३६००

नवमोहतमः पंकक्षालनाय नमः । नवसिद्धसमाराध्याय । नवब्रह्मार्चितपदाय । नवनागनिषेविताय । नवदुर्गार्चनप्रियाय । नवसूत्रविधानविदे । नवर्षिगणसेविताय । नवचन्दनलिप्ताङ्गाय ।

नवचन्द्रकलाधराय । नववस्त्रपरीधानाय । नवरत्नविभूषिताय । नवभस्मविदिग्धांगाय । नवबंधविमोचकाय । नवनीतप्रियाहाराय । नव्यहव्याग्रभोजनाय । नवफालमणये । नवाय । नवात्मने । नवात्मतत्वरूपाय । नंवामबाहुकटीतटाय नमः । ३६२०

निवेदनाय नमः । निवेष्ट्याय । निव्याधिने । निवृत्तात्मने । निवृत्तये । निवृत्तिकलात्मकसर्वाङ्गाय । नाशारूढाय । निशाचराय । निशाचारिणे । निशाकराय । निशालयाय । निशाचाराय । निशाचरगणाकृतये । निश्चलाय । निशुम्भघ्नाय । निश्वासागमलोचनाय । निःश्रेयसालयाय । नष्टशोकाय । निषंगिणे । निष्कलायापि सकलाय नमः । ३६४०

निष्कलंकाय नमः । निष्कारणोदयाय । निष्क्रियाय । निष्कंटकाय । निष्प्रपंचाय । निष्प्रपंचात्मने । निष्प्रभाय । निष्ठाशान्तिपरायणाय । नासालोकनतत्पराय । नासाग्रन्यस्तनिटिलनयनाय । नासापुटविभ्राजितमौक्तिकाय । नासामणिविराजिताय । निस्संगाय । निःस्पृहाय । निःस्थूलरूपाय । निस्तुलौदार्यसौभाग्यप्रबलाय । निसर्गामलभूषणाय । निस्तुलाय । निस्तरंग समुद्राभाय । नृसिंहसंहन्त्रे नमः । ३६६०

नृसिंहचर्माम्बरधराय नमः । निहिताय । निहन्त्रे । नलिनीदललग्नाम्बुनिर्लेपाय । नक्षत्रमालिने । नक्षत्रमालाभूषणाय । नक्षत्रविग्रहमतये । नक्षत्राणां चन्द्रमसे । नक्षत्रनाथसहस्रभासुराय । नक्षत्रसाधकाय नमः । ३६७०

पकारस्य वायुर्देवता । पुष्ट्यर्थे विनियोगः ।

पंकजासनपद्मलोचनपूजितांघ्रिसरोरुहाय नमः । पंकजहारसुशोभितलिङ्गाय । प्रकाशाय । प्रकाशात्मने । प्रकटाय ।

प्रकृतिदक्षिणाय । प्रकृतेशाय । प्रकृत्यै । प्रकृत्युपगूढरूपाय । प्रकृतीशाय नमः । ३६८०

प्रकृतिकल्याणाय नमः । प्रकृतिसाधकाय । प्रकृतिदूरांघ्रये । प्रकृतिसुन्दराय । प्रकृतिमनोहराय । प्रकुन्तानां पतये । प्रकुखिदते । प्रगल्भाय । प्राग्दक्षिणोदङ्मुखाय । पाँसव्याय । पिंगलजटाय । पिंगलाय । पिंगलाक्षाय । पिंगकपर्दिने । पुंगवकेतवे । पञ्चब्रह्मात्मकसदालिङ्गाय । पञ्चब्रह्मात्मकवचाय । पञ्चसादाख्य-वदनाय । पञ्चकलात्मकसर्वाङ्गाय । पञ्चमूर्त्यात्मने नमः । ३७००

पञ्चमूर्त्यात्मकवदनाय नमः । पञ्चविंशतिमूर्ति प्रतिपाद-कोर्ध्व वदनाय । पञ्चविंशतिमूर्त्यात्मने । पञ्चशक्त्यु-दिताय । पञ्चभूषणाय । पञ्चकप्रियाय । पञ्चाक्षराय । पञ्चास्याय । पञ्चयज्ञाय । पञ्चविंशतितत्वज्ञाय । पञ्चब्रह्मसमुत्पत्तये । पञ्चवक्त्राय । पञ्चशीर्षाय । पञ्चयज्ञप्रभंजनाय । पञ्चवर्णाय । पञ्चदशाचक्षुषे । पञ्चदशाहस्ताय । पञ्चतन्मात्ररूपाय । पञ्चभूतात्मने । पञ्चकर्मेन्द्रियात्मने नमः । ३७२०

पञ्चार्धहितवे नमः । पञ्चास्यरुद्ररूपाय । पञ्चाशत्कोटि-मूर्तये । पञ्चमन्त्रस्वरूपिणे । पञ्चमाय । पञ्चास्यफणिहाराय । पञ्चाक्षरमयाय । पञ्चाक्षरीदृशे । पञ्चार्थविज्ञानसुधास्रोतः स्वरूपिणे । पञ्चपादपपुष्प गंधि-पदाम्बुजद्वयशोभिताय । पञ्चाननाय । पञ्चमुखाय । पञ्च-भूताधिपतये । पञ्चास्रहराय । पञ्चपातकसंहाराय । पञ्चाम्नाय-स्वरूपिणे । पञ्चकोशस्वरूपाय । पञ्चभूताधिवासाय । पञ्चाक्षरनिवासिने । पञ्चप्राणाय नमः । ३७४०

पञ्चब्रह्मस्वरूपिणे नमः । पञ्चवक्त्राय । पञ्चमूर्धाभि-संयुक्ताय । पञ्चवदनाय । प्राच्याय । प्राचीनपुरुषाय । प्राच्यात्मने ।

प्रचेतसे । प्रचुरदिव्याग्रये । प्रचुरदण्डहस्ताय । प्राचीनानामपि गिरामगोचराय । प्राचीनपुण्यपुरुषाय । पाञ्चरात्राणां विष्णवे । प्रच्छन्नाय । प्रच्छन्नस्फटिकप्रभाय । प्रच्छन्नरूपाय । पुच्छिने । प्रजाध्यक्षाय । प्रजापतये । प्रजाभवाय नमः । ३७६०

प्रजापालाय नमः । प्रजाबीजाय । प्रजनेशाय । प्रजानां परहेतवे । प्रजानां व्यूहहेतवे । प्रजापतीनां पतये । प्रजापतिपतये । प्रज्वालिकायां गिरिजासमेताय । पुंजिष्टेभ्यः । पूज्याय । प्रज्ञाप्रदाय । प्रज्ञानघनरूपिणे । प्रज्ञारूपाय । प्राज्ञपूज्याय । प्राज्ञाय । पटवे । पट्टसिने । पट्टसरूपधारिणे । पीठत्रयस्वरूपिणे । पण्डिताय नमः । ३७८०

पाण्ड्यसुन्दराय नमः । पाण्डवे । पाण्डुराख्याय । पाण्डुराङ्गाय । पुण्डरीकनिभेक्षणाय । पुण्डरीकनयनाय । प्रौढाय । पणविने । प्रणवस्वरूपाय । प्रणवार्थाय । प्रणवादिमन्त्र-जनकोर्ध्ववदनाय । प्रणवाक्षरहृदयाय । प्रणवमन्त्रात्मने । प्रणवात्मकाय । प्रणवाय । प्रणतार्तिघ्नाय । प्रणवप्रणवेशाय । प्रणतभक्तजनार्तिहराय । प्रणतार्तिहराय । प्रणीतपञ्चार्थ-प्रयोगपरमामृताय नमः । ३८००

प्राणायामरतानां प्रत्यक्षाय नमः । प्राणाय । प्राणपालाय । प्राणापानाय । प्राणदाय । प्राणधारणाय । प्राणिनां प्रभवे । प्राणमयाय । प्राणानां सुहृदे । प्राणेश्वराय । प्राणापानप्रवर्तिने । पुण्याय । पुण्यचंचुरिणे । पुण्यशालिबन्धवे । पुण्यफलिताय । पुण्यश्रवणकीर्तनाय । पुण्यकीर्तये । पुण्यमूर्तये । पुण्यशरण्याय । पुण्यदात्रे नमः । ३८२०

पुण्यापुण्यफलप्रदाय नमः । पुण्योदयाय । पतिनामकलया-दिव्यापारत्रयलक्षितशक्तिमदात्मने । पताकाध्वजिनीपतये । पततां

गरुडाय । पतंजलिव्याघ्रपादसन्नुताय। पतंगपंकजासुहृत्कृपीटयोनिचक्षुषे । पत्तीनां पतये । पत्तीशाय । प्रतिसद्याय । प्रतिश्रवाय । प्रतीचात्मने। प्रणतार्तिभंजनाय । प्रतापाय। प्रत्यगात्मकाय । प्रतिसर्याय । प्रतिष्ठिताय । प्रतापनाय। प्रतापवते । प्रतिष्ठाकलात्मकनाभ्यादिकाय नमः । ३८४०

प्रत्याहाराय नमः । प्रत्याहाररताय । प्रत्याहाररतानां प्रतिस्थानस्थिताय । प्रतिदधानेभ्यः । प्रतिश्रवाय । प्रतरणाय । प्रत्युदीर्णाय । प्रत्यगात्मने । पातालवासिने । पातालनरकेशाय । पातंजलानां शाब्दाय । पात्राय । पातित्यसंहर्त्रे । पित्रे । पितॄणां पित्रे । पितामहाय । पितृमात्रे । पितामहशिरश्छेदप्रवीणकरपल्लवाय । पितॄणां पतये। पीताय नमः । ३८६०

पीतवर्णाय नमः । पीतवदनाय। पीतशुक्लाय। पीतच्छत्राय। पीतवाससे । पीतांबरधराय । पीतांबरविभूषणाय । पीततरुणपूर्ववदनाय । प्रीताय । प्रीतवदनाय । प्रीतिमते । प्रीतिवर्धनाय । पुत्रपूजिताय । पुत्रदाय । पुत्रिणे । पूतात्मने । पूतानां प्रभवे । प्रेतचारिमहाशक्तये । प्रेतमनसे । प्रेतासनाय नमः । ३८८०

प्रेतचारिणे नमः । प्रेतात्मने । प्रेतानां पुरहर्त्रे । पथ्याय । पथीनां पतये। प्रथमाय। पृथिव्यै। पृथिवीव्यापिने। पृथिव्यात्मने। पृथ्वीपतये । पृथ्वीरथाय । पृथ्व्यादितत्वप्रतिष्ठिताय । पदक्षिणकरांगुलिकाय । पद्मेश्वराय । पद्मनिधये । पद्मिनीवल्लभप्रियाय । पद्मनाभाय । पद्मालयाय । पद्मगर्भाय । पद्मकिंजल्कसन्निभाय नमः । ३९००

पद्मप्रियाय नमः । पद्महस्ताय। पद्मलोचनाय। पद्मासनाय। पद्मार्थमालाय । पद्मनालाग्राय । पद्मपादाय । पद्माय ।

पद्मावतीप्रियाय। पद्मपराय। पद्मवर्णाय। पद्मिनीपतिदंतालिदमनाय। पद्मासनरताय। पद्माभवक्त्रनेत्राय। प्रदीप्तविद्युत्कनकावभासाय। प्रदीपाय। प्रदीपविमलाय। प्रदक्षिणे। प्रदानात्मने। पद्यगद्यविशारदाय नमः। ३९२०

पादाय नमः। पादाध्वनीरमांसादिकाय। पादापस्मृतिसंहर्त्रे। पादहीनाय। पादिमेढ्राय। पादशुश्रूषणासक्तनाकनारीसमावृताय। पादभिन्नाहिलोकाय। प्रधानाय। प्रधानपुरुषाय। प्रधानपुरुषेशाय। प्रधानप्रभवे। प्रधानधृते। पन्नगाय। पन्नगांकाभाय। पन्नगारातये। पिनाकिने। पिनाकाय। पिनाकधृते। पिनाकभृते। पिनाकहस्ताय नमः। ३९४०

पंपद्मविशालाक्षाय नमः। प्रपन्नदुःखनाशिने। प्रपञ्चनाशकल्पान्तभैरवाय। प्रपथ्याय। प्रपितामहाय। प्रपञ्चनामकाव्यक्तादिपृथिव्यन्तात्मने। पापघ्नाय। पापहारिणे। पापारये। पापनाशनाय। पापनाशकराय। पापराशिहराय। पापनाशाय। प्रफुल्लनीलपंकजप्रपञ्चकालिमप्रभाविडंबिकंठकंदलीरुचिप्रबद्धकन्धराय। प्रभवे। प्रभंजनाय। प्रभाकराय। प्रभवाय। प्रभिन्नाय। प्रभावाय नमः। ३९६०

प्रभूतप्राशिताय नमः। प्रभामण्डलमण्डिताय। प्रमथाय। प्रमथाधिपाय। प्रमथ्याय। प्रमथनाथाय। प्रमथस्वामिने। प्रमथभूतगणसेविताय। प्रमथादिनाथाय। प्रमथेशाय। प्रमथेन्द्रावृताय। प्रमाणाय। प्रमाणभूताय। प्रमाणज्ञाय। प्रमाणबाधादिविवर्जिताय। प्रमथिने। प्रमाथिने। प्रमुदितात्मने। प्रमुदिताय। प्रमृशाय नमः। ३९८०

प्रमोदाय नमः। पयोनिधये। प्रयोगाय। प्रियव्रताय। प्रियव्रतसमाराध्याय। प्रियाराध्याय। प्रियकृते। प्रियसम्मताय।

प्रियभक्ताय । प्रियंवदाय । प्रियाय । प्रियकराय । प्रियदर्शनाय । प्रियंवदश्रेष्ठाय । प्रियसंदर्शनाय । प्रियनारायणाय । प्रियकैलासाय । प्रियभूषणाय । परिच्छेद रहिताय । पराशरवसिष्ठ मार्कंडेयापस्तंबबोधायनवर्गदीक्षकागस्त्यादिपञ्चदीक्षागुरु भूतपञ्चकवदनाय नमः । ४०००

परार्थजापकब्रह्मबंधुसद्बंधवे नमः । परमेश्वरागमहाराय । परब्रह्मणे । परमूर्तये । परात्पराय । परामोदाय । परमधार्मिकाय । परमाय । परमार्थाय । परविद्याविकर्षणाय । परमेशाय । परायणाय । परार्थविदे । पररहस्यविदे । परचक्रघ्नाय । परपुरञ्जयाय । परमेष्ठिने । परार्थैकप्रयोजनाय । परिवृताय । परश्वधिने नमः । ४०२०

परावराय नमः । परमात्मने । परस्मै । परमयाय । पराजयाय । पराशराय । परावरपराय । परकायकपण्डिताय । परार्थवृत्तये । परमार्थगुरवे । परश्वधायुधाय । परिधीकृत खेचराय । पर्यायाय । परानतये । परमेशानाय । परिवञ्चकाय । परिचराय । पर्णशद्याय । पण्र्याय । परापरेशाय नमः । ४०४०

परदाय नमः । परसूक्ष्मात्मने । परेशाय । परमाणवे । परशुधारिणे । परज्योतिःस्वरूपिणे । परश्वधलसद्दिव्य-कराब्जाय । परानन्दस्वरूपार्थबोधकाय । परार्थस्य प्रभवे । परार्थ प्रभवे । परस्य प्रभवे । परमात्मस्वरूपिणे । परमलिङ्गाय । परिहाराय । परश्वधभृते । पर्वतरूपधारिणे । परमशिवाय । परमात्मभूताय । परायणाय । परस्मै धाम्ने नमः । ४०६०

पर्वतानां मेरवे नमः । परेषां परमेश्वराय । परिधानाय । परश्वधधारिणे । परल्यां वैद्यनाथाय । परात्परलिंगाय ।

परमात्मकलिंगाय। परानंदमयाय। परमप्रकाशाय। परमशान्त-स्वरूपाय । परात्मने । परमदेवाय । परमहेतवे । परमैश्वर्य-संपन्नाय। परमतत्वाय । परमकल्याणनिधये । परिपूर्णाय। पर्वतराजेन्द्रकन्यकापतये । परशुमृगवरदाभयहस्ताय। परापर-ज्ञाय नमः। ४०८०

परिपूर्णपरानंदाय नमः । परचित्सत्यविग्रहाय । परानंदप्रदायकाय। पर्वताधीशजामात्रे। परिपूर्णाय। परिवश्वते। परमपदाय। परशवे। परितोऽपि विद्यमानाय। परब्रह्मस्वरूपिणे। पार्वतीरमणाय । पार्वतीशाय । पार्वतीपतये । पारिजाताय । पारिजातसुपुष्पाय। पार्वतीमनोहरप्रियाय। पार्वतीहृदयवल्लभाय। पारिजातगुणातीतपादपंकजवैभवाय । पार्वतीप्राणरूपिणे । पाराय नमः। ४१००

पारिषदप्रियाय नमः । पार्याय । प्रारब्धजन्ममरण-मोचकाय। प्रार्थितदायिने। पुरातनाय। पुराणाय। पुरुषाय। पुराणपुरुषाय । पुराणागमसूचकाय । पुराणवेत्रे । पुरुहूताय । पुरुष्टुताय। पुरुजिते। पुरुषेशाय। पुरंदराय। पुरत्रयविघातिने। पुराणप्रभवे । पुराणवृषभाय। पुरस्ताद्बृंहते । पुरघ्नाय नमः । ४१२०

पुरेशयाय नमः। पुराणलिंगाय। पुरुषलिंगाय। पुरच्छेत्रे। पुरान्तकाय। पुरुषश्रेष्ठाय। पुरत्रयारये। पुरारये। पुरत्रयरिपवे। पुरत्रयनाशाय । पुरंदरनुतांघ्रये । पुरंदरवरप्रदाय । पुरंदरविमानगाय। पुरहराय । पुरवैरिणे । पुरच्छिदे । पुरस्त्यादिमहद्दिव्यपञ्चब्रह्ममुखान्विताय। पुरुनाम्ने। पुरुरूपाय। पुरुषोत्तमरूपाय नमः। ४१४०

पूर्णरूपाय नमः । पूर्णानंदाय । पूरयित्रे । पूर्वजाय । पूर्तमूर्तये । पूर्णाय । पूर्वाय । पल्लविने । प्रलंबभोगीन्द्रलुलुन्त-कंठाय । पालनतत्पराय । पालाशकृन्तते । पाल्लाधिपतये । पुलस्तये । पुलस्त्याय । पुलहाय । पवनवेगाय । पवनरूपिणे । पवनाशनभूषणाय । पवित्राय । पवित्रदेहाय नमः । ४१६०

पवित्रपाणये नमः । प्रवराय । प्रवृत्तये । प्रवीणविविधभूत-परिष्कृताय । प्रवालशोणाधराय । प्रवाहाय । प्रवाह्याय । प्लवनाय । पावकाय । पावकाकृतये । पावनाय । पावाय । प्रावृडाकाराय । प्रावृट्कालप्रवर्तकाय । प्रावृट्कृते । प्रावृण्मयाय । प्रावृड्-विनाशकाय । प्रांशवे । पशुनामकसकलादिभेदबंधत्रयात्मने । पशुपतये नमः । ४१८०

पशूपहाररसिकाय नमः । पशुमंत्रौषधाय । पश्चिमाय । पशुघ्नाय । पशुपाशनाशिने । पशुस्थाय । पाशाय । पाशहराय । पाशनामकसकलादिक्षित्यन्तब्रह्मात्मने । पाशहस्ताय । पाशिने । पाशमोचनाय । पाशांकुशाभयवरप्रदशूलपाणये । पाशत्रिशूल-खट्वांगकुरंगधराय । प्रशस्ताय । प्रशस्तचारुविग्रहाय । प्रशान्ताय । प्रशान्तात्मने । प्रशान्तबुद्धये । प्रांशुज्योतिषे नमः । ४२००

पिशिताय नमः । पिशंगाय । पिशिताशाय । पिशाचानुचरावृताय । पश्यल्ललाटाय । पशुपाशविमोचनाय । पश्यतोहराय । पशुपालकाय । प्रशान्ताय । प्रशंस्याय । प्रशंसनीयाय । प्रशंसाविषयाय । प्रशंसापात्राय । प्रशस्तगुण-सिन्धवे । प्रशस्तयशसे । प्रशान्तमूर्तये । प्रशासितभुवनाय । प्रशासितकन्दर्पाय । प्रशान्तमुनिगणस्तुताय । प्रश्नाय नमः । ४२२०

पृश्निगर्भाय नमः । प्रश्रिताय । प्रश्रितप्रियाय । प्रश्रितजनरक्षकाय । प्रश्रिताभीष्टकराय । प्रशितिमोचकाय । प्रशितिहराय । प्रशितिकराय । प्रशितिनिवारकाय । पाशलीलारताय। पाशहस्ताय । पाशायुधनिषेविताय । पाशकप्रियाय । पाशिने । प्रांशुबाहवे । प्रांशुमूर्तये । प्राशितगरलाय। प्राशासितभुवनाय । पाशकविहारनिरताय । प्राशितश्रवणप्रियाय नमः । ४२४०

प्राशितमुदितान्तरंगाय नमः । पाश्याबद्धजनभीतिहृते । पाश्चात्यपूजिताय । पाश्चात्यवदनांचिताय । पाश्चात्यवरदाय । पाशुपाल्यव्रतधराय। पिशाचगणसेविताय। पिशाचिकगणेशाय। पिशुनाय। पिशुनांतकाय। पिशिताशनवरदाय। पिशिताशनेन्द्र-पूजिताय । पिशिताशहृते । पिशितभुग्दंडनपण्डिताय । पिशंग-लोचनाय । पिशंगजटाजूटाय । पिशितामोदितांगाय । पिशित-चूर्णोत्सवप्रियाय। पिशितवासनावासिताय। पिशुनांचितचन्दन-चर्चितांगाय नमः । ४२६०

पिशुनगंधप्रियाय नमः । पिशुनपंकाभिषिक्ताय । पुंश्चली-दूराय । पुंश्चलीकृतमुनिभार्याय । पुंश्चलीदोषनिर्मुक्तमुन्यंगनाय । पुंश्चलीप्राणनाथाय । पेशलाय । पेशलांगाय । पेशलगुणाय । पेशीपिहितखड्गाय । पेशीकोश पोषकाय। पेशीकोशगर्भाय । पेशीकोशीभूतभुवनाय । पेशी प्रियाय। पाषाणभेदकायुधाय । पाषाणगैरिक वर्णाय । पाषाणगर्भकदोषहीनरत्न कुंडलाय । पाषंडजनदूराय। पाषंडिमदहराय। पाषाण कठिनोरस्काय नमः । ४२८०

पाषाण दलनक्षमवज्रहस्ताय नमः । पार्ष्णिप्रियाय। पार्ष्णि गोपीलसिताय । पिष्टातधूलिधूसराय । पिष्टातचूर्णोत्सवप्रियाय।

पिष्टपिशिताशनाय। पिष्टभक्ताघाय। पुष्टभक्तजनाय। पुष्टिकराय। पुष्पकप्रियराजराजसखाय। पुष्पमंजरीमण्डिताय। पुष्पवाटिका विहार कुतुकिने। पुष्परागमणिमकुटशोभिताय। पुष्परागपूर्ण कुण्डलाय। पुष्पपुच्छीप्रीतिपूर्णाय। पुष्पपुच्छी पूजिताय। पुष्पपुच्छी प्रियंकराय। पुष्पपुट कमलार्चिताय। पुष्पाञ्जलि पूजिताय। पुष्पधूलीधूसरचरणाय नमः। ४३००

पुष्पमालिकाविराजमानाय नमः। पुष्कराक्षाय। पुष्करांबराय। पुष्करमूर्तये। पुष्करकेशाय। पुष्करेक्षणाय। पुष्पदंतवरदाय। पुष्पवद्रूपलोचनाय। पुष्कलावर्तकनायक-स्तुताय। पुष्कलाय। पुष्कलगुणाभिरामाय। पुष्करिणी प्रियाय। पुष्करिणी प्राणदाय। पुष्करिणी तीरवासिने। पुष्करक्षेत्रपालाय। पुष्करेशाय। पुष्पकेतुहराय। पुष्पकेतुप्रियाय। पुष्पदंताख्य गंधर्ववरदाय। पुष्पदंतपूजिताय नमः। ४३२०

पुष्पेषुप्राणहराय नमः। पुष्पबाणपुरन्ध्रीपूजिताय। पुष्प-शरकामिनीसेविताय। पुष्पेषुपत्नीवरदाय। पुष्परथाधिरुढाय। पुष्परथारोहकौतुकिने। पुष्कर वर्मधराय। पुष्कर वर्म शोभाकराय। पुष्यमी प्रियशेखराय। पुष्पकाधिप प्रियाय। पुष्परसाभिषिक्ताय। पुष्परसाभिषेक प्रियाय। पूष्णे। पूषमण्डलवासिने। पूषनेत्राय। पूषपूज्याय। प्रेष्यपोषकाय। प्रेष्यवृन्दस्तुताय। प्रेष्याप्सरः परिचारिताय। प्रेष्ठजनपालकाय नमः। ४३४०

प्रेषकाय नमः। पैष्टिकप्रियाय। पैष्टिकामोदशालिने। पैष्टिकतुष्टचित्ताय। प्रोषितभर्तृका प्रियप्रदाय। प्रोषितनायिका संस्तुताय। पौष्पक प्रीतियुक्ताय। पौष्पकानुरक्ताय। पौष प्रियाय। पौषोद्युक्ताय। पौषीचन्द्रिका धवलाय। पुष्कराय। पुष्करस्रजे। पुष्करनाल जन्मने। पुष्टाय। पुष्टि वर्धनाय। पुष्टिसंवर्धनाय। पुष्टानां पतये। पुष्टेशाय। पुष्टिप्रदाय नमः। ४३६०

5

पुष्पवस्तु स्वरूपाय नमः । पुष्पवद्वह्निनयनाय । पुष्पमालिने। पुष्पचाप विभंजकाय । पूषदंतांतकाय । पूषदंत विनाशाय। पूषदंतभिदे। पूषदन्तहृते। पृषदश्वाय। प्रसन्नेश्वराय। प्रसादशीलाय। प्रसाद सुमुखाय। प्रसादित निशाचराय। प्रसाद गोचरीकृत सुरसंघाय । प्रसवित्रे । प्रस्रवणाचलवासाय । प्रस्रवणप्रियाय। प्रसारिणीप्रायजटालताय। प्रसृतधृत विषभक्ष-काय। प्रसृतीकृत सागराय नमः। ४३८०

प्रसन्नहृदयाय नमः। प्रस्मृतीकृत भक्तापराधाय। प्रसाधित निजशरीराय। प्रसारित वश्यलोकाय। प्रसितजन शंकराय। प्रस्थित क्रोधाय । प्रस्तुताकाराय । प्रसोष्यन्तीपालकाय । प्रसूतिकराय । प्रसूतिजनकाय । प्रसूतरक्षणतत्पराय । प्रसूजनयितृरूपाय । प्रस्तोतृगीताय । पुस्तकालंकृतहस्ताय । प्रसृतकीर्तये। प्रसरप्रदाय। प्रसरशूराय। प्रसरनिरताय। प्रसर वृषभवाहाय। प्रसरशायिने। ४४००

प्रस्तरशय्याशायिने। प्रस्तरहारालंकृताय। प्रस्तरासीनाय। प्रस्तारकृते। प्रस्तार प्रवर्तकाय। प्रसारशीलाय। प्रसारिणे। प्रसारि मण्डलस्थाय। प्रस्तुतांकुराय। प्रसवजनकाय। प्रसव भूषिताय। प्रसेवकाय। प्रसूरूपाय। प्रास्ताविकस्तुतिस्तुताय। प्रासादवा-सनिरताय । प्रासाद्यायुधमण्डिताय । प्रास्तरिपुमण्डलाय। पांसुचन्दनाय। पांसुदिग्धाय। पांसुचन्दनभूषिताय नमः। ४४२०

प्रासंग्याय नमः । पांसुचामरलिप्तांगाय । पांसुचाभर-प्रियाय। पांसुचामराय । पांसुलाय । पांसुलामदभंजनाय । पांसुलायुधाय। पांसुलावरदाय। पांसुलाभारहराय। पांसुलाचार-निर्धारकाय । पांसुलागमहेतुवदनाय । पांसुधूसराय । पांसुकासीनप्रियाय । पुस्तकालंकृतशोभाय । पुस्तकाभय-

वरदहस्ताय। पुंसवनप्रियाय। पुंस्कोकिलकूजितलोलुपाय। पुंसां मोहनरूपाय। पौस्नसमर्चिताय। पौस्नरूपाय नमः। ४४४०

पौस्नाभीष्टदायिने नमः। पांसव्याय। प्रसन्नवदनाय। प्रसन्नाननाय। प्रसन्नास्याय। प्रसादाभिमुखाय। प्रसादाय। प्रसन्नात्मने। प्रसन्नाय। प्रसिद्धाय। प्रसन्नचित्ताय। प्रसवाय। प्रसृताय। प्रस्थिताय। पुंसे। प्रस्कन्दनाय। प्रहरणानां वज्राय। प्रहतप्राशिताय। प्रहिताय। प्रहृष्टाय नमः। ४४६०

प्रहृष्टकगणसेविताय नमः। प्रहेलिकाविदग्धाय। प्रहतवैरिणे। प्रहृतरिपुमण्डलाय। प्रहर्षकाय। प्रहरणभूषणाय। प्रहरणरूपिणे। प्रहरणदेवतास्तुताय। प्रहर्त्रे। प्रहन्त्रे। प्रहेतिवन्द्याय। प्रलयानलकृते। प्रलयानलनाशकाय। प्रलयार्णवसंस्थाय। प्रलयोत्पत्तिहेतवे। प्रलयदग्धसुरासुरमानवाय। पक्षिणीचन्द्रिकाभाय। पक्षीन्द्रवाहनेड्याय। पक्षीशाय। पक्षीश्वरपूजिताय नमः। ४४८०

प्लक्षद्वीपनिवासिने नमः। प्लक्षेश्वराय। प्रक्षिप्तपातकाय। प्रेक्षावदग्रेसराय। प्रेक्षावत्पूजिताय। प्रेक्षादत्तभुवनाधिपत्याय। प्रेक्षणलब्धनाकेन्द्रपूजिताय। प्रेक्षाधाम्ने। प्रक्षीणदोषाय। पक्षाय। पक्षमासार्धमासाय। पक्षमासदिनात्मने। पक्षधारिणे। पक्षरूपाय। पक्षिणे। पक्षीन्द्रवाहनाय नमः। ४४९६

फकारस्य वासुदेवो देवता। धनधान्यपशुप्रदाने विनियोगः।

फ्रेंकाराय नमः। फट्काराय। फडस्त्रजपसंतुष्टाय। फणीन्द्रकुण्डलाय नमः। ४५००

फणिनाथाय नमः। फणिपूजिताय। फणिविद्यामयाय। फणीन्द्रोक्तमहिम्ने। फणीन्द्रांगदधारिणे। फणीन्द्रवरदाय।

फणिराजचूडाय । फणिराजविभूषणाय । फणिपतिवेष्टित-शोभितलिङ्गाय । फणाधरेन्द्रधारिणे । फणीन्द्रसंवीततनवे । फणीन्द्रमेखलाय । फणिदामविराजिताय । फणामणि-विराजिताय । फेन्याय । फूत्कृताय । फ्रेंफ्रें नमः । फ्रेंपरायणाय । फ्रेंफ्रेंशव्दपरायणाय । फ्रेंबीजजपसंतुष्टाय नमः । ४५२०

फलाय नमः । फलदाय । फलज्ञाय । फलांकाय । फलरूपिणे । फाले भस्मरेखात्रयान्विताय । फालाक्षिजातज्वलनलेलिहान-मनोभवाय । फालाक्षाय । फालाक्षिप्रभवप्रभंजनसखप्रोद्यत्स्फु-लिङ्गच्छटातूलानङ्गकाय । फालचन्द्राय । फालेक्षणानल-विशोषितपञ्चबाणाय । फालेक्षणाय । फाललोचनजातपावक-दग्धमन्मथविग्रहाय । फालनेत्राय । फुल्लपद्मविशालाक्षाय । फं वामकर्णांगुलिकाय नमः । ४५३६

बकारस्य अश्विनौ देवता । वातपित्तादिनाशने विनियोगः ।

बीजाय नमः । बीजमध्यस्थिताय । बीजतोषिताय । बीजमुद्रास्वरूपिणे नमः । ४५४०

बीजवाहनाय नमः । बीजेशाय । बीजाधारकरूपाय । बीजाध्यक्षाय । बीजकर्त्रे । बीजतन्त्राय । बीजनाशकाय । बीजयन्त्रस्थिताय । बीजराजाय । बीजहेतवे । बीजवर्णस्वरूपाय । बीजदाय । बीजमात्राय । बीजवृद्धिदाय । बीजधराय । बीजासनसंस्थिताङ्गाय । बीजरूपाय । बीजपाराय । बीजसंस्थमरीचये । बीजकोशाय नमः । ४५६०

बीजिने नमः । बीजवृक्षस्वरूपिणे । बीजहन्त्रे । बीजक्षेत्राधिपाय । बडवामुखाय । बडबाग्रये । बिडौजोविधि-वैकुण्ठनमिताय । बाणपूजिताय । बाणपूजारताय । बाणहस्ताय ।

बाणप्रियाय । बाणीकृतेन्द्वग्निनारायणतीक्ष्णेषवे । बादिहस्ताय । बृंदारकवरार्चिताय । बृंदावनकृतालयाय । बिन्दवे । बिंदुनादात्मकाय । बन्धनाय । बन्धकर्त्रे । बन्धवर्जिताय नमः । ४५८०

बन्धवे नमः । बन्धाय । बुद्धये । बुद्धाय । बुध्नियाय । बुद्धिमद्वराय । बुद्धीन्द्रियात्मने । बुद्धीशाय । बुद्धिप्रेरकाय । बुद्धिदाय । बुद्धिरूपाय । बुद्धिविवर्धनकारणलिङ्गाय । बुधात्मने । बोध्रे । बोध्याय । बोद्धव्याय । बोधिने । बोधित्रे । बोधनाय । बोधरूपिणे नमः । ४६००

बोध्यरूपाय नमः । ब्लूं । ब्लूं ब्लूं बं परमशिवाय । बिम्बागममुखाय । बभ्रवे । बब्लुशाय । बाभ्राशब्दपरायणाय । बिभ्राणाय । बलाय । बलशालिने । बलघ्ने । बलचारिणे । बलरूपधृते । बलकृते । बलविदे । बलप्रमथनाय । बलाबलसमूहाय । बलवतां वायवे । बलिने नमः । ४६२०

बलिभुजे नमः । बलिगतये । बलीवर्दाय । बलोन्माथिने । बलवते । बलिवीराय । बालाय । बालरूपाय । बालरूपधराय । बालमतये । बालेश्वराय । बालभावभृते । बालप्रियाय । बालचन्द्रप्रियाय । बालचन्द्रावतंसाय । बालादित्यसहस्रकोटिसदृशाय । बालावर्ण्यकवित्वभूमिसुखदाय । बालार्कमण्डलाकाराय । बिल्वदलाकाराय । बिल्वप्रियाय नमः । ४६४०

बिल्ववृक्षसमाश्रयाय नमः । बिल्वाय । बिल्मिने । बिल्वमालाधराय । बैल्वाय । बहिर्मुखाय । बहिर्मुखमहादर्पदमनाय । बहुश्रुताय । बहुप्रदाय । बहुमयाय । बहुरूपाय । बहुभूताय । बहुधराय । बहुरूपधृते । बहुरश्मये । बहुप्रसादाय । बहुधानिन्दिताय । बहुमालाय । बहुलाय । बहुकर्कशाय नमः । ४६६०

बहुरूपिणे नमः । बहुविधपरितोषबाष्पपूरस्फुट-पुलकांकितचारुभोगभूमये । बहुनेत्राय । बाहुभ्यां । बृहस्पतये । बृहस्पत्यवमत्यासशक्रभीहारिणे । बृहद्गर्भाय । बृहज्ज्योतिषे । बृहते । बृहद्रथाय । बृहत्कीर्तये । ब्रह्मात्मकपादाय । ब्रह्मात्मकपश्चिमवदनाय । ब्रह्मरूपिणे । ब्रह्मचारिणे । ब्रह्मदारकाय । ब्रह्मात्मने । ब्रह्मसदनाय । ब्रह्मांडभेदनाय । ब्रह्मज्ञानिने नमः । ४६८०

ब्रह्मद्रुहे नमः । ब्रह्मचक्राय । ब्रह्मगर्भाय । ब्रह्मणे । ब्रह्मण्याय । ब्रह्मदण्डविनिर्मात्रे । ब्रह्मकृते । ब्रह्मांगहृते । ब्रह्मविदे । ब्रह्मलोकाय । ब्रह्मवर्चसाय । ब्रह्मांडनायकाय । ब्रह्मज्योतिषे । ब्रह्मानंदात्मने । ब्रह्मशिरच्छेत्रे । ब्रह्ममयाय । ब्रह्मयोनये । ब्रह्मचक्रभ्रमाय । ब्रह्मानंदाय । ब्रह्मांडरूपाय नमः । ४७००

ब्रह्मरूपाय नमः । ब्रह्मांडरूपिणे । ब्रह्माधिपतये । ब्रह्मलिङ्गाय । ब्रह्मादिप्रभवे । ब्रह्मविद्याधिपतये । ब्रह्मविद्याप्रदायिने । ब्रह्मण्यदेवाय । ब्रह्मचारिणां शरण्याय । ब्रह्मणोऽधिपतये । ब्रह्मणः प्रियाय । ब्रह्मात्मैक्यस्वरूपिणे । ब्रह्मतनवे । ब्रह्मविदां ब्रह्मणे । ब्रह्मशिरोहंत्रे । ब्रह्मिष्ठाय । ब्रह्मज्योतिःस्वरूपाय । ब्रह्मस्वरूपाय । ब्रह्मभावनतत्पराय । ब्रह्मबीजाय नमः । ४७२०

ब्रह्मनारायणेशानाद्यखिलाकृतये नमः । ब्रह्ममुरारि-सुरार्चितलिङ्गाय । ब्रह्मरुद्राद्यवताराय । ब्रह्मणां गणपतये । ब्रह्मादिभिर्वन्द्यमानाय । ब्रह्मादिभिर्वन्द्यमानपदांबुजाय । ब्रह्मवादिनां ब्रह्मणे । ब्रह्मादिभिरनुध्येयाय । ब्रह्मणस्पतये । ब्रह्मयोनये । ब्रह्मवेद्याय । ब्रह्मस्थाय । ब्रह्मविद्ध्येयाय । ब्रह्मवर्जिताय । ब्रह्मांडसाक्षिणे । ब्रह्मतत्त्वाय ।

ब्रह्मास्त्रार्थस्वरूपाय। ब्रह्मदण्डस्वरूपिणे। ब्रह्मणि स्थिताय। ब्रह्मवन्दनीयाय नमः। ४७४०

ब्राह्मणत्वेन विश्रुताय नमः। ब्राह्मणाय। ब्राह्मणप्रियाय। ब्राह्मणपालकाय। ब्राह्मणविदे। ब्राह्मणानुगताय नमः। ४७४६

भकारस्य शुक्रो देवता। भूतप्रेतभयापनयने विनियोगः।

भकाररूपाय नमः। भक्तवत्सलाय। भक्तहृद्वनजभृंगाय। भक्तपालाय। भक्तचकोरचन्द्राय। भक्तसेव्याय। भक्तजीवनाय। भक्तमंदाराय। भक्तहृत्पद्मनिलयाय। भक्तभयच्छेदकारणाय। भक्तविशेषवशीकराय। भक्तकल्याणदाय। भक्तवरदाय। भक्तगम्याय नमः। ४७६०

भक्तकामदुघे नमः। भक्तप्रार्थितसर्वार्थकामधेनवे। भक्तकल्पतरवे। भक्तकृपापराय। भक्तमानसमन्दिराय। भक्तप्रियाय। भक्तचित्तापहारकाय। भक्तवश्याय। भक्तरक्षकवामाक्षिकटाक्षाय। भक्तपोषकाय। भक्तचैतन्यनिलयाय। भक्तानुग्रहमूर्तये। भक्तारविन्दहेलये। भक्तानुग्रहविग्रहाय। भक्ताभिमतप्रदाय। भक्तानुरक्ताय। भक्तानामिष्टकामफलप्रदाय। भक्तानुग्रहकातराय। भक्तानामभयप्रदाय। भक्तानुग्रहकारकाय नमः। ४७८०

भक्तानां भयभंजनाय नमः। भक्तानां सुलभाय। भक्तानां भुक्तिमुक्तिप्रदाय। भक्तार्तिभंजनपराय। भक्तानां शर्मदाय। भक्तानुकंपिने। भक्तानां भीतिभंगरताय। भक्तार्तिभंजनाय भक्ताभीप्सितदायकाय। भक्तानामिष्टदायिने। भक्तानामार्तिनाशाय। भक्तिदाय। भक्तिमुक्तिकारणाय। भक्तिमते। भक्तिप्रदाय। भक्तिनायकाय। भक्तिगम्याय। भक्तेष्टदात्रे। भक्तेच्छोपात्तविग्रहाय। भुक्तिमुक्तिफलप्रदाय नमः। ४८००

भुक्तिमुक्तिदायकाय नमः । भ्वाकृतये । भोक्त्रे । भोक्तृरूपाय। भगवते । भगपूजापरायणाय । भगनेत्रभिदे । भगहारिणे । भगपतये। भगनेत्रांतकाय । भगप्रमथनाय । भगनेत्रविदारणाय । भगघ्नाय । भगनेत्रहारिणे । भगधारिणे । भगात्मने । भगाय । भगाक्षहराय । भगाक्षसंस्फोटनदक्षकर्मणे । भगाक्षघ्ने नमः । ४८२०

भगनेत्रहंत्रे नमः । भगीरथसमर्चिताय । भाग्याय । भाग्यप्रदाय । भाग्यारोग्यप्रदायकाय । भाग्यदात्रे । भागधराय । भागिने । भागीरथीप्रियाय । भूगर्भाय । भोगिशयनाय । भोगिभूषाय । भोगदाय । भोगिने । भोगनायकाय । भोगभुजे । भोग्याय । भोगिभूषणभूषिताय । भोगमार्गप्रदाय । भोगमोक्षप्रदाय नमः । ४८४०

भागिकुण्डलमण्डिताय नमः । भोगभृता वलयवते । भङ्गुराय । भृङ्गिरिटये । भृङ्गिरिटिसेव्यपदांबुजाय । भूचराय । भजमानाय । भ्राजमानाय । भ्राजिष्णवे । भुजङ्गकुण्डलिने । भुजगेन्द्रलसत्कण्ठाय । भुजङ्गाभरणप्रियाय । भुजङ्ग-विलसत्कर्णाय । भुजङ्गवलयावृताय । भुजङ्गराजविलसत्कङ्कणाय । भुजङ्गहारवलयाय । भुजङ्गहाराय । भुजङ्गवल्लीवलयस्रङ्नद्ध-जूटाय । भुजङ्गविभूषणाय । भुजगाधिपकङ्कणाय नमः । ४८६०

भुजगलोकपतये नमः । भुजगहारमुदन्विताय । भुजगभूषणभूषिताय । भुजङ्गराजकुण्डलाय । भुजङ्गराजमालया निबद्धजाटजूटकाय । भुजङ्गशिशुवित्रस्तकुरंगशिशुमण्डिताय । भुजभ्रान्तदिगंताय । भोजनाय । भोजयित्रे । भोज्याय । भोजसन्निभाय । भज्यमानविपद्द्रुमाय । भट्टाराय । भट्टारकाय । भण्डासुरविध्वंसनोत्सुकाय । भिण्डिवालभुसुंडिभृते । भ्रूणहत्या-पातकनाशनाय । भ्रात्रे । भ्रान्ताय । भ्रान्तिरहिताय नमः । ४८८०

भ्रान्तिनाशनाय नमः । भीतिनाशनाय । भीतव्रातपरित्रात्रे । भीताभीतभयापहाय । भीतिभरसूदनाय । भूतसंसारदुर्गाय । भूतसंघनायकाय । भूतवेतालसंघाढ्याय । भूतवेतालजुष्टाय । भूतभर्त्रे । भूतानां पतये । भूतिभूषाय । भूतभव्यभवते । भूतिभासितोरसे । भूतिकर्पूरसंयुक्तदिव्याङ्गाय । भूतेशाय । भूतसंघसमावृताय । भूतये । भूतिमतां श्रेष्ठाय । भूतिनायकाय नमः । ४९००

भूतेश्वराय नमः । भूतयोनये । भूतसंघार्चिताय । भूताध्यक्षाय । भूतपतये । भूताय । भूतनिवारणाय । भूतवाहनसारथये । भूतचारिणे । भूतभावनाय । भूतिभूषणाय । भूतिदाय । भूतिदायकाय । भूतिकृते । भूतिप्रियाय । भूतिभूषिताय । भूतिभूषणभूषिताय । भूतिलिङ्गाय । भूतिवाहनाय । भूतिभूतये नमः । ४९२०

भूतभव्यभवाश्रयाय नमः । भूतग्रामशरीरिणे । भूतभव्यभविष्याय । भूतभव्येशाय । भूतभव्यभवोद्भवाय । भूतपरिवृताय । भूतवेतालसेविताय । भूतभृते । भूतकृते । भूतमित्राय । भूतवृताय । भूतगणसेव्याय । भूतगाय । भूतघ्ने । भूतमूर्तये । भूतभव्यभवन्नाथाय । भूतवाहनाय । भूतकायस्थाय । भूतपावनाय । भूतनिषेविताय नमः । ४९४०

भूतसंघाधिनाथाय नमः । भूतालयाय । भूतावासाय । भूत्यालेपनभूषिताय । भूतानां प्रभवे । भूतात्मने । भूतानां पतये । भूताधिपतये । भूतानां व्योम्ने । भूतादये । भूतानां शुभदाय । भूतव्रातपरित्रात्रे । भीताभीतभयापहाराय । भूतनाशनाय । भद्रपीठकृतावासाय । भद्रकालीप्रियंकराय । भद्रदाय । भद्रनादप्रियाय । भद्रवाहनाय । भद्राय नमः । ४९६०

भद्राकराय नमः । भूदारमूर्तिपरिमृग्यपदांबुजाय । भेदत्रयरहिताय। भेदवते। भूधरायुधाय। भूधरस्थिताय। भानवे। भानुभूषाय । भानुरूपाय। भानुसोमाग्निहेतवे। भानुसोमाग्नि-नेत्राय। भानुकोटिप्रतीकाशाय। भानुप्रियाय। भानुदर्पहराय। भ्वप्तेजोवाय्वाकाशतुरीयाय। भूपतये। भूपतित्त्वप्रदाय। भूपाय। भ्रांबीजजपसंतुष्टाय। भाभीशब्दपरायणाय नमः। ४९८०

भूभारोत्तारणाय नमः। भुंभारवप्रियाय। भूभृदाश्रयाय। भीभत्साय । भ्रमरांबाप्रपूजिताय । भ्रमराम्बानायकाय । भ्रामरीयुक्ताय। भ्रमरिणे। भामाशंकराय। भंमृगयवे। भीमाय। भीमपराक्रमाय। भीमगर्भाय। भीमसङ्गमलोलुपाय। भीमभूषाय। भीमसंग्रामलोलुपाय । भीमचन्द्रपतये । भीमवेषाय । भीमनिस्वनाय। भीमवर्मणे नमः। ५०००

भीमकर्मणे नमः । भीमघण्टाकराय । भीमलिङ्गाय । भीमगुणानुगाय । भीमरूपाय । भीमाख्यद्विजबंधूरुभव-भीतिभिदे। भीमाट्टहासवक्त्राय। भूमिजार्चिताय। भूमिदाय। भूमिभारार्तिसंहर्त्रे। भूम्ने। भ्रूमध्ये स्थिताय। भौमाय। भौमेशाय। भयहारिणे। भयवर्जिताय। भयंकराय। भयापहाय। भयानकाय। भूयसे नमः। ५०२०

भरद्वाजदीक्षागुरुभूतदक्षिणवदनाय नमः । भरद्वाजाय । भरद्वाजसमाश्रिताय। भरताय। भराय। भर्गदेवाय। भर्गवासाय। भर्गाय । भर्त्रे । भारतीप्रियाय । भारद्वाजकुलीनात्मपूजकाय । भार्गवाय। भार्यासुतयुक्ताय। भूर्भुवःस्वःपतये। भूर्भुवो लक्ष्म्यै। भूर्देवाय । भेरुण्डाय । भैरवाय । भैरवाष्टकसंसेव्याय । भैरवनादनादिने नमः। ५०४०

भैरववेगवेगाय नमः । भैरवनाथाय । भैरवरूपाय । भैरवरूपिणे । भैरवानन्दरूपाय । भालनेत्रानलार्चिःपीनोष्मणे । भालनेत्राग्निसंदग्धमन्मथाय । भूलोकवासिने । भूलोकनिवासिजनसेविताय । भूलोकशिवलोकेशाय । भूलोकामरपादपाय । भवरोगभयध्वंसिने । भववैद्याय । भवभयापहाय । भवविदूराय । भवहेतवे । भव्यसौख्यदायिने । भवभावनाय । भव्यविग्रहाय । भवनाशाय नमः । ५०६०

भवघ्नाय नमः । भवभीतिहराय । भवते । भवहारिणे । भव्येशाय । भवहेतवे । भवच्छिदे । भवकृन्तनाय । भवोद्भवाय । भवसागरतारणाय । भवरोगभयापहाय । भवसंहर्त्रे । भवरोगिणां भेषजाय । भवद्भव्यभूतेश्वराय । भवसिन्धुप्लवाय । भवाभिभूतभीतिभङ्गिने । भवारये । भव्याय । भवानीपतये । भवाब्धितारकाय नमः । ५०८०

भवानीकलत्राय नमः । भवान्तकाय । भवानीसमन्विताय । भवाय । भवानीप्रीतिदाय । भवानीजपसंतुष्टाय । भवानीपूजनोत्सुकाय । भवात्मने । भवार्तिघ्ने । भवाब्धितरणोपायाय । भवातीताय । भवानीशाय । भवारण्यकुठारकाय । भवान्धकारदीपाय । भावलिङ्गाय । भावार्थगोचराय । भावाय । भावाभावविवर्जिताय । भावरताय । भावप्रियाय नमः । ५१००

भावातीताय नमः । भुवनेश्वराय । भुवन्तये । भुवनेशाय । भुवनाध्वरोम्णे । भुवनत्रयमण्डिताय । भुवनत्रितयाधिपाय । भुवनैकनाथाय । भुवनत्रयकारणाय । भुवनाधीश्वराय । भुवनाय । भुवनेश्वराय । भूशयाय । भाषापतिस्तुताय । भाष्यकारमंजीराय । भिषजां भिषक्तमाय । भिषक्तमाय । भिषजे । भीषणाय । भीष्माय नमः । ५१२०

भूषणाय नमः । भूषास्थिकुण्डप्रकरपरिवृताय । भूषणभूषिताय। भेषजाय । भस्मभूषाय । भस्मनिष्ठमहाशैवस्वात्मभूताय । भस्मभूषितविग्रहाय । भस्मप्रियाय। भस्मभासितसर्वांगाय । भस्मसंस्थाय । भस्मशायिने। भस्मशुद्धिकराय। भस्मगोप्त्रे । भसितश्वेतवरांगाय । भस्मभूताय। भसितलसिताय । भस्मदिग्धकलेवराय । भस्मधारणहृष्टाय । भस्मकैलासदाय। भस्मलेपकराय नमः। ५१४०

भस्मदिग्धशरीराय नमः । भस्मविभूषिताङ्गाय । भस्मभूषाधराय । भस्मना भूषितांगाय । भस्मरुद्राक्षमालाभिर्मनोहरकलेवराय । भस्मगौराङ्गाय । भस्मलेपाय । भस्मीकृतानङ्गाय । भसितालेपमण्डिताय । भसितभूषाय । भस्मोद्धूलितसर्वांगाय । भस्मोद्धूलितविग्रहाय । भस्मासुरप्रियाय। भस्मासक्ताय। भस्मासुरेष्टदाय। भस्माङ्गधारिणे। भस्मशयाय। भस्माङ्गरागाय। भासयते। भासुराङ्गाय नमः। ५१६०

भास्वद्बालमृणालकोमलावयवाय नमः । भास्वराय । भास्वत्कटाक्षाय। भासकानां भासकाय। भास्वते। भास्कराय। भास्कराराध्याय । भूसुराराधनप्रीताय । भूसुराध्यक्षाय । भूसुरेष्टफलप्रदाय। भूसुरेड्याय। भूसुतापालनाय। भूसुरेशाय। भूसुरवन्दिताय। भिक्षाहाराय। भिक्षाचरणतत्पराय। भिक्षवे। भिक्षुरूपाय । भिक्षुदूषकाय । भिक्षायाचनपरायणाय नमः । ५१८०

भिक्षाटनवेषाय नमः । भिक्षुकाय । भैक्षकर्मपरायणाय । भैक्ष्यनाशकाय। भैक्षचराय नमः। ५१८५

मकारस्य कालरुद्रो देवता। स्तंभनद्वेषणमोहनेषु विनियोगः।

मकाररूपाय नमः । मकाराय । मकुटागममकुटाय । मकरंदरसासारवचनाय । मकुटाङ्गदकेयूरकङ्कणादिपरिष्कृताय । मकारार्थाय । मुक्तिरूपाय । मुक्तीशाय । मुक्तिप्रदात्रे । मुक्तामणिविराजिताय । मुकुन्दाय । मुकुन्दसखाय । मुक्ततेजसे । मुक्तये । मुक्तादामपरीताङ्गाय नमः । ५२००

मुक्तिनाथाय नमः । मुक्ताय । मुक्तसक्ताय । मुक्तिवैचित्र्यहेतवे । मुक्ताहारविभूषणाय । मुक्ताट्टहासाय । मुक्ताजीवाय । मुक्ताहारचयोपेताय । मुक्तातपत्रनिर्गलन्मौक्तिकधारा संततिनिरंतरसर्वांगाय । मुक्तेश्वराय । मूकदानवशासनाय । मूकनाशाय । मौक्तिकस्वर्णरुद्राक्षमालिकाय । मौक्तिकस्रग्विणे । मौक्तिकमालिकाय । मृकण्डुतनयस्तोत्रजातहर्षाय । मृकण्डुसूनुरक्षणावधूतदण्डपाणये । मखभिदे । मखघ्नाय । मखध्वंसिने नमः । ५२२०

मखविनाशकाय नमः । मखान्तकाय । मखद्वेषिणे । मखारये । मखपतये । मखेशाय । मुखनिर्जितपद्मेन्दवे । मुखनखधिकृतचन्द्राय । मुखबंधुपूर्णिमासोमाय । मुखबन्धुपूर्णविधुबिंबाय । मुख्यप्राणाय । मुख्याय । मेखलिने । मङ्गलाय । मङ्गलसुस्वराय । मंगलप्रदाय । मङ्गलाधाराय । मङ्गलाकराय । मङ्गल्याय । मङ्गलात्मकाय नमः । ५२४०

मुग्धाय नमः । मुग्धेन्दुमौलये । मुग्धेन्दुशेखराय । मुग्धरूपाय । मौग्ध्यप्रदात्रे । मौग्ध्यहारकाय । मृगमदसुंदराय । मृगप्रियाय । मृगव्याधाधिपतये । मृगांकशेखराय । मृगाक्षाय । मृग्याय । मृगाद्युत्पत्तिकारणाय । मृगेन्द्राणां सिंहाय ।

मृगेन्द्रचर्मवसनाय । मृगेश्वराय । मृगान्तकाय । मृगव्याधाय । मृगेन्द्रवाहनाय । मृगबाणार्पणाय नमः । ५२६०

मृगयुभ्यो नमः । मृगटङ्कधराय । मृगधारिणे । मृगाद्युत्पत्ति-निमित्ताय । मेघवाहनाय । मेघवाहाय । मेघदुन्दुभिनिःस्वनाय । मेघाय । मेघाधिपतये । मेघ्याय । मोचकाय । मोचाफलप्रीताय । मंजुलाकृतये । मंजुशिञ्जितमंजीरचरणाय । मंजुलाधरविध्वस्त-बंधूकाय । मंजुप्रवालरुचिरपदाब्जाय । मंजीरपादयुगलाय । मंजुशिञ्जानमंजीरलसत्पादसरोरुहाय । मंजीरमंजलपदाय । मंजुमंजीरनिनदैराकृष्टाखिलसारसाय नमः । ५२८०

मंजुमंजीरचरणाय नमः । मुंजवाससे । मंजुभाषणाय । मुंजिकेशाय । मुंजशुभ्राय । माञ्जिष्ठाय । मौञ्जीयुजे । मण्डनप्रियाय । मण्डनमण्डयित्रे । मण्डलान्तरगताय । मुण्डिने । मुण्डमालिने । मुण्डाय । मृडरूपाय । मृडाय । मृडानीपतये । मीढुषे । मीढुष्ठमाय । मेढ्रजाय । मणिसोपानसंकाशवलिकाय नमः । ५३००

मणिपूराय नमः । मणिविद्धजटाधराय । मणिकङ्कण-भूषिताय । मणिभूषाय । मणिकुण्डल मण्डिताय । मणि-सिंहासनासीनाय । मणिपूरनिवासकाय । मणिमण्डपमध्यस्थाय । मणिबन्धविराजिताय । मणिमालाय । मणिभूषितमूर्ध्ने । मणिगणस्फारनागकङ्कणाय । माणिक्यवाचकस्वान्तमन्दिराय । माणिक्यभूषणाय । माणिक्यमकुटसंदीप्तशीर्षाय । माणिक्य-मकुटोज्ज्वलाय । मृणालतन्तुसंकाशाय । मताय । मन्त्राय । मन्त्रे नमः । ५३२०

मन्त्राकाराय नमः । मन्त्रात्मने । मन्त्रवेद्याय । मन्त्रकृते । मन्त्रशास्त्रप्रवर्तिने । मन्त्राधिपतये । मन्त्रभूषणाय । मन्त्र-

निपुणाय । मन्त्रज्ञाय । मन्त्रिणे । मन्त्रेशाय । मन्त्रविदां वराय । मन्त्रविदां श्रेष्ठाय । मन्त्रकोटीशाय । मन्त्रनामकप्रणवात्मने । मन्त्रपतये । मन्त्राणां प्रभवे । मन्त्रतंत्रात्मकाय । मन्त्रवित्तमाय । मन्त्रनादप्रियाय नमः । ५३४०

मन्त्रराजस्वरूपिणे नमः । मन्त्रशक्तिस्वरूपिणे । मन्त्रकीलकरूपाय । मन्त्रिपूज्याय । मन्त्राणां पतये । मन्त्राध्वरुचिराय । मन्त्ररक्षिणे । मत्स्याक्षिसुहृदे । मतिप्रज्ञासुधाधारिणे । मतिप्रियव्याघ्रचर्मवसनाय । मतिमते । मत्तद्विरदचर्मधृते । मतिप्रसादक्रियादक्षाय । मन्त्रिभिर्मन्त्रिताय । मत्ताय । मत्तवारणमुख्यचर्मकृतोत्तरीयमनोहराय । मत्तांधककरटिकंठीरववराय । मत्तमातंगसत्कृत्तिवसनाय । मातामहाय । मातॄणां मात्रे नमः । ५३६०

मातृमण्डलसंसेव्याय नमः । मातॄणां पतये । मातङ्गचर्मवसनाय । मात्राधिकाय । मातृकापतये । मातरिश्वने । मात्रे । मातृकागणपूजिताय । मित्राय । मितभाषणाय । मितभाषिणे । मित्रवंशप्रवर्धनाय । मित्रसंतुष्टाय । मित्रपोषकाय । मित्रपालाय । मृत्युञ्जयाय । मृत्युञ्जयमहाराजदत्तमुक्तिश्रिये । मृत्युघ्नाय । मृत्युसंसारखण्डनाय । मृत्योरीशाय नमः । ५३८०

मृत्युबीजाय नमः । मृत्युसंसारपाथोधिकर्णधाराय । मृत्यवे । मृत्युमन्यवे । मृत्युघ्ने । मृत्युपूजिताय । मृत्युमृत्यवे । मन्थानाय । मिथिलापुरसंस्थानाय । मिथिलापतिपूजिताय । मिथ्याजगदधिष्ठानाय । मदनार्धस्वरूपिणे । मदनाय । मदनान्तकारिणे । मदनान्तकाय । मदनारये । मदनामोदकाय । मदोद्धताय । मदोत्कटाय । मदावलकराभोरुयुगलाय नमः । ५४००

मदालसाय नमः । मदघ्ने । मदापहाय । मदनान्तकराय । मदान्धसिन्दुरासुरत्वगुत्तरीयमेदुराय । मन्दरस्थाय । मन्दस्मितपराभूतचन्द्रिकाय । मन्दमन्दारपुष्पाढ्यलसद्वायुनिषेविताय । मन्दरालयाय । मन्ददूराय । मन्दगतये । मन्दरभृङ्गनिवासिने । मन्दराद्रिनिकेतनाय । मद्भर्त्रे । मदोदग्राय । मन्दाकिनीसलिलचन्दनचर्चिताय । मन्दरारपुष्पबहुपुष्पसुपूजिताय । मन्दारमल्लिकादामभूषिताय । मन्दाकिनीजलोपेतमूर्धजाय । मन्दार सुमनोभास्वते नमः । ५४२०

मन्दाकिनीसमुल्लासकपर्दाय नमः । मन्दारविटपिस्पर्धिदोर्दंडाय । मंदारवनमध्यगाय । मंदारकुसुमामोदाय । मंदाकिनीधराय । मद्दलानकभृन्नंदिमाधवानंदिने । मादकाय । माद्याय । मुद्रापाणये । मुदाकृतये । मुद्राप्रियाय । मुद्रापुस्तकधारिणे । मुदाकराय । मुद्रापुस्तकवह्निनागविलसद्बाहवे । मेदुरस्वर्णवस्त्राढ्यकटीदेशस्थमेखलाय । मोदकप्रियाय । मुदावासाय । मुदिताशयाय । मधुराय । मधुरापाङ्गशशकस्वानंदाय नमः । ५४४०

मधुमतीनाथाय नमः । मधुपूजापरायणाय । मधुपानरताय । मधुपुत्रप्रियाय । मधुपुष्पप्रियाय । मधुप्रियाय । मधुरसाय । मधुरानाथाय । मधुरपञ्चमनादविशारदाय । मधुरान्तकाय । मधुरप्रियदर्शनाय । मधुरावासभुवे । मधुरापुरनाथाय । मधुरापतये । मधुरिपुविधिशक्रमुख्यचेलैरपि नियमार्चितपादपद्मकाय । मधुरशफराक्षीसहचराय । मधुमथनदृगदूरचरणाय । मधुकृते । मधुरसंभाषणाय । मधवे नमः । ५४६०

मधुराधिपाय नमः । मधुकलोचनाय । मधुवैरिणा दर्शितप्रसादाय । मध्यमार्गप्रदर्शिने । मध्यलक्ष्यस्वरूपिणे ।

मध्यमाकृतये । मध्यनाशकाय । मध्यस्थाय । माध्यमिकानां शून्याय। मान्धात्रे । मांधातृपरिपूजिताय । माधवप्रियाय । माध्व्यै । माधवाय। मेधामूर्तये। मेधाधाराय। मेधादाय। मेध्याय। मेधसे। माध्यंदिनसवस्तुत्याय नमः। ५४८०

मनवे नमः । मनोहारिसर्वांगरत्नादिभूषाय । मनोहराय । मनोमयाय । मनोजकन्दराभ्राजत्कोकिलाय । मनोऽनवाप्य-सौभाग्यसर्वांगाय । मनोजवाय । मनसे । मनसिजभंजकाय । मन्मथमन्मथाय । मन्वादीनां पतये । मनुष्यधर्मानुगताय । मनोवेगिने । मनोहारिनिजांगाय । मनोरूपिणे। मनोरमाय । मनोगतये। मनोन्मनाय। मनोवागतीताय। मनोजं दहते नमः । ५५००

मनोवाचामगोचराय नमः । मनोज्ञाय । मनोरूपाय । मनोभवाय। मनुस्तुताय। मनःस्थाय। मन्मथाङ्गविनाशनाय। मन्मथनाशनाय । मनुष्यबाह्यगतये । मन्यवे । मन्मथाङ्ग-विनाशकाय। मानिने। मानधनाय। मान्याय। मानतः पराय। मानयतां मान्याय। मानदायकाय। मानरूपाय। मानगम्याय। मानपूजापरायणाय नमः। ५५२०

मानाय नमः । मानरहिताय । माननीयाय । मीनाक्षीनायकाय। मीनदक्रोडभृङ्गाग्रबिरुदावलये । मीनाक्षी-प्राणवल्लभाय । मुनये । मुनिसंघप्रयुक्ताश्मयष्टिलोष्टमुदिताय। मुनिसेव्याय । मुनीश्वराय। मुनिप्रेषितवह्न्येणीडमरूबिभृते । मुनिहृत्पुण्डरीकस्थाय । मुनिसंघैकजीवनाय । मुनिगणमान-नीयाय । मुनिमृग्याय । मुनित्रयपरित्राणदक्षिणामूर्तये । मुनिप्रियाय। मुनिध्येयाय। मुनिवृन्दादिभिर्ध्येयाय। मुनिज्ञान-प्रदाय नमः। ५५४०

मुनिभिर्गायते नमः । मुनिवृंदनिषेविताय । मुनीनां व्यासाय । मुनितनयायुर्वदान्यपदयुग्माय । मुनिसहस्रसेविताय । मुनीन्द्राय । मुनीन्द्राणां पतये । मांबीजजपसन्तोषिताय । मंबीज जपसन्तुष्टाय । मीमांसकाय । म्रींम्रीं । मुमूर्षुचित्त-विभ्राजद्देशिकेन्द्राय । ममत्वग्रन्थिविच्छेदलम्पटाय । मुमुक्षूणां परायै गतये । मयाय । मयस्कराय । मयोभुवे । मयोभवाय । मायिने । मायाश्रयाय नमः ५५६०

मायातीताय नमः । मायापतये । मायानामकभोक्तृत्व-साधनवपुरिन्द्रियादिजनकजन्तुसंसृष्टात्मने । मायाकल्पित-मालुधानफणसन्माणिक्यभास्वत्तनवे । मायाबीजजपप्रीताय । मायातंत्रप्रवर्तकाय । मायाविनां हरये । मायारये । मायाविने । मायाबीजाय । मायाहंत्रे । मायायुक्ताय । मरणजन्मशून्याय । मरुतां हंत्रे । मरुते । मरीचये । मरणशोकजराटवीदावानलाय । मार्गहराय । मार्कंडेयमनोभीष्टफलदाय । मार्गाय नमः । ५५८०

मार्कण्डेयविजिज्ञासामहाग्रंथिभिदे नमः । मारमर्दनाय । मार्ताण्डमंडलांतस्थाय । मार्ताण्डभैरवाराध्याय । मार्गद्वय-समेताय । मुरारिनेत्रपूज्यांघ्रिपंकजाय । मुरारये । मुरजिन्नेत्रार-विंदार्चिताय । मुरजडिण्डिमवाद्यविचक्षणाय । मूर्तये । मूर्तिसादाख्योत्तरवदनाय । मूर्तितत्त्वरहितायापि स्वयं पंच-ब्रह्मादिमूर्तये । मूर्तिजाय । मूर्तिवर्जिताय । मूर्तीभवत्कृपापूराय । मूर्ताय । मूर्धगाय । मूर्तामूर्तस्वरूपाय । मेरुशृंगाग्रनिलयाय । मेरुकार्मुकाय नमः । ५६००

मेरुरूपाय नमः । मेरवे । मौर्वीकृताखिलमहोरगनायकाय । मलविमोचकाय । मलयस्थाय । मलयानिलसेविताय । मल्लिका-मुकुलाकाररदनाय । मल्लिकार्जुनेश्वराय । मालिनीमंत्ररूपिणे ।

मालिने । मूलाचार्याय । मूलस्थाय । मूलाय । मूलप्रकृतये । मूलभूताय । मूलाधारस्थिताय । मूलसूक्ष्मस्वरूपिणे । मंवरदाय । मशाकीकृतराक्षसाय । माषान्नप्रीतमानसाय । ५६२०

मुषितसर्वावलेपाय नमः । मुष्णतां पतये । मासाय । मासानां प्रभवे । मांसलोरुकटीतटाय । महते । महतो महीयसे । महस्स्तोममूर्तये । महर्षिवंदिताय । महदानंददायिने । महनीयभूसुरमौनिसंतोषकाय । महर्षिमानसोल्लासकाय । महद्ब्रह्मविवर्धनाय । महनीयविबुधमूर्धन्याय । महाक्रमाय । महास्वनाय । महादिव्याय । महायोध्रे । महायोगिने । महाज्ञानिने नमः । ५६४०

महादंष्ट्रायुधाय नमः । महानंदपरायणाय । महावीरघ्ने । महासारस्वतप्रदाय । महात्मने । महामौनिने । महागर्ताय । महाशयाय । महाकर्मिणे । महाध्वजाय । महाशनाय । महर्षये । महाग्रासाय । महावेद्याय । महाभोगाय । महाकोशाय । महाधनाय । महावैद्याय । महासत्याय । महावीर्याय नमः । ५६६०

महामन्त्राय नमः । महाह्रदाय । महाकर्त्रे । महाकेतवे । महानंदाय । महाघंटाय । महात्रिपुरसंहारकाय । महाविभूतये । महाय । महांताय । महाप्रभवे । महाभागाय । महामोघाय । महासुरेशाय । महारौद्राय । महाभैरवाय । महामरकतप्रख्यनागि-कुंडलमंडिताय । महामंडलरूपिणे । महामयूखाय । महानटाय नमः । ५६८०

महाभैरवरूपिणे नमः । महाराष्ट्रे केदारेश्वराय । महामात्राय । महान्तकाय । महागीताय । महाहर्षाय । महाक्रोधाय । महायुधाय । महामुनये । महामायाय । महावरीयसे । महाकषाय । महादात्रे । महावधाय । महारथाय ।

महार्णवनिपानविदे । महागर्भपरायण्णाय । महाज्वालाय । महाघोराय । महामेघनिवासिने नमः । ५७००

महासेनाय नमः । महालिंगाय । महावेगाय । महाबलाय । महाभवभयत्राणपारीणाय । महाकर्मणे । महामणये । महादंभाय । महाकालाय । महारूपाय । महावृक्षाय । महायशसे । महाज्योतिषे । महाज्ञानिने । महाधनुषे । महातुष्टये । महापुष्टये । महामंगलाय । महारेतसे । महाधराय नमः । ५७२०

महातपसे नमः । महामनसे । महादेवाय । महावक्त्रे । महामान्याय । महाशाय । महायोगिने । महाभोगिने । महालक्ष्मीनिवासांघ्रिपरागाय । महादेवाभिधानैकरूढार्थाय । महाकोपभयव्याधिभैषज्याय । महाकैलासशिखरवास्तव्याय । महाबृंदाय । महादेवप्रियाय । महातांडवकृते । महापातकमालौघ-पावकाय । महानीतये । महापापहराय । महामतये । महापातकनाशनाय नमः । ५७४०

महावरदाय नमः । महावीर्यजयाय । महागर्भाय । महाहविषे । महाभूताय । महाविष्णवे । महाचार्याय । महाचापाय । महाद्युतये । महाबुद्धये । महाभीमयमध्वंसोद्योगिवामांघ्रये । महाविज्ञानतेजोरवये । महानुभावाय । महाफलाय । महाकल्प-स्वाहाकृतभुवनचक्राय । महामायाय । महागुहान्तरनिक्षिप्ताय । महावटवे । महालयाय । महाबलाय नमः । ५७६०

महानादाय नमः । महाप्राणाय । महालक्ष्मीप्रियतमाय । महानादरूपाय । महासिद्धये । महायोगीश्वरेश्वराय । महाधृतये । महामेधसे । महाधीनाय । महायंत्राय । महामानिने । महागुणाय । महायुष्मते । महामंगलविग्रहाय । महाभिचारकध्वंसिने ।

महाकैलासनिलयाय । महाकुक्षये । महाकारुण्यवारिधये । महालावण्यशेवधये । महाभिषेकसंतुष्टाय नमः । ५७८०

महावीरेन्द्रवरदाय नमः । महाभूतिप्रदाय । महायोगीन्द्रवंदिताय । महाशान्ताय । महापापप्रशमनाय । महाकल्पाय । महारूपाय । महागहनाय । महामालाय । महाप्रसादाय । महागुरवे । महारुद्राय । महावीराय । महानाट्यविशारदाय । महागंधाय । महाश्रवाय । महाव्रतिने । महाविद्याय । महाधीराय । महाप्रेतासनासीनाय नमः। ५८००

महासंतोषरूपाय नमः । महापराक्रमाय । महातेजोनिधये । महाहिभोगज्याबद्धमेर्वद्रिधनुषे । महाकाशाय । महार्णवाय । महादान्ताय । महागणपतये । महार्थाय । महाक्षान्ताय । महाबलपराय । महाकर्तृप्रियाय । महागुणाय । महासाराय । महापापनाशाय । महाट्टाट्टहासाय । महामोहहराय । महामंडलाय । महालीलाभूतप्रकटिताविशिष्टात्मविभवाय । महामातंगत्वग्वरवसनाय नमः ।५८२०

महाभोगीन्द्रोद्यत्फणमणिगणालंकृततनवे नमः । महाकारुण्याब्धये । महाशंभवे । महारुद्राय । महाभोगोपवीतिने । महायज्ञाय । महातालाय । महाधीराय । महाधर्माय । महासत्वाय । महाकैलासशिखरनिलयाय । महाताण्डव चातुर्यपंडिताय । महाव्याधाय । महापाशौघसंहर्त्रे । महायंत्रप्रवर्तिने । महासंध्याभ्रवर्णाय । महास्तोममूर्तये । महाभागाय । महायोगाय । महापंचयज्ञनाडीफलदाय नमः । ५८४०

महाग्निकेदारेश्वराय नमः । महामणिमकुटधारणाय । महाकालभेदनाय । महाकालकालाय । महानीपारण्यान्तरकनकपद्माकरतटीमहेन्द्रानीताष्टद्विप धृतविमानान्तरगताय ।

महामूर्ध्ने। महाशिरसे। महाकेशाय। महाजटाय। महाकिरीटाय। महारोम्णे। महांबराय। महामुखाय। महाभोक्त्रे। महावक्त्राय। महाजिह्वाय। महाननाय। महादंष्ट्राय। महादंताय। महानेत्राय नमः। ५८६०

महाकर्णाय नमः। महाग्रीवाय। महाकंबवे। महानासाय। महाकर्मिणे। महाहनवे। महोदराय। महाकुक्षिभृते। महाकृत्तिविभंजनाय। महास्कंधाय। महाजत्रवे। महावक्षसे। महाभुजाय। महोरस्काय। महाकराय। महाकटये। महाहस्ताय। महागुह्याय। महोरसे। महाजानवे नमः। ५८८०

महाजंघाय नमः। महापादाय। महादंष्ट्रायुधाय। महानखाय। महाकायाय। महामेढ्राय। महांगाय। महाशरीराय। महिमनिलयाय। महिषासुरमर्दनाय। महिषारूढाय। महिमैकनिकेतनाय। महिमावते। महिताय। महितविभवाय। महितगुणावलिमान्याय। महीधराय। महीमंगलदायकाय। महीभर्त्रे। महीचारिस्तुताय नमः। ५९००

महीतलविशालोरःफलकाय नमः। महेश्वराय। महेश्वर-जनकाय। महेष्वासिने। महेष्वासाय। महेशानाय। महेश्वरात्मकवदनाय। महेश्वरात्मकपूर्ववदनाय। महेन्द्रोपेन्द्र-चन्द्रार्कनमिताय। महोदारतरस्वभावाय। महोदधीनां प्रभवे। महौषधीनां प्रभवे। महौषधाय। महौजसे। महोक्षाय। महोक्षकमठाधारभुजाग्राय। महोल्काकुलवीक्षणाय। महोक्ष्णे। महोक्षवाहनाय। महोराशये नमः। ५९२०

महोज्ज्वलाय नमः। महोत्सवाय। महोग्रशौर्याय। मुहूर्ताहः क्षणाय। महिमापतये। मह्यं। मह्यंबुवाय्वग्निमत्खात्ममूर्तये। मिहिरविधुदहनमंडलवर्तिने। मुहूर्ताय। मोहिनीमुषे। मोहिनी-

मोह्नाय। मोह्निने। मोह्तीताय। मोह्ाय। मोह्ावर्तनिवर्तकाय। मोहस्थाय। मोह्नाय। मोह्निनीप्रियाय। मौलिभिन्नाण्डभित्तये। मौलिरत्नभासे नमः। ५९४०

मौलिखेलन्मुखरसुरनदीनीररम्याय नमः। मौलिभागे जटिलाय। मौलिधृतचन्द्रशकलाय। मौलिधृतगंगाय। मौलिशोभाविराजिताय। मोक्षलक्षणबाहवे। मोक्षाय। मोक्षनिधये। मोक्षदायिने। मोक्षद्वाराय। मोक्षदाय। मोक्षार्थिने। मोक्षलक्ष्मीविहाराय। मोक्षफलाय। मोक्षरूपाय। मोक्षकर्त्रे। ५९५६

यकारस्य वायुर्देवता। भूताद्युच्चाटने विनियोग :।

यकाराय नमः। यकाररूपाय। याकिनीप्रियाय। युक्ताय नमः। ५९६०

युक्तभावाय नमः। युक्तये। युगाधिपाय। युगापहाय। युगरूपाय। युगकृते। युगांतकाय। युगंधराय। युगपत्सुर-साहस्राहंकारच्छेदिने। युगादिकृते। युगावर्ताय। युगाध्यक्षाय। युगावहाय। युगाधीशाय। युगनाशकाय। युगस्य प्रभवे। योगानां योगसिद्धिदाय। योगमायासमावृताय। योगधात्रे। योगमायाय नमः। ५९८०

योगमायाग्रसंभवाय नमः। योगर्धिहेतवे। योगाधिपतये। योगस्वामिने। योगदायिने। यागपीठान्तरस्थाय। योगस्य प्रभवे। योगरूपिणे। योगरूपाय। योगज्ञाननियोजकाय। योगात्मने। योगवतां हृत्स्थाय। योगरताय। योगाय। योगाचार्याय। योगानंदाय। योगाधीशाय। योगमायासंवृतविग्रहाय। योगमायामयाय। योगसेव्याय नमः। ६०००

योगसिद्धाय नमः। योगक्षेमदात्रे। योगक्षेमंकराय। योगक्षेमधुरंधराय। योगदात्रे। योगसंग्रहाय। योगमार्गप्रदर्शकाय। योगसिद्धाय। योगप्रियाय। योगकराय। योगाध्यक्षाय।

योगमूर्तिधराय । योगासनाराध्याय । योगांगाय । योगध्यान-परायणाय । योग्याय । योगनायकाय । योगगम्याय । योगवते । योगपट्टधराय नमः । ६०२०

योगबीजाय नमः । योगनिधये । योगविदे । योगविदां नेत्रे । योगिपुंगवाय । योगिवैद्याय । योगिसिंहहृदाश्रयाय । योगिने । योगिध्यानांतगम्याय । योगिनीगणसेविताय । योगिनां पतये । योगिमनस्सरोजदलसंचारक्षमाय । योगिहृत्पद्मवासिने । योगिनां गुरवे । योगिनां पतये । योगिनां हृदिस्थाय । योगिध्येयाय । योगिहृत्पंकजालयाय । योगिपूज्याय । योगिनामनंताय नमः । ६०४०

योगिनामधेयाय नमः । योगिनां शंभवे । योगीशाय । योगीश्वराय । योगीश्वरालयाय । योगीन्द्रसंस्तुतपदाय । योगीश्वरेश्वराय । योगेशाय । योगेश्वराय । याचनारूपाय । याचकार्तिनिषूदनाय । यजमानप्रियाय । यजमानाय । यजमानात्मने । यजमानाद्यष्टमूर्तये । यजमानाद्यष्टमूर्तिव्यंजिताय । यजनोद्यदसद्दक्षशिक्षणाय । यज्वने । यज्वमयाय । यज्वस्तुताय नमः । ६०६०

याजाय नमः ।यजनमयाय । यजुर्मूर्तये । यजुर्मयाय । यजुः पादभुजाय । यजुर्वेदप्रियाय । यजुरादिचतुर्वेदतुरंगाय । यजुषे । यजुर्वेदाय । यजुषां शतरुद्रीयाय । यजुर्वेदमंत्रजनक-पश्चिमवदनाय । याजकाय । याजिने । युंजमानाय । योज्याय । यज्ञमयाय । यज्ञवाटीविनाशिने । यज्ञघ्ने । यज्ञभागविदे । यज्ञपतये नमः । ६०८०

यज्ञकर्मस्वरूपिणे नमः । यज्ञवाहनाय । यज्ञपुरुषरूपिणे । यज्ञसमाहिताय । यज्ञपुरुषाय । यज्ञनायकाय । यज्ञकायाय ।

यज्ञकर्त्रे । यज्ञहंत्रे । यज्ञभर्त्रे । यज्ञभोक्त्रे । यज्ञगोप्त्रे । यज्ञविघ्नविनाशकाय । यज्ञकर्मफलाध्यक्षाय । यज्ञमूर्तये । यज्ञगम्याय । यज्ञफलदाय । यज्ञफलाय । यज्ञनाशकाय । यज्ञप्रियाय नमः । ६१००

यज्ञरूपाय नमः । यज्ञसाराय । यज्ञपारगाय । यज्ञपरायणाय । यज्ञधर्मतपोयोगजपदाय । यज्ञपूज्याय । यज्ञभुजे । यज्ञगुह्याय । यज्ञसाधकाय । यज्ञनाथाय । यज्ञलिंगाय । यज्ञाधिपतये । यज्ञांगाय । यज्ञांगरूपिणे । यज्ञांताय । यज्ञाय । यज्ञान्तकृते । यज्ञावताराय । यज्ञानां पतये । याज्ञवल्क्यप्रियाय नमः । ६१२०

याज्ञिकाय नमः । यतये । यतिवेद्याय । यतिने । यतीनां मुक्तये । यतिप्रियाय । यतिवर्याय । यतिमानसांबुजनिशांताय । यतिधर्मपरायणाय । यतिसाध्याय । यत्नसाध्याय । यत्र सर्वं यतस्सर्वं यच्चसर्वं । यतेन्द्रियाय । यतोवाचोयजुर्ज्ञेयविषयज्ञाय । यत्नरक्षितपुत्रस्त्रीपितृमात्रे । यत्नाय । यंत्रे । यंत्रनामकलिंगात्मने । यंत्ररूपप्रपंचैकसूत्राय । यंत्रात्मने नमः । ६१४०

यंत्राणां धनुषे नमः । यंत्रेशाय । यंत्राराधनतत्पराय । यंत्रसाधकाय । यंत्रमयाय । यंत्रासनाय । यंत्रमंत्रस्वरूपकाय । यातायातादिरहिताय । यात्राफलप्रदाय । यात्राप्रियाय । यातुधानवरप्रदाय । यथार्थरूपाय । यथार्थाय । यथारुचिजगद्ध्येयविग्रहाय । यथार्थपरमेश्वराय । यथेष्टफलदाय । यथोक्तफलदाय । यथेच्छं विषयासक्तदुष्प्रापाय । यथेष्टफल-दायकाय । यदुपतये नमः । ६१६०

यदुश्रेष्ठप्रियाय नमः । यदृच्छालाभसंतुष्टाय । यदृच्छालाभसंतुष्टानां धवाय । यदुनाथसखावाप्तनिजास्त्राय ।

यादोनिधये । यादिजनकजन्तुसंसृष्टात्मने । यादवानां प्रियाय । यादःपतये । याद्यंगधातुसप्तकधारिणे । यादवानां शिरोरत्नाय । युधि शत्रुविनाशनाय । युद्धकौशलाय । युद्धमध्यस्थिताय । युद्धमर्मज्ञाय । यूथिने । योध्रे । योधायोधनतत्पराय । यानप्रियाय । यानसेव्याय । यूने नमः । ६१८०

योनये नमः । योनिदोषविवर्जिताय । योनिष्ठाय । योनिलिंगार्धधारिणे । यूपाय । यूपाकृतये । यूपनाथाय । यूपाश्रयाय । यंबीजजपसंतुष्टाय । यमाय । यमारये । यमदण्डकाय । यमनिषूदनाय । यमप्राणायामवेद्याय । यमसंयमसंयुताय । यमसीताहराय । यमवंशसमुद्भवाय । यमाद्यष्टांगयोगस्थसंगमाय । यमांगतूलदावांघ्रिकिरणाय । यमुनावीचिकानीलभ्रूलताय नमः । ६२००

यमादियोगनिरताय नमः । यमप्राणनिर्वापणाय । यमिने । यमराड्वक्षःकवाटक्षतिकृते । यमरूपाय । यमबाधानिवर्तकाय । यमुनाप्रियाय । यमशामकाय । यमजलेशधनेश नमस्कृताय । यमांतकाय । यमार्चिताय । यमादि दिगीश पूजिताय । यमभयाय । यमघ्नाय । यमनाशाय । यमभटभूतचमूभेतालाय । यामिने । यामिनीनाथ रूपिणे । याम्याय । याम्यदंडपाश निकृंतनाय नमः । ६२२०

यामिनी पति संसेव्याय नमः । यामिनीचरदर्पघ्ने । यामरूपाय । यामपूजनसंतुष्टाय । यायजूकाय । यायीभावप्रियाय । यलकायत गाण्डीवप्रहाराय । यवनपुंड्रांध्रशकदैतेयनाशकाय । यवान्नप्रीतचेतसे । यवाक्षतार्चन प्रीताय । यवौदन प्रीत चित्ताय । यविष्ठाय । यवीयसे । यावचिह्नित पादुकाय । युवतीसहिताय । युवतीविलासतरुणोत्तरवदनाय । यौवनगर्विताय । यशसे । यशःप्रदाय । यशस्विने नमः । ६२४०

यशोवते नमः । यशोनिधये । यशोधराय । यशोयुताय । यशस्कराय । यशस्यनीतये । यशस्य भुक्ति मुक्त्येक कारणाय । यश्शब्दस्येति मंत्रोक्तदैवताय । यष्टिधराय । यष्ट्रे । याक्षरवामपादाय । यष्टृफलदाय । योषापूजनप्रियाय । योषित्प्रियाय । योषित्करतलस्पर्शप्रभावज्ञाय । योषार्धीकृत विग्रहाय । योषित्संग विवर्जिताय । यस्मै । यस्मै नमः श्रुतिप्रोक्तनमस्याय । यक्षेशाय नमः । ६२६०

यक्षेश्वराय नमः । यक्षेशसखाय । यक्षाय । यक्षरक्षाकराय । यक्षरूपाय । यक्षकिन्नरसेविताय । यक्षप्रियाय । यक्षनायकदुष्प्रापवरदाय । यक्षराज सखाय । यक्षपूजिताय । यक्षराक्षससंसेव्याय । यक्षाणां पतये । यक्षसेव्याय । यक्षगानप्रियाय । यक्षकन्याहृदिस्थाय । यक्षभोगप्रदायिने । यक्षकिन्नरगंधर्वैः सेविताय । यक्षेशेष्टाय । यक्ष स्वरूपाय । यक्षार्चिताय नमः । ६२८०

रेफस्य अग्निर्देवता । रौद्रकर्मसाधने विनियोगः

रक्तमाल्यांबरप्रियाय नमः । रक्तबलिप्रियाय । रक्तपिंगलनेत्राय । रक्ताय । रक्तवर्णाय । रक्तवस्त्राय । रक्तगंधाय । रक्तसूत्रधराय । रक्तपुष्पप्रियाय । रक्तध्वजपताकाय । रक्तव्यक्तस्वरूपाय । रक्तस्रगनुलेपिने । रक्तमाल्यांगधारिणे । रक्तमालाविचित्राय । रक्तार्द्रवाससे । रक्तांबरधराय । रक्तांगाय । राकेशाय । राकिनी प्रियाय । राकेन्दुवदनाय नमः । ६३००

राकेन्दुसंकाशनखाय नमः । रुक्मांगदपरिष्कृताय । रुक्मांगदस्तुताय । रुक्मवर्णाय । रुक्मिणीपतिपूजिताय । रुक्मिणीफलदाय । रेखारथांगसंपर्कजलंधरभिदे । रंगविद्या-

विशारदाय । रागदाय । रागिरागविदे । रागिणे । रागहेतवे । रागवते । रागपल्लवित स्थाणवे । रोगेशाय । रोगहर्त्रे । रोगशमनाय । रघुनाथाय । रघुवंश प्रवर्तकाय । रघुस्तुत पदद्वंद्वाय नमः । ६३२०

रघुपूज्याय नमः । रघुनाथ वंश प्रियाय । रुचिरांगदाय । रुचिरांगाय । रोचिष्णवे । रोचिषां पतये । रोचमानाय । रोचनाय । रजसे । रजोगुणदूराय । रजस्याय । रजोगुण विनाशकृते । रजतप्रभाय । रजनीशकलाधराय । रजनीशकलावतंसाय । रजताचलशृंगाग्रनिलयाय । रजकाय । रजस्सत्वतमोमयाय । रजनाय । रजतसभापतये नमः । ६३४०

रजस्तामससात्त्विकगुणेशाय नमः । रजताद्रिशृंग-निकेतनाय । रजनीचराय । रजतभूधरवासाय । रजतशैलशिखर-निवासवते । रजतशैलनिशान्ताय । रजोर्ध्वलिंगाय । रजोनिहंत्रे । राज्ञे । राजराजातिमित्राय । राज्यदाय । राज्यसुखप्रदाय । राजीवलोचनाय । राजमौलये । राजराजेश्वराय । राजराजप्रसन्नुताय । राजत्करसरोरुहाय । राजपूजिताय । राज्यवर्धनाय । राजीवपुष्पसंकाशाय नमः । ६३६०

राजीवाक्षाय नमः । राजकन्यायुगानद्धशैववृत्तमुदे । राजमण्डलमध्यगाय । राजराजप्रियाय । राजराजाय । राजसूयहविर्भोक्त्रे । राजीवचरणाय । राजशेखराय । राजवश्यकराय । राजीवकुसुमप्रियाय । राजाधिराजाय । राज्ञामधिगताय । राजहंसाय । राजवृक्षाय । राजमान्याय । राजराजसखाय । राजोपचाराय । रणत्किंकिणिमेखलाय । रणपंडिताय । रणप्रियाय नमः । ६३८०

रणोत्सुकाय नमः । रणशूराय । रेणुकावरदाय । रतये । रतिप्रार्थितमांगल्यफलदाय । रतिस्तुताय । रतिमार्गकृते । रतिप्रियाय ।रत्नरंजितपादुकाय । रत्नकंचुकाय । रत्नपीठस्थाय । रत्नपादुकाप्रभाभिरामपादयुग्मकाय । रत्नभ्राजद्धेमसूत्रकटी-तटाय । रत्नदाय । रत्नप्रभूताय । रत्नहारकाय । रत्नहारकटिसूत्राय । रत्नमंदिरमध्यस्थाय । रत्नपूजापरायणाय । रत्नभूषणाय नमः । ६४००

रत्नकांचनभूषणाय नमः। रत्नमंडपमध्यस्थाय । रत्नग्रैवेयकुण्डलाय । रत्नडोलोत्सवप्रीताय । रत्नपूजनसंतुष्टाय । रत्नसानुशरासनाय । रत्नसानुनिधये । रत्नसंदोहमंजीरकणत्पदसरोरुहाय । रत्नकंकणशोभाढ्याय । रत्नकंकणाय । रत्नसिंहासना-श्रयाय । रत्नसिंहासनस्थिताय । रत्नभ्राजद्धेमसूत्राय । रत्नहारिणे । रत्नमौलये । रत्नकिरीटवते । रत्नमालिने । रत्नेशाय । रत्नरोचिषे । रत्ननाभाय नमः । ६४२०

रत्नभ्राजत्कटिसूत्राय नमः । रत्ननिर्मितकंकणाय । रत्नकुंडलदीप्तास्याय । रत्नकुण्डलमंडिताय । रत्नग्रैवेयभूषणाय । रत्नगर्भाय । रत्नगर्भाश्रयाय । रत्नमौक्तिकवैडूर्यकिरीटाय । रत्ननिर्मलविग्रहाय । रत्नाकराय । रत्नानां प्रभवे । रत्नांगदांगाय । रत्नांगुलीयविलसत्करशाखानखप्रभाय । रत्नांगुलीयवलयाय । रत्नाभिषेकसंतुष्टाय । रत्नाकरप्रियाय । रत्नाकरस्तुताय । रत्नाढ्याय । रत्नाभरणसंभृताय । रत्नालंकृतसर्वाङ्गिणे नमः । ६४४०

रत्नांबरधराय नमः । रत्नसागरमध्यस्थाय । रत्नद्वीपनि-वासिने । रत्नप्राकारमध्यस्थाय । रत्नांगाय । रत्नदायिने । रात्रिंचराय । रात्रिंचरप्राणापहारकाय । रात्रिंचरगणाध्यक्षाय ।

रात्रिंचरनिषेविताय । रथयोगिने । रथकाराय । रथपतये । रथकारेभ्यो । रथाय । रथारूढाय । रथ्याय । रथांगपाणये । रथिने । रथपतिभ्यो नमः । ६४६०

रथिभ्यो नमः । रथोत्सवाय । रथोत्सवप्रियाय । रथेभ्यो । रुद्राय । रुद्ररूपाय । रुद्रमन्यवे । रुदते । रुद्रनीलाय । रुद्रभावाय । रुद्रकेलये । रुद्रशान्त्यै । रुद्रविष्णुब्रह्मादिजनकाय । रुद्रमंडलसेविताय । रुद्रमंत्रजपप्रीताय । रुद्रलोकप्रदायकाय । रुद्राक्षप्रियवत्सलाय । रुद्राक्षमालाभरणाय । रुद्रात्मने । रुद्राध्यायजपप्रीताय नमः । ६४८०

रुद्राणीप्राणनायकाय नमः । रुद्राणीपूजनप्रीताय । रुद्राक्षमकुटोज्ज्वलाय । रुद्राक्षजपसुप्रीताय । रुद्राणां पतये । रुद्राणां शंकराय । रुद्रादित्याश्विनाय । रुद्रात्मकदक्षिणवदनाय । रुद्रात्मकहृदयाय । रौद्राय । रौद्ररणोत्साहाय । रौद्ररूपाय । रौद्रदृशे । राधामाधवसंसेव्याय । राधामाधववल्लभाय । रोधाय । रोधनाय । रूपवर्जिताय । रूपहीनाय । रूपवते नमः । ६५००

रूपाय नमः । रिपुघ्नाय । रेफस्वरूपाय । रंबीजजपसंतुष्टाय । रंभादिकन्यकाराध्याय । रंभाफलप्रियाय । रमणीयगुणाकराय । रम्यपत्रभृद्रथांगपाणये । रम्यस्वरोद्भासिने । रम्यगुणकेलये । रम्याय । रमावाणीसमाराध्याय । रमापतिस्तुताय । रमणीयाय । रमेशाय । रमेड्याय । रामपूजिताय । रामपूज्याय । रामनाथाय । रामनामैकजीवनाय नमः । ६५२०

रामवरदाय नमः । रामप्रियाय । रामेश्वराय । रामाय । रामानंदमयाय । रामार्चितपदद्वंदाय । रामगाय । रयिदाय । रुरुचर्मपरीधानाय । रुरुहस्ताय । रुरुप्रियाय । रौरवाजिनसंवीताय । रवये । रविकोटिसंकाशाय । रविलोचनाय । रविमंडलमध्यस्थाय ।

रविकोटिसमप्रभाय । रविचंद्राग्निनयनाय । रविनेत्राय । रविशिखिशशिनेत्राय नमः । ६५४०

रवेः करालचक्राय नमः । रव्यात्मने । रव्यादिग्रहसंस्तुताय । रावणार्चितविग्रहाय । रावणार्चिताय । रावणदर्पविनाशनलिङ्गाय । रावणारिहृदानंदाय । रेवानदीतीरवासाय । राशीकृतजगत्त्रयाय । राशये । रेष्मियाय । रोषिणे । रसज्ञाय । रसप्रियाय । रसनारहिताय । रसगंधाय । रसभुजाय । रसरथाय । रसाश्रिताय । रस्याय नमः । ६५६०

रसालशालाहेलत्पिकनिनद मधुरवाग्जालाय नमः । रसानां पतये । रसाय । रसात्मकाय । रसाधरेन्द्रचापशिंजिनी-कृतानिलाशिने । रासभाय । रोहिणीपतिवल्लभाय । रोहिताय । रहस्याय । रंहसे । रंहसाय । रहस्यलिंगाय । राहवे । रक्षाभूषाय । रक्षसे । रक्षिणे । रक्षोऽधिपतये । रक्षोघ्नाय । रक्षोगणार्तिकृते । रक्षोघ्ने नमः । ६५८०

राक्षसवरप्रदाय नमः । रक्षाकराय । रक्षाधराय । राक्षसारये । राक्षसांतकृते । रूक्षरेतसे । रूक्षाय नमः । ६५८७

लकारस्य शक्तिर्देवता । लक्ष्मीवश्यार्थे विनियोगः ।

लोकपालाय नमः । लोकविश्रुताय । लोकपाल समर्चिताय । लोकचारिणे । लोककर्त्रे । लोकसाक्षिणे । लोकहिताय । लोकरक्षापरायणाय । लोकनेत्रे । लोककृते । लोकभृते । लोककाराय । लोकभावनाय नमः । ६६००

लोकवर्णोत्तमोत्तमाय नमः । लोक सारंगाय । लोकशल्यकृते । लोकगूढाय । लोकनाथाय । लोकवंद्याय । लोकमायाय । लोकशोक विनाशकाय । लोक चूडारत्नाय ।

लोकत्रयविधात्रे। लोकत्रयी सनाथाय। लोक धात्रे। लोकध्वजाय। लोकप्रभवे। लोकबंधवे। लोकस्वामिने। लोकचूडामणये। लोकत्रयाश्रिताय। लोकत्रयाश्रयाय। लोकशंकराय नमः। ६६२०

लोकज्ञाय नमः। लोकसंमोहनाय। लोकवशंकराय। लोकानां पतये। लोकाधिष्ठानाय। लोकाध्यक्षाय। लोकाय। लोकानुग्रहकारिणे। लोकानुग्राहकागस्त्यतपःप्रीतात्मने। लोकायतिकानां स्वभावमयविग्रहाय। लोकाधिपाय। लोकानामभिरामाय। लोकात्मने। लोकान्तकृते। लोकाभिरामाय। लोकाक्षिणे। लोकानां पशुमंत्रौषधाय। लोकानामीश्वराय। लोकारिमर्दनाय। लोकेशाय नमः। ६६४०

लोकेशस्तुताय नमः। लोकोत्तरस्फुटालोकाय। लिकुचपाणये। लंकटिसूत्राय। लेखाधिपाय। लेखसमर्चिताय। लेखचूडालचरणाय। लेखकोटीरमालामकरंदसिक्तपादाय। लेखगस्वरूपाय। लेखगकेशाय। लग्नाय। लिंगस्थाय। लिंगत्रयरहिताय। लिंगमयाय। लिंगमूर्तये। लिंगरूपिणे। लिंगिने। लिंगाध्यक्षाय। लिंगाद्यस्तुतिनिगमाय। लिंगात्मविग्रहाय नमः। ६६६०

लिंगाय नमः। लिंगालिंगात्मविग्रहाय। लिंगोद्भवादिपंच-मूर्तिप्रतिपादक-पूर्ववदनाय। लिंगहस्ताय। लिंगफलप्रियाय। लिंगबीजाकृतये। लघुस्थूलस्वरूपिणे। लघिमासिद्धिदात्रे। लघुद्राक्षाफलप्रियाय। लूताचितालयद्वारवितानोत्काय। लोप्याय। लतामयाय। लतापूजापराय। लंबनाय। लंबितोष्ठाय। लंबिकायोगमार्गकृते। लंबिकामार्गनिरताय। लंबोदराय। लंबोदरशरीरिणे। लब्धदीक्षाय नमः। ६६८०

लब्धसिद्धाय नमः । लब्धाय । लाभप्रवर्तकाय । लाभात्मने । लाभकृते । । लाभदाय । लोभिने । लड्डुकप्रियाय । लयाय । लयकराय । लयवर्जिताय । ललिताय । ललितालिलिताश्रयाय । ललितानाथाय । ललितमूर्तये । ललितागमकपोलाय । ललाटाक्षाय । ललाटचक्षुरुज्ज्वलद्धनंजयस्फुलिंगयोनिपीतपंचसायकाय । ललाट-नेत्रानलदह्यमानमाराय । ललाटचन्द्रसंनिभाय नमः । ६७००

लांलीं नमः । लीलावित्कंपिवपुषे । लीलया विश्वसंहारसृष्टिस्थितिविधायकाय । लीलाविग्रहाय । लीलानां प्रभवे । लीलावैचित्र्यकोविदाय । लेलिहानाय । लोलाक्षीनायकाय । लोलाय । लंलकुलीशाय । लवाय । लवणाय । लवरेफहलांगाय । लावण्यराशये । लावण्यजलधये । लावण्याब्धिसमुद्भूत-पूर्णेंदुप्रतिमाननाय । लवणाकराय । लवणाकरपूजिताय । लवणारिसमर्चिताय । लवित्रपाणये नमः । ६७२०

लवंगप्रियाय नमः । लवसेविताय । लवकंबलधारिणे । लास्यप्रियाय । लास्यपराय । लास्यसुंदराय । लास्यलालसाय । लसन्माणिक्यकटकाय । लोहिताक्षाय । लोहितग्रीवाय । लोहिताय । लक्षणेशाय । लक्ष्यदाय । लक्ष्यलक्षणाय । लक्ष्यलक्षणयोग्याय । लक्षमंत्रजपप्रियाय । लक्षकोट्यर्बुदान्तकाय । लक्षणलक्षिताय । लक्ष्याय । लक्ष्म्यै नमः । ६७४०

लक्ष्मीवते नमः । लक्ष्मीपतये । लक्ष्मीशाय । लक्ष्मीनाथप्रियाय । लाक्षारुणेक्षणाय । लाक्षणिकाय नमः । ६७४६

वकारस्य वरुणो देवता । विषनिर्हरणार्थे विनियोगः ।

वकाराय नमः । वकाररूपाय । वक्त्रचतुष्टयाय । वक्त्रपंचकाय । वकुलाय । वक्रतुंडार्चिताय । वक्रकेशाय ।

वक्रतुंडप्रसादिने। व्यक्ताव्यक्ताय। व्यक्ततराय। व्यक्तरूपाय। व्यक्ताव्यक्ततमाय। व्यक्ताव्यक्तात्मने। व्यक्ताव्यक्तगुणेतराय नमः ६७६०

वाक्पतये नमः। वाक्स्वरूपाय। वाक्प्रियाय। वाक्याय। वाक्यार्थस्वरूपिणे। वाक्यज्ञाय। व्याकृताय। व्याकृतये। वाक्पतित्वप्रकाशिने। विकटाट्टहासविस्फारितब्रह्मांडमंडलाय। विकारिणे। विकाररहिताय। विक्रांताय। विक्रमाय। विक्रमिणे। विकुर्वाणाय। विकृताय। विकर्त्रे। विकर्मिणे। विक्रमोत्तमाय नमः। ६७८०

विक्लवाय नमः। विकृतस्वरूपाय। विकरालोर्ध्वकेशाय। विकेशाय। विकटाय। विकल्पाय। विकृतवेषाय। विकराय। विकृतांगाय। वैकुंठदर्शिने। वैकुंठनाथविलसत्सायकाय। वैकुंठरेतसे। वैकुंठवल्लभाय। वैकुंठविधिसन्नुताय। व्याख्यातदेवाय। व्याख्यानसुपीठस्थाय। व्याख्यामुद्रालसद्बाहवे। व्याख्यात्रे। विख्याताय। वैखानसमखारंभाय नमः। ६८००

वैखानाय नमः। वैखानसाय। वागीशाय। वाग्विभूतिदायकात्मने। वाग्ज्ञानमात्रसंदिष्टतत्वार्थाय। वाग्देवीश्रीशचीसेव्यवामांगाय। वागीशविष्णुसुरसेवितपादपीठाय। वागीश्वरेश्वराय। वाग्विशुद्धाय। वाग्विदां वराय। वाग्वृषाय। वाङ्मनसेश्वराय। वागधीशाय। वाङ्मयाय। वाग्मिने। वागिन्द्राय। व्यग्रनाशनाय। व्यग्राय। विगतकल्मषाय। विगतरोषाय नमः। ६८२०

विगतज्वराय नमः। विगतस्पृहाय। वेगदर्शिने। वेगवते। वेगवतीतीरवासाय। वेगवतीवरदाय। वेगापगासमर्चिताय।

व्याघ्राय । व्याघ्रगाय । व्याघ्रचर्मासनाय । व्याघ्रचर्मधराय । व्याघ्रचर्मपरीधानाय । व्याघ्रचर्मोत्तरीयाय । व्याघ्रचर्माम्बर-परीताय । व्याघ्रचर्माम्बरधराय । व्याघ्राजिनांबरधराय । व्याघ्रचर्मसमेताय । व्याघ्रचर्माम्बराय । व्याघ्रपादवरदाय । विघ्नेशाय नमः । ६८४०

विघ्नेश्वराय नमः । विघ्नकर्त्रे । विघ्नहर्त्रे । विघ्नेशविधि-मार्ताण्डचन्द्रेन्द्रोपेन्द्रवंदिताय । विघ्नेश्वरवरप्रदाय । विघ्नराजाय । विघ्ननाशकाय । वंचर्माम्बरधराय । वंचकाय । वंचते । वाचालकाय । वाचासिद्धाय । वाचस्पतिसमर्चिताय । वाचस्पतये । वाचस्पत्याय । वाचातीतमनोतीतमहिताय । वाचामगोचराय । वाचस्पत्यप्रदायकाय । वाचां मनसोऽतिदूरगाय । वाच्यवाचक-रूपाय नमः । ६८६०

वाच्यवाचकशक्त्यर्थाय नमः । वाङ्मनोतीतवैभवाय । वाङ्मयैकनिधये । विचक्षणाय । विचारविदे । विचित्रमायिने । विचित्रचरिताय । विचित्रमाल्यवसनाय । विचित्रतांडवप्रियाय । विचित्राय । विचिन्वत्केभ्यो । विचित्रगतये । विचित्रवेषाय । विचित्रशक्तये । विचित्राभरणाय । विचित्रमणिमूर्ध्ने । वांछानुकलितानेकस्वरूपाय । वांछितार्थप्रदायिने । वांछितदानधुरीणाय । वांछितदायकाय नमः । ६८८०

वज्रिणे नमः । वज्रजिह्वाय । वज्रहस्ताय । वज्रदेहाय । वज्रप्रियाय । वज्रदंष्ट्राय । वज्रनखाय । वज्रधराय । वज्रसंहननाय । वज्रनिलयाय । वज्रशरीराय । वज्रनायकाय । वज्रहस्तप्रियाय । वज्रकीलितसौवर्णमुद्रिकाङ्गुलिसेविताय । वज्रवैडूर्यमाणिक्य-निष्कभासितवक्षसे । वज्रेशाय । वज्रभूषिताय । वज्राद्यस्त्र-परिवाराय । वज्रात्मने । वज्रेशाय नमः । ६९००

व्याजमर्दनाय नमः। व्याजसमर्थनाय। वाजपेयादिसकल-फलदाय। वाजसनाय। विजयागमजठराय। विजातीयरहिताय। विजृंभिताय। विज्ञाय। विज्ञेयाय। विज्ञानगम्याय। विज्ञानदेहाय। विज्ञानघनरूपिणे। विज्ञानमात्रात्मने। विज्ञान देवाय। विज्ञानशुद्धचंद्रमसे। विज्ञानमयाय। विजितात्मने। विजितदानवलोकाय। विजयावहाय। विजयाक्षाय नमः। ६९२०

विजयाय नमः। विजयिने। विजयकालविदे। विजयस्थिराय। विजयद्विजविज्ञानदेशिकाय। वटवे। वटुवेषाय। वटतरुमूलनिवासाय। वटमूलनिवासाय। वटमूलकृताश्रयाय। वटुत्रयस्वरूपाय। वटदुमस्थाय। वटरूपाय। व्यूढोरस्काय। वणिजाय। वोढ्रेशाय। वाणिजाय। वाणीगीतयशसे। वाणीप्रियाय। वाणीशवंद्याय नमः। ६९४०

वाणीशैकज्ञेयमूर्धमाहात्म्याय नमः। वीणानाद-प्रमोदिताय। वीणाढ्याय। वीणाकर्णनतत्पराय। वीणानादरताय। वीणाव्याख्याक्षसूत्रभृते। वीणाधारिणे। वीणापुस्तक-हस्ताब्जाय। वेणुतत्पराय। वैणिकाय। वैणविकाय। व्रताधिपतये। व्रतिने। व्रतविदुषे। व्रतेश्वराय। व्राताधाराय। व्रताकराय। व्रतकृच्छ्रेष्ठाय। व्रतकृते। व्रतशीलाय नमः। ६९६०

व्रतानां पतये नमः। व्रतानां सत्याय। वत्सलाय। वत्सराय। वत्सिने। वृत्तिरहिताय। वृत्रारिपापघ्ने। वातुलागमवेद्याय। वातुलांतमहातंत्रदेशिकाय। वातुलागमनाडीप्रदेशाय। वात्याय। वाताय। वातापितापनाय। वातरंहसे। व्रातेभ्यो। व्रातपतिभ्यो। वीतिहोत्राय। वीतरागाय। वीतसंकल्पाय। वीतभयाय नमः। ६९८०

वीतिहोत्रालिकाय नमः । वीतदोषाय । वेत्रे । वदनविजितेन्दुबिम्बाय । वदनद्वयशोभिताय । वदनत्रयसंयुताय । वदावदाय । वदान्यानामाद्याय । वादपरायणाय । वाद्यनृत्यप्रियाय । वादिने । व्यादिशाय । विद्यात्मयोगिनिलयाय । विद्रुमच्छवये । विद्वत्तमाय । विदुषे । विदंभाय । विद्येशाय । विद्याराशये । विदग्धाय नमः । ७०००

विदारणाय नमः । विद्युत्याय । विद्वज्जनसंश्रिताय । विद्वज्जनाश्रयाय । विद्वज्जनस्तव्यपराक्रमाय । विद्याकराय । विद्याविद्याकराय । विद्यावेद्याय । विद्याप्रदाय । विद्यामयाय । विद्यावराभीतिकुठारपाणये । विद्वद्भृङ्गसुपूज्याय । विद्वदुत्तमाय । विद्यादये । विद्याराजाय । विद्रवाय । विद्याविज्ञानदाय । विद्याधरगणार्चिताय । विद्युत्कोटिप्रकाशाय । विद्युत्तमाय नमः । ७०२०

विद्युदशनिमेघगर्जितप्रभवे नमः । विद्योतवेदवेदाङ्गाय । विद्यानां प्रभवे । विद्यानां पतये । विद्यानामात्मविद्यायै । विद्युताय । विद्युत्पिङ्गजटाधराय । विदेहाय । विद्यादायिने । विद्यारूपिणे । विद्याधराय । विद्याधरविधानज्ञाय । विद्याविचक्षणाय । विद्याविशिष्टनियतात्मसुवैभवाय । विदलासुरघातिने । विगलितविषयप्रवाहदुर्वृत्तये । विद्यादेहाय । विद्याधिपतये । विद्याधिकेशाय । विद्याधारिणे नमः । ७०४०

विद्याभोगबलाधिकाय नमः । विद्यातत्वाय । विद्यासस्यफलोदयाय । विद्यालंकृतदेहाय । विद्यानंदमयात्मने । विद्यालक्ष्याय । विद्योतितवेदवेदाङ्गाय । विद्याकलात्मककंठादिकाय । विद्याकराय । विद्यातीताय । वेदवाचामगोचराय । वेदगुह्याय । वेदाय । वेदगम्याय । वेदाश्वरथवाहिने । वेदप्रियाय ।

वेदविदे । वेदिताखिललोकाय । वेदान्तार्थस्वरूपिणे । वेदान्तवेदिने नमः। ७०६०

वेदस्वरूपाय नमः । वेदांतोद्धारकाय । वेदांतवादिने । वेदांतनिलयाय। वेदश्रवसे। वेदरूपाय। वेदघोषाय। वेदवाहिने। वेदसागरतारणाय । वेदपित्रे । वेदवेत्रे । वेदवेदाङ्गतत्त्वज्ञाय । वेदबाह्यविमोहनाय । वेदशास्त्रार्थतत्त्वज्ञाय । वेदवित्तमाय । वेदनायकाय । वेदवेदाङ्गतत्वज्ञाय । वेदात्मरूपाय।वेदवेदाङ्ग-सन्नुताय। वेदादिमयाय नमः। ७०८०

वेदलिङ्गाय नमः। वेदाङ्गाय। वेदमूर्तये। वेदकर्मापदानानां द्रव्याणां प्रभवे । वेदानां सामवेदाय । वेदानां समन्वयाय । वेदितव्याय । वेदान्तोपवने विहाररसिकाय । वेदसाराय । वेदवेद्याय। वेदरहस्याय । वेदानामविरोधाय । वेदान्तसाराय । वेदान्तसारसंदोहाय। वेदान्तसाररूपाय। वेदजिह्वाय। वेदवेदिने। वेदाक्षमालावरदाभयांकाय। वेदान्तज्ञानरूपिणे। वेदान्तपठिताय नमः। ७१००

वेदनिश्वसिताय नमः । वेदानां प्रभवे । वेदान्तकर्त्रे । वेदशास्त्राय। वेदाभयेष्टांकुशपाशशूलकपालमालाग्निकृणादिधर्त्रे। वेदाश्वाय। वेदशास्त्रप्रमाणाय। वेदान्तवेद्याय। वेद्याय। वेदात्मने। वेदाद्रीशाय। वेदविग्रहाय। वेदेज्याय। वेदकृते। वेदवक्त्राय। वेदास्याय । वेदकराय । वेदमृग्याय । वेदवेदान्तसंस्तुताय । वेदकाराय नमः। ७१२०

वेदाङ्गाय। वेदविदुषे। वेदशास्त्रार्थतत्वज्ञाय। वेदार्थविदे। वैद्याय । वैदेहीशोकहारिणे । वैद्यावैद्यचिकित्सकाय । वैद्यानां वैश्वानराय । वैद्युताशनिमेघगर्जितप्रभवे । वैदिकाय । वैद्युतप्रभाय। वैदिकोत्तमाय । वैद्यशास्त्रप्रदर्शिने ।

वैदिकाचारनिरताय। वैदिककर्मफलप्रदाय। वंद्यप्रसादिने। वंदिने। वंद्याय। वंद्यपदाब्जाय। वंदारुजनवत्सलाय नमः। ७१४०

वंदारुवृन्दपालनमन्दारपदाय नमः। वंद्यमानपदद्वंद्वाय। वंदारुजनमंदाराय। वंदारुमंदाराय। वृद्धाय। वृद्धात्मने। वृद्धिक्षयविवर्जिताय। वृद्धिदायकाय। व्याधये। विधात्रे। विधेयात्मने। विधये। विधृतविविधभूषाय। विधानज्ञाय। विध्यद्भ्यो। विधिविदामग्रेसराय। विधातृविष्णुकलहनाशनाय। विधिसारथये। विधिसर्गपरिज्ञानप्रदालोकाय। विधिस्तुताय नमः। ७१६०

विधुबिंबाय नमः। विंध्याचलनिवासिने। विंध्यमर्दनाय। वेधसे। वेधित्रे। वनवासिने। वनस्पतीनां प्रभवे। वनमालादिविभूषणाय। वनप्रियाय। वनितार्धाङ्गाय। वनदुर्गापतये। वनानां पतये। वनचराय। वन्यावनिविनोदिने। वन्याय। वनजाक्षाय। वनालयाय। वन्याशनप्रियाय। वानप्रस्थाय। वानप्रस्थाश्रमस्थाय नमः। ७१८०

वानप्रस्थाश्रमिणे नमः। व्यानेश्वराय। विनुतात्मने। विनायकनमस्कृताय। विनायकाय। विनायकविनोदस्थाय। विनष्टदोषाय। विनताय। विनयित्रे। विनीतात्मने। विनमद्रक्षणकर्मणे। वपुषे। वपाहोमप्रियाय। व्याप्तये। व्याप्ताय। व्याप्याय। व्यापकाय। व्यापांडुगंडस्थलाय। विप्रपूजनसंतुष्टाय। विप्राविप्रप्रवर्धनाय नमः। ७२००

विप्रत्रात्रे नमः। विप्रगोप्त्रे। विप्रहत्याविमोचकाय। विपन्नार्तिहारिणे। विप्रमंदिरमध्यस्थाय। व्यापिने। व्यापांडुगंडदेशाय। विपाकाय। विपर्यासविलोचनाय। विपणाय। विपुलांसाय। विप्रवाददविनोदिने। विप्रोपाधिविनिर्मुक्ताय।

विप्रनंद्याय । विप्रप्रियाय । विप्रशरीरस्थाय । विप्रवंद्याय । विप्ररूपाय । विप्रकल्याणाय । विप्रवाक्यस्वरूपिणे नमः । ७२२०

विप्रवैकल्यशमनाय । विप्राविप्रप्रसादिने । विप्राविप-प्रसादकाय । विप्राराधनसंतुष्टाय । विप्रेष्टफलदायकाय । विप्राणामग्निनिलयाय। विप्राय। विप्रभोजनसंतुष्टाय। विप्रश्रियै। विप्रालयनिवासिने। विप्रैरभिष्टुताय। विप्रपालाय। विपाशाय। विंवीजजपसंतुष्टाय। विबुधाय। विबुधलोलाय। विबुधाश्रयाय। बिबुधगणपोषकाय । विबुधेश्वरपूजिताय । विबुधस्रोतस्विनी-शेखराय नमः। ७२४०

विभवे नमः । विभक्तिषच्चनात्मकाय । विभागज्ञाय । विभागाय। विभागवते। विभाकरस्तुताय। विभागह्नरूपिणे। विभ्रांताय। विभूत्संगभूषाय। विभीषणाय। वामेशक्तिधराय। वामदेवाय। वामदेवप्रियाय। वामाङ्गीकृतवामाङ्गिने। वामाय। वामदेवात्मकगुह्याय । वामनाय । वामदेवात्मकाय । वामाङ्कसुन्दराय। वामाङ्कसंस्थगौरीकुचकुंभाश्लेषलाञ्छितोरस्काय नमः। ७२६०

वामेक्षणासखाय नमः । वामनयनायितचंद्रमसे । वाममार्गप्रवर्तकाय। वामहर्षकाय। वामदेवादिसिद्धौघसंवृताय। वामभागाङ्गमारूढगौर्यालिङ्गितविग्रहाय । वामदेवात्मकोत्तर-वदनाय। वामदेवात्मकनाभ्यादिकाय। वामादिविषयासक्तद-विष्टाय। वामलोचनाय। वामाङ्गाय। वामाङ्गभागविलसत्पार्वती-वीक्षणप्रियाय । वामदेवात्मने । वामिने। वामेन कलत्रवते । वामभागार्धवामाय । वामदक्षिणपार्श्वस्थरोम्णे । वामभाग-कलत्रार्धशरीराय । विमलार्धार्धरूपिणे । विमलहृदयाय नमः । ७२८०

विमलांगाय। विमलचरिताय। विमलप्रणवाकारमध्यगाय। विमल विद्याय। विमुक्तमार्ग प्रतिबोधनाय। विमलगुणपालिने। विमलेन्द्रविमानदाय । विमलहृदां वाञ्छितार्थगणदात्रे । विमर्शाय। विमर्शरूपिणे । विमर्शवाराशये । विमुक्ताय । विमानानां पुष्पकाय । विमुक्तात्मने । विमुखारिविनाशनाय । विमोचनाय । विमलयोगीन्द्रहृदयारविंदसदनाय । विमलाय । विमलागमबाहवे। विमलवाणीश्वरेश्वराय नमः ७३००

विमलोदयाय नमः । व्योमकेशाय । व्योमगाय । व्योमाकाराय । व्योममंडलसंस्थिताय । व्योमातीताय । व्योमरूपिणे । व्योमाकाराय । व्योमचीरांबराय । व्योमगंगाविनोदिने । व्योमलिंगाय । व्योमबिन्दुसमाश्रिताय । व्योमरूपाय । व्योममूर्तये । व्योमाधिपतये । व्योमसंस्थाय । व्योमगंगाजलस्नातसिद्धसंघसमर्चिताय । वयसा पंचविंशति-वार्षिकाय। वयस्यपरिमंडिताय। वयोऽवस्थाविवर्जिताय नमः। ७३२०

वयोमध्यस्थाय नमः । वयस्याय। वयोऽवस्थाविहीनाय। वयसां पतये । व्ययकृते । वायवे । वायुवाहनाय । वायुगाय । वायुवाहाय । वाय्वग्निनभसां पतये । वायुवंदिताय । वायुवेगपरायणाय । वायुस्थानकृतावासाय । वायुरूपाय । वायुसंभृताय। वायुस्वरूपिणे। वायुदंभविघातिने। वायुवेगाय। वायुवेगाय। वायुव्यापिने। वायूर्ध्वलिङ्गाय नमः। ७३४०

वाय्वात्मने नमः। वायुसूनुसमर्चिताय। वायुसूनुवरप्रदाय। वायसारातये । वायनप्रियाय । वायुमंडलमध्यस्थाय । वायुमंडलमध्यगाय । वायौ द्विधा लीनाय । व्यायामनिरताय । व्यायोगप्रियाय। व्यायतबाहवे। व्यायतचित्ताय। व्यायतात्मने।

वियत्पतये । वियन्मूर्तये । वियद्रूपाय । वियत्प्रसवे । वियद्गोप्त्रे । वियदिन्द्रचापवत्तेजोमयवपुषे । वियाताय नमः । ७३६०

वियद्गंगाधराय नमः । वियदादिजगज्जनकाय । वियामप्रणयिने । वियमाध्वरदीक्षिताय । वियदंतरचारिणे । वैयाघ्रारूढाय । वैयाघ्रचर्मपरीधानाय । वैयाघ्रपुरवासाय । वैयाकरणमंडलमध्यस्थाय । वैयाकरणस्तुतवैभवाय । वरदाय । वरसुगुणधाम्ने । वरशीलाय । वरदानशीलाय । वरतुलाय । वरधर्मनिष्ठाय । वराय । वररुचये । वरगुणसागराय । वरदाभयकराय नमः । ७३८०

वरवृषतुरंगाय नमः । वरविबुधवंद्याय । वरपरशुमृगाभयकराय । वरगुणाय । वरशैध्र्येयाय । वरदानतीर्थवासिने । वरदाभये दधानाय । वरदाननिरताय । वरनिधिप्रदाय । वरत्रात्रे । वराहशैलवासिने । वरगुरवे । वरसेव्याय । वराहस्तुताय । वरारोहाय । वरारोहाप्रियंकराय । वरारोहीरसाभिषेकप्रियाय । वरास्थिमालालंकृताय । वराश्रयाय । वरिवस्यातुष्टाय नमः । ७४००

वराङ्गनापूजिताय नमः । वरदानतीर्थरूपिणे । वर्तनीप्रदर्शिने । वर्धमानप्रियाय । वर्धमानाय । वर्याय । वर्ष्मिणे । वर्मिणे । वर्णकारकाय । वरासिधारिणे । वराङ्गाय । वर्षधर्षाय । वरालिवतंसाय । वर्षाद्यागमकारणाय । वर्षंकराय । वर्षवराय । वर्षधराय । वर्षाणां प्रभवे । वराहाय । वर्तमानाय नमः । ७४२०

वर्षते नमः । वरूथपृथुदंडिने । वरदाभयपाणये । वरदाभयहस्ताय । वर्षदायकाय । वरमार्गप्रबोधिने । वर्णाश्रमरताय । वर्णाश्रमगुरवे । वर्मधारिणे । वर्षनायकाय । वरुणैश्वर्यखंडनाय । वरचंदनानुलिप्ताय । वरवर्णिनीप्रियाय ।

वरार्थपंकाभिषेकप्रियाय । वर्णभूषणाय । वर्णश्रेष्ठाय । वर्णाध्वत्वचे । वर्णबाह्याय । वर्णात्मने । वर्णाश्रमकराय नमः । ७४४०

वर्णाधिकाय नमः । वर्णानां प्रभवाय । वर्ण्याय । वर्णाचारविधायिने । वर्णसम्मुखाय । वर्णिने । वर्णविभाविने । वर्णिताय । वर्चसे । वराहशृंगधृते । वराभयप्रदपाणियुगलाय । वराक्षमालाऽभयटंकहस्ताय । वरार्हाय । वरेण्याय । वरेण्यवरसंस्थिताय । वर्षीयसे । वरूथिने । वर्षरूपाय । वरेशाय । वर्ष्याय नमः । ७४६०

वरिष्ठाय नमः । वरुणार्चिताय । वरुणाय । वरुणेन्द्रादिरूपिणे । वरुणाधाराय । वर्गत्रयाय । वर्गाय । वरीयसे । वरेड्याय । वरभूषणदीप्ताङ्गाय । वराहभेदिने । वारुणाय । वारणमदापहाराय । वारिधिनिषंगाय । वारिकल्लोलसंक्षुब्धमहाबुद्धिविघट्टनाय । वारिधीशशरधये । वारणाजिनपरिवृताय । वाराशितूणीराय । वारितातनुसंसारसंतापाय । वारुणीमदखंडनाय नमः । ७४८०

वारुणेशाय नमः । वारुणीक्षेत्रनिलयाय । वारिगर्भाय । वारिलिङ्गाय । वार्तातिक्रान्तरूपिणे । वार्तज्ञाय । वाराहीपालकाय । वारिधारिणे । वाराङ्गनाप्रियाय । वारणेन्द्राजिनश्रेष्ठवसनाय । वाराणस्यादिसुक्षेत्रनिवासाय । वारणार्तिकृते । वारिरूपाय । वाराणसीवासलभ्याय । वाराणस्यांविश्वेश्वराय । वाराणसीपुरपतये । वाराहीप्रियाय । वारिवाहाभकन्धराय । वारिवस्कृताय । वारणबुसाफलप्रियाय नमः । ७५००

वारिकेलीप्रियाय नमः । वारिक्रीडाकुतुकिने । विराण्मयाय । विरामाय । विरक्ताय । विरोधिने । विरूपरूपाय । विरजसे । विरजाय । विरिञ्चाय । विराडादिस्वरूपिणे । विराड्रूपाय ।

विरोचनाय । विरिञ्चिपूज्याय । विरोधिजनमोक्षणाय । विरोधहराय । विरोचनस्तुताय। विरोधिध्वंसिने। विराधविरोधिपूज्याय। विरतिप्रियाय नमः । ७५२०

विराधाय नमः । विरूपाय । विरूपाक्षाय । विराजे । विराट्स्वरूपाय । विराजिताय । विरूपधराय । विरूपेभ्यो । विराड्वृषभवाहनाय । विरागघ्ने । विरुद्धलोचनाय । विरागिणे । विरागिजनसंस्तुत्याय । विरोचिनीतीरवासिने । विरोधनिवारकाय। विरूपापतिगर्वहारिणे । विरुद्धवेदसारार्थप्रलापिपवये । विराविलोकवासिने । विरहिजनसंस्तुताय । विरालीपुरवासिने नमः । ७५४०

वीरेश्वराय नमः । वीरबाहवे । वीरभद्राय । वीरशिखामणये। वीरघ्ने। वीरदर्पघ्ने। वीरभृते। वीरचूडामणये। वीरपुङ्गवाय । वीराय । वीर्यवते । वीररागाय ।वीर्यवच्छ्रेष्ठाय । वीर्यवद्वर्यसंश्रयाय । वीर्याकाराय । वीर्यकराय । वीर्यघ्ने । वीरहत्याप्रशमनाय। वीर्यवर्धनाय। वीरवंद्याय नमः । ७५६०

वीरासनैकनिलयाय नमः । वीर्यवते। वीरगोष्ठीविवर्जिताय। वीरगोष्ठीप्रियाय । वीररुद्राय । वीरचर्यापरायणाय । वीरमार्गरताय। वीरारामातिरामाय । वीर्याय । वीरासनैक निलयाय । वीराणां वीरभद्राय । वीरवल्लयादिरूपिणे । वीरस्कंधवाहसेविताय। वीरस्कंधासुरवरदाय। वीरागमकंठाय। वीराद्यागमपंचकप्रतिपादकदक्षिणवदनाय । वीरमार्गप्रबोधिने । वीरसेव्याय। वीरभद्रप्रकल्पकाय। वीरपत्नीस्तुतपराक्रमाय नमः । ७५८०

वीरपानप्रियाय नमः । वीरपाणपराय । वीराशंसनवीरभयंकराय । वीरविक्रमदर्शनप्रियाय । वीरसैन्यसंस्तुताय ।

वीरधुरंधराय । वीराञ्जनेयरूपाय । वीररसप्रधानाय । वीराग्रेसराय। वीराचलनिलयाय । वीरंधरवाह्जनकाय । वीरभद्रगणसेविताय । वीरेश्वराय । वैरिसंहारकाय । वैरिवीर्यविदारणाय । वैरशुद्धिकराय । वैराजोत्तमसाम्राज्याय । वैरानुबंधिरूपाय । वैरनिर्यातन-जागरूकाय । वैरोचनार्थिताय नमः । ७६००

वैरोचनीप्रियाय नमः । वैरूपश्रुतिवेत्रे । वैरारोहोद्युक्ताय । वल्लकीस्वनमुदिताय । वल्लकीगानलोलुपाय । वल्कलधारिणे । वलभिन्मित्राय । वलभिद्धनुष्प्रभामालाय । वलशासननायकाय । वलयितजटाजूटाय । वलयीकृतवासुकये । वल्मीकसंभवादृताय । वल्लभाय । वल्गते । वलभिशायिने । वल्लीशपित्रे । वल्गितविदे । वालखिल्याय। वालखिल्यप्रियाय। वालिवैरिगुरवे नमः । ७६२०

वालखिल्यादियोगीन्द्रभाविताय नमः । वालाग्रशत-भागादिसूक्ष्मांगाय । वाल्मीकिपूजितपादाय । वालमृगचामर-वीजिताय। वालिपूजिताय। वालीश्वराय। विलिप्ताय। विलासिने। विलासिनीकृतोल्लासाय । विलसद्दिव्यकर्पूरदिव्यांगाय । विलोचनसुदेवाय । विलोपिताय । विलसत्कृत्तिवाससे । विलोहिताय । विलासकाय । विलोलनेत्राय । विलक्षणरूपाय । विलोमवर्णवंदिताय। विलयकराय। विलीनपापाय नमः । ७६४०

विलग्नमूर्तये नमः । विलंबितविदग्धाय । विलोकितकलि-तेन्द्रादिपदाय । विलोचनवलनमात्रकलितजगत्सृष्ट्यादिकाय । विलसद्भालनेत्राय । विलेपनप्रियाय । विलासिनीविभ्रमगेहाय । विलोलवामांगपार्श्ववीक्षिताय। विलेपिनीभूषिततनवे। विलोचन त्रयीविराजमानाय । विलापबहुदूराय । वेलाविभ्रमशालिने । वेल्लिताकृष्टजनताय । वेल्लजकुसुमावतंसाय । वावदूकाय ।

व्यावृत्ताय। व्यावृत्तपिङ्गेक्षणाय। व्यावहारिकाय। व्यावहारिकप्रियाय। व्यवसायाय नमः। ७६६०

व्यवस्थानाय नमः। व्यवस्थापकाय। व्यवच्छेदमार्गाभिज्ञाय। विवर्तनाय। विवस्वते। विवेकाख्याय। विवर्णदक्षाय। विविक्तस्थाय। विविध्यन्तीभ्यो। विविधाकाराय। विव्याधिने। विवेकिने। विवेकिविबुधानंदाय। विवाहाय। विवादवरदाय। विवृतिकराय। विवर्तकलितजगत्प्रियाय। विवृतोक्तिपटिष्ठाय। विवृत्तात्मने। विविक्ताकाराय नमः। ७६८०

विवादिने। विवादहराय। विवादिसंप्रदायज्ञाय। वैवस्वताय। वैवस्वतस्य शास्त्रे। वशीकृतजगत्पतये। वश्यश्रिये। वंशकराय। वशंकराय। वंशवर्धनाय। वंशनाथाय। वंशाय। वश्याय। विशदाकृतये। वशिने। वशकृते। विशदविज्ञानाय। विशदस्फाटिकदिव्यविग्रहाय। विश्वभर्त्रे। विश्वाधिकाय नमः। ७७००

विश्वरेतसे नमः। विश्वरूपाय। विश्ववंद्याय। विश्वदीप्तये। विश्वोत्पत्तिकराय। विश्वकर्मिणे। विश्वतैजसरूपाय। विश्वदेहाय। विश्वेश्वरेश्वराय। विश्वहंत्रे। विश्वभावनाय। विश्वसहाय। विश्वराजे। विश्वदक्षिणाय। विश्वस्मै। विश्वज्ञानमहोदधये। विश्वगोप्त्रे। विश्वमंगलाय। विश्वनेत्रे। विश्वकेतवे नमः। ७७२०

विश्वयोनये नमः। विश्वेशाय। विश्वरक्षाविधानकृते। विश्वरूपिणे। विश्वस्तामुसलोद्धारवित्रस्ततनवे। विश्वतोमुखायापि पंचमुखाय। विश्वतश्चक्षुषेऽपि पंचदशचक्षुषे। विश्वतो हस्तायापि दशहस्ताय। विश्वतःपादायापि द्विपादाय। विश्वतोहितायापि अनवरतकरुणाय। विश्वतोमुखाय। विश्व-

तश्चक्षुषे। विश्वजगन्नाथाय। विश्वतोहस्ताय। विश्वजगद्धात्रे। विश्वतःपादाय। विश्वतोरहिताय। विश्वात्मभावनाय। विश्वसृजे। विश्वदृशे नमः। ७७४०

विश्वभुजे नमः। विश्वकर्ममतये। विश्वचक्षुषे। विश्ववाहनाय। विश्वतनवे। विश्वभोजनाय। विश्वजैत्राय। विश्वक्षेत्राय। विश्वयोनये। विश्वलोचनाय। विश्वसाक्षिणे। विश्वमूर्ध्ने। विश्ववक्त्राय। विश्वमूर्तये। विश्वतेजःस्वरूपवते। विश्वस्वपतये। विश्वरूपप्रदर्शकाय। विश्वभूतसुहृदे। विश्वपरिपालकाय। विश्वसंस्थाय नमः। ७७६०

विश्वविमोहनाय नमः। विश्वसुराराध्याय। विश्वपादाय। विश्वाध्यक्षाय। विश्रुतात्मने। विश्रुतवीर्याय। विश्रुताखिल-तत्वजालाय। विश्रामाय। विशारदाय। विशोधनाय। विशुद्धमानसाय। विशुद्धमूर्तये। विशिष्टाभीष्टदायिने। विश्वश्लाध्याय। विश्वबाहवे। विश्वेश्वराय। विश्वतृप्ताय। विश्वनाथाय। विश्वभोक्त्रे। विश्ववेद्याय नमः। ७७८०

विश्वरूपिणे नमः। विश्वाशापरिपूरकाय। विश्वगर्भाय। विश्रृंखलाय। विश्वामित्राय। विशल्याय। विश्वमोहनाय। विशदाङ्गाय। विश्वधुरंधराय। विश्वेशाय। विश्वंभराय। विश्वनिर्माणकारिणे। विशिष्टाय। विशोकाय। विशेषितगुणात्म-काय। विशाखाय। विशालाय। विश्वामरेशाय। विश्रान्ताय। विश्वामित्रप्रसादिने नमः। ७८००

विश्वावासाय नमः। विशांपतये। विशालाक्षाय। विशालपद्मपत्राभाय। विशालवक्षसे। विशालवक्षोविलसच्चारु-हासाय। वैश्रवणाय। वैश्वानराय। वैश्वदेवप्रियाय। विश्वंभरसमाराध्याय। विश्वभरणकारणाय। वषट्काराय।

विश्वनायकाय। वषट्कारप्रियाय। विश्ववासिने। वषडाकाराय। विश्वस्थाय। विष्णुवल्लभाय। विष्णुरूपविनोदिने। विष्णुब्रह्मादिवंद्याय नमः। ७८२०

विष्णुवंद्याय नमः। विष्णुप्रियाय। विष्णुनेत्रे। विष्णुमायाविलासिने। विष्णुगर्वहराय। विष्णुसंकल्पकारकाय। विष्णुरूपिणे। विष्णवे। विष्णुचैतन्यनिलयाय। विष्णुप्राणेश्वराय। विष्णुकलत्राय। विष्णुक्षेत्राय। विष्णुकोट्यर्चितांघ्रये। विष्णुमायात्मकारिणे। विष्णुप्रसादकाय। विष्णुकंधरपातनाय। विष्णुमूर्तये। विष्णुलक्ष्यस्वरूपिणे। विष्ण्वात्मकोत्तरवदनाय। विष्ण्वात्मकगुह्याय नमः। ७८४०

विषाहारिणे नमः। विषहर्यादिचतुर्मूर्तिप्रतिपादकपश्चिमवदनाय। विषभंजनाय। विषघ्नाय। विषमाय। विषधराय। विषमदृष्टये। विषहारिणे। विषण्णांगाय। विषमेक्षणाय। विषमनेत्राय। विषरोगादिभंजनाय। विषयार्णवमग्नानां समुद्धरणहेतवे। विष्टंभाय। विषभक्षणतत्पराय। विष्वक्सेनाय। विष्वक्सेनकृतस्तोत्राय। विष्टरश्रवसे। विष्फाराय। वृषेन्द्राय नमः। ७८६०

वृषभेश्वराय नमः। वृषध्वजाय। वृषात्मने। वृषभाधीशाय। वृषारूढाय। वृषणाय। वृषपर्वणे। वृषरूपाय। वृषवर्धनाय। वृषांकाय। वृषदश्वाय। वृषज्ञेयाय। वृषभाय। वृषकर्मणे। वृषनिधये। वृषप्रवर्तकाय। वृषस्थापकाय। वृषभाक्षाय। वृषप्रियाय। वृषनाभाय नमः। ७८८०

वृषदर्भाय नमः। वृषभृंगाय। वृषर्षभाय। वृषभोदराय। वृषभेक्षणाय। वृषशराय। वृषभूताय। वृषभाधिरूढाय। वृषवाहनाय। वृषगमनाय। वृषभस्थाय। वृषाकृतये। वृषाकपये।

वृषाह्विने। वृषोदराय। वृषाधाराय। वृषायुधाय। वृषभवाहनाय। वृषभतुरंगाय । वेष्टकप्रणवान्तोदितनादस्याधः- पीठमध्योपक्रमादिविलसद्बिकारादिनादान्तात्मने नमः। ७९००

वैष्कर्म्याय नमः। वसवे। वसुमनसे। वसुमते। वसुश्रवसे। वसुश्वासाय । वसुरेतसे । वसुरत्नपरिच्छदाय । वसुप्रियाय । वसुधास्तुताय। वसुदाय। वसुंधराय। वसुश्रेष्ठाय। वसुत्रात्रे। वसुदेवाय। वसुजन्मविमोचिने। वसुप्रदाय। वसुधायासहरणाय। वसुंधरामहाभारसूदनाय। वसूनां पावनाय नमः। ७९२०

वसूनां पतये नमः। वसिष्ठादिमुनीन्द्रार्चिताय। वसिष्ठाय। वसिष्ठवामदेवादिवंद्याय। वसंताय। वस्तुरूपाय। वसंतक्रतवे। वस्वयनाय । वस्वात्मकाय । वासवयागविदे । वसंतेशाय । वासववंद्याय। वासवादिस्तुताय। वसंतदाय। वासवाभीष्टदाय। वासवाय। वासवपूजिताय। वासुदेवाय। वासुदेव मनोहराय। वासुकीज्याय नमः। ७९४०

वासवार्चितपादश्रिये नमः । वासुकिभूषणाय । वासवारिविनाशिने। वासुदेवप्रियाय। वासुदेवैकवेद्यांघ्रिवैभवाय। वासुक्याद्रिमहासर्पालंकृताय। वासुकीकंठभूषणाय। वासुकितक्षकलसत्कुण्डलाय । वासुकीशाय । वासुकिश्वासवासितभासितोरसे। वासुकिकंकणाय। वास्तव्याय। वासुदेवसहायाय। वास्तुपाय । वासुदेवार्चितस्वांघ्रिपंकेरुहाय । वास्तेयभूतनिगमन्यग्रोधाय । वास्तवार्थविजिज्ञासुनेदिष्ठाय । वासवादिसुरश्रेष्ठवंदिताय। वासवेश्वराय। व्यासाय नमः। ७९६०

व्यासस्रूत्रार्थगोचराय नमः। व्याससन्नुताय। व्यासमूर्तये। व्यासमौनिस्तुताय। व्यासादिमौनीन्द्रमहिताय। विस्फुरिततेजसे। विसृजद्भ्यो। विस्ताराय। वाहनीभवदुक्षाय। वाहनीकृतवृषभाय।

वाहिनीकृतधर्मराजाय । वह्निनेत्राय । वह्निप्रभाय । वह्निमूर्तये । वह्निमंडलमध्यगाय । वह्निसोमार्करूपाय । वह्निलिंगाय । वह्निदर्पविघातकाय । वह्न्यात्मने । वह्नितेजसे नमः । ७९८०

वह्निरेतसे नमः । वह्नये । वह्न्यर्कलिंगाय । वह्निसोमार्कलिंगाय । विह्वलाय । विहंगाय । व्यूहाय । विहायसगतये । व्यूहेशाय । वळक्षाय । वळक्षद्युतिशेखराय । वळक्षवृषभारूढाय । वळक्षभूतिभूषिताय । वळित्रयविराजिताय । व्यळीकनिरासकाय । व्याळिने । व्याळरूपाय । व्याळभूषणाय । व्याळयज्ञसूत्राय । व्याळदंष्ट्रिलसद्धाराय नमः । ८०००

व्याळाचलनिवासिने नमः । व्याळाकल्पाय । व्याळादिवाहनजनकाय । वाक्षरदक्षिणपादाय । वृक्षाणां प्रभवे । वृक्षैरावृतकायाय । वृक्षाणां पतये । वृक्षेशाय । वृक्षकेतवे । विक्षीणकेभ्यो नमः । विक्षराय नमः । ८०११

शवर्णस्य शिवो देवता । मोक्षार्थे विनियोगः ।

शकुनिविभुध्वजसन्नुताय नमः । शक्ताय । शकुन्तवाहनशराय । शक्तये । शक्ररूपाय । शक्तिपूज्याय । शक्तिबीजात्मकाय । शक्तिदाय । शक्तिमार्गपरायणाय नमः । ८०२०

शक्तित्रयफलदाय नमः । शक्तिनाथाय । शक्तियुजे । शक्रवृष्टिप्रशमनोन्मुखाय । शक्रामर्षकराय । शक्राभिवन्दिताय । शक्तिमतां श्रेष्ठाय । शक्तिमदात्मने । शक्तिधारणाय । शाकल्याय । शाक्यनाथाख्यपाषंडपूजिताश्मभृते । शाक्ताश्रमगताय । शांकरीकलत्राय । शांकरीहृदयेशाय । शिकाररूपाय । श्रीकराय । श्रीकेलये । श्रीकण्ठाय । श्रीकराकाराय । श्रीकंठनाथाय नमः । ८०४०

श्रींकारसुधाब्धिशीतरुचये नमः। श्रीकांतकांतनयनार्चित-पादपद्माय । श्रीकालहस्तिलिङ्गाख्याभरणाय । शुक्राय। शुक्ररूपाय। शुक्रशोचिषे । शुक्रपूज्याय । शुक्रभोगिने । शुक्रमदहृते। शुक्रभक्षणतत्पराय। शुक्लाय। शुक्लयज्ञोपवीतिने। शुक्लवस्त्रपरीधानाय । शुक्लमाल्यांबरधराय । शुक्लज्योतिषे । शुक्लभस्मावलिप्ताय। शुक्लांबरधराय। शुक्लकर्मरताय। शुक्लतनवे। शूकाराय नमः। ८०६०

शूकृताय नमः । श्लोक्याय । श्लोकाय । शोकहराय । शोकघ्ने। शोकनाशनाय । शंकराय । शंकानिरोधकाय । शंकुकर्णाय। शिखावते। शिखाग्रनिलयाय। शिखिने। शिखंडिने। शिखिवाहनजन्मभुवे । शिखरिकेतनाय । शिखरीश्वराय । शिखरीन्द्रधनुःशोभिकराब्जाय। शिखंडिवाहनोदीर्णवात्सल्याय। शिखराय। शिखिसारथये नमः। ८०८०

शंखाय नमः। शंखप्रभाय। शंखपादाय। शंखप्रियाय। शंखिने । शंखशूलधराय । शंगाय । श्रीगिरिमल्लिकार्जुन-महालिंगाय। शृङ्गारिणे । शृङ्गाररससमुल्लसदंगविलासाय । शृङ्गिणे। शृङ्गप्रियाय । श्रीगर्भाय। श्रीघनाय । शीघ्रियाय । शीघ्रगाय। शीघ्रकारिणे। शीघ्रमिष्टफलदाय। शचीपतिस्तुताय। शचीशाभीष्टदायकाय नमः। ८१००

श्रीचन्द्रचूडाय नमः। शुचिप्रियाय। शुचये। शुचिस्मिताय। शुचिवर्णाय । शुचिश्रवसे । शिंजानमणिमंजीरचरणाय । शिंजिनीभूतभुजगनायकाय । शिंजिनीकृतपन्नगेश्वराय । शिंजिनीकृतवासुकये । शौंडाय । शौंडीर्यमंडिताय । शोणांभोजसमाननाय । शोणवर्णजटाजूटाय । शतजिह्वाय । शतबेलाद्यायुधाय। शतघ्नीपाशशक्तिमते। शतमूर्तये। शतधन्वने। शतपत्रायतेक्षणाय नमः। ८१२०

शतधृतये नमः । शतघ्नशनिखड्गिने । शताननाय । शतावर्ताय । शतरूपविरूपाय । शतकेतवे । शताकृतये । शतानंदाय । शत्रुजिते । शत्रुघ्नाय । शत्रुतापनाय । शत्रुनिषूदनाय । शांताय । शान्तस्वान्ताय । शान्तरूपाय । शान्तमानसभाविताय । शान्तरागाय । शान्तशरच्चन्द्रनिभाय । शान्तमानसाय । शान्तात्मने नमः । ८१४०

शान्तचित्ताम्बुजचञ्चरीकाय नमः । शान्तशक्तिसंशय-वर्जिताय । शान्तमूर्तये । शान्त्यै । शान्तिकलात्मकललाटादिकाय । शान्त्यतीतात्मकमूर्धादिकाय । शान्तात्मरूपिणे । शान्तिवर्धनाय । शान्त्यतीताय । शान्तिदाय । शान्तिस्वरूपिणे । श्रित-विबुधलोकाय । शितिकंठाय । शितिकंठोर्ध्वरेतसे । शीतलशीलाय । शीतांशुमित्रदहननयनाय । शीतांशुशोभितकिरीटविराजमानाय । श्रुत्यै । श्रुतिपादाय । श्रुतिशिरःस्थानांतराधिष्ठिताय नमः । ८१६०

श्रुतिसेव्याय नमः । श्रुताय । श्रुतिपदैर्वेद्याय । श्रुतिगीतकीर्तये । श्रुतिसाराय । श्रुतिपारगाय । श्रुतिज्ञानगम्याय । श्रुतिमते । श्रुतज्ञाय । श्रुतये । श्रुतिचूडामणयेऽपि चन्द्रचूडामणये । श्रुतिप्रकाशाय । श्रुतिमार्गेशाय । श्रुतिसागराय । श्रुतिचक्षुषे । श्रुतिलिङ्गाय । श्रुतिप्रणवगम्याय । श्वेतपिङ्गलाय । श्वेतरक्षापराय । श्वेताय नमः । ८१८०

श्वेतांबरधराय नमः । श्वेतमाल्यविभूषणाय । श्वेतद्वीपाय । श्वेतातपत्ररुचिराय । श्वेतचामरवीजिताय । श्वेताश्वाय । श्वेतवाहनसख्यवते । श्वेतलोहिताय । श्रोत्रे । श्रोतृवर्गरसायनाय । श्रोतव्याय । शिथिलीकृतसंसारबंधनाय । शंदक्षिणपादनूपुराय । श्रीदाय । श्रीधराय । शुद्धविग्रहाय । शुद्धकेवलमिश्रादि-पूज्योपास्याय । शुद्धपाणये । शुद्धशासनाय । शुद्धगुणार्णवाय नमः । ८२००

शुद्धहृदयाय नमः । शुद्धस्फटिकनिर्मलाय । शुद्धांतरंगाय । शुद्धज्योतिःस्वरूपाय । शुद्धभावाय । शुद्धस्फटिकमालाढ्याय । शुद्धबुद्धये । शुद्धबोधप्रबुद्धाय । शुद्धमार्गप्रवर्तिने । शुद्धस्फटिकसंकाशमूर्तये । शुद्धज्ञानिने । शुद्धस्फटिकोज्ज्वल-विग्रहाय । शुद्धचैतन्याय । शुद्धाध्वजनन्यात्मने । शुद्धानंदाय । शुद्धाय । शनये । शनैश्चराय । श्रीनिकेतनाय । श्रीनीलकंठाय नमः । ८२२०

श्रीनिधये नमः । श्रीनारदपरिप्रश्नसंशयच्छेदिने । श्रीनाथादिस्वरूपिणे । श्रीनिवासाय । श्रीनाथाधीश्वराय । शुनासीराय । शून्याय । श्वपतिभ्यो । शापवर्जिताय । शापानुग्रहदाय । शिपिविष्टाय । श्रीपपूजिताय । श्रीपतये । श्रीप्रदाय । श्रीपतिवंद्यपादाय । श्रीपदाय । श्रीप्रदत्ताम्बुजस्रग्विणे । शब्दब्रह्मणे । शबरार्भकलालांबुस्तोकसेकजुषे । शब्दसहाय नमः । ८२४०

शब्दस्पर्शस्वरूपाय नमः । शब्दगोचराय । शब्दस्पर्श-रसगंधसाधकाय । शब्दपतये । शब्दातिगाय । शब्दब्रह्म-प्रतिष्ठिताय । शब्दातीताय । शब्दात्मकाय । शब्दब्रह्मैकपारगाय । शिबिकास्यादिदायकाय । शंबरारिनिकृन्तनाय । शंबरान्तकवैरिणे । शंबराय । श्रीबीजजपसंतुष्टाय । शुभाय । शुभावहाय । शुभप्रदाय । शुभेक्षणाय । शुभलक्षणाय । शुभांगाय नमः । ८२६०

शुभानंदाय नमः । शुभाक्षाय । शुभवदान्याय । शुभाभीष्टप्रदाय । शुभंकराय । शुभलक्षणलक्षिताय । शुभनाम्ने । शुभसंपदां दात्रे । शुभरूपाय । शुभ्राननाय । शुभ्राय । शुभ्रविग्रहाय । शुभ्राभ्रयूथधृते । श्वभ्यो नमः । श्रीभरद्वाजदीक्षोत्तमाघोर गुरवे । शीभ्याय । शोभनाय । शंभवे । शमरूपाय । शमाय नमः । ८२८०

शमनदमनाय नमः । शमप्राप्याय । शमदमविपुलवंद्याय । श्रमणाय । शमधनमूलधनाय । शमितवृजिनसहचराय । शमेश्वराय । शम्याकमौलये । शम्याकस्रग्धराय । श्यामकायाय । श्यामार्धदेहाय । श्यामाहृतार्धविग्रहाय । श्यामाय । शामित्राय । श्रीमते । श्रीमहेशाय । श्रीमयाय । श्रीमत्कैलासशिखरनिलयाय । श्रीमतां वराय । श्रीमद्दक्षिण कैलासपक्षपाताय नमः । ८३००

श्रीमद्वरगुणाराध्यपादुकाय नमः । श्रीमहादेवाय । श्रीमहेश्वराय । श्रीमंत्रभाविताय । श्रीमद्धालास्यसुंदराय । श्रीमनोभाविताकृतये । श्रीमत्कुंडलीश्वरकुंडलाय । शेमुषीप्रदाय । शेमुषीमद्वृताय । श्रियावासिने । श्रीयंत्रराजराजाय । श्रेयसे । शयानेभ्यो । शयानाय । श्रेयोनिधये । शंयोरभिस्रवन्ताय । शरन्निशाकरप्रवालमन्दहासमंजुलाधरप्रकाशभासमानवक्त्रमण्डन-श्रिये । शरणागतवत्सलाय । शरणागतदीनार्तपरित्राण-परायणाय । शरत्पूर्णेन्दुसंकाशाय नमः । ८३२०

शरण्यशरणाय नमः । शरभेश्वराय । शरत्कालप्रवर्तकाय । शरीरभूतभृते । शरीरस्थाय । शरीरत्रयरहितायापि सर्वज्ञाय । शर्वोत्तमागमयज्ञोपवीताय । शर्वरीकराय । शर्वरीहेतवे । शर्वागमसदाचारमर्यादाय । शर्वाणीमनोधीश्वराय । शरणागत-राजेन्द्रत्राणशीलांघ्रये । शरणागतकल्पकाय । शरणा-गतार्तिहरणाय । शरणान्विताय । शरणत्राणतत्पराय । शरच्चन्द्रगात्राय । शर्मदाय । शरत्कालनाशकाय । शरन्नाथाय नमः । ८३४०

शरत्कालप्रवर्त्तकाय नमः । शरणाय । शरण्याय । शरणागतरक्षणाय । शरभाय । शरसर्वायुधाय । शर्वशंकराय । शर्वलिङ्गाय । शर्वाय । शरीरिणा शरीरयोगवियोगहेतवे ।

शारदावल्लभाय । शारदाभ्रातिशुभ्रांगाय । शारदानायकाय । शार्ङ्गिणे । शार्दूलचर्मवसनाय । शार्दूलाजिनभृते । शिरोहारिणे । शिरःकपालरुद्राक्षमालिकाय । शिरोधृतसुरापगाय । शिरीषमृदुलाकारवामार्धाय नमः । ८३६०

श्रीरामवरदायकाय नमः । श्रीरामचन्द्रतत्वार्थदेशिकाय । शूरदुरासदाय । शूराय । शूरमंडलमंडिताय । शूरसेनाय । शूराग्रेसराय । शौरये । शौर्यभाजनाय । शिल्पाय । शिल्पवैचित्र्यविद्योताय । शिलादसुतनिक्षिप्तराज्याय । शिलीमुखीकृतविधवे । शिलाकठिनपापौघभिदुराय । शिल्पिनां विश्वकर्मणे । श्रीलीलाकरपद्मनाभवरदाय । शूलपाणये । शूलभास्वत्कराय । शूलिने । शूलास्त्रास्त्रविदारितांधकसुरारातीन्द्रवक्षःस्थलाय नमः । ८३८०

शूलाय नमः । शूलाद्यायुधसंपन्नाय । शूलपाशांकुशचापहस्ताय । शूलटंकपाशदण्डपाणये । शैलाय । शैलाधीशसुतासहायाय । शैलादिप्रमुखैर्गणैः स्तुताय । शढलराजजामात्रे । शैलराजसुतापरिष्कृतचारुवामकलेवराय । शैलेन्द्रसुतापतये । श्रवणपुटोल्लसितोरगमस्तकमणिदीप्तिमृदुकपोलयुगाय । श्रविष्ठाय । श्रवणानंदभैरवाय । शिवाय । शिवज्ञानरताय । शिवतराय । शिवविद्यारहस्यज्ञप्रत्यज्ञाय । शिवालिङ्गिताय । शिवारंभाय । शिवमंत्रजपप्रियाय नमः । ८४००

शिवाजीवितेशाय नमः । शिवाकान्ताय । शिवादितत्त्वमयाय । शिवानन्दयुतानन्तमुनिमुक्तिमुदे । शिवदूतीसमाराध्याय । शिवाग्निप्रियाय । शिवागमज्ञहृन्मंचमध्यस्थाय । शिवज्ञानपयोराशिराकाभाय । शिवशक्तिलतामूलसुकंदाय । शिवतत्त्वार्थकुलिकशेखराय । शिवलिङ्गार्चनाव्यग्रनामदोग्घ्रे ।

शिवहृदयपाथोजभ्रमराय । शिवपाशभुजङ्गालिगरुडाय । शिवमुंडाभरणाय । शिवभस्मविलेपनाय । शिवमंत्राय । शिवंकराय । शिवलिङ्गाय । शिवतत्त्वाय । शिवतनवे नमः । ८४२०

शिवलक्ष्यस्वरूपिणे नमः । शिवपादाख्योर्ध्ववदनाय । शिवात्मभुव्यभिव्यक्तदिनेशाय । शिवादाम्पत्यदत्तोरुकरुणाय । शिवात्मकाय । शिवानाथाय । शिवासमेताय । शिवाराध्याय । श्रीवर्धनाय । श्रीवैद्यनाथाय । श्रीवल्लभाय । श्रीवधूनाथबाणाय । श्रीविद्याचक्ररूपिणे । श्रीविद्यानामरूपाय । श्रीविद्याभेदरूपिणे । श्रीवामदेवाय । श्रीविष्णुसर्वपूज्यत्ववरदाय । श्रीवल्लभशिवारंभाय । श्रीविभावनाय । श्रीविश्वनाथाय नमः । ८४४०

शैवलीलाय नमः । शैवानां शिवरूपिणे । शिवंकरनिजानंदसंपूर्णाय । शशधरशेखराय । शशाङ्कशेखराय । शशाङ्कार्धमौलये । शशाङ्काय । शशिकोटिकान्तिजालाय । शशिखंडशेखराय । शशिकलाभास्वत्किरीटज्वालाय । शशिशिखंडिने । शशिप्रभाय । शशिबिंदवे । शशिखंडमौलये । शशिखंडशिखण्डमंडनाय । शशिखंडमंडनाय । श्मशानवासिने । श्मशाननिलयाय । श्मशानाय । श्मशानरतिनित्याय नमः । ८४६०

श्मश्रुकर्षणाय नमः । शश्वद्बहिर्भूतनिरस्तपरिच्छेदकाय । शश्वत्प्रसन्नवदनाय । शशाङ्काङ्कितशेखराय । शाश्वताय । शाश्वताकाराय । शाश्वतैश्वर्यविभवसंयुताय । शाश्वतनिजाभासाय । शाश्वतैश्वर्याय । शाश्वतैश्वर्यविभवाय । शाश्वतस्थानवासिने । शाश्वतिकालयाय । शाश्वतधर्मगोप्त्रे । शाश्वतिकाकाराय । शाश्वतैश्वर्यबंधुराय । शिशिरात्मकाय । शिशिराय । शिशवे । शिशिरांशुकरोल्लासिकिरीटाय । शिशिरांशुकलाधराय नमः । ८४८०

शिशुपालविपक्षेन्द्राय नमः । शिशुत्वादिनिर्मुक्ताय । श्रीशाय । श्रीशैलपतये । श्रीशैले मल्लिकार्जुनाय । श्रीशैलवासाय । शैशिरर्तुप्रवर्तकाय । शष्प्याय । शुष्क्याय । शिष्टेष्टदाय । शिष्टाय । शिष्टाराध्याय । शिष्टाचारप्रदर्शकाय । शिष्टपोषणतत्पराय । शिष्टाभिलक्ष्याय । शिष्टाचारप्रियाय । शिष्टपूज्याय । शिष्यान्तरनिवासाय । शिष्यनामकज्ञात्रात्मने । शेषस्तुत्याय नमः । ८५००

शेषवासुकिसंसेव्याय नमः । शेषदेवादिपुरुषाय । शेष्यशेषकलाश्रयाय । शेषसंज्ञिताय । श्रेष्ठाय । शस्त्राय । शस्त्रहारिणे । शस्त्रभृतां रामाय । श्वसते । शास्त्राय । शास्त्रे । शास्त्रकराय । शास्त्रवित्तमाय । शास्त्रनेत्राय । शास्त्रसंवेद्याय । शास्त्रतत्त्वज्ञाय । श्रीसौम्यलक्षणाय । श्रीहालास्यनिवासिने । शाक्षरवामबाहवे । शिक्षितदानवाय नमः । ८५२०

शिक्षिताखिलकामादिघातकाय नमः । शिक्षितान्धकदैतेयविक्रमाय नमः । ८५२२

षकारस्य सूर्यो देवता धर्मकामार्थसिद्धौ विनियोगः ।

षट्काराय नमः । षट्कोणपीठमध्यस्थाय । षट्कृत्तिकासमाजस्थाय । षट्कोटितीर्थचर्याय । षट्चक्राय । षट्चक्रफणिभूषणाय । षट्चक्रभेदनाय । षट्छक्तिपरिवारिताय । षट्छास्त्रार्थतत्वविदे । षडध्वयागतत्पराय । षड्ऋतुकुसुमस्रग्विणे । षड्वर्गाय । षडक्षराय । षड्गुणाय । षडाधाराय । षड्विधात्मने । षडाम्नायरहस्यज्ञाय । षडंगुलमहाह्रदाय नमः । ८५४०

षडध्वध्वान्तविध्वंसिने नमः । षडात्मिकाय । षडाननपित्रे । षड्विधाकाराय । षडाधारनिवासकाय । षडाधारादिदैवताय । षडूर्मिरहिताय । षडूर्मिभयभेदकाय । षड्विकाररहिताय ।

षड्विंशकाय । षडैश्वर्यफलप्रदाय । षड्वैरिवर्गविध्वंसिने । षड्भूमये । षडध्वात्मने । षडंगांगाय । षडंगादिपदक्रमाय । षडंगात्मने । षंडाय । षडक्षरात्मने । षड्ग्रंथिभेदिने नमः । ८५६०

षोडशस्वरमातृकाय नमः । षोडशाब्दवयोयुक्तदिव्यांगाय । षोडशाधारनिलयाय । षोडशात्मस्वरूपाय । षोडशाब्द-कलावासाय । षोडशीकृतवज्रांगाय । षोडशेन्दुकलात्मकाय । षोढान्यासमयाय । षण्मुखाय । षण्मुखप्रीताय । षण्मुखजनकाय । षंवामपादनूपुराय । षष्ठाय । षष्ठीबालाय । षष्टिदाय । षष्टिभागाय । षष्ठीजपपरायणाय । षष्ठीनाथाथ । षष्ठीदोषहराय नमः । ८५७९

सकारस्य सरस्वती देवता । वाक्सिद्धौ विनियोगः ।

सकाररूपाय नमः । ८५८०

सकलाय नमः । सकलाधाराय । सकलागमपारगाय । सकलतत्वात्मकाय । सकललोकैककर्त्रे । सकललोकैकसंहर्त्रे । सकललोकैकगुरवे । सकललोकैकसाक्षिणे । सकलनिगमगुह्याय । सकलवेदान्ततारकाय । सकललोकैकशंकराय । सकलनिष्कलाय । सकलागममस्तकेषु संघोषितात्मविभवाय । सकलदुःखमूलहन्त्रे । सकलाम्नायान्तवेद्याय । सकलकल्याणदाय । सकलाघसंघ-निबर्हणाय । सकलभुवनभूतभाविताय । सकलस्थमतये । सकलमौनिज्ञेयाय नमः । ८६००

सकलजनगेयाय नमः । सकलसुरनुताय । सकललौकैक-पालनाय । सकलभुवनबंधवे । सकलाम्नायांतसंचारिणे । सकलेश्वराय । सकलेष्टदाय । सकलेप्सितदात्रे । सकृत्प्रणतसंसारमहासागरतारकाय । सकृत्प्रपन्नदौर्भाग्यच्छेद-काय । सकामारये । सक्ताय । संकल्पाय । संकर्षणाय । सकुंकुमविलेपनाय । संकेतकुलपालिने । संकीर्णमंदिरस्थाय ।

साकेतपुरवासिने। सिकत्याय। सुकराय नमः। ८६२०

सुकपोलाय नमः। सुकन्याय। सुकंधराय। सुकंठाय। सुकान्तये। सुकीर्तये। सुकेशाय। सुकुमाराय। सुकुमारमहापापहराय। सुकलितहालाहलाय। सुकविविनुताय। सुकोमलपादपद्माय। सुकृतराशये। सृकाविभ्यो। सूक्तानां पौरुषसूक्ताय। सैकताश्रयाय। सख्ये। संख्यायाः प्रभवे। संख्यासमापनाय। सांख्यप्रदाय नमः। ८६४०

सांख्याय नमः। सांख्ययोगाय। सांख्यानां पुरुषात्मने। सांख्यस्य प्रभवे। सुखकराय। सुखप्रदाय। सुखदुःख-विवर्जिताय। सुखसंस्थाय। सुखनिधये। सुखप्राप्त्येकहेतवे। सुखभावाय। सुखाधाराय। सुखासक्ताय। सुखासनाय। सुखाजाताय। सुखासनादिपंचमूर्तिप्रतिपादकोर्ध्ववदनाय। सौख्यस्य प्रभवे। सौख्यप्रदाय। सगणाय। सगरतनूजन्मसुकृतप्लाविजटाय नमः। ८६६०

सगुणनिर्गुणाय नमः। सगुणाय। संग्रहीतृभ्यो। संग्रहाय। संग्रामविधिपूजिताय। स्वंगाय। साङ्गवेदतुरंगोत्थहेषाङ्कृतात्मने। सुगुणाय। सुगुणाकराय। सुगंधिदेहाय। सुगंडमंडल-स्फुरत्प्रभाजितामृतांशवे। सुगताय। सुगंधाराय। सुगतीश्वराय। सुगंधये। सुगुणार्णवाय। सुगंडाय। सुगीतिगायते। सुग्रीवाय। सौगतानां विज्ञानाय नमः। ८६८०

सृगालरूपाय नमः। संघृणीशाय। सुघोराय। सुघोषाय। सच्चिदानंदमूर्तये। सच्चिदानंदसिंधवे। सच्चिदानंदसंपूर्णस्वरूपाय। संचितपापविनाशनलिङ्गाय। संचितपापौघतिमिरसंहरणाय। संचाराय। सुचरित्राय। सुचक्षुषे। सुचित्राय। सुचारुकेशाय। स्वच्छाय। स्वच्छंदभैरवाय। स्वच्छंदाय। स्वेच्छामंत्रस्वरूपाय। सज्जनाय। सज्जनानुरागाय नमः। ८७००

सज्यकार्मुकहस्ताय नमः । सज्जनपरिपालकाय । सज्जनाश्रयाय । सज्जनपूज्याय । सज्जनपोषणाय । स्वजनानुरागाय । स्वजनपालनाय । सुजंघाय । सुजातानंतमहिम्ने । सुज्ञेयाय । सौजन्यनिलयाय । स्फटिकधवलांगाय । स्फटिकचारुमूर्तये । स्फटिकमालालंकृतवक्षसे । स्फटिकजपमालाहस्ताय । सटापटलभूषिताय । स्थाणवे । स्थाणुरूपाय । स्त्रीणां गिरिजायै । स्त्रैणसौम्याय नमः । ८७२०

सतां गतये नमः । सत्याय । सत्यव्रताय । सततस्तुताय । सत्यज्ञानसुखाय । सत्यसंभाषाय । सत्यवते । सत्यपराक्रमाय । सत्यधर्मपराक्रमाय । सत्यधर्मपरायणाय । सत्यकीर्तये । सत्यसंकल्पाय । सत्यवेधसे । सत्यवाचे । सत्यव्रतार्थसंतुष्टाय । सत्यरूपिणे । सत्यादिगुणसंभवाय । सत्यधिये । सत्यपदाय । सत्यसंधाय नमः । ८७४०

सत्येशाय नमः । सत्यचारित्रलक्षणाय । सत्यप्रत्ययाय । सत्यज्ञानप्रबोधिने । सत्यलोकनिवासिने । सत्वादिपंचमंत्रात्मकमंत्राध्वने । सत्यकीर्तिस्तंभकृतागमाय । सत्यव्रतमहात्यागिने । सत्यसंगराय । सत्यवित्तमाय । सत्यवाक्याय । सत्यचित्स्वभावाय । सत्यज्ञानसुखात्मकाय । सत्यज्ञानानंदमयाय । सत्यधर्मिणे । सत्यप्रियाय । सत्यप्रतिज्ञाय । सत्यासत्याय । सत्यलिंगाय । सत्यवादिने नमः । ८७६०

सत्यात्मने नमः । सत्त्ववते । सत्त्वानां पतये । सत्त्वगुणोपेताय । सत्त्वविदे । सत्त्ववत्प्रियाय । सत्त्वनिष्ठाय । सत्त्वमूर्तये । सत्त्वेशाय । सत्त्वाय । सत्त्वस्थाय । सत्परायणाय । सत्कर्त्रे । सत्कथाप्रियाय । सत्कृताय । सत्कृतये । सत्कृपाकराय । सत्कीर्तये । सते । सत्स्वरूपाय नमः । ८७८०

सत्सुंदराय नमः । सतीपतये । सतुङ्गभङ्गजह्नुजासुधांशु खंड मौलये । सतां भवच्छेदभवक्लेशनिमित्तोरुभवच्छेदकृते । सतां संतापनिवारकाय । सतां पतये । सतां शत्रुघ्नाय । संतृप्ताय । सत्तामात्रव्यवस्थिताय । संतोषजनकाय । सततोषितमुनि-हृदयाय । सात्विकाय । सात्विकप्रियाय । स्वात्मसूक्ष्म-दशोज्ज्वलाय । संतोषदायकाय । संतोषितसुरव्राताय । सितद्युतये । सितभस्म मंडिताय । सितांगराग प्रतिपन्न मानसाय । सितांगाय नमः । ८८००

स्थिताय नमः । स्थित्यै । स्थितीनां प्रभवे । स्मितमाधुर्य मधुरमुख मंडल मंडिताय । सितभानु विभातनुविलसनाय । स्मित भाषिणे । स्मितवक्त्राय । स्फीताय । सृत्याय । स्तुतिप्रियाय । स्तुतिनित्याय । स्तुताय । स्तुत्याय । स्तुत्यर्थाय । स्तुतये । स्तुति हर्षिताय । स्तुतोत्तमगुणाय । स्तुतितुष्टाय । स्तुतितोषाय । सुतंतवे नमः । ८८२०

सुतपसे । सुतीर्थाय । स्मृतिमते । स्मृतिरूपाय । स्मृत्यै । स्मृतीनां प्रभवे । सूताय । सूत्राय । सूत्रकाराय । सूत्रार्थाय । सूत्रभाष्य निबंधनाय । सूत्रप्रबोधकाय । सेतवे । सेतुबंधे रामेश्वराय । सोत्कंठ नीलकंठाख्योपकंठनटते । स्तोत्र प्रियाय । स्तोत्रे । स्तोत्राय । स्तोत्रपादाय । स्तोत्ररताय नमः । ८८४०

स्तोत्रमयाय नमः । स्तोत्रसंतुष्टाय । स्रोतःस्थाय । स्वतंत्राय । स्वतंत्रशक्तिधाम्ने । स्वतंत्रगतये । स्वतंत्रशक्तिकवचाय । संततजाग्रते । संतत मंदास्मित सुंदरवदनाय । स्वतोऽनंताय । स्वतेजसाव्याप्त नभोवकाशाय । सदाशिवाय । सदाचाराय । सदात्मने । सदाशिवेश्वरेशान-विष्णुब्रह्मात्मने । सदागतये । सदाशिवलिंगाय । सदानंदाय । सदानंदभाजे । सदासुप्रकाशाय नमः । ८८६०

सदानिर्विकाराय नमः । सदाकर्त्रे । सदाशिवात्मक वदनाय । सदाशिवात्मक मूर्ध्ने । सदाशान्ताय । सदाशुद्धाय । सदा सामगानप्रियाय । सदाध्येयाय । सदाप्रियाय । सदाचरिताय । सदापुष्टाय । सदापुण्याय । सदायोगिध्येयाय । सदापुष्पप्रियाय । सदाद्वेषिणे । सदोद्गीर्णाय । सद्योजातादि पंचाग्निरूपाय । सदद्दष्टप्रदायिने । सदामर्षिणे । सदानंदनचरणाय नमः । ८८८०

सद्यायोगिने नमः । सद्वासनाशोभिताय । सदसदात्मकाय । सदयहृदयाय । सदयाय । सदयभावाय । सदसन्मयाय । सदसद्वृत्तिदायकाय । सद्सत्सर्वरत्नविदे । सदसद्वराय । सदसद्व्यक्ताय । सदसस्पतये । सदसत्सेव्याय । संदक्षिणपाद-कटीतटाय । सदस्याय । सद्योजाताय । सद्योजातात्मक पश्चिमवदनाय । सद्योजातात्मकमूलाधारकाय । सद्योगिने । सद्योजातात्मने नमः । ८९००

सद्योऽधिजाताय नमः । सद्योजातरूपाय । सद्द्रोहदक्षसवन-विघाताय । सद्योजातात्मकपादाय । सद्भूताय । सद्भिस्संपूजिताय । सद्गुणाय । सान्द्रानंदसंदोहाय । स्कंदाय । स्कंदगुरवे । सुदर्शनाय । सुदेवाय । सुदृशे । सुदीप्ताय । सुंदराय । सुंदरताण्डवाय । सुंदरभ्रुवे । सुंदरविग्रहाय । सुंदरचेष्टिताय । सुंदरसायकाय नमः । ८९२०

सुंदरनाथाय नमः । सुंदरेश्वराय । सूदराय । सूद्याय । सौदामिनीसमच्छायसुवस्त्राय । सौन्दर्यवते । सौन्दर्यसागरोद्भूत-शंखसन्निभकंधराय । सौन्दर्यवल्लिवल्लभाय । सद्धर्मिणे । साधनाय । साधवे । साध्याय । साध्यासाध्य प्रदायिने । साध्यासाध्य-समाराध्याय । साधारणाय । साधुविदे । साध्यर्षये । स्वाधिष्ठानाय । स्वधाशक्तये । संधये नमः । ८९४०

संधात्रे नमः । संध्याभ्रवर्णाय । संध्याताण्डव-संरंभाघूर्णदिविषदे । स्वधर्मभंगभीतश्रीमुक्तिदाय । स्वधर्मपरि-पोषकाय । स्वधृताय । सिद्धये । सिद्धिलेशव्ययकृतवरवेषाय । सिद्धयोगिने । सिद्धिप्रवर्तकाय । सिद्धसाधकाय । सिद्धार्थाय । सिद्धाय । सिद्धार्चितपदांबुजाय । सिद्धभूतात्मकाय । सिद्धबृन्दार-कवंदिताय । सिद्धमार्गप्रवर्तकाय । सिद्धसुरासुरसेवितलिङ्गाय । सिद्धाश्रयाय । सिद्धिनायकाय नमः । ८९६०

सिद्धिभूषणाय नमः । सिद्धसंघानुगीताय । सिद्धवंदि-स्तुताय । सिद्धगणैरीड्याय । सिद्धगंधर्वपूज्याय । सिद्धस्वरूपिणे । सिद्धिसाधकरूपाय । सिद्धसंघातगीताय । सिद्धिमतां प्रभवे । सिद्धेश्वराय । सिद्धानां कपिलाय । सिद्धान्तैर्निश्चिताय । सिद्धान्ताय । सिद्धानां पतये । सिद्धागमललाटादिकाय । सिद्धौघानन्दरूपिणे । सिद्धलक्ष्मीमनोहराय । सिद्धसाध्य-प्रपूजिताय । सिद्धसुरासुरेन्द्रनमिताय । सीधुपानोन्मद मदनमदोन्माद मत्तालिकाली तालीसंताड्यमानोद्भटमुरजर-वाडम्बरोल्लासितांगाय नमः । ८९८०

सिंधवे नमः । सिंधुराजिनचेलाय । सुधन्विने । सुधाम्ने । सुधाकराञ्चितमस्तकाय । सुधाहस्ताय । सुधिये । सुधाकरजगच्चक्षूरथांगाय । सुधामयूखरेखया विराजमान-शेखराय । सुधीराय । सुधीन्द्राय । सनकसनंदनसन्नुतांघि-विलसत्प्रसूनाय । सनकादिमुनिध्येयाय । सनकादिवशिष्ठादिमुनि-वंद्याय । सनकादिसमायुक्तदक्षिणामूर्तये । सनत्कुमाराय । सनंदनपरीवृताय । सनंदनसनातनाय । सनातनाय । स्वनाथाय नमः । ९०००

स्वनामसदृशसौन्दर्यान्विताय नमः । सन्नुतामलनाम्ने । सन्निवासाय । सन्निरूपकाय । सन्मार्गसूचकाय । स्वानंदमूलाय ।

स्वानंदामृतनिर्भराय । स्वानुभूत्येकमानाय । सन्मार्गसूचकार्थविदे । सन्मीनेक्षणाय । सन्मित्राय । संन्यासिने । संन्यासकृते । स्वानुभवाय । स्थानदाय । सानंदांकुराय । सानंदमुनिविज्ञातहराख्याभूतये। सुनयनाय। सुनासाय। सुनिश्चलाय नमः । १०२०

सुनिष्पन्नाय नमः । सुनीतये । सूनास्त्रविनाशनाय । सुनीताय। सूनृताय। सेनान्ये। सेनापतये। सेनानीनां पावकये। स्वेन तेजसा दीप्तिमते। सेनाकल्पाय। सेनाभ्यो। सेनानिभ्यो। स्तेनरक्षकाय । स्तेनानां पतये । स्फें । स्त्रैं । सप्तधाचाराय । सप्तलोकधृते। सप्तजिह्वाय। सप्तलोकाय नमः । १०४०

सप्तवाहनाय नमः। सप्तकोटि महामंत्र मंत्रिता वयवाय। सप्तकोटि महामंत्र पूजिताय। सप्तकोटि महामंत्र रूपाय। सप्तविंशतियाग कृते। सप्तकोटि महामंत्र मंत्रितावयवद्युतये। सप्तर्षीणां पतये । सप्तर्षिभ्यो । सप्तर्षिवंदिताय । सप्तर्षिगण वंदिताय। सप्तपाताल चरणाय। सप्तद्वीपोरुमंडिताय। सप्तस्वर्लोक मकुटाय। सप्तसप्तिवर प्रदाय। सप्तछंदोनिधये। सप्तहोत्रस्य। सप्तस्वराश्रयाय । सप्तमातृनिषेविताय । सप्तच्छदामोदमदाय । सप्तच्छंदोमयप्रभवे नमः । १०६०

सप्तविंशति तारेशाय नमः । सप्ताश्वाय । सप्तैधसे । सप्तांगराज्य सुखदाय । सप्ताब्धिकेलिकासाराय । सप्रेमहृदयपरिपाकाय। सप्रेमभ्रमराभिरामाय। सम्पूर्ण कामाय। सम्पत्प्रदाय । सम्प्रतर्दनाय । स्थपतये । स्वपते । स्वपदभूषीकृतसर्वमस्तकचयाय । स्वपद्भ्यो । स्वापवर्जिताय । स्वापनाय। स्वप्रकाशामनस्काख्ययोगलभ्याय। स्वप्रकाशाय। स्वप्रकाश स्वरूपाय। स्वप्रकाशात्मस्वरूपिणे नमः । १०८०

स्वप्रगाय नमः । स्वप्राय । साम्प्रदायकाय । सुप्रदीपाय । सुपसन्नाय । सुप्रकाश स्वरूपाय । सुप्रभेदागमनाभये । सुप्रभाय । सुप्रसादाय । सुप्रतीकाय । सुप्रतापनाय । सुप्रजाताय । सुपात्राय । सुपोषाय । सुपाशाय । सुपर्णाय । सुपर्णवाहनप्रियाय । सुपुष्पाय । सुप्रीतानततेजसे । सुप्रीताय नमः । ९१००

सफलोदयाय नमः । सांबाय । सुबलाय । सुबलाढ्याय । सुबुद्धये । सुबल बाणासुरवरप्रदाय । सुबीजाय । सुबंध विमोचनाय । सुबांधवाय । सुब्रह्मण्याय । सभापतये । सभानाथाय । सभावनाय । सभाभ्यो । सभापतिभ्यो । संभाव्याय । संभग्राय । संभ्रमाय । संभूतये । संभवाय नमः । ९१२०

स्वभावाय । स्वभावरुद्राय । स्वभावनिर्मलाभोगाय । स्वभक्तजन संतापपापापद्भंगतत्पराय । स्वभक्ताखिलदायकाय । स्वभावानल दीप्तये । स्वभावोदारधीराय । स्वभावसिद्धाय । स्वभावभद्राय । स्त्रभावार्धाय । स्वभावोत्कृष्टसद्भावाय । स्वभाव पूज्याय । स्वाभरणप्रियाय । सुभोगिने । सुभगाभक्तिवैराग्य-प्रसन्नाय । सुभद्रवते । सुभक्तिदाय । सुभुजाय । स्वभुजे । सुभगासंश्रितपदाय नमः । ९१४०

सुभक्ति धेनुपालकाय । सुभगाय । सुभासे । सोभ्याय । सौभाग्यरस जीवातुसारासार विवेकदृशे । सौभाग्य वर्धनाय । सौभगाय । सौभाग्यनिधये । समस्तजगदाधाराय । समस्त-सुमनःपूज्याय । समस्तजगतां नेत्रे । समस्तदेवानां वृत्तिदाय । समस्तदेवेश्वराय । समस्तसिद्धये । समस्तगीर्वाणलोकशरण्याय । समस्तलोकविग्रहाय । समस्तगुणसागराय । समस्तदुःख-विध्वंसिने । समस्तानंदकारणाय । समस्तामरलोकपूजिताय नमः । ९१६०

समस्तसुरसेविताय नमः । समस्तर्षये । समस्तैकबंधवे । समस्तजगतां नाथाय । समस्तसाक्षिणे । समस्तकल्याण-निधानाय। समष्टिविधानगरीनायकाय । समस्वरूपाय । समस्ताय । समग्राय । समयाय । समदृष्टये । समरमर्दनाय । समंजसाय । समाराय । समर्चिताय । समदशत्रुघ्नाय। समग्रतेजसे । समवर्तिने । समस्तोत्राय नमः । ९१८०

समयासमयाचाराय नमः । समासतद्धिताकाराय । समानाय । समाय । समानाधिकवर्जिताय । समानाभिगम्याय । समाधिकृते । समाम्नायाय । समायुक्ताय । सम्राडाकृतिधवल-पश्चिमवदनाय । सम्राजे । समिद्धाय । समिद्धोमप्रियाय । सम्मिताय । समित्यधिष्ठिताय । समितिंजयाय । समीराहारात्म-प्रवणजनहृत्पद्मनिलयाय । समीराहारेन्द्रांगदाय । समीहनाय । समुद्राय नमः । ९२००

समुद्रोद्भूतगरलकंधराय नमः । समुद्रवनसाराय । समुद्रव्योममध्यस्थाय । समुद्रतनयाराध्याय । स्वमूर्तिकेलि-संप्रीताय । समृद्धिमते । समृद्धिश्रियै । समृत्युकप्रपंचौघ-महाग्रासाय । सामगाय । सामवेदाय । सामगायकाय । सामसुज्येष्ठसाम्ने । सामवेदप्रियाय । सामप्रियाय । सामगेयाय । सामगप्रियाय । सामवेत्रे । सामलिंगाय । सामेक्षणाय । सामर्थ्याय नमः । ९२२०

साममयाय नमः । सामगानविनोदनाय । सामगानप्रियाय । सामगानरताय । सामपंचदशाय । साम्नां धाम्ने । सामगानसमाराध्याय । सामवेद्याय । सामान्याय । सामास्याय । सामान्यदेवाय । सामाग्र्याय । स्वामिध्येयाय । स्वामिचित्तानुवर्तिने । स्वामिने । सुमंगलसुमंगलाय । सुमंदाय । सुमेखलाय । सुमंगलाय । सुमहास्वनाय नमः । ९२४०

सुमध्यमाय नमः । सुमनसे । सुमनोऽलंकृतशिरसे । सुमनःसेव्याय । सुमनःशेखराय । सुमीनाक्षीवक्त्रांबुजतरुण-सूर्याय । सुमुखरागाय । सुमुखाय । सुमृडीकाय । सुमूर्तये । सोमार्धधारिणे । सोमधराय । सोमाधाराय । सोमपादाय । सोमकलाधरमौलये । सोमसन्दराय । सोमनाथाय । सोमविभूषणाय । सोममयाय । सोमसूर्याग्निलोचनाय नमः । ९२६०

सोमसोमरताय नमः । सोमसोमप्रियाय । सोमपाय । सोमभूषणाय । सोमपावकमार्तांडलोचनाय । सोमास्कंदाय । सोमवह्निचक्षुषे । सोमकलाधराय । सोमवारिनभोहुताशन-सोमपानिलखाकृतये । सोममंडलगाय । सोमाय । सोमेशाय । सौम्यवक्त्राय । सौम्यदंष्ट्राविभूषिणे । सौम्यवक्त्राधराय । सौम्यरूपाय । सयज्ञारये । संयोगाय । संयुगापीडवाहनाय । संयुताय नमः । ९२८०

संयोगिने नमः । संयमिने । संयमिध्येयाय । स्वयंभूताय । स्वयमादिविवर्जिताय । स्वयमप्रणतात्मने । स्वयंप्रभावाय । स्वयंभुवे । स्वयंज्योतिषे । स्वयंप्रभवे । स्वयंभ्वागममस्तकाय । स्वयंभुवेद्याय । स्वयंपंचब्रह्मादिमूर्तये । स्वयंसर्वाधाराय । स्वयंविश्वभासकाय । स्वयंप्रकाशाय । स्वयंज्योतिःस्वरूपिणे । स्वयंभूपूजिताय । स्वयंजाताय । स्वयंसिद्धाय नमः । ९३००

स्वयंप्रकाशचिरन्तनाय नमः । स्वयंव्यक्ताय । स्वयंभुवे । सार्धं ताण्डवसंभ्रमाय । सायकचक्रधारिणे । स्तायुरक्षकाय । स्तायूनां पतये । स्वायुधाय । सुयुक्ताय । सुयज्ञाय । सुयामुनाय । सुयशःश्रीमुखवधूसंगीतास्वादिने । स्तूयमानाय । सरसाय । सरसांबुनिधये । सरससुभाषणाय । सरस्वत्याश्रयाय ।

सरसचित्रगतये । सरसगुणयुताय । सरसमृदुभाषाय नमः । ९३२०

सरससुफलदाय नमः । सरसगुणगणाय । सरसवदनाय । सरस्वत्यम्बुसेविताय । सरसिजविपक्षचूडाय । सरसिज-कुवलयजागरसंवेशन जागरूकलोचनाय । सरसीरुहसंजात-प्राप्तसारथये । सरसीरुहपत्रायतदृशे । सरस्याय । सरिज्जटालाय । सर्गस्थितिविनाशानां कर्तृप्रेरकाय । सर्गाणां पतये । सर्वसाक्षिणे । सर्वप्रदाय । सर्वतःकृतासनाय । सर्वत्रपाणिपादाय । सर्वतोमुखाय । सर्वस्य जगतः पात्रे । सर्वलोकानां नेत्रे नमः । ९३४०

सर्ववेदान्तपारगाय नमः । सर्वशास्त्रार्थसंपन्नाय । सर्वसौभाग्यनिलयाय । सर्वकारणाय । सर्वहृते । सर्वकृते । सर्वलोकेशाय । सर्वसृष्ट्यर्थाय । सर्वाभीष्टफलप्रदाय । सर्वलोकैकजीवातवे । सर्वज्ञाय । सर्वभावकराय । सर्वशुभंकराय । सर्वशस्त्रभृतां वराय । सर्वप्रपंचसृष्ट्यादिपंचकृत्यकर्त्रे । सर्वदिव्यैरलंकृताय । सर्वलोकविभूषणाय । सर्वधर्मज्ञाय । सर्वभूतप्रियाय । सर्वभूतपतये नमः । ९३६०

सर्वसुरश्रेष्ठाय नमः । सर्वसुराधिपाय । सर्वपापक्षयाय । सर्ववेदमंत्रजनकपंचवदनाय । सर्वज्ञशक्तिहृदयाय । सर्वतः पाणिपादाय । सर्वरोगविनाशनाय । सर्वकल्मषनाशिने । सर्वसंपदां दात्रे । सर्वसंपदां प्रभवे । सर्वदेवस्तुताय । सर्वभूतात्मभूताय । सर्वसंहरणाय । सर्ववेदार्थविदुषां स्वायंभुवाय । सर्वरक्षसां निरृकृतये । सर्वलोकैकसंहर्त्रे । सर्वलोकैकनिर्मात्रे । सर्वजनसद्गुरवे । सर्वगाय । सर्वगुणाकराय नमः । ९३८०

सर्वशास्त्रे नमः । सर्वदेवानां पालकाय । सर्वमूर्तानामादिकर्त्रे। सर्वशक्तिधराय । सर्वहृत्सन्निविष्टाय । सर्वपापहराय । सर्वभोगसमृद्धाय । सर्वज्ञमूर्तये । सर्वशाखाधिपतये। सर्वसहाचक्रस्यंदनाय । सर्वनिहंत्रे । सर्वगुह्यपिशाचानां पतये । सर्वगुणोपपन्नाय । सर्वस्वरूपिणे । सर्वलोकानां प्रभवे । सर्वसच्चित्सुखात्मकाय । सर्वकल्याण-कारणाय । सर्वजगतां कारणाय । सर्वसौभाग्यसिद्धिदाय । सर्वमंगलहेतवे नमः । ९४००

सर्वभूतानामाधाराय नमः । सर्वभूतानामनुग्रहपरायणाय । सर्वजगतामधिपाय । सर्वहृदयैकनिवासाय । सर्वदेवादिदेवाय । सर्वमंत्राधिष्ठिताय । सर्वमंत्रस्वरूपाय । सर्वशक्तिधाम्ने । सर्वस्मै । सर्वसत्वावलंबनाय । सर्वधर्मफलप्रदाय । सर्वविदे । सर्वरोगघ्नाय । सर्वगोप्त्रे । सर्वशास्त्ररहस्यविदे । सर्वशक्तिप्रपूजिताय । सर्वजिते । सर्वधर्मसमन्विताय । सर्वज्ञाननिधये । सर्वलोकैकभूषणाय नमः । ९४२०

सर्वसुगंधिसुलेपितलिंगाय नमः । सर्वसमुद्भवकारण-लिंगाय। सर्वशंभवे । सर्वदेवतपोमयाय । सर्वसाधनाय । सर्वलोकप्रजापतये । सर्वपापहराय । सर्वबंधविमोचनाय । सर्वशासनाय । सर्वास्त्रप्रभंजनाय । सर्वदेवोत्तमोत्तमाय । सर्वभूतमहेश्वराय । सर्वसहाय । सर्ववाहनाय । सर्ववेदात्मने । सर्वसर्वंसहोच्छ्रायस्यंदनश्रीमते । सर्वशास्त्रस्वरूपिणे । सर्वसंगविवर्जिताय । सर्वभूतहृदिस्थाय । सर्वतीर्थमयाय नमः । ९४४०

सर्वलक्षणसंपन्नाय नमः । सर्वशक्तिसमायुक्ताय । सर्वकारणाय । सर्वदेवसमाराध्याय । सर्वभयघ्नाय ।

सर्वमंगलदायकाय। सर्वभक्षकाय। सर्वलोकेशाय। सर्वजीवदया-पराय। सर्वदेवनमस्कृताय। सर्ववागीश्वरेश्वराय। सर्वपूरकाय। सर्वरोगप्रशमनाय। सर्वरोगविवर्जिताय। सर्वप्रकृष्टाय। सर्वज्वरभयापनयनाय। सर्वदर्शनाय। सर्वतश्चराय। सर्व-प्रवर्तनाय। सर्वतश्चक्षुषे नमः। ९४६०

सर्वव्यापिने नमः। सर्वभूतदमनाय। सर्वविद्याधिदैवताय। सर्वविद्याविशारदाय। सर्वविद्याप्रदायिने। सर्वजयिने। सर्वरूपधृते। सर्वलक्षणलक्षण्याय। सर्वशक्तये। सर्वसंश्लिष्टाय। सर्वतःसमाय। सर्वगोचराय। सर्वसूत्रदृशे। सर्वधाम्ने। सर्वनियोजकाय। सर्वमोहनाय। सर्वदेवप्रियाय। सर्वदेवमयाय। सर्वश्रेयसे। सर्वहिताय नमः। ९४८०

सर्वकर्मफलप्रदाय नमः। सर्वकर्मविवर्जिताय। सर्वविघ्नांतकाय। सर्वगर्वजिते। सर्वमंत्रफलप्रदाय। सर्वदुःखघ्ने। सर्वदुःखविमोचनाय। सर्वदुःखातिगाय। सर्वज्ञशक्तये। सर्वज्ञानप्रबोधिने। सर्वतीर्थस्थिताय। सर्वपर्वतवासिने। सर्वशास्त्रस्वरूपिणे। सर्वभूतप्रभंजनाय। सर्ववर्णाय। सर्वमायाप्रभंजनाय। सर्वसंपत्तिजनकाय। सर्वभर्त्रे। सर्वतंत्रप्रसूतये। सर्वव्याधिचिकित्सकाय नमः। ९५००

सर्वज्ञानसंपन्नाय नमः। सर्वपापप्रभंजकाय। सर्वपावनाय। सर्वदारिद्र्यशमनाय। सर्वतोभद्रवासिने। सर्वशास्त्रार्थवादिने। सर्वशास्त्रार्थप्रदर्शकाय। सर्वसत्यदर्शिने। सर्वदर्शिने। सर्वप्रत्ययसाधकाय। सर्वप्रमाणसंपत्तये। सर्वमंगलाय। सर्वमंगलमांगल्याय। सर्वमंगलसंपन्नाय। सर्वमांगल्यदायिने। सर्वसांकर्यदोषघ्ने। सर्वयोगप्रदायिने। सर्वचैतन्यरूपिणे। सर्वहृत्सन्निविष्टाय। सर्वसिद्धिप्रदाय नमः। ९५२०

सर्वयज्ञफलप्रदाय नमः । सर्वभक्तसमुत्सुकाय । सर्वकामप्रपूरकाय । सर्वभूताशयस्थिताय । सर्वभूतदमनाय । सर्वभूतनिवासाय । सर्वलोकानामंतकाय । सर्वलोकमहेश्वराय । सर्वलोकसुखावहाय । सर्वलोकशुभंकराय । सर्वलोकेश्वराय । सर्वाशापरिपूरकाय । सर्वदिग्वाससे । सर्वशक्तिमते । सर्वदेहिनां शरण्याय । सर्वदेवात्मकाय । सर्ववश्यकराय । सर्ववेदमूर्तये । सर्ववेदार्थसंपत्तये । सर्ववेदान्तनिलयाय नमः । ९५४०

सर्वग्रहरूपिणे नमः । सर्वकारणकारणाय । सर्वभेषजभेषजाय । सर्वयोगविनिःसृताय । सर्वसम्मताय । सर्वपोषकाय । सर्वविभवशालिने । सर्वात्मकाय । सर्वाभरणसंयुक्ताय । सर्वाधाराय । सर्वादये । सर्वालंकार-संयुक्ताय । सर्वात्मलिङ्गाय । सर्वात्मभुवे । सर्वातिशयाय । सर्वार्तिहराय । सर्वान्तर्यामिणे । सर्वात्मज्योतिषे । सर्वापन्मोचकत्वेष्ट सर्वोपास्याय । सर्वात्मान्तरवर्तिने नमः । ९५६०

सर्वाभीष्टफलप्रदाय नमः । सर्वान्ताय । सर्वातिशयाय । सर्वाचाराय । सर्वायुधधराय । सर्वाध्यक्षाय । सर्वाश्रयाय । सर्वांगाय । सर्वायुधविशारदाय । सर्वावासाय । सर्वाशयाय । सर्वांगरूपाय । सर्वांगसुंदराय । सर्वावयवसंदीप्ताय । सर्वाभरणभूषिताय । सर्वार्थसाधनोपायाय । सर्वाघनाशनाय । सर्वाक्षोभ्याय । सर्वात्मगोचराय । सर्वामरमुनीश्वराय नमः । ९५८०

सर्वानवद्याय नमः । सर्वासुनिलयाय । सर्वालंकार-संशोभिताय । सर्वावयवसंपूर्णाय । सर्वार्थसाधकाय । सर्वेश्वरेश्वराय । सर्वेन्द्रियगोचराय । सर्वेप्सितप्रदाय । सर्वेषां

सर्वदाय । सर्वेश्वराय । सर्वोपरिचराय । सर्वोत्तमाय । सर्वेश्वर्यसमन्विताय । सर्वेष्टाय । सर्वेषां प्राणिनां पतये । सर्वैश्वर्यसंपन्नाय । सर्वेङ्गितज्ञाय । सर्वोरगेश्वराय । सर्वोपाधिविनिर्मुक्ताय। सर्वोपास्याय नमः। ९६००

सर्वोपद्रवनाशनाय नमः । सर्वोपनिषदास्थिताय । सर्वोत्तुंगाय । स्वर्णरत्नांगदलसत्पञ्चद्वयभुजान्विताय । स्वर्णवर्णशेषपाशशोभिताङ्गमण्डलाय। स्वर्णकेशाय। सर्पभूषाय। सर्पहाराय । सर्पयज्ञोपवीतिने । सर्पग्रैवेयकाङ्गदाय । सर्पराजोत्तरीयाय । सर्पप्रोतकपालशुक्तिशकलव्याकीर्ण-पञ्चोरगाय । सर्पाधिराजौषधिनाथयुद्धक्षुभ्यज्जटामंडलगह्वराय । स्वर्गमार्गनिरर्गलाय। स्वर्गापवर्गदात्रे। स्वर्धुन्यूर्ध्वजलक्लिन्नजटा-मण्डलमण्डिताय । स्वर्धुनीचन्द्रशकलविराजितकिरीटकाय । सरोजकिंजल्कसमानवर्णाय । स्मरारातये । स्मरप्राणदीपकाय नमः। ९६२०

स्मरांतकाय नमः । स्मरहराय । स्मरशासनाय । स्मरमदविनाशनाय । सारससंभवसन्नुताय । सारंगद्विजसंता-पशमनाय । सारग्रीवाय । सारविशारदाय । सारसाक्षसमुज्जृंभ-सायकाय । सारभूताय । सारग्राहिणे । सार्वकालिकसंसिद्धये । स्थिराय । स्थिरधन्विने । स्थिरभक्तियोगसुलभाय । स्थिरविज्ञानाय । स्थिरप्रज्ञाय । स्थिरयोगाय । स्थिरमार्गाय । स्थिरासनाय नमः। ९६४०

स्थिरागमाय नमः । सुरविद्विषां प्रह्लादाय । सुरगुरुसुरवरपूजितलिङ्गाय । सुरवनपुष्पसदार्चितलिङ्गाय । सुरवंद्यपादाय। सुरसिद्धनिवासाय। सुरगुरुप्रियाय। सुरदेवाय। सुरभ्युत्तरणाय । सुरशत्रुघ्ने । सुरभये । सुरकार्यहिताय ।

सुरवल्लभाय। सुरनिम्नगाधराय । सुरवरमुनिसेविताय । सुरम्यरूपाय। सुरमुनिसन्नुताय। सुरगणैर्गेयाय। सुरगणार्चित-पादाय। सुरपतिस्तुताय नमः। ९६६०

सुरमुनिगणसुप्रसादकाय नमः। सुरमुनिस्वान्ताम्बुजाता-श्रयाय। सुरारिघ्ने। सुराग्रगण्यदेवाय। सुरासुराराधितपादपद्माय। सुरासुरनमस्कृताय । सुराधिपाय । सुरारिसंहर्त्रे । सुराङ्गनानृत्यपाराय । सुरुचिररुचिजालाय । सुरेशोरुकिरीट-नामरत्नावृताष्टापदविष्टराय। सुरेशाद्यभिवन्दिताय। सुरेशानाय। सुरोत्तमाय । सुरोत्तमोत्तमाय । सूर्यकोटिविभासुराय । सूर्यमण्डलमध्यगाय । सूर्याणां पतये । सूर्यचन्द्राग्निग्रह-नक्षत्ररूपिणे। सूरिजनगेयाय नमः। ९६८०

सूरिपोषकाय नमः । सूरिगानप्रियाय । सूर्यकोटिसभ-प्रभाय। सूर्याग्निनयनाय । सूर्यचन्द्राग्निपीठस्थाय । सूर्याग्निसोमवर्णाय। सूर्याय। सूर्यतापनाय। स्फुरन्मकरकुण्डलाय। स्मेराननाय। स्मेरांचिताननाम्भोज करुणापूरितेक्षणाय। सौराष्ट्रे सोमनाथाय। सौराणां भास्कराकाराय। सौराष्ट्रे ज्योतिर्मयाय। संसारसारथये। संसाराम्नाय। संसारसमुद्रसेतवे। संसारार्णव-मग्नानां समुद्धरणहेतवे। संसारमोचकाय। सस्मितमुखाय नमः। ९७००

स्वस्तिदाय नमः । स्वस्तिभुजे । स्वस्थाय । स्वसेवासमायातदेवासुरेन्द्रानमन्मौलिमन्दारमालाभिषिक्ताय । सस्पिञ्जराय । सुसंकल्पाय । स्वस्वरूपाय । स्वसंवेद्याय । संसारतारकाय । संसारभयनाशनाय । संसारवैद्याय । संसेवितभृगुतुंगाय । सुसहाय । सुसस्याय । सुस्थिराय । सुस्वप्नाय। सुस्वप्नफलदायकाय । सुसंक्षेपाय । सुस्नाताघविपाटकाय। सुस्मिताननाय नमः। ९७२०

सहस्राक्षाय नमः । सहस्रपत्रनिलयाय । सहस्रपदे । सहस्रफणिभूषणाय । सहस्रनामसंस्तुत्याय । सहस्रबाहवे । सहस्रयुगधारिणे । सहस्रपादचाराय । सहस्रमूर्ध्ने । सहस्रमूर्तये । सहस्राक्षबलावहाय । सहस्रलोचनप्रभृत्यशेषलेखशेखर प्रसून-धूलिधोरणी विधूसरांघ्रिपीठभुवे । सहस्रागमकटीतटाय । सहस्रभानुसंकाशचक्रदाय । सहस्रकोटितपनसंकाशाय । सहस्रारमहामंदिराय । सहस्रलिंगाय । सहस्रदलमध्यस्थाय । सहस्रप्रणवाय । सहस्रनयनादिवन्दिताय नमः । १७५०

सहस्रार्कच्छटाभास्वद्विमानांतस्थिताय नमः । सहमानाय । सहजानंदाय । सहजानंदसंदोहसंयुक्ताय । सहिष्णवे । संहर्त्रे । संहारकर्त्रे । संहारमूर्तये । सह्यगोदावरीतीरवासाय । स्वाहाकाराय । स्वाहाशक्तये । सिंहस्कंधाय । सिंहशार्दूलरूपाय । सिंहदंष्ट्राय । सिंहवाहनाय । सिंहसंहननाय । सुहृदे । सुहोत्राय । सुहृत्प्रियाय । साक्षिणे नमः । १७६०

साक्षात्कैवल्यरूपिणे नमः । संक्षेप्त्रे । साक्षान्मंगल-दैवताय । साक्षात्कैवल्यदायकाय । सूक्ष्मतनवे । सूक्ष्मात्सूक्ष्म-परागतये । सूक्ष्मात्मने । सूक्ष्मगोचराय । सूक्ष्मप्रमाणभूताय । सूक्ष्मार्थविदे । सूक्ष्मकार्यार्थदर्शिने । सूक्ष्मागमगुह्यकाय नमः । १७७२

हकारस्य हंसो देवता । आयुरारोग्यसिद्ध्यर्थे विनियोगः ।

ह्रींकृताय नमः । ह्रींकारारामशारिकाय । ह्रींकारसौध-राजाय । ह्रींकारधुनीहंसाय । हुंकारजपसंतुष्टाय । हंत्रे । हृतपापवृंदाय । हृत्पुंडरीकशयनाय नमः । १७८०

हृत्पुंडरीकसंस्थाय नमः । हृत्पुंडरीकान्तरसन्निविष्टाय । हृतरागाय । हृत्पंकजसमासीनाय । हृत्पद्ममध्यनिलयाय ।

हृत्पद्मकर्णिकाशायिने। हृत्कमलस्थाय। ह्रितमतये। हितकारिणे। हिताहितसमाय। हितैषिणे। हितकृत्सौम्याय। हुतप्रियाय। हुताशनाय। हुताशनसहायाय। हुतभुग्ज्वालाकोटिभानुसमप्रभाय। हेतिभिः समलंकृताय। हेतुभूताय। हेतिधृते। हृद्याय नमः। १८००

हृदि सन्निविष्टाय नमः। ह्लादनाय। ह्रीनाय। ह्रींबीजजपचिह्निताय। हिमवद्गिरिसंश्रयाय। हिमघ्ने। हिमनायकाय। हिमांगाय। हिमालये केदाराय। हिमाचलेन्द्रतनयावल्लभाय। हिमचन्दनकुन्देन्दुकुमुदाम्भोजसन्निभाय। हिमाद्रिजाताकुच-कुंकुमांकवक्षःस्थलालोलशिवाक्षमालाय। हिमाचलकृताश्रयाय। ह्रीमते। हेमांगाय। हेमरूपाय। हेमांशुकाय। हेमगर्भाय। हेमलिङ्गाय। हेमरेतसे नमः। १८२०

हेमाद्रिचापाय नमः। हैमवतीपतये। हैमचीरांबराय। हयशीर्षाय। हरये। हराय। हर्यक्षाय। हर्यश्वाय। हरीश्वराय। हर्त्रे। हरिकेशाय। हरिहराय। हर्षप्रदाय। हरयोगिने। हरिवाहाय। हरिध्वजाय। हरिमार्गरताय। हरिद्वर्णाय। हरात्मकाय। हरिमानसतोषणाय नमः। १८४०

हरिताय नमः। हरिनायकाय। हरिविरिञ्चिसुराधिपपूजिताय। हरिकराघातप्रभूतानकध्वानसंतुष्टाय। हरिकेशिने। हरिनेत्राय। हरिनयनपद्मार्चितपदाय। हरिकेशेभ्यो। हरिनंदीशहस्ताब्जालंबनाय। हरिसुलोचनाय। हरेः कायापहारिणे। हर्यक्षवाहनाय। हरिदंबराय। हरिश्चन्द्राय। हरिप्रियाय। हरिणाक्षाय। हरित्क्षौमाय। हर्यग्रींद्रात्मने। हारिणे। हारायितफणिराजफणामणि विराजिताय नमः। १८६०

हारीतवरदाय नमः । हारकर्पूरगौरशरीराय । हारकुंडलकेयूरादिभूषिताय। हारीकृतभुजगराजाय। हिरण्यरेतसे। हिरण्यकवचोद्भवाय । हिरण्यबाहवे । हिरण्याय । हिरण्योद्भवकारणाय । हिरण्यकवचाय । हिरण्यदाय । हिरण्यश्मश्रवे । हिरण्यगर्भपुत्राणां प्राणसंरक्षणाय । हिरण्यकिंकीणीयुक्तकंकणाय । हिरण्यगर्भोत्तमांगच्छेदकाय । हिरण्यज्योतिर्विभ्रांतिसुप्रभाय । हिरण्यपतये । हिरण्यवाससे । हिरण्यरूपाय। हिरण्यनाभाय नमः। ९८८०

हिरण्यवर्णाय नमः । हिरण्यवीराय । हिरण्यदायिने । हिरण्यमालिने। हिरण्यवसुरेतसे। हिरण्यकुंडलाय। हिरण्मयाय। हिरण्मयपुरान्तस्थाय । हिरण्यदन्ताय । हिरण्यसंदृशे । हिरण्यसदृशप्रभाय । हेरम्बताताय । हल्लकांचत्किरीटाय । हलायुधाय । हालास्यमध्यनिलयाय । हालास्यनायकाय । हालास्यनाथाय । हालाहलालंकृतकंधराय । हालास्येशाय । हालास्यागतदेवदैत्यसंगतापदानाय नमः। ९९००

हालास्यप्रियाय नमः । हालाहलविषापहाय । हालाहलग्रासकरालकंठाय । हल्लेखामंत्रमध्यगाय । हविषे । हव्यवाहाय। हव्यवाहनाय। हविष्यभुजे। हवनाय। हविष्याशिने। हविर्हरये। हविष्मते। हव्यकव्याय। हव्यकव्यभुजे। हविर्धनाय। हविःप्रियाय । हंवामपादकटीतटाय । हंसाय । हंसवाहनाय हंसवाहनसंस्तुताय नमः। ९९२०

हंसगतये नमः । हंसाराध्याय । हंसाब्जसंभव-सुदूर सुमस्तकाय । हंसनाथाय । हंसमंडलमध्यस्थाय। हंसमंडलवासाय । हंसनेत्राय । हंसचक्ररथस्थाय । हंसचक्रनिवासाय । हस्ते वह्निधराय । हस्ताय ।

हस्तराजत्पुंडरीकाय। ह्रस्वाय। हासमुखाब्जाय। हिंस्रश्मशानिकोन्मोहनर्तनाय। हैहयेशाय। हाहाशब्दपरायणाय नमः। ९९३७

क्षकारस्य नृसिंहो देवता शत्रुजयार्थे विनियोगः

क्षांकारबीजनिलयाय नमः। क्षैंकारबीजनिलयाय। क्षणिकानां क्षणाकाराय नमः। ९९४०

क्षणाय नमः। क्षणानां पतये। क्षोणीपतिप्रीतिकराय। क्षत्तृभ्यो नमः। क्षतिक्षमाय। क्षान्ताय। क्षान्तिकराय। क्षान्तिनिलयाय। क्षान्त्यास्पदाय। क्षितौ पञ्चगुणप्रदाय। क्षितिपतिपतये। क्षितीशाय। क्षितिरूपाय। क्षेत्राय। क्षेत्रपतये। क्षेमकृते। क्षेत्रेशाय। क्षेत्रज्ञाय। क्षेत्रक्षेत्रज्ञाय। क्षेत्रपालकाय नमः। ९९६०

क्षेत्राणां पतये नमः। क्षेत्राधिपतये। क्षेत्राणामविमुक्तकाय। क्षुद्रघ्ने। क्षुधामराय। क्षुन्निवारकाय। क्षपणाय। क्षपणदक्षाय। क्षपापालाय। क्षपितपूर्वदैत्याय। क्षिप्रेषवे। क्षिप्रदग्धपुरत्रयाय। क्षिप्रक्षेमंकराय। क्षिप्रप्रसन्नाय। क्षिप्रप्रसादनाय। क्षुंबीजाय। क्ष्माभृते। क्षोभ्याय। क्षोभरहिताय। क्षोभनाशकाय नमः। ९९८०

क्षोभवर्जिताय नमः। क्षोभहारिणे। क्षमाय। क्षमापरपरायणाय। क्षमिणां वराय। क्षमाधनाय। क्षमाधाराय। क्षमालवे। क्षमापतये। क्षमाभर्त्रे। क्षमावते। क्षमाप्रियाय। क्षेमेश्वराय। क्षामाय। क्षामहराय। क्षामवते। क्षामोदराय। क्षामगात्राय। क्षमाकराय। क्षेमंकराय नमः। १००००

—*—*—

श्रीशिवाय नमः

# ॥ वेदसारशिवसहस्रनामस्तोत्रम् ॥

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम्।
प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशान्तये ॥ १ ॥

ऐश्वरं परमं तत्त्वमादिमध्यान्तवर्जितम्।
आधारं सर्वभूतानामनाधारमविक्रियम् ॥ २ ॥

अनन्तानन्दबोधाम्बुनिधिमद्भुतविक्रियम्।
अम्बिकापतिमीशानमनीशं प्रणमाम्यहम् ॥ ३ ॥

ईशमाद्यन्तनिर्मुक्तमतिशोभनमादरात्।
नमामि विग्रहं साम्बं संसारामयभेषजम् ॥ ४ ॥

व्यास उवाच—

एकदा मुनयः सर्वे द्वारकां द्रष्टुमागताः।
वासुदेवं च सोत्कण्ठाः कृष्णदर्शनलालसाः ॥ ५ ॥

ततः स भगवान्प्रीतः पूजां चक्रे यथाविधि।
तेषामाशीस्ततो गृह्य बहुमानपुरःसरम् ॥ ६ ॥

तैः पृष्टः कथयामास कुमारप्रभवं च यत्।
चरितं भूमिभारघ्नं लोकानन्दकरं परम् ॥ ७ ॥

मार्कण्डेयमुखाः सर्वे माध्याह्निकक्रियोत्थिताः।
कृष्णः स्नानमथो चक्रे मृदक्षतकुशादिभिः ॥ ८ ॥

पीताम्बरं त्रिपुण्ड्रं च धृत्वा रुद्राक्षमालिकाः।
सूर्योपस्थानं सन्ध्यां च स्मृतिधर्ममनुस्मरन् ॥ ९ ॥

शिवपूजां ततः कृष्णो गन्धपुष्पाक्षतादिभिः ।
चकार विधिवद्भक्त्या नमस्कारयुतां शुभाम् ॥ १० ॥

जय शङ्कर सोमेश रक्ष रक्षेति चाब्रवीत् ।
जजाप शिवसाहस्रं भुक्तिमुक्तिप्रदं विभोः ।
अनन्यमनसा शान्तः पद्मासनगतः शुचिः ॥ ११ ॥

ततस्ते विस्मयापन्ना दृष्ट्वा कृष्णविचेष्टितम् ।
मार्कण्डेयोऽवदत्कृष्णं बहुशो मुनिसंमतम् ॥ १२ ॥

मार्कण्डेय उवाच—

त्वं विष्णुः कमलाकान्तः परमात्मा जगद्गुरुः ।
भवत्पूज्यः कथं शंभुरेतत्सर्वं वदस्व मे ॥ १३ ॥

व्यास उवाच—

अथ ते मुनयः सर्वे मार्कण्डेयं समार्चयन् ॥ १४ ॥

वचोभिर्वासुदेवश्च पृष्टः साधु त्वयेति च ।

श्रीकृष्ण उवाच—

साधु साधु मुने पृष्टं हिताय सकलस्य च ॥ १५ ॥

अज्ञातं तव नास्त्येव तथापि च वदाम्यहम् ।
दैवतं सर्वलोकानां सर्वकारणकारणम् ॥ १६ ॥

ज्योतिर्यत्परमानन्दं सावधानमतिः शृणु ।
विश्वपावनमीशानं गुणातीतमजं परम् ॥ १७ ॥

जगतस्तस्थुषो ह्यात्मा मम मूलं महामुने ।
यो देवः सर्वदेवानां ध्येयः पूज्यः सदाशिवः ॥ १८ ॥

स शिवः स महादेवः शङ्करश्च निरञ्जनः ।
तस्मान्नान्यः परो देवस्त्रिषु लोकेषु विद्यते ।। १९ ।।

सर्वज्ञः सर्वगः शक्तः सर्वात्मा सर्वतोमुखः ।
पठ्यते सर्वसिद्धान्तैर्वेदान्तैर्यो मुनीश्वराः ।। २० ।।

तस्मिन्भक्तिर्महादेवे मम धातुश्च निर्मला ।
महेशः परमं ब्रह्म शान्तः सूक्ष्मः परात्परः ।। २१ ।।

सर्वान्तरः सर्वसाक्षी चिन्मयस्तमसः परः ।
निर्विकल्पो निराभासो निःसङ्गो निरुपद्रवः ।। २२ ।।

निर्लेपः सकलाध्यक्षो महापुरुष ईश्वरः ।
तस्य चेच्छाऽभवत्पूर्वं जगत्स्थित्यन्तकारिणी ।। २३ ।।

वामाङ्गादभवं तस्य सोऽहं विष्णुरिति स्मृतः ।
जनयामास धातारं दक्षिणाङ्गात्सदाशिवः ।। २४ ।।

मध्यतो रुद्रमीशानं कालात्मा परमेश्वरः ।
तपः कुर्वन्तु भो वत्सा अब्रवीदिति तान्शिवः ।। २५ ।।

ततस्ते शिवमात्मानं प्रोचुः संयतमानसाः ।
स्तुत्वा तु विविधैः स्तोत्रैः प्रणम्य च पुनः पुनः ।। २६ ।।

ब्रह्मविष्णुमहेश्वरा ऊचुः—

तपः केन प्रकारेण कर्तव्यं परमेश्वर ।
ब्रूहि सर्वमशेषेण स्वात्मानं वेत्सि नापरः ।। २७ ।।

श्रीमहादेव उवाच—

कायेन मनसा वाचा ध्यानपूजाजपादिभिः ।
कामक्रोधादिरहितं तपः कुर्वन्तु भो सुराः ।। २८ ।।

देवा ऊचुः—

त्वया यत्कथितं शम्भो दुर्ज्ञेयमजितात्मभिः ।
सौम्योपायमतो ब्रह्मन्वद कारुण्यवारिधे ॥ २९ ॥

श्रीशङ्कर उवाच—

शृणुध्वं सर्वपापघ्नं भुक्तिमुक्तिप्रदं नृणाम् ।
सहस्रनामसद्विद्यां जपन्तु मम सुव्रताः ॥ ३० ॥

यया संसारमग्नानां मुक्तिर्भवति शाश्वती ।
शृण्वन्तु तद्विधानं हि महापातकनाशनम् ॥ ३१ ॥

पठतां शृण्वतां सद्यो मुक्तिः स्यादनपायिनी ।
ब्रह्मचारी कृतस्नानः शुक्लवासा जितेन्द्रियः ॥ ३२ ॥

भस्मधारी मुनिर्मौनी पद्मासनसमन्वितः ।
ध्यात्वा मां सकलाधीशं निराकारं निरीश्वरम् ॥ ३३ ॥

पार्वतीसहितं शम्भुं जटामुकुटमण्डितम् ।
दधानं चर्म वैयाघ्रं चन्द्रार्धकृतशेखरम् ॥ ३४ ॥

त्र्यम्बकं वृषभारूढं कृत्तिवाससमुज्ज्वलम् ।
सुरार्चितपदद्वन्द्वं दिव्यभोगं सुसुन्दरम् ॥ ३५ ॥

बिभ्राणं सुप्रसन्नं च कुठारवरदाभयम् ।
दुर्दर्शं कमलासीनं नागयज्ञोपवीतिनम् ॥ ३६ ॥

विश्वकायं चिदानन्दं शुद्धमक्षरमव्ययम् ।
सहस्रशिरसं शर्वमनन्तकरसंयुतम् ॥ ३७ ॥

सहस्रचरणं दिव्यं सोमसूर्याग्निलोचनम् ।
जगद्योनिमजं ब्रह्म शिवमाद्यं सनातनम् ॥ ३८ ॥

दंष्ट्राकरालं दुष्प्रेक्ष्यं सूर्यकोटिसमप्रभम्।
निशाकरकराकारं भेषजं भवरोगिणाम्॥ ३९ ॥

पिनाकिनं विशालाक्षं पशूनां पतिमीश्वरम्।
कालात्मानं कालकालं देवदेवं महेश्वरम्॥ ४० ॥

ज्ञानवैराग्यसंपन्नं योगानन्दकरं परम्।
शाश्वतैश्वर्यसंपन्नं महायोगीश्वरेश्वरम्॥ ४१ ॥

समस्तशक्तिसंयुक्तं पुण्यकायं दुरासदम्।
तारकं ब्रह्म संपूर्णमणीयांसं महत्तमम्॥ ४२ ॥

यतीनां परमं ब्रह्म व्रतिनां तपसः फलम्।
संयमिहृत्समासीनं तपस्विजनसंवृतम्॥ ४३ ॥

विधीन्द्रविष्णुनमितं मुनिसिद्धनिषेवितम्।
महादेवं महात्मानं देवानामपि दैवतम्॥ ४४ ॥

शान्तं पवित्रमोंकारं ज्योतिषां ज्योतिरुत्तमम्।
ततः पठेद्धि कवचं मम सर्वाघनाशनम्॥ ४५ ॥

(शिवकवचम्)

शङ्करो मे शिरः पातु ललाटं फाललोचनः।
विश्वचक्षुर्दृशौ पातु भ्रुवौ रुद्रो ममावतु॥ ४६ ॥

गण्डौ पातु महेशानः श्रुती रक्षतु पूर्वजः।
कपोलौ मे महादेवः पातु नासां सदाशिवः। ४७॥

मुखं पातु हविर्भोक्ता ओष्ठौ पातु महेश्वरः।
दन्तान् रक्षतु देवेशस्तालू सोमकलाधरः॥ ४८॥

रसनां परमानन्दः पातु शङ्खौ शिवाप्रियः।
चुबुकं पातु मे शम्भुः श्मश्रूञ्छत्रुविनाशनः॥ ४९ ॥

कूर्चं पातु भवः कण्ठं नीलकण्ठोऽवतु ध्रुवम् ।
स्कन्धौ स्कन्दगुरुः पातु बाहू पातु महाभुजः ॥ ५० ॥

उपबाहू महावीर्यः करौ विबुधसत्तमः ।
अङ्गुलीः पातु पञ्चास्यः पर्वाणि च सहस्रपात् ॥ ५१ ॥

हृदयं पातु सर्वात्मा स्तनौ पातु पितामहः ।
उदरं हुतभुक्पातु मध्यं मे मध्यमेश्वरः ॥ ५२ ॥

कुक्षिं पातु भवानीशः पृष्ठं पातु कुलेश्वरः ।
प्राणान्मे प्राणदः पातु नाभिं भीमः कटिं विभुः ॥ ५३ ॥

सक्थिनी पातु मे भर्गो जानुनी जनताधिपः ।
जङ्घे पुररिपुः पातु चरणौ भवनाशनः ॥ ५४ ॥

शरीरं पातु मे शर्वो बाह्यमाभ्यन्तरं शिवः ।
इन्द्रियाणि हरः पातु सर्वत्र जयवर्धनः ॥ ५५ ॥

पूर्वे मम मृडः पातु दक्षिणे यमसूदनः ।
वारुण्यां सलिलाधीश उदीच्यां मे महीधरः ॥ ५६ ॥

ऐशान्यां पातु भूतेशश्चाग्नेय्यां रविलोचनः ।
नैर्ऋत्यां भूतभृत्पातु वायव्यां बलवर्धनः ॥ ५७ ॥

ऊर्ध्वं पातु मखद्वेषी ह्यधः संसारनाशनः ।
सर्वतः सुखदः पातु बुद्धिं पातु सुलोचनः ॥ ५८ ॥

(इति कवचम्)

एवं न्यासविधिं कृत्वा साक्षाच्छंभुमयो भवेत् ।
नमो हिरण्यबाह्वादि पठेन्मन्त्रं तु भक्तितः ॥ ५९ ॥

सद्योजातादिभिर्मन्त्रैर्नमस्कुर्यात्सदाशिवम् ।
ततः सहस्रनामेदं पठितव्यं मुमुक्षुभिः ॥ ६० ॥

सर्वकार्यकरं पुण्यं महापातकनाशनम्।
सर्वगुह्यतमं दिव्यं सर्वलोकहितप्रदम्॥ ६१ ॥

मन्त्राणां परमो मन्त्रो भवदुःखषडूर्मिहृत्।
ओं नमः शंभवे चेति षड्भिर्मन्त्रैः षडङ्गकम्।
न्यासं कृत्वा तु विधिवत्सम्यग्ध्यानं ततश्चरेत्॥ ६२ ॥

## न्यासः

श्रीवेदसाराख्यपरमदिव्यशिवनामस्तोत्रमालामन्त्रस्य श्रीभगवान् नारायण ऋषिः, अनुष्टुप् छन्दः। परमात्मा श्री महादेवो देवता। नम इति बीजम्। शिवायेति शक्तिः। चैतन्यमिति कीलकम्। श्रीमहादेव प्रसादसिद्ध्यर्थे जपे विनियोगः।

अथ न्यासः। ओं नमः शंभवे चाङ्गुष्ठाभ्यां नमः। ओं नमो मयोभवे च तर्जनीभ्यां नमः। ओं नमः शङ्कराय च मध्यमाभ्यां नमः। ओं नमो मयस्कराय च अनामिकाभ्यां नमः। ओं नमः शिवाय च कनिष्ठिकाभ्यां नमः। ओं नमः शिवतराय च करतलकरपृष्ठाभ्यां नमः। एवं हृदयादि। अथ ध्यानम्।

कैलासाद्रिनिभं शशाङ्ककलया स्फूर्जज्जटामण्डलं
नासालोकनतत्परं त्रिनयनं वीरासनाध्यासितम्।
मुद्राटङ्ककुरङ्गपाशविलसद्बाहुं प्रसन्नाननं
कक्षाबद्धभुजङ्गमं मुनिवृतं वन्दे महेशं परम्॥

अथ लमित्यादिपञ्चपूजा ॥

नमः पराय देवाय शङ्कराय महात्मने।
कामिने नीलकण्ठाय निर्मलाय कपर्दिने॥ १ ॥

निर्विकल्पाय शान्ताय निरहङ्कारिणे नमः।
अनर्घाय विशालाय सालहस्ताय ते नमः॥ २ ॥

निरञ्जनाय शर्वाय श्रुताय च परात्मने ।
नमः शिवाय भर्गाय गुणातीताय वेधसे ॥ ३ ॥

महादेवाय वीताय पार्वतीपतये नमः ।
केवलाय महेशाय विशुद्धाय बुधात्मने ॥ ४ ॥

कैवल्याय सुदेशाय निःस्पृहाय स्वरूपिणे ।
नमः सोमविभूषाय कालायामिततेजसे ॥ ५ ॥

अजिराय जगत्पित्रे जनकाय पिनाकिने ।
निराधाराय सिंहाय मायातीताय ते नमः ॥ ६ ॥

बीजाय सर्पभूषाय पशूनां पतये नमः ।
पुरन्दराय भद्राय पुरुषाय महीयसे ॥ ७ ॥

महासंतोषरूपाय ज्ञानिने शुद्धबुद्धये ।
नमो वृद्धस्वरूपाय तपसे परमात्मने ॥ ८ ॥

पूर्वजाय सुरेशाय ब्रह्मणेऽनन्तमूर्तये ।
निरक्षराय सूक्ष्माय कैलासपतये नमः ॥ ९ ॥

निरामयाय कान्ताय निरातङ्काय ते नमः ।
निरालम्बाय विश्वाय नित्याय यतये नमः ॥ १० ॥

आत्मारामाय भव्याय पूज्याय परमेष्ठिने ।
विकर्तनाय सूर्म्याय शंभवे विश्वरूपिणे ॥ ११ ॥

ताराय हंसनाथाय प्रतिसर्याय ते नमः ।
परावरेशरुद्राय भवायालङ्घ्यशक्तये ॥ १२ ॥

इन्द्रध्वंसनिधीशाय कालहन्त्रे मनस्विने ।
विश्वमात्रे जगद्धात्रे जगन्नेत्रे नमो नमः ॥ १३ ॥

जटिलाय विरागाय पवित्राय मृडाय च।
निरवद्याय पात्राय स्तेनानां पतये नमः ॥ १४॥

नादाय रविनेत्राय व्योमकेशाय ते नमः।
चतुर्भोगाय साराय योगिनेऽनन्तगामिने॥ १५॥

धर्मिष्ठाय वरिष्ठाय पुरत्रयविघातिने।
गरिष्ठाय गिरीशाय वरदाय नमो नमः॥ १६॥

व्याघ्रचर्माम्बरायाथ दिशावस्त्राय ते नमः।
परमप्रेममन्त्राय प्रथमाय सुचक्षुषे॥ १७॥

आद्याय शूलहस्ताय शितिकण्ठाय ते नमः।
उग्राय वामदेवाय श्रीकण्ठाय नमो नमः॥ १८॥

विश्वेश्वराय सूर्याय गौरीशाय वराय च।
मृत्युञ्जयाय वीराय वीरभद्राय ते नमः॥ १९॥

कामनाशाय गुरवे मुक्तिनाथाय ते नमः।
विरूपाक्षाय सूताय वह्निनेत्राय ते नमः॥ २०॥

जलन्धरशिरश्छेत्रे हविषे हितकारिणे।
महाकालाय वैद्याय संघृणेशाय ते नमः॥ २१॥

नम ओंकाररूपाय सोमनाथाय ते नमः।
रामेश्वराय शुचये भौमेशाय नमो नमः॥ २२॥

त्र्यम्बकाय निरीहाय केदाराय नमो नमः।
गङ्गाधराय कवये नागनाथाय ते नमः॥ २३॥

भस्मप्रियाय सूद्याय लक्ष्मीशाय नमो नमः।
पूर्णाय भूतपतये सर्वज्ञाय दयालवे॥ २४॥

धर्माय धनदेशाय गजचर्माम्बराय च।
फालनेत्राय यज्ञाय श्रीशैलपतये नमः ॥ २५ ॥

कृशानुरेतसे नीललोहिताय नमो नमः।
अन्धकासुरहन्त्रे च पावनाय बलाय च ॥ २६ ॥

चैतन्याय त्रिनेत्राय दक्षनाशकराय च।
नमः सहस्रशिरसे जयरूपाय ते नमः ॥ २७ ॥

सहस्रचरणायाथ योगिहृत्पद्मवासिने।
सद्योजाताय वन्द्याय सर्वदेवमयाय च ॥ २८ ॥

आमोदाय प्रगल्भाय गायत्रीवल्लभाय च।
व्योमाकाराय विप्राय नमो विप्रप्रियाय च ॥ २९ ॥

अघोराय सुवेषाय श्वेतरूपाय ते नमः।
विद्वत्तमाय चित्राय विश्वग्रासाय नन्दिने ॥ ३० ॥

अधर्मशत्रुरूपाय दुन्दुभेर्मथनाय च।
अजातशत्रवे तुभ्यं जगत्प्राणाय ते नमः ॥ ३१ ॥

नमो ब्रह्मशिरश्छेत्रे पञ्चवक्त्राय खड्गिने।
नमस्ते हरिकेशाय पञ्चवर्णाय वज्रिणे ॥ ३२ ॥

नमः पञ्चाक्षरायाथ गोवर्धनधराय च।
प्रभवे सर्वलोकानां कालकूटविषादिने ॥ ३३ ॥

सिद्धेश्वराय सिद्धाय सहस्रवदनाय च।
नमः सहस्रहस्ताय सहस्रनयनाय च ॥ ३४ ॥

सहस्रमूर्तये तुभ्यं जिष्णवे जितशत्रवे।
काशीनाथाय गेह्याय नमस्ते विश्वसाक्षिणे ॥ ३५ ॥

हेतवे सर्वजीवानां पालकाय नमो नमः ।
जगत्संहारकायाथ त्रिधावस्थाय ते नमः ॥ ३६ ॥

एकादशास्वरूपाय नमस्ते वह्निमूर्तये ।
नरसिंहमहादर्पघातिने शरभाय च ॥ ३७ ॥

भस्माभ्यक्ताय तीर्थ्याय जाह्नवीजनकाय च ।
देवदानवदैत्यानां गुरवे ते नमो नमः ॥ ३८ ॥

दलिताञ्जनभासाय नमो वायुस्वरूपिणे ।
स्वेच्छामन्त्रस्वरूपाय प्रसिद्धायात्मने नमः ॥ ३९ ॥

वृषध्वजाय गोष्ठ्याय जगद्यन्त्रप्रवर्तिने ।
अनाथाय प्रजेशाय विष्णुगर्वहराय च ॥ ४० ॥

हरेर्विधातुः कलहनाशनाय नमो नमः ।
नमस्ते दशहस्ताय गगनाय नमो नमः ॥ ४१ ॥

कैवल्यफलदात्रे च परमाय नमो नमः ।
ज्ञानाय ज्ञानगम्याय घण्टारावप्रियाय च ॥ ४२ ॥

पद्मासनाय पुष्टाय निर्वाणाय नमो नमः ।
अयोनये सुदेहाय ह्युत्तमाय नमो नमः ॥ ४३ ॥

अन्तकालाधिपतये विशालाक्षाय ते नमः ।
कुबेरबन्धवे तुभ्यं सोमाय सुखदायिने ॥ ४४ ॥

अमृतेश्वररूपाय कौबेराय नमो नमः ।
प्रियंवदसमर्थाय धन्विने विभवे नमः ॥ ४५ ॥

गिरिशाय गिरित्राय गिरिशन्ताय ते नमः ।
पारिजाताय बृहते पञ्चयज्ञाय ते नमः ॥ ४६ ॥

तरुणाय विशिष्टाय बालरूपधराय च ।
जीवितेशाय तुष्टाय पुष्टानां पतये नमः ।। ४७ ।।

भवहेत्यै हिरण्याय कनिष्ठाय नमो नमः ।
मध्यमाय विधात्रे ते शूराय सुभगाय च ।। ४८ ।।

आदित्यतापनायाथ नमस्ते रुद्रमन्यवे ।
महाह्रदाय ह्रस्वाय वामनाय नमो नमः ।। ४९ ।।

नमस्तत्पुरुषायाथ चतुर्हस्ताय ते नमः ।
नमो धूर्जटये तुभ्यं जगदीशाय ते नमः ।। ५० ।।

जगन्नाथस्वरूपाय लीलाविग्रहरूपिणे ।
अनघाय नमस्तुभ्यममराय नमो नमः ।। ५१ ।।

अमृताय नमस्तुभ्यमाच्छात्राय नमो नमः ।
लोकाध्यक्षाय वै तुभ्यमनादिनिधनाय च ।। ५२ ।।

व्यक्तेतराय व्यक्ताय नमस्ते परमाणवे ।
लघुस्थूलस्वरूपाय नमः परशुधारिणे ।। ५३ ।।

नमः खट्वाङ्गहस्ताय नागहस्ताय ते नमः ।
वरदाभयहस्ताय घण्टाहस्ताय ते नमः ।। ५४ ।।

घस्मराय नमस्तुभ्यमजिताय नमो नमः ।
अणिमादिगुणेशाय पञ्चब्रह्ममयाय च ।। ५५ ।।

पुरातनाय शुद्धाय बलप्रमथनाय च ।
पुण्योदयाय पद्माय विरक्ताय नमो नमः ।। ५६ ।।

उदाराय विचित्राय विचित्रगतये नमः ।
वाग्विशुद्धाय चितये निर्गुणाय नमो नमः ।। ५७ ।।

परमेशाय शेषाय नमः पद्मधराय च।
महेन्द्राय सुशीलाय करवीरप्रियाय च॥ ५८॥

महापराक्रमायाथ नमस्ते कालरूपिणे।
विष्टरश्रवसे लोकचूडारत्नाय ते नमः॥ ५९॥

साम्राज्यकल्पवृक्षाय नमस्तुभ्यं त्विषीमते।
वरेण्याय नमस्तुभ्यं यज्ञरूपाय ते नमः॥ ६०॥

परमज्योतिषे पद्मगर्भाय सलिलाय च।
तत्त्वाधिकाय सर्वाय नमो दीर्घाय स्रग्विणे॥ ६१॥

नमस्ते पाण्डुरङ्गाय घोराय ब्रह्मरूपिणे।
निष्कलाय नमस्तुभ्यं प्रपथ्याय नमो नमः॥ ६२॥

नमो जयाय क्षेत्राय क्षेत्राणां पतये नमः।
कलाधराय पूताय पञ्चभूतात्मने नमः॥ ६३॥

अनिर्विण्णाय तथ्याय पापनाशकराय च।
विश्वतश्चक्षुषे तुभ्यं मन्त्रिणेऽनन्तरूपिणे॥ ६४॥

सिद्धसाधकरूपाय मेदिनीरूपिणे नमः।
अगण्याय प्रतापाय सुधाहस्ताय ते नमः॥ ६५॥

श्रीवल्लभायेध्रियाय स्थाणवे मधुराय च।
उपाधिरहितायाथ नमः सुकृतराशये॥ ६६॥

नमो मुनीश्वरायाथ शिवानन्दाय ते नमः।
रिपुघ्नाय नमस्तेजोराशयेऽनुत्तमाय च॥ ६७॥

चतुर्मूर्तिवपुस्स्थाय नमो बुद्धीन्द्रियात्मने।
उपद्रवहरायाथ प्रियसंदर्शनाय च॥ ६८॥

भूतनाथाय मूलाय वीतरागाय ते नमः ।
नैष्कर्म्याय विरूपाय षट्चक्राय विशुद्धये ॥ ६९ ॥

कुलेशायावनीभर्त्रे भुवनेशाय ते नमः ।
हिरण्यवाहवे जीववरदाय नमो नमः ॥ ७० ॥

आदिदेवाय भाग्याय चन्द्रसंजीवनाय च ।
हराय बहुरूपाय प्रसन्नाय नमो नमः ॥ ७१ ॥

आनन्दपूरितायाथ कूटस्थाय नमो नमः ।
नमो मोक्षफलायाथ शाश्वताय विरागिणे ॥ ७२ ॥

यज्ञभोक्त्रे सुषेणाय दक्षयज्ञविघातिने ।
नमः सर्वात्मने तुभ्यं विश्वपालाय ते नमः ॥ ७३ ॥

विश्वगर्भाय गर्भाय देवगर्भाय ते नमः ।
संसारार्णवमग्नानां समुद्धरणहेतवे ॥ ७४ ॥

मुनिप्रियाय खल्याय मूलप्रकृतये नमः ।
समस्तसिद्धये तेजोमूर्तये ते नमो नमः ॥ ७५ ॥

आश्रमस्थापनायाथ वर्णिने सुन्दराय च ।
मृगबाणार्पणायाथ शारदावल्लभाय च ॥ ७६ ॥

विचित्रमायिने तुभ्यमलंकरिष्णवे नमः ।
बर्हिर्मुखमहादर्पमथनाय नमो नमः ॥ ७७ ॥

नमोऽष्टमूर्तये तुभ्यं निष्कलङ्काय ते नमः ।
नमो हव्याय भोज्याय यज्ञनाथाय ते नमः ॥ ७८ ॥

नमो मेध्याय मुख्याय विशिष्टाय नमो नमः ।
अम्बिकापतये तुभ्यं महादान्ताय ते नमः ॥ ७९ ॥

सत्यप्रियाय सत्याय प्रियनित्याय ते नमः ।
नित्यतृप्ताय वेदित्रे मृदुहस्ताय ते नमः ॥ ८० ॥

अर्धनारीश्वरायाथ कुठारायुधपाणये ।
वराहभेदिने तुभ्यं नमः कङ्कालधारिणे ॥ ८१ ॥

महार्थाय सुसत्त्वाय कीर्तिस्तम्भाय ते नमः ।
नमः कृतागमायाथ वेदान्तपठिताय च ॥ ८२ ॥

अश्रोत्राय श्रुतिमते बहुश्रुतिधराय च ।
अघ्राणाय नमस्तुभ्यं गन्धावघ्राणकारिणे ॥ ८३ ॥

पादहीनाय वोढ्रे च सर्वत्रगतये नमः ।
त्र्यक्षाय जननेत्राय नमस्तुभ्यं चिदात्मने ॥ ८४ ॥

रसज्ञाय नमस्तुभ्यं रसनारहिताय च ।
अमूर्तायाथ मूर्ताय सदसस्पतये नमः ॥ ८५ ॥

नमो जितेन्द्रियायाथ परंज्योतिः स्वरूपिणे ।
नमस्ते सर्वमर्त्यानामादिकर्त्रे भुवन्तये ॥ ८६ ॥

सर्गस्थितिविनाशानां कर्त्रे ते प्रेरकाय च ।
नमोऽन्तर्यामिणे सर्वहृदिस्थाय नमो नमः ॥ ८७ ॥

चक्रभ्रमणकर्त्रे ते पुराणाय नमो नमः ।
वामदक्षिणहस्तोत्थलोकेशहरिशालिने ॥ ८८ ॥

नमः सकलकल्याणदायिने प्रसवाय च ।
स्वभावोदारधीराय सूत्रकाराय ते नमः ॥ ८९ ॥

विषयार्णवमग्नानां समुद्धरणसेतवे ।
अस्नेहस्नेहरूपाय वार्तातिक्रान्तवर्तिने ॥ ९० ॥

यत्र सर्वं यतः सर्वं सर्वं यत्र नमो नमः ।
नमो महार्णवायाथ भास्कराय नमो नमः ॥ ९१ ॥

भक्तिगम्याय भक्तानां सुलभाय नमो नमः ।
दुष्प्रधर्षाय दुष्टानां विजयाय विवेकिनाम् ॥ ९२ ॥

अतर्किताय लोकाय सुलोकाय नमो नमः ।
पूरयित्रे विशेषाय शुभाय च नमो नमः । ९३ ॥

नमः कर्पूरदेहाय सर्पहाराय ते नमः ।
नमः संसारपाराय कमनीयाय ते नमः ॥ ९४ ॥

वह्निदर्पविघाताय वायुदर्पविघातिने ।
जरातिगाय वीर्याय विश्वस्य व्यापिने नमः ॥ ९५ ॥

सूर्यकोटिप्रकाशाय निष्क्रियाय नमो नमः ।
चन्द्रकोटिसुशीताय विमलाय नमो नमः ॥ ९६ ॥

नमो गूढस्वरूपाय दिशां च पतये नमः ।
नमः सत्यप्रतिज्ञाय समस्ताय समाधये ॥ ९७ ॥

एकरूपाय शून्याय विश्वनाभिह्रदाय च ।
सर्वोत्तमाय कालाय प्राणिनां सुहृदे नमः ॥ ९८ ॥

अन्नानां पतये तुभ्यं चिन्मात्राय नमो नमः ।
ध्येयाय ध्यानगम्याय ध्यानरूपाय ते नमः ॥ ९९ ॥

नमस्ते शाश्वतैश्वर्यविभवाय नमो नमः ।
वरिष्ठायाथ गोप्त्रे च निधनायाग्रजाय च ॥ १०० ॥

योगीश्वराय योगाय योगगम्याय ते नमः ।
नमः प्राणेश्वरायाथ सर्वशक्तिधराय च ॥ १०१ ॥

धर्माधाराय धन्याय पुष्कलाय नमो नमः ।
महेन्द्रोपेन्द्रचन्द्रार्कनमिताय नमो नमः ॥ १०२ ॥

महर्षिवन्दितायाथ प्रकाशाय सुधर्मिणे ।
नमो हिरण्यगर्भाय नमो हिरण्मयाय च ॥ १०३ ॥

जगद्बीजाय हरये सेव्याय क्रतवे नमः ।
आधिपत्याय कामाय यशसे ते प्रचेतसे ॥ १०४ ॥

नमो ब्रह्ममयायाथ सकलाय नमो नमः ।
नमस्ते रुक्मवर्णाय नमस्ते ब्रह्मयोनये ॥ १०५ ॥

योगात्मने त्वभीताय दिव्यनृत्ताय ते नमः ।
जगतामेकबीजाय मायाबीजाय ते नमः ॥ १०६ ॥

सर्वहृत्संनिविष्टाय ब्रह्मचक्रभ्रमाय च ।
ब्रह्मानन्दाय महते ब्रह्मण्याय नमो नमः ॥ १०७ ॥

भूमिभारार्तिसंहर्त्रे विधिसारथये नमः ।
हिरण्यगर्भपुत्राणां प्राणसंरक्षणाय च ॥ १०८ ॥

दुर्वाससे षड्विकाररहिताय नमो नमः ।
नमो देहार्धकान्ताय षडूर्मिरहिताय च ॥ १०९ ॥

प्रकृत्यै भवनाशाय ताम्राय परमेष्ठिने ।
अनन्तकोटिब्रह्माण्डनायकाय नमो नमः ॥ ११० ॥

एकाकिने निर्मलाय द्रविणाय दमाय च ।
नमस्त्रिलोचनायाथ शिपिविष्टाय बन्धवे ॥ १११ ॥

त्रिविष्टपेश्वरायाथ नमो व्याघ्रेश्वराय च ।
विश्वेश्वराय दात्रे ते नमश्चन्द्रेश्वराय च ॥ ११२ ॥

व्याधेश्वरायायुधिने यज्ञकेशाय ते नमः ।
जैगीषव्येश्वरायाथ दिवोदासेश्वराय च ॥ ११३ ॥

नागेश्वराय न्यायाय न्यायनिर्वाहकाय च ।
शरण्याय सुपात्राय कालचक्रप्रवर्तिने ॥ ११४ ॥

विचक्षणाय दंष्ट्राय वेदाश्वाय नमो नमः ।
नीलजीमूतदेहाय परात्मज्योतिषे नमः ॥ ११५ ॥

शरणागतपालाय महाबलपराय च ।
सर्वपापहरायाथ महानादाय ते नमः ॥ ११६ ॥

कृष्णस्य जयदात्रे ते बिल्वकेशाय ते नमः ।
दिव्यभोगाय दूताय कोविदाय नमो नमः ॥ ११७ ॥

कामपाशाय चित्राय चित्राङ्गाय नमो नमः ।
नमो मातामहायाथ नमस्ते मातरिश्वने ॥ ११८ ॥

निःसङ्गाय सुनेत्राय विद्येशाय जयाय च ।
व्याघ्रसंमर्दनायाथ मध्यस्थाय नमो नमः ॥ ११९ ॥

अङ्गुष्ठशिरसा लङ्कानाथदर्पहराय च ।
वैयाघ्रपुरवासाय नमः सर्वेश्वराय च ॥ १२० ॥

नमः परावरेशाय जगत्स्थावरमूर्तये ।
नमोऽप्यनुपमेशाय शार्ङ्गिणे विष्णुमूर्तये ॥ १२१ ॥

नारायणाय रामाय सुदीप्ताय नमो नमः ।
नमो ब्रह्माण्डमालाय गोधराय वरूथिने ॥ १२२ ॥

नमः सोमाय कूप्याय नमः पातालवासिने ।
नमस्ताराधिनाथाय वागीशाय नमो नमः ॥ १२३ ॥

सदाचाराय गौराय स्वायुधाय नमो नमः ।
अतर्क्यायाप्रमेयाय प्रमाणाय नमो नमः ॥ १२४ ॥

कलिग्रासाय भक्तानां भुक्तिमुक्तिप्रदायिने ।
संसारमोचनायाथ वर्णिने लिङ्गरूपिणे ॥ १२५ ॥

सच्चिदानन्दरूपाय पापराशिहराय च ।
गजारये विदेहाय त्रिलिङ्गरहिताय च ॥ १२६ ॥

अचिंत्यशक्तयेऽलङ्घ्यशासनायाच्युताय च ।
नमो राजाधिराजाय चैतन्यविषयाय च ॥ १२७ ॥

नमः शुद्धात्मने ब्रह्मज्योतिषे स्वस्तिदाय च ।
मयोभुवे च दुर्ज्ञेयसामर्थ्याय च यज्वने ॥ १२८ ॥

चक्रेश्वराय वै तुभ्यं नमो नक्षत्रमालिने ।
अनर्थनाशनायाथ भस्मलेपकराय च ॥ १२९ ॥

सदानन्दाय विदुषे सगुणाय विरोधिने ।
दुर्गमाय शुभाङ्गाय मृगव्याधाय ते नमः ॥ १३० ॥

प्रियाय धर्मधाम्ने ते प्रयोगाय विभागिने ।
नाद्यायामृतपायाथ सोमपाय तपस्विने ॥ १३१ ॥

नमो विचित्रवेषाय पुष्टिसंवर्धनाय च ।
चिरंतनाय धनुषे वृक्षाणां पतये नमः ॥ १३२ ॥

निर्मायायाग्रगण्याय व्योमातीताय ते नमः ।
संवत्सराय लोप्याय स्थानदाय स्थविष्णवे ॥ १३३ ॥

व्यवसायफलान्ताय महाकर्तृप्रियाय च ।
गुणत्रयस्वरूपाय नमः सिद्धस्वरूपिणे ॥ १३४ ॥

नमः स्वरूपरूपाय स्वेच्छाय पुरुषाय च ।
कालात्पराय वेद्याय नमो ब्रह्माण्डरूपिणे ॥ १३५ ॥

अनित्यनित्यरूपाय तदन्तर्वर्तिने नमः ।
नमस्तीर्थ्याय कूल्याय पूर्णाय वटवे नमः ॥ १३६ ॥

पञ्चतन्मात्ररूपाय पञ्चकर्मेन्द्रियात्मने ।
विशृङ्खलाय दर्पाय नमस्ते विषयात्मने ॥ १३७ ॥

अनवद्याय शास्त्राय स्वतन्त्रायामृताय च ।
नमः प्रौढाय प्राज्ञाय योगारूढाय ते नमः ॥ १३८ ॥

मन्त्रज्ञाय प्रगल्भाय प्रदीपविमलाय च ।
विश्ववासाय दक्षाय वेदनिःश्वसिताय च ॥ १३९ ॥

यज्ञाङ्गाय सुवीराय नागचूडाय ते नमः ।
व्याघ्राय बाणहस्ताय नमः स्कन्दाय साक्षिणे ॥ १४० ॥

क्षेत्रज्ञाय रहस्याय स्वस्थानाय वरीयसे ।
गहनाय विरामाय सिद्धान्ताय नमो नमः ॥ १४१ ॥

महीधराय गृह्याय वटवृक्षाय ते नमः ।
ज्ञानदीपाय दुर्गाय सिद्धान्तैर्निश्चिताय च ॥ १४२ ॥

श्रीमते मुक्तिबीजाय कुशलाय विवासिने ।
प्रेरकाय विशोकाय हविर्धानाय ते नमः ॥ १४३ ॥

गम्भीराय सहायाय भोजनाय सुभोगिने ।
महायज्ञाय तीक्ष्णाय नमस्ते भूतचारिणे ॥ १४४ ॥

नमः प्रतिष्ठितायाथ महोत्साहाय ते नमः ।
परमार्थाय शिशवे प्रांशवे च कपालिने ॥ १४५ ॥

सहजाय गृहस्थाय संध्यानाथाय विष्णवे।
सद्भिः संपूजितायाथ वितलासुरघातिने॥ १४६॥

जनाधिपाय योग्याय कामेशाय किरीटिने।
अमोघविक्रमायाथ नग्नाय दलघातिने॥ १४७॥

संग्रामाय नरेशाय नमस्ते शुचिभस्मने।
भूतिप्रियाय भूम्ने ते सेनाय चतुराय च॥ १४८॥

मनुष्यबाह्यगतये कृतज्ञाय शिखण्डिने।
निर्लेपाय जटार्द्राय महाकालाय भैरवे॥ १४९॥

नमो विरूपरूपाय शक्तिगम्याय ते नमः।
नमः सर्वाय सदसत्सत्याय सुव्रताय च॥ १५०॥

नमो भक्तिप्रियायाथ श्वेतरक्षापराय च।
सुकुमारमहापापहराय रथिने नमः॥ १५१॥

नमस्ते धर्मराजाय धनाध्यक्षाय सिद्धये।
महाभूताय कल्पाय कल्पनारहिताय च॥ १५२॥

ख्याताय जितविश्वाय गोकर्णाय सुचारवे।
श्रोत्रियाय वदान्याय दुर्लभाय कुटुम्बिने॥ १५३॥

विरजाय सुगन्धाय नमो विश्वम्भराय च।
भवातीताय तिष्याय नमस्ते सामगाय च॥ १५४॥

चिन्मयाय नमः शुक्लज्योतिषे क्षेत्रगाय च।
अद्वैताय द्वितीयाय कल्पराजाय भोगिने॥ १५५॥

सर्वभोगसमृद्धाय सांपरायाय ते नमः।
नमस्ते स्वप्रकाशाय स्वच्छन्दाय सुतन्तवे॥ १५६॥

सर्वज्ञमूर्तये तुभ्यं गुह्येशाय सुशान्तये ।
शारदाय सुशीलाय कौशिकाय धनाय च ॥ १५७ ॥

अभिरामाय तत्त्वाय व्यालकल्पाय ते नमः ।
अरिष्टमथमायाथ सुप्रतीकाय ते नमः ॥ १५८ ॥

आशवे ब्रह्मगर्भाय वरुणायाद्रये नमः ।
नमः कालाग्निरुद्राय श्यामाय सुजनाय च ॥ १५९ ॥

अहिर्बुध्न्याय जाराय दुष्टानां पतये नमः ।
नमः समयनाथाय समयाय गुहाय च ॥ १६० ॥

दुर्लङ्घ्याय नमस्तुभ्यं छन्दःसाराय दंष्ट्रिणे ।
ज्योतिर्लिङ्गाय मित्राय जगतां हितकारिणे ॥ १६१ ॥

नमः कारुण्यनिधये श्लोकाय जयशालिने ।
ज्ञानोदयाय बीजाय जगद्विभ्रमहेतवे ॥ १६२ ॥

अवधूताय शिष्टाय छन्दसां पतये नमः ।
नमः फेन्याय गुह्याय सर्वबन्धविमोचिने ॥ १६३ ॥

उदारकीर्तये शश्वत्प्रसन्नवदनाय च ।
वसवे वेदकाराय नमो भ्राजिष्णुजिष्णवे ॥ १६४ ॥

चक्रिणे देवदेवाय गदाहस्ताय पुत्रिणे ।
पारिजातसुपुष्पाय गणाधिपतये नमः ॥ १६५ ॥

सर्वशाखाधिपतये प्रजनेशाय ते नमः ।
सूक्ष्मप्रमाणभूताय सुरपार्श्वगताय च ॥ १६६ ॥

अशरीरशरीराय अपगल्भाय ते नमः ।
सुकेशाय सुपुष्पाय श्रुतये पुष्पमालिने ॥ १६७ ॥

मुनिध्येयाय मुनये बीजसंस्थमरीचये।
चामुण्डाजनकायाथ नमस्ते कृत्तिवाससे॥ १६८॥

व्युप्तकेशाय योग्याय धर्मपीठाय ते नमः।
महावीर्याय दीप्ताय बुद्धायाशनये नमः॥ १६९॥

विशिष्टेष्टाय सेनान्ये द्विपदे कारणाय च।
कारणानां भगवते बाणदर्पहराय च॥ १७०॥

अतीन्द्रियाय रम्याय जनानन्दकराय च।
सदाशिवाय सौम्याय चिन्त्याय शशिमौलये॥ १७१॥

नमस्ते जातुकर्ण्याय सूर्याध्यक्षाय ते नमः।
ज्योतिषे कुण्डलीशस्य वरदायाभयाय च॥ १७२॥

वसन्ताय सुरभये जयारिमथनाय च।
प्रेम्णे पुरंजयायाथ पृषदश्वाय ते नमः॥ १७३॥

रोचिष्णवेऽसुरजिते श्वेतपीताय ते नमः।
नमस्ते चञ्चरीकाय तमिस्रमथनाय च॥ १७४॥

प्रमाथिने निदाघाय चित्रगर्भाय ते नमः।
शिवालयाय स्तुत्याय तीर्थदेवाय ते नमः॥ १७५॥

पत्तीनां पतये तुभ्यं विचित्रगतये नमः।
नमो निस्तुलरूपाय सवित्रे तपसे नमः॥ १७६॥

अहङ्कारस्वरूपाय मेधाधिपतये नमः।
अपाराय तत्त्वविदे क्षयद्वीराय ते नमः॥ १७७॥

पञ्चास्यायाग्रगण्याय विष्णुप्राणेश्वराय च।
अगोचराय याम्याय क्षेम्याय वडबाग्नये॥ १७८॥

विक्रमाय स्वतन्त्राय स्वतन्त्रगतये नमः।
वनानां पतये तुभ्यं नमस्ते जमदग्नये॥ १७९॥

अनावृताय मुक्ताय मातृकापतये नमः ।
नमस्ते बीजकोशाय दिव्यानन्दाय ते नमः ॥ १८० ॥

नमस्ते विश्वदेवाय शान्तरागाय ते नमः ।
विलोचनसुदेवाय हेमगर्भाय ते नमः ॥ १८१ ॥

अनाद्यन्ताय चण्डाय नमो नाथाय ते नमः ।
ज्ञानस्कन्दाय तुष्टाय कपिलाय महर्षये ॥ १८२ ॥

नमस्त्रिकाग्निकालाय देवसिंहाय ते नमः ।
नमस्ते मणिपूराय चतुर्वेदाय ते नमः ॥ १८३ ॥

स्वरूपाणां स्वभावाय चान्तर्यागाय ते नमः ।
नमः श्लोक्याय वन्याय महाधर्माय ते नमः ॥ १८४ ॥

प्रसन्नाय नमस्तुभ्यं सर्वात्मज्योतिषे नमः ।
स्वयम्भुवे त्रिमूर्तीनामध्वातीताय ते नमः ॥ १८५ ॥

सदाशिव उवाच—

जपन्तु मामिकां देवाः नाम्नां दशशतीमिमाम् ।
मम चातिप्रियकरीं महामोक्षप्रदायिनीम् ॥ १८६ ॥

संग्रामे जयदात्रीं तु सर्वसिद्धिकरीं शुभाम् ।
यः पठेच्छृणुयाद्वापि सर्वपापैः प्रमुच्यते ॥ १८७ ॥

पुत्रकामो लभेत्पुत्रं राज्यकामस्तु राजताम् ।
प्राप्नुयात्परया भक्त्या धनधान्यादिकं बहु ॥ १८८ ॥

शिवालये नदीतीरे बिल्वमूले विशेषतः ।
प्रजपेत्सिद्धिदां देवाः शुचौ देशे शमीतले ॥ १८९ ॥

धनकामस्तु जुहुयाद्घृताक्तैर्बिल्वपत्रकैः ।
मोक्षकामस्तु गव्येन घृतेन प्रतिनामतः ॥ १९० ॥

आयुष्कामस्तु जुहुयादाज्येन मधुना तथा।
पुत्रकामस्तु जुहुयात्तिलाक्तेन तथाम्भसा॥ १९१ ॥

मत्समीपे प्रदोषे च नत्वा भक्त्या जपेन्नरः।
जीवन्सरूपतां प्राप्य सायुज्यं मम चाप्नुयात्॥ १९२ ॥

कालोऽपि जनशास्ता हि मम भक्तं न पश्यति।
अहं पुरःसरस्तस्य नेष्यामि गगनस्थलम्॥ १९३ ॥

त्रिसंध्यं यः पठेद्भक्त्या वत्सरं नियमान्वितः।
मच्चित्तो मन्मना भूत्वा साक्षान्मोक्षमवाप्नुयात्॥ १९४ ॥

रुद्रपाठेन यत्पुण्यं यत्पुण्यं वेदपाठतः।
तत्पुण्यं लभते योऽसावेकावृत्त्या पठेदिमाम्॥ १९५ ॥

कन्याकोटिप्रदानेन यत्फलं लभते नरः।
तत्फलं लभते सम्यङ्नाम्नां दशशतं जपन्॥ १९६ ॥

अश्वमेधसहस्रस्य यत्फलं लभते नरः।
कपिलाशतदानस्य तत्फलं पठनाद्भवेत्॥ १९७ ॥

यः शृणोति सदा विद्यां श्रावयेद्वापि भक्तितः।
सोऽपि मुक्तिमवाप्नोति यत्र गत्वा न शोचति॥ १९८ ॥

यक्षराक्षसवेतालग्रहकूष्माण्डभैरवाः।
पठनादस्य नश्यन्ति जीवेच्च शरदां शतम्॥ १९९ ॥

ब्रह्महत्त्यादिपापानां नाशः स्याच्छ्रवणेन तु।
किं पुनः पठनादस्य मुक्तिः स्यादनपायिनी॥ २०० ॥

इत्युक्त्वा स महादेवो भगवान्परमेश्वरः।
पुनरप्याह भगवान्कृपया परया युतः॥ २०१ ॥

दीयतां मम भक्तेभ्यो मदुक्तं भवबाधकम् ।
इत्युक्त्वाऽन्तर्दधे देवः परानन्दस्वरूपधृक् ॥ २०२ ॥

श्रीकृष्ण उवाच—

एतदेव पुरा रामो लब्धवान् कुम्भसंभवात् ।
अरण्ये दण्डकाख्ये तु प्रजजाप रघूद्वहः ॥ २०३ ॥

नित्यं त्रिषवणस्नायी त्रिसंध्यं सुस्मरञ्शिवम् ।
तदाऽसौ देवदेवोऽपि प्रत्यक्षः प्राह राघवम् ॥ २०४ ॥

महापाशुपतं दिव्यं प्रगृहाण रघूद्वह ।
एतदासाद्य पौलस्त्यं जहि मा शोकमर्हसि ॥ २०५ ॥

तदाप्रभृति भूदेवाः प्रजपन्ति सुभक्तितः ।
गृह्णन्तु परया भक्त्या भवन्तः सर्व एव हि ॥ २०६ ॥

श्रीव्यास उवाच—

ततस्ते मुनयः सर्वे जगृहुर्मुनिपुङ्गवाः ।
गृह्णन्तु मम वाक्यं तु मुक्तिं प्राप्स्यथ निश्चिताः ॥ २०७ ॥

भवद्भिरात्मशिष्येभ्यो दीयतामिदमादरात् ।
नाम्नां सहस्रमेतद्धि लिखितं यन्निकेतने ॥ २०८ ॥

अविमुक्तं तु तद्गेहं नित्यं तिष्ठति शङ्करः ।
अनेन मन्त्रितं भस्माखिलदुष्टविनाशनम् ॥ २०९ ॥

पिशाचस्य विनाशाय जप्तव्यमिदमुत्तमम् ।
नाम्नां सहस्रेणानेन समं किञ्चिन्न विद्यते ॥ २१० ॥

इति पाद्मे पुराणे बिल्वकेश्वरमाहात्म्ये श्रीकृष्णमार्कण्डेय- संवादे वेदसारशिवसहस्रनामस्तोत्रं नाम एकोननवतितमोऽध्यायः ॥

## ।। वेदसारशिवसहस्रनामावलिः ।।

ओं पराय देवाय नमः । शङ्कराय । महात्मने । कामिने । नीलकण्ठाय । निर्मलाय । कपर्दिने । निर्विकल्पाय । शान्ताय । निरहङ्कारिणे । अनर्घाय । विशालाय । सालहस्ताय । निरञ्जनाय । शर्वाय । श्रुताय । परात्मने । नमः शिवाय । भर्गाय । गुणातीताय नमः । २०

वेधसे नमः । महादेवाय । वीताय । पार्वतीपतये । केवलाय । महेशाय । विशुद्धाय । बुधात्मने । कैवल्याय । सुदेशाय । निःस्पृहाय स्वरूपिणे । सोमविभूषाय । कालाय । अमिततेजसे । अजिराय । जगत्पित्रे । जनकाय । पिनाकिने । निराधाराय । सिंहाय नमः । ४०

मायातीताय नमः । बीजाय । सर्पभूषाय । पशूनां पतये । पुरन्दराय । भद्राय । पुरुषाय । महीयसे । महासंतोषरूपाय । ज्ञानिने । शुद्धबुद्धये । वृद्धस्वरूपाय । तपसे । परमात्मने । पूर्वजाय । सुरेशाय । ब्रह्मणे । अनन्तमूर्तये । निरक्षराय । सूक्ष्माय नमः । ६०

कैलासपतये नमः । निरामयाय । कान्ताय । निरातङ्काय । निरालम्बाय । विश्वाय । नित्याय यतये । आत्मा रामाय । भव्याय । पूज्याय । परमेष्ठिने । विकर्तनाय । सूर्म्याय । शंभवे । विश्वरूपिणे । ताराय । हंसनाथाय । प्रतिसर्याय । परावरेशरुद्राय । भवाय नमः । ८०

अलक्ष्यशक्तये नमः । इन्द्रध्वंसनिधीशाय । कालहन्त्रे । मनस्विने । विश्वमात्रे । जगद्धात्रे । जगन्नेत्रे । जटिलाय । विरागाय । पवित्राय । मृडाय । निरवद्याय पात्राय । स्तेनानां पतये । नादाय । रविनेत्राय । व्योमकेशाय । चतुर्भोगाय । साराय । योगिने । अनन्तगामिने नमः । १००

धर्मिष्ठाय नमः । वरिष्ठाय । पुरत्रयविघातिने । गरिष्ठाय । गिरीशाय । वरदाय । व्याघ्रचर्माम्बराय । दिशावस्त्राय । परमप्रेममन्त्राय । प्रथमाय । सुचक्षुषे । आद्याय । शूलहस्ताय । शितिकण्ठाय । उग्राय । वामदेवाय । श्रीकण्ठाय । विश्वेश्वराय । सूर्याय । गौरीशाय नमः । १२०

वराय नमः । मृत्युञ्जयाय । वीराय । वीरभद्राय । कामनाशाय । गुरवे । मुक्तिनाथाय । विरूपाक्षाय । सूताय । वह्निनेत्राय । जलन्धरशिरश्छेत्रे । हविषे । हितकारिणे । महाकालाय । वैद्याय । संघृणेशाय । ओंकाररूपाय । सोमनाथाय । रामेश्वराय । शुचये नमः । १४०

भौमेशाय नमः । त्र्यम्बकाय । निरीहाय । केदाराय । गङ्गाधराय । कवये । नागनाथाय । भस्मप्रियाय । सूद्याय । लक्ष्मीशाय । पूर्णाय । भूतपतये । सर्वज्ञाय । दयालवे । धर्माय । धनदेशाय । गजचर्माम्बराय । फालनेत्राय । यज्ञाय । श्रीशैलपतये नमः । १६०

कृशानुरेतसे नमः । नीललोहिताय । अन्धकासुरहन्त्रे । पावनाय । बलाय । चैतन्याय । त्रिनेत्राय । दक्षनाशकराय । सहस्रशिरसे । जयरूपाय । सहस्रचरणाय । योगिहृत्पद्मवासिने । सद्योजाताय । वन्द्याय । सर्वदेवमयाय । आमोदाय । प्रगल्भाय । गायत्रीवल्लभाय । व्योमाकाराय । विप्राय नमः । १८०

विप्रप्रियाय नमः । अघोराय । सुवेषाय । श्वेतरूपाय । विद्वत्तमाय । चित्राय । विश्वग्रासाय । नन्दिने । अधर्मशत्रुरूपाय । दुन्दुभेर्मथनाय । अजातशत्रवे । जगत्प्राणाय । ब्रह्मशिरश्छेत्त्रे । पञ्चवक्त्राय । खड्गिने । हरिकेशाय । पञ्चवर्णाय । वज्रिणे । पञ्चाक्षराय । गोवर्धनधराय नमः । २००

सर्वलोकानां प्रभवे नमः । कालकूटविषादिने । सिद्धेश्वराय । सिद्धाय । सहस्रवदनाय । सहस्रहस्ताय । सहस्रनयनाय । सहस्रमूर्तये । जिष्णवे । जितशत्रवे । काशीनाथाय । गेह्याय । विश्वसाक्षिणे । सर्वजीवानां हेतवे । पालकाय । जगत्संहारकाय । त्रिधावस्थाय । एकादशस्वरूपाय । वह्निमूर्तये । नरसिंहमहादर्पघातिने नमः । २२०

शरभाय नमः । भस्माभ्यक्ताय । तीर्थ्याय । जाह्नवीजनकाय । देवदानवदैत्यानां गुरवे । दलिताञ्जनभासाय । वायुस्वरूपिणे । स्वेच्छामन्त्रस्वरूपाय । प्रसिद्धाय । आत्मने । वृषध्वजाय । गोष्ठ्याय । जगद्यन्त्रप्रवर्तिने । अनाथाय । प्रजेशाय । विष्णुगर्वहराय । हरेर्विधातुः कलहनाशनाय । दशहस्ताय । गगनाय । कैवल्यफलदात्रे नमः । २४०

परमाय नमः । ज्ञानाय । ज्ञानगम्याय । घण्टारावप्रियाय । पद्मासनाय । पुष्टाय । निर्वाणाय । अयोनये । सुदेहाय । उत्तमाय । अन्तकालाधिपतये । विशालाक्षाय । कुबेरबन्धवे । सोमाय । सुखदायिने । अमृतेश्वररूपाय । कौबेराय । प्रियंवदसमर्थाय । धन्विने । विभवे नमः । २६०

गिरिशाय नमः । गिरित्राय । गिरिशन्ताय । पारिजाताय । बृहते । पञ्चयज्ञाय । तरुणाय । विशिष्टाय । बालरूपधराय । जीवितेशाय । तुष्टाय । पुष्टानां पतये । भवहेत्यै । हिरण्याय । कनिष्ठाय । मध्यमाय । विधात्रे । शूराय । सुभगाय । आदित्यतापनाय नमः । २८०

रुद्रमन्यवे नमः । महाह्रदाय । ह्रस्वाय । वामनाय । तत्पुरुषाय । चतुर्हस्ताय । धूर्जटये । जगदीशाय । जगन्नाथस्वरूपाय । लीलाविग्रहरूपिणे । अनघाय । अमराय । अमृताय । अच्छात्राय ।

लोकाध्यक्षाय। अनादिनिधनाय। व्यक्तेतराय। व्यक्ताय। परमाणवे। लघुस्थूलस्वरूपाय नमः। ३००

परशुधारिणे नमः। खट्वाङ्गहस्ताय। नागहस्ताय। वरदाभयहस्ताय। घण्टाहस्ताय। घस्मराय। अजिताय। अणिमादिगुणेशाय। पञ्चब्रह्ममयाय। पुरातनाय। शुद्धाय। बलप्रमथनाय। पुण्योदयाय। पद्माय। विरक्ताय। उदाराय। विचित्राय। विचित्रगतये। वाग्विशुद्धाय। चितये नमः। ३२०

निर्गुणाय नमः। परमेशाय। शेषाय। पद्मधराय। महेन्द्राय। सुशीलाय। करवीरप्रियाय। महापराक्रमाय। कालरूपिणे। विष्टरश्रवसे। लोकचूडारत्नाय। साम्राज्यकल्पवृक्षाय। त्विषीमते। वरेण्याय। यज्ञरूपाय। परमज्योतिषे। पद्मगर्भाय। सलिलाय। तत्त्वाधिकाय। सर्वाय नमः। ३४०

दीर्घाय नमः। स्रग्विणे। पाण्डुराङ्गाय। घोराय। ब्रह्मरूपिणे। निष्कलाय। प्रपथ्याय। जयाय। क्षेत्राय। क्षेत्राणां पतये। कलाधराय। पूताय। पञ्चभूतात्मने। अनिर्विण्णाय। तथ्याय। पापनाशकराय। विश्वतश्चक्षुषे। मन्त्रिणे। अनन्तरूपिणे। सिद्धसाधकरूपाय नमः। ३६०

मेदिनीरूपिणे नमः। अगण्याय। प्रतापाय। सुधाहस्ताय। श्रीवल्लभाय। ईश्वियाय। स्थाणवे। मधुराय। उपाधिरहिताय। सुकृतराशये। मुनीश्वराय। शिवानन्दाय। रिपुघ्नाय। तेजोराशये। अनुत्तमाय। चतुर्मूर्तिवपुस्स्थाय। बुद्धीन्द्रियात्मने। उपद्रवहराय। प्रियसंदर्शनाय। भूतनाथाय नमः। ३८०

मूलाय नमः। वीतरागाय। नैष्कर्म्याय। विरूपाय। षट्चक्राय। विशुद्धये। कुलेशाय। अवनिभर्त्रे। भुवनेशाय।

हिरण्यबाहवे। जीववरदाय । आदिदेवाय । भाग्याय । चन्द्रसंजीवनाय। हराय। बहुरूपाय। प्रसन्नाय। आनन्दपूरिताय। कूटस्थाय। मोक्षफलाय नमः। ४००

शाश्वताय नमः । विरागिणे । यज्ञभोक्त्रे । सुषेणाय । दक्षयज्ञविघातिने। सर्वात्मने । विश्वपालाय । विश्वगर्भाय । गर्भाय। देवगर्भाय। संसारार्णवमग्नानां समुद्धरणहेतवे । मुनिप्रियाय। खल्याय। मूलप्रकृतये। समस्तसिद्धये। तेजोमूर्तये। आश्रमस्थापनाय। वर्णिने। सुन्दराय। मृगबाणार्पणाय नमः। ४२०

शारदावल्लभाय नमः । विचित्रमायिने । अलंकरिष्णवे । बर्हिर्मुखमहादर्पमथनाय । अष्टमूर्तये । निष्कलङ्काय । हव्याय भोज्याय। यज्ञनाथाय । मेध्याय । मुख्याय । विशिष्टाय । अम्बिकापतये । महादान्ताय। सत्यप्रियाय । सत्याय । प्रियनित्याय। नित्यतृप्ताय। वेदित्रे। मृदुहस्ताय। अर्धनारीश्वराय नमः। ४४०

कुठारायुधपाणये नमः । वराहभेदिने । कङ्कालधारिणे । महार्थाय । सुसत्त्वाय । कीर्तिस्तम्भाय । कृतागमाय । वेदान्तपठिताय। अश्रोत्राय । श्रुतिमते । बहुश्रुतिधराय । अघ्राणाय। गन्धावघ्राणकारिणे। पादहीनाय। वोढ्रे। सर्वत्रगतये। त्र्यक्षाय। जननेत्राय। चिदात्मने। रसज्ञाय नमः। ४६०

रसनारहिताय नमः । अमूर्ताय । मूर्ताय । सदसस्पतये । जितेन्द्रियाय। परंज्योतिःस्वरूपिणे । सर्वमर्त्यानामादिकर्त्रे । भुवन्तये। सर्गस्थितिविनाशानां कर्त्रे। प्रेरकाय। अन्तर्यामिणे। सर्वहृदिस्थाय । चक्रभ्रमणकर्त्रे । पुराणाय । वामदक्षिणहस्तोत्थलोकेशहरिशालिने। सकलकल्याणदायिने। प्रसवाय। स्वभावोदारधीराय। सूत्रकाराय। विषयार्णवमग्नानां समुद्धरणसेतवे नमः। ४८०

अस्नेहस्नेहरूपाय नमः । वार्तातिक्रान्तवर्तिने । यत्र सर्वं यतः सर्वं सर्वं यत्र नमो नमः । महार्णवाय । भास्कराय । भक्तिगम्याय । भक्तानां सुलभाय । दुष्टानां दुष्प्रधर्षाय । विवेकिनां विजयाय । अतर्किताय लोकाय । सुलोकाय । पूरयित्रे । विशेषाय । शुभाय । कर्पूरदेहाय । सर्पहाराय । संसारपाराय । कमनीयाय । वह्निदर्पविघाताय । वायुदर्पविघातिने नमः । ५००

जरातिगाय नमः । वीर्याय । विश्वस्य व्यापिने । सूर्यकोटिप्रकाशाय । निष्क्रियाय । चन्द्रकोटिसुशीताय । विमलाय । गूढस्वरूपाय । दिशां पतये । सत्यप्रतिज्ञाय । समस्ताय । समाधये । एकरूपाय । शून्याय । विश्वनाभिह्रदाय । सर्वोत्तमाय । कालाय । प्राणिनां सुहृदे । अन्नानां पतये । चिन्मात्राय नमः । ५२०

ध्येयाय नमः । ध्यानगम्याय । ध्यानरूपाय । शाश्वतैश्वर्यविभवाय । वरिष्ठाय । गोप्त्रे । निधनाय । अग्रजाय । योगीश्वराय । योगाय । योगगम्याय । योगाय । योगगम्याय । प्राणेश्वराय । सर्वशक्तिधराय । धर्माधाराय । धन्याय । पुष्कलाय । महेन्द्रोपेन्द्रचन्द्रार्कनमिताय । महर्षिवन्दिताय । सुधर्मिणे नमः । ५४०

हिरण्यगर्भाय नमः । हिरण्मयाय । जगद्बीजाय । हरये । सेव्याय । क्रतवे । आधिपत्याय । कामाय । यशसे । प्रचेतसे । ब्रह्ममयाय । सकलाय । रुक्मवर्णाय । ब्रह्मयोनये । योगात्मने । अभीताय । दिव्यनृत्ताय । जगतामेकबीजाय । मायाबीजाय । सर्वहृत्संनिविष्टाय नमः । ५६०

ब्रह्मचक्रभ्रमाय नमः । ब्रह्मानन्दाय । महते । ब्रह्मण्याय । भूमिभारार्तिसंहर्त्रे । विधिसारथये । हिरण्यगर्भपुत्राणां प्राणसंरक्षणाय । दुर्वाससे । षड्विकाररहिताय । देहार्धकान्ताय ।

षडूर्मिरहिताय । प्रकृत्यै भवनाशाय । ताम्राय । परमेष्ठिने । अनन्तकोटिब्रह्माण्डनायकाय। एकाकिने । निर्मलाय। द्रविणाय । दमाय। त्रिलोचनाय नमः । ५८०

शिपिविष्टाय नमः । बन्धवे। त्रिविष्टपेश्वराय। व्याघ्रेश्वराय। विश्वेश्वराय। दात्रे । चन्द्रेश्वराय । व्याधेश्वराय । आयुधिने । यज्ञकेशाय। जैगीषव्येश्वराय । दिवोदासेश्वराय । नागेश्वराय । न्यायाय। न्यायनिर्वाहकाय। शरण्याय । सुपात्राय । कालचक्रप्रवर्तिने । विचक्षणाय। दंष्ट्राय नमः । ६००

वेदाश्वाय नमः । नीलजीमूतदेहाय । परात्मज्योतिषे । शरणागतपालाय। महाबलपराय। सर्वपापहराय। महानादाय। कृष्णस्य जयदात्रे । बिल्वकेशाय । दिव्यभोगाय । दूताय । कोविदाय। कामपाशाय। चित्राय। चित्राङ्गाय। मातामहाय। मातरिश्वने। निःसङ्गाय। सुनेत्राय। विद्येशाय नमः । ६२०

जयाय नमः । व्याघ्रसंमर्दनाय। मध्यस्थाय। अङ्गुष्ठशिरसा लङ्कानाथदर्पहराय। वैयाघ्रपुरवासाय। सर्वेश्वराय। परावरेशाय। जगत्स्थावरमूर्तये । अनुपमेशाय । शार्ङ्गिणे । विष्णुमूर्तये । नारायणाय। रामाय। सुदीप्ताय। ब्रह्माण्डमालाय। गोधराय। वरूथिने। सोमाय। कूप्याय। पातालवासिने नमः । ६४०

ताराधिनाथाय नमः । वागीशाय। सदाचाराय। गौराय। स्वायुधाय। अतर्क्याय। अप्रमेयाय। प्रमाणाय। कलिग्रासाय। भक्तानां भुक्तिमुक्ति प्रदायिने । संसारमोचनाय । वर्णिने । लिङ्गरूपिणे । सच्चिदानन्दरूपाय । पापराशिहराय । गजारये । विदेहाय। त्रिलिङ्गरहिताय। अचिन्त्यशक्तये। अलङ्घ्यशासनाय नमः । ६६०

अच्युताय नमः । राजाधिराजाय । चैतन्यविषयाय । शुद्धात्मने । ब्रह्मज्योतिषे । स्वस्तिदाय । मयोभुवे । दुर्ज्ञेयसामर्थ्याय । यज्वने । चक्रेश्वराय । नक्षत्रमालिने । अनर्थनाशनाय । भस्मलेपकराय । सदानन्दाय । विदुषे । सगुणाय । विरोधिने । दुर्गमाय । शुभाङ्गाय । मृगव्याधाय नमः । ६८०

प्रियाय नमः । धर्मधाम्ने । प्रयोगाय । विभागिने । नाद्याय । अमृतपाय । सोमपाय । तपस्विने । विचित्रवेषाय । पुष्टिसंवर्धनाय । चिरंतनाय । धनुषे । वृक्षाणां पतये । निर्मायाय । अग्रगण्याय । व्योमातीताय । संवत्सराय । लोप्याय । स्थानदाय । स्थविष्णवे नमः । ७००

व्यवसायफलान्ताय नमः । महाकर्तृप्रियाय नमः । गुणत्रयस्वरूपाय । सिद्धस्वरूपिणे । स्वरूपरूपाय । स्वेच्छाय । पुरुषाय । कालात्पराय । वेद्याय । ब्रह्माण्डरूपिणे । अनित्यनित्यरूपाय । तदन्तर्वर्तिने । तीर्थ्याय । कूल्याय । पूर्णाय । वटवे । पञ्चतन्मात्ररूपाय । पञ्चकर्मेन्द्रियात्मने । विशृङ्खलाय । दर्पाय नमः । ७२०

विषयात्मने नमः । अनवद्याय शास्त्राय । स्वतन्त्राय । अमृताय । प्रौढाय । प्राज्ञाय । योगारूढाय । मन्त्रज्ञाय । प्रगल्भाय । प्रदीपविमलाय । विश्ववासाय । दक्षाय । वेदनिःश्वसिताय । यज्ञाङ्गाय । सुवीराय । नागचूडाय । व्याघ्राय । बाणहस्ताय । स्कन्दाय । साक्षिणे नमः । ७४०

क्षेत्रज्ञाय नमः । रहस्याय । स्वस्थानाय । वरीयसे । गहनाय । विरामाय । सिद्धान्ताय । महीधराय । गुह्याय । वटवृक्षाय । ज्ञानदीपाय । दुर्गाय । सिद्धान्तैर्निश्चिताय । श्रीमते । मुक्तिबीजाय । कुशलाय । विवासिने । प्रेरकाय । विशोकाय । हविर्धानाय नमः । ७६०

गम्भीराय नमः । सहायाय । भोजनाय । सुभोगिने । महायज्ञाय । तीक्ष्णाय । भूतचारिणे । प्रतिष्ठिताय । महोत्साहाय । परमार्थाय । शिशवे । प्रांशवे । कपालिने । सहजाय गृहस्थाय । संध्यानाथाय । विष्णवे । सद्भिः संपूजिताय । वितलासुरघातिने । जनाधिपाय । योग्याय नमः । ७८०

कामेशाय नमः । किरीटिने । अमोघविक्रमाय । नग्नाय । दलघातिने । संग्रामाय । नरेशाय । शुचिभस्मने । भूतिप्रियाय । भूम्ने । सेनाय । चतुराय । मनुष्यबाह्यगतये । कृतज्ञाय । शिखण्डिने । निर्लेपाय । जटार्द्राय । महाकालाय । मेरवे । विरूपरूपाय नमः । ८००

शक्तिगम्याय नमः । सर्वाय । सदसत्सत्याय । सुव्रताय । भक्तिप्रियाय । श्वेतरक्षापराय । सुकुमारमहापापहराय । रथिने । धर्मराजाय । धनाध्यक्षाय । सिद्धये । महाभूताय । कल्पाय । कल्पनारहिताय । ख्याताय । जितविश्वाय । गोकर्णाय । सुचारवे । श्रोत्रियाय । वदान्याय नमः । ८२०

दुर्लभाय नमः । कुटुम्बिने । विरजाय । सुगन्धाय । विश्वम्भराय । भवातीताय । तिष्याय । सामगाय । चिन्मयाय । शुक्लज्योतिषे । क्षेत्रगाय । अद्वैताय । द्वितीयाय । कल्पराजाय । भोगिने । सर्वभोगसमृद्धाय । सांपरायाय । स्वप्रकाशाय । स्वच्छन्दाय । सुतन्तवे नमः । ८४०

सर्वज्ञमूर्तये नमः । गुह्येशाय । सुशान्तये । शारदाय । सुशीलाय । कौशिकाय । धनाय । अभिरामाय । तत्त्वाय । व्यालकल्पाय । अरिष्टमथनाय । सुप्रतीकाय । आशवे । ब्रह्मगर्भाय । वरुणाय । अद्रये । कालाग्निरुद्राय । श्यामाय । सुजनाय । अहिर्बुध्न्याय नमः । ८६०

जाराय नमः । दुष्टानां पतये । समयनाथाय । समयाय । गुहाय । दुर्लङ्घ्याय । छन्दःसाराय । दंष्ट्रिणे । ज्योतिर्लिङ्गाय । मित्राय । जगतां हितकारिणे । कारुण्यनिधये । श्लोकाय । जयशालिने । ज्ञानोदयाय । बीजाय । जगद्विभ्रमहेतवे । अवधूताय । शिष्टाय । छन्दसां पतये नमः । ८८०

फेन्याय नमः । गुह्याय । सर्वबन्धविमोचिने । उदारकीर्तये । शश्वत्प्रसन्नवदनाय । वसवे । वेदकाराय । भ्राजिष्णुजिष्णवे । चक्रिणे । देवदेवाय । गदाहस्ताय । पुत्रिणे । पारिजातसुपुष्पाय । गणाधिपतये । सर्वशाखाधिपतये । प्रजनेशाय । सूक्ष्मप्रमाणभूताय । सुरपार्श्वगताय । अशरीरशरीराय । अपगल्भाय नमः । ९००

सुकेशाय नमः । सुपुष्पाय । श्रुतये । पुष्पमालिने । मुनिध्येयाय । मुनये । बीजसंस्थमरीचये । चामुण्डाजनकाय । कृत्तिवाससे । व्युप्तकेशाय । योग्याय । धर्मपीठाय । महावीर्याय । दीप्ताय । बुद्धाय । अशनये । विशिष्टेष्टाय । सेनान्ये । द्विपदे । कारणानां कारणाय नमः । ९२०

भगवते नमः । बाणदर्पहराय । अतीन्द्रियाय । रम्याय । जनानन्दकराय । सदाशिवाय । सौम्याय । चिन्त्याय । शशिमौलये । जातुकर्ण्याय । सूर्याध्यक्षाय । ज्योतिषे । कुण्डलीशस्य वरदाय । अभयाय । वसन्ताय । सुरभये । जयारिमथनाय । प्रेम्णे । पुरंजयाय । पृषदश्वाय नमः । ९४०

रोचिष्णवे नमः । असुरजिते । श्वेतपीताय । चञ्चरीकाय । तमिस्रमथनाय । प्रमाथिने । निदाघाय । चित्रगर्भाय । शिवालयाय । स्तुत्याय । तीर्थदेवाय । पत्तीनां पतये । विचित्रगतये । निस्तुलरूपाय । सवित्रे । तपसे । अहङ्कारस्वरूपाय । मेधाधिपतये । अपाराय । तत्त्वविदे नमः । ९६०

क्षयद्वीराय नमः । पञ्चास्याय । अग्रगण्याय । विष्णुप्राणेश्वराय । अगोचराय । याम्याय । क्षेम्याय । वडबाग्नये । विक्रमाय । स्वतन्त्राय । स्वतन्त्रगतये । वनानां पतये । जमदग्नये । अनावृताय । मुक्ताय । मातृकापतये । बीजकोशाय । दिव्यानन्दाय । विश्वदेवाय । शान्तरागाय नमः । ९८०

विलोचनसुदेवाय नमः । हेमगर्भाय । अनाद्यन्ताय । चण्डाय नाथाय । ज्ञानस्कन्दाय । तुष्टाय । कपिलाय महर्षये । त्रिकाग्निकालाय । देवसिंहाय । मणिपूराय । चतुर्वेदाय । स्वरूपाणां स्वभावाय । अन्तर्यागाय । श्लोक्याय । वन्याय । महाधर्माय । प्रसन्नाय । सर्वात्मज्योतिषे । त्रिमूर्तीनां स्वयम्भुवे । अध्वातीताय नमः । १०००

ओं श्रीसांबपरमेश्वराय नमः ।

महादेवं महेशानं महेश्वरमुमापतिम् ।
महासेनगुरुं वन्दे महाभयनिवारणम् ।।

सौरमण्डलमध्यस्थं साम्बं संसारभेषजम् ।
नीलग्रीवं विरूपाक्षं नमामि शिवमव्ययम् ।।

वन्दे शम्भुमुमापतिं सुरगुरुं वन्दे जगत्कारणम्
वन्दे पन्नगभूषणं मृगधरं वन्दे पशूनां पतिम् ।
वन्दे सूर्यशशाङ्क वह्निनयनं वन्दे मुकुन्दप्रियं
वन्दे भक्तजनाश्रयं च वरदं वन्दे शिवं शङ्करम् ।।

श्रीकण्ठ पार्वतीनाथ तेजिनीवननायक ।
आयुर्बलं श्रियं देहि हर ! मे पातकं हर ।।

* * *

# श्री शिवसहस्रनामस्तोत्रम् (२)

वासुदेव उवाच-

ततः स प्रयतो भूत्वा मम तात युधिष्ठिर ।
प्राञ्जलिः प्राह विप्रर्षिर्नामसङ्ग्रहमादितः ॥ १

उपमन्युरुवाच-

ब्रह्मप्रोक्तैर्ऋषिप्रोक्तैर्वेदवेदाङ्गसम्भवैः ।
सर्वलोकेषु विख्यातं स्तुत्यं स्तोष्यामि नामभिः ॥ २

महद्भिः सहितैः सत्यैः सिद्धैः सर्वार्थसाधकैः ।
ऋषिणा तण्डिना भक्त्या कृतैर्वेदकृतात्मना ॥ ३

यथोक्तैः साधुभिः ख्यातैर्मुनिभिस्तत्त्वदर्शिभिः ।
प्रवरं प्रथमं स्वर्ग्यं सर्वभूतहितं शुभम् ॥ ४

श्रुतैः सर्वत्र जगति ब्रह्मलोकावतारितैः ।
सत्यैस्तत् परमं ब्रह्म ब्रह्मप्रोक्तं सनातनम् ॥ ५

वक्ष्ये यदुकुलश्रेष्ठ शृणुष्वावहितो मम ।
वरयैनं भवं देवं भक्तस्त्वं परमेश्वरम् ॥ ६

तेन ते श्रावयिष्यामि यत् तद्ब्रह्म सनातनम् ।
न शक्यं विस्तरात् कृत्स्नं वक्तुं सर्वस्य केनचित् ॥ ७

युक्तेनापि विभूतीनामपि वर्षशतैरपि ।
यस्यादिर्मध्यमन्तं च सुरैरपि न गम्यते ॥ ८

कस्तस्य शक्नुयाद् वक्तुं गुणान् कार्त्स्न्येन माधव ।
किं तु देवस्य महतः संक्षिप्तार्थपदाक्षरम् ॥ ९

शक्तितश्चरितं वक्ष्ये प्रसादात् तस्य धीमतः ।
अप्राप्य तु ततोऽनुज्ञां न शक्यः स्तोतुमीश्वरः ॥ १०

यदा तेनाभ्यनुज्ञातः स्तुतो वै स तदा मया ।
अनादिनिधनस्याहं जगद्योनेर्महात्मनः ॥ ११

नाम्नां कञ्चित् समुद्देशं वक्ष्याम्यव्यक्तयोनिनः ।
वरदस्य वरेण्यस्य विश्वरूपस्य धीमतः ॥ १२

शृणु नाम्नां चयं कृष्ण यदुक्तं पद्मयोनिना ।
दशनामसहस्राणि यान्याह प्रपितामहः ॥ १३

तानि निर्मथ्य मनसा दध्नो घृतमिवोद्धृतम् ।
गिरेः सारं यथा हेम पुष्पसारं यथा मधु ॥ १४

घृतात् सारं यथा मण्डस्तथैतत् सारमुद्धृतम् ।
सर्वपापापहमिदं चतुर्वेदसमन्वितम् ॥ १५

प्रयत्नेनाधिगन्तव्यं धार्यं च प्रयतात्मना ।
माङ्गल्यं पौष्टिकं चैव रक्षोघ्नं पावनं महत् ॥ १६

इदं भक्ताय दातव्यं श्रद्दधानास्तिकाय च ।
नाश्रद्दधानरूपाय नास्तिकायाजितात्मने ॥ १७

यश्चाभ्यसूयते देवं कारणात्मानमीश्वरम् ।
स कृष्ण नरकं याति सह पूर्वैः सहात्मजैः ॥ १८

इदं ध्यानमिदं योगमिदं ध्येयमनुत्तमम् ।
इदं जप्यमिदं ज्ञानं रहस्यमिदमुत्तमम् ॥ १९

यं ज्ञात्वा अन्तकालेऽपि गच्छेत परमां गतिम् ।
पवित्रं मङ्गलं मेध्यं कल्याणमिदमुत्तमम् ॥ २०

इदं ब्रह्मा पुरा कृत्वा सर्वलोकपितामहः ।
सर्वस्तवानां राजत्वे दिव्यानां समकल्पयत् ॥ २१

तदाप्रभृति चैवायमीश्वरस्य महात्मनः ।
स्तवराज इति ख्यातो जगत्यमरपूजितः ॥ २२

ब्रह्मलोकादयं स्वर्गे स्तवराजोऽवतारितः ।
यतस्तण्डिः पुरा प्राप तेन तण्डिकृतोऽभवत् ॥ २३

स्वर्गाच्चैवात्र भूर्लोकं तण्डिना ह्यवतारितः ।
सर्वमङ्गलमाङ्गल्यं सर्वपापप्रणाशनम् ॥ २४

निगदिष्ये महाबाहो स्तवानामुत्तमं स्तवम् ।
ब्रह्मणामपि यद्ब्रह्म पराणामपि यत् परम् ॥ २५

तेजसामपि यत् तेजस्तपसामपि यत् तपः ।
शान्तानामपि यः शान्तो द्युतीनामपि या द्युतिः ॥ २६

दान्तानामपि यो दान्तो धीमतामपि या च धीः ।
देवानामपि यो देव ऋषीणामपि यस्त्वृषिः ॥ २७

यज्ञानामपि यो यज्ञः शिवानामपि यः शिवः ।
रुद्राणामपि यो रुद्रः प्रभा प्रभवतामपि ॥ २८

योगिनामपि यो योगी कारणानां च कारणम् ।
यतो लोकाः सम्भवन्ति न भवन्ति यतः पुनः ॥ २९

[1]सर्वभूतात्मभूतस्य हरस्यामिततेजसः ।
अष्टोत्तरसहस्रं तु नाम्नां शर्वस्य मे शृणु ।
यच्छ्रुत्वा मनुजव्याघ्र सर्वान् कामानवाप्स्यसि ॥ ३०

स्थिरः स्थाणुः प्रभुर्भीमः [2]प्रवरो वरदो वरः ।
सर्वात्मा सर्वविख्यातः सर्वः सर्वकरो भवः ॥ ३१

जटी चर्मी शिखण्डी च सर्वाङ्गः सर्वभावनः ।
हरश्च हरिणाक्षश्च सर्वभूतहरः प्रभुः ॥ ३२

---

1. इत आरभ्य आन्तं आकाशभैरवतन्त्रे श्रीशरभसहस्रनाम स्तोत्रमिति प्रथते
2. प्रभवो

प्रवृत्तिश्च निवृत्तिश्च नियतः शाश्वतो ध्रुवः ।
श्मशानवासी भगवान् खचरो गोचरोऽर्दनः ॥ ३३

अभिवाद्यो महाकर्मा तपस्वी भूतभावनः ।
उन्मत्तवेषप्रच्छन्नः सर्वलोकप्रजापतिः ॥ ३४

महारूपो महाकायो वृषरूपो महायशाः ।
महात्मा सर्वभूतात्मा विश्वरूपो महाहनुः ॥ ३५

लोकपालोऽन्तर्हितात्मा प्रसादो हयगर्दभिः ।
पवित्रं च महांश्चैव नियमो नियमाश्रितः ॥ ३६

सर्वकर्मा स्वयम्भूत आदिरादिकरो [1]निधिः ।
सहस्राक्षो विशालाक्षः[2] सोमो नक्षत्रसाधकः ॥ ३७

चन्द्रः सूर्यः शनिः केतुर्ग्रहो ग्रहपतिर्वरः ।
अत्रिरत्र्या नमस्कर्ता मृगबाणार्पणोऽनघः ॥ ३८

महातपा घोरतपा [3]अदीनो दीनसाधकः ।
संवत्सरकरो मन्त्रः [4]प्रमाणं परमं तपः ॥ ३९

योगी योज्यो महाबीजो महारेता महाबल[5]ः ।
सुवर्णरेताः सर्वज्ञः सुबीजो बीज[6]वाहनः ॥ ४०

दशबाहुस्त्वनिमिषो नीलकण्ठ उमापतिः ।
विश्वरूपः स्वयं श्रेष्ठो बलवीरो[7]ऽबलो गणः ॥ ४१

गणकर्ता गणपतिर्दिग्वासाः काम एव च ।
मन्त्रवित् परमो मन्त्रः सर्वभावकरो हरः ॥ ४२

कमण्डलुधरो धन्वी बाणहस्तः कपालवान् ।
अशनी शतघ्नी खड्गी पट्टिशी चायुधी महान् ॥ ४३

---

1. आदिसृष्टिकरो 2. विरूपाक्षाः 3. दीर्घतपाः, 4. मन्त्री, 5.महातपाः, 6.वृषवाहनः, 7. बलिर्वैरोचनो

स्रुव[1]हस्तः सुरूपश्च तेजस्तेजस्करो निधिः ।
उष्णीषी च सुवक्त्रश्च उदग्रो विनतस्तथा ॥ ४४

दीर्घश्च हरिकेशश्च सुतीर्थः कृष्ण एव च ।
शृगालरूपः सिद्धार्थो मुण्डः सर्वशुभङ्करः ॥ ४५

अजश्च बहुरूपश्च गन्धधारी कपर्द्यपि ।
ऊर्ध्वरेता ऊर्ध्वलिङ्ग ऊर्ध्वशायी नभःस्थलः ॥ ४६

त्रिजटी चीरवासाश्च रुद्रः सेनापतिर्विभुः ।
अहश्चरो नक्तंचरस्तिग्ममन्युः सुवर्चसः ॥ ४७

गजहा दैत्यहा कालो लोकधाता गुणाकरः ।
सिंहशार्दूलरूपश्च आर्द्रचर्माम्बरावृतः ॥ ४८

कालयोगी महानादः सर्वकामचतुष्पथः ।
निशाचरः प्रेतचारी भूतचारी महेश्वरः ॥ ४९

बहुभूतो बहुधरः स्वर्भानुरमितो गतिः[2] ।
नृत्यप्रियो नित्यन[3]र्तो नर्तकः सर्वलालसः ॥ ५०

घोरो महातपाः पाशो नित्यो गिरिरुहो[4] नभः ।
सहस्रहस्तो विजयो व्यवसायो ह्यतन्द्रि[5]तः ॥ ५१

अध[6]र्षणो धर्षणात्मा यज्ञहा कामनाशकः ।
दक्षयागापहारी च सुस[7]हो मध्यमस्तथा ॥ ५२

तेजोऽपहारी बलहा मुदितार्थोऽजितोऽवरः ।
गम्भीरघोषो गम्भीरो गम्भीरबलवाहनः ॥ ५३

न्यग्रोधरूपो न्यग्रोधो वृक्षकर्णस्थितिर्विभुः ।
सुतीक्ष्णदशनश्चैव महाकायो महाननः ॥ ५४

---

1. श्रुतिहस्तः 2. सर्वाधारो मनोगतिः 3. नित्यतृप्तो 4. गिरिचरो 5. ह्यनिन्दितः 6. अमर्षणो महामर्षो 7. सुखदो

विष्वक्सेनो हविर्यज्ञः संयुगापीडवाहनः ।
तीक्ष्णतापश्च हर्यश्वसहायः कर्मकालवित् ॥ ५५

विष्णुप्रसादितो यज्ञः समुद्रो वडवामुखः ।
हुताशनसहायश्च प्रशान्तात्मा हुताशनः ॥ ५६

उग्रतेजा महातेजा जन्यो विजयकालवित् ।
ज्योतिषामयनं सिद्धिः सर्वविग्रह एव च ॥ ५७

शिखी मुण्डी[1] जटी ज्वाली मूर्तिजो मूर्धगो[2] बली ।
वेणवी पणवी ताली खली कालकटङ्कटः ॥ ५८

नक्षत्रविग्रहमतिर्गुणबुद्धिलयोऽगमः ।
प्रजापतिर्विश्वबाहुर्विभागः सर्वतोमुखः ॥ ५९

विमोचनः सुसरणो हिरण्यकवचोद्भवः ।
मेढ्रजो बलचारी च महीचारिसुतस्तथा ॥ ६०

सर्वतूर्यनिनादी च सर्वातोद्यपरिग्रहः ।
व्यालरूपो गुहावासी गुहामाली[3] तरङ्गवित् ॥ ६१

त्रिदशस्त्रिकालधृक् कर्मसर्वबन्धविमोचनः ।
बन्धनस्त्वसुरेन्द्राणां युधिशत्रुविनाशनः ॥ ६२

सांख्यप्रसादो दुर्वासाः सर्वसाधुनिषेवितः ।
प्रस्कन्दनो विभागज्ञोऽतुल्यो यज्ञविभागवित् ॥ ६३

सर्ववासः सर्वचारी दुर्वासा वासवोऽमरः[4] ।
हैमो हेमकरोऽयज्ञः सर्वधा[5]री धरोत्तमः ॥ ६४

लोहिताक्षो महाक्षश्च[6] विजयाक्षो विशारदः ।
संग्रहो निग्रहः कर्ता सर्पचीरनिवासनः ॥ ६५

1. दण्डी, 2. मृत्युजिद् दुर्धरो, 3. हेममाली 4. वाङ्मनोभवः,
5. सर्ववीरो, 6. महोक्षश्च

मुख्यामुख्यश्च देहश्च काहलिः सर्वकामदः ।
सर्वकालप्रसादश्च सुबलो बलरूपधृक् ॥ ६६

सर्वकामवरश्चैव सर्वदः सर्वतोमुखः ।
आकाशनिधिरूपश्च निपाती ह्यवशः खगः ॥ ६७

रौद्ररूपोऽसुरादित्यो बहुरश्मिः सुवर्चसी ।
वसुवेगो महावेगो मनोवेगो[1] निशाचरः ॥ ६८

सर्ववासी श्रियावासी उपदेशकरोऽकरः ।
मुनिरात्मनिरालोकः सम्भग्नश्च सहस्रदः ॥ ६९

पक्षी च पक्षरूपश्च अतिदीप्तो विशाम्पतिः ।
उन्मादो मदनः कामो ह्यश्वत्थोऽर्थकरो यशः ॥ ७०

वामदेवश्च वामश्च प्राग्दक्षिणश्च वामनः ।
सिद्धयोगी महर्षिश्च सिद्धार्थः सिद्धसाधकः ॥ ७१

भिक्षुश्च भिक्षुरूपश्च विपणो मृदुरव्ययः ।
महासेनो विशाखश्च षष्टिभागो[2] गवां पतिः ॥ ७२

वज्रहस्तश्च विष्कम्भी चमूस्तम्भन एव च ।
वृत्तावृत्तकरस्तालो मधुर्मधुकलोचनः ॥ ७३

वाचस्पत्यो वाजसनो नित्यमाश्रमपूजितः ।
ब्रह्मचारी लोकचारी सर्वचारी विचारवित् ॥ ७४

ईशान ईश्वरः कालो निशाचारी पिनाकवान् ।
निमित्तस्थो निमित्तं च नन्दिनन्दि[3]करो हरिः ॥ ७५

नन्दीश्वरश्च नन्दी च नन्दनो नन्दिवर्द्धनः ।
भगहारी निहन्ता च कालो ब्रह्मा पितामहः ॥ ७६

1. महायक्षो 2. वृष्टिभोगो, 3. नादकरो.

चतुर्मुखो महालिङ्गश्चारुलिङ्गस्तथैव च ।
लिङ्गाध्यक्षः सुराध्यक्षो योगाध्यक्षो युगावहः ॥ ७७

बीजाध्यक्षो बीजकर्ता अध्यात्मानुगतो बलः ।
इतिहासः सकल्पश्च गौतमोऽथ निशाकरः ॥ ७८

दम्भो ह्यदम्भो वैदम्भो वश्यो वशकरः कलिः ।
लोककर्ता पशुपतिर्महाकर्ता ह्यनौषधः ॥ ७९

अक्षरं परमं ब्रह्म बलवच्छक्र एव च ।
नीतिर्ह्यनीतिः शुद्धात्मा शुद्धो मान्यगतागतः ॥ ८०

बहुप्रसादः सुस्वप्नो दर्पणोऽथ त्वमित्रजित् ।
वेदकारो मन्त्रकारो विद्वान् समरमर्दनः ॥ ८१

महामेघनिवासी च महाघोरो वशीकरः ।
अग्निज्वालो महाज्वालो अतिधूम्रो हुतो हविः ॥ ८२

वृषणः शङ्करो नित्यं वर्चस्वी धूमके[1]तनः ।
नीलस्तथाङ्गलुब्धश्च शोभनो निरवग्रहः ॥ ८३

स्वस्तिदः स्वस्तिभावश्च भागी भागकरो[2] लघुः ।
उत्सङ्गश्च महाङ्गश्च [3]महागर्भपरायणः ॥ ८४

कृष्णवर्णः सुवर्णश्च इन्द्रियं सर्वदेहिनाम् ।
महापादो महाहस्तो महाकायो महायशाः ॥ ८५

महामूर्धा महामात्रो महानेत्रो निशालयः ।
महान्तको महाकर्णो महोष्ठश्च महाहनुः॥ ८६

महानासो महाकम्बुर्महाग्रीवः श्मशानभाक् ।
महावक्षा महोरस्को ह्यन्तरात्मा मृगालयः ॥ ८७

---

1. धूम्रलोचनः, 2. भोगी भोगकरो, 3. महाभोग

लम्बनो लम्बितोष्ठश्च महामायः पयोनिधिः ।
महादन्तो महादंष्ट्रो महाजिह्वो महामुख[1]ः ॥ ८८

महानखो महारोमा महाकोशो महाजटः ।
प्रसन्नश्च प्रसादश्च प्रत्ययो गिरिसाधनः ॥ ८९

स्नेहनोऽस्नेहनश्चैव[2] अजितश्च महामुनिः ।
वृक्षाकारो वृक्षकेतुरनलो वायुवाहनः ॥ ९०

गण्डली मेरुधामा च देवाधिपतिरेव च ।
अथर्वशीर्षः सामास्य ऋक्सहस्रामितेक्षणः ॥ ९१

यजुःपादभुजो गुह्यः प्रकाशो जङ्गमस्तथा ।
अमोघार्थ प्रसादश्च अभिगम्यः सुदर्शनः ॥ ९२

उपकारःप्रियः सर्वकनकः काञ्चनच्छविः ।
नाभिनन्दिकरो भावः पुष्करस्थपतिः स्थिरः ॥ ९३

द्वादशस्त्रासनश्चाद्यो यज्ञो यज्ञसमाहितः ।
नक्तं कलिश्च कालश्च मकरः कालपूजितः ॥ ९४

सगणो गणकारश्च भूतवाहनसारथिः ।
भस्मशायी भस्मगोप्ता भस्मभूतस्तमोगुणः ॥ ९५

लोकपालस्तथा लोको महात्मा सर्वपूजितः ।
शुक्लस्त्रिशुक्लः सम्पन्नः शुचिर्भूतनिषेवितः ॥ ९६

आश्रमस्थः क्रियावस्थो विश्वकर्ममतिर्वरः ।
विशालशाखस्ताम्रोष्ठो ह्यम्बुजालः सुनिश्चलः ॥ ९७

कपिलः कपिशः शुक्ल आयुश्चैव परोऽपरः ।
गन्धर्वो ह्यदितिस्तार्क्ष्यः सुविज्ञेयः सुशारदः ॥ ९८

1. महाजरः 2. स्नेहनोऽतिशुभस्नेहः

परश्वधायुधो देवः अनुका[1]री सुबान्धवः ।
तुम्बवीणो महाक्रोध ऊर्ध्वरेता जलेशयः ॥ ९९

उग्रो वंशकरो वंशो वंशनादो ह्यनिन्दितः ।
सर्वाङ्गरूपो मायावी सुहृदो ह्यनिलोऽनलः ॥ १००

बन्धनो बन्धकर्ता च सुबन्धनविमोचनः ।
सयज्ञारिः सकामारिर्महादंष्ट्रो महायुधः॥ १०१

बहुधा निन्दितः शर्वः शङ्करः शङ्करोऽधनः ।
अमरेशो महादेवो विश्वदेवः सुरारिहा ॥ १०२

अहिर्बुध्न्योऽनिलाभश्च चेकितानो[2] हविस्तथा ।
अजैकपाच्च कापाली त्रिशङ्कुरजितः शिवः ॥ १०३

धन्वन्तरिर्धूमकेतुः स्कन्दो वैश्रवणस्तथा ।
धाता शक्रश्च विष्णुश्च मित्रस्त्वष्टा ध्रुवो धरः ॥ १०४

प्रभावः सर्वगो वायुरर्यमा सविता रविः ।
उषङ्गुश्च विधाता च मान्धाता भूतभावनः ॥ १०५

विभुर्वर्णविभावी च[3] सर्वकाम[4]गुणावहः ।
पद्मनाभो[5] महागर्भश्चन्द्रवक्त्रोनिलोऽनलः ॥ १०६

बलवांश्चोपशान्तश्च पुराणः पुण्यचञ्चुरी ।
कुरुकर्ता कुरुवा[6]सी कुरुभूतो गुणौषधः[7] ॥ १०७

सर्वाशयो दर्भचारी सर्वेषां प्राणिनां पतिः ।
देवदेवः सुखासक्तः सदसत्सर्वरत्नवित् ॥ १०८

कैलासगिरिवासी च हिमवद्गिरिसंश्रयः ।
कूलहारी कूलकर्ता बहुविद्यो बहुप्रदः ॥ १०९

1. अन्धकारिः 2. चकिताक्षो हरिस्तथा, 3. रतिस्तीर्थश्च वाग्मी च, 4. सर्वकर्म, 5. पद्मवक्त्रो, 6. कालरूपी, 7. महेश्वरः

वणिजो वर्धकी वृक्षो बहुलश्चन्दनश्छदः ।
सारग्रीवो महाजत्रुरलोलश्च महौषधः ॥ ११०

सिद्धार्थकारी सिद्धार्थश्छन्दो व्याकरणोत्तरः ।
सिंहनादः सिंहदंष्ट्रः सिंहगः सिंहवाहनः ॥ १११

प्रभावात्मा जगत्कालस्थालो[1] लोकहितस्तरुः ।
सारङ्गो नवचक्राङ्गः केतुमाली सभावनः ॥ ११२

भूतालयो भूतपति रहोरात्र मनिन्दि तः । ११३

वाहिता सर्वभूतानां निलयश्च विभुर्भवः ।
अमोघः संयतो ह्यश्वो भोजनः[2] प्राण[3]धारणः ॥ ११४

धृतिमान् मतिमान् दक्षः सत्कृतश्च युगाधिपः ।
गोपालि[4]र्गोपतिर्ग्रामो गोचर्मवसनो हरिः॥ ११५

हिरण्यबाहुश्च तथा गुहापालः[5] प्रवेशिनाम् ।
प्रकृष्टारिर्महाहर्षो जितकामो जितेन्द्रियः ॥ ११६

गान्धारश्च सुवारश्च तपःसक्तो रतिर्नरः ।
महागीतो महानृत्यो ह्यप्सरोगणसेवितः[6] ॥ ११७

[7]महाकेतुर्महाधातुर्नैकसानुचरश्चलः ।
आवेदनीय आदेशः सर्वगन्धसुखावहः ॥ ११८

तोरणस्तारणो वातः परिधिः पतिखेचरः ।
संयोगो वर्धनो वृद्धो महावृद्धो गुणाधिकः[8]॥ ११९

नित्य[9] आत्मसहायश्च देवासुरपतिः पतिः ।
युक्तश्च[10] युक्तबाहुश्च देवो दिविसुपर्वणः ॥ १२०

1. स्तालो 2. याजनः, 3. प्राण हारकः, 4. गोपालो गोपतिर्गोप्ता 5. गुह्यकालः प्रवेशकः 6. महाब्रह्माह्यप्सरो गणसेवितः, 7. महाकेतुः कर्मधाता, 8. गणाधिपः, 9. नित्योधर्मसहायश्च, 10. अयुक्तो,

आषाढश्च सुषाढ[1]श्च ध्रुवोऽथ हरिणो हरः[2] ।
वपुरावर्तमानेभ्यो[3] वसुश्रेष्ठो महापथः ॥ १२१

शिरोहारी विमर्शश्च सर्वलक्षणलक्षितः ।
[4]अक्षश्च रथयोगी च सर्वयोगी महाबलः ॥ १२२

समाम्नायोऽसमाम्नायस्तीर्थदेवो महारथः ।
निर्जीवो[5] जीवनो मन्त्रः शुभाक्षो बहुकर्कशः ॥ १२३

रत्नप्रभूतो रत्नाङ्गो महार्णवनिपानवित्[6] ।
मूलं विशालो[7] ह्यमृतो व्यक्तोऽव्यक्तस्तपोनिधिः[8] ॥ १२४

आरोहणोऽधिरोहश्च शीलधारी महायशाः ।
सेनाकल्पो महाकल्पो योगो युगकरो हरिः ॥ १२५

युगरूपो महारूपो महानागहनोऽवधः[9] ।
न्यायनिर्वापणः पा[10]दः पण्डितो ह्यचलोपमः ॥ १२६

बहुमालो महामालः शशी हरसुलोचनः ।
विस्तारो लवणः कूपस्त्रियुगः सफलोदयः ॥ १२७

त्रिलोचनो विषण्णाङ्गो मणिविद्धो जटाधरः ।
बि[11]न्दुर्विसर्गः सुमुखः शरः सर्वायुधः सहः ॥ १२८

निवेदनः सुखाजातः सुगान्धारो महाधनुः ।
गन्धपाली च भगवानुत्थानः सर्वकर्मणाम् ॥ १२९

मन्थानो बहुलो वायुः सकलः सर्वलोचनः ।
तत[12]स्तालः करस्थाली ऊर्ध्वसंहननो महान् ॥ १३०

---

*1.* सुखाध्यक्ष, *2.* हरिहयो हरिः, *3.* वसुरावर्तनो नित्यो, *4.* अक्षरश्चाक्षयो योगी *5.* निर्बीजो, *6.* निनादकृत्, *7.* विशाखो, *8.* सनातनः, *9.* पवनो, गहनो नगः, *10.* नादः, *11.* इन्द्रो विसर्गः *12.* निवेशनः सुधन्वा च पूगगन्धो महाहनुः । *13.* रुद्रस्तालीकरस्ताली ।

छ[1]त्रं सुच्छत्रो विख्यातो लोकः सर्वाश्रयः क्रमः ।
मुण्डो विरूपो विकृतो दण्डी कुण्डी विकुण्डलः ॥ १३१

हर्यक्षः ककुभो वज्री शतजिह्वः सहस्रपात् ।
सहस्रमूर्धा देवेन्द्रः सर्वदेवमयो गुरुः ॥ १३२

सहस्रबाहुः सर्वाङ्गः शरण्यः सर्वलोककृत् ।
पवित्रं त्रिककुन्मन्त्रः कनिष्ठः कृष्णपिङ्गलः ॥ १३३

ब्रह्मदण्डविनिर्माता शतघ्नीपाशशक्तिमान्[2] ।
पद्मगर्भो महागर्भो ब्रह्मगर्भो जलोद्भवः ॥ १३४

गभस्तिर्ब्रह्मकृद् ब्रह्मी ब्रह्मविद् ब्राह्मणो गतिः ।
अनन्तरूपो नैकात्मा तिग्मतेजाः स्वयम्भुवः ॥ १३५

ऊर्ध्वगात्मा पशुपतिर्वातरंहा मनोजवः ।
चन्दनी पद्मनालाग्रः सुरभ्युत्तरणो नरः ॥ १३६

कर्णिकारमहास्रग्वी नीलमौलिः पिनाकधृत् ।
उमापतिरुमाकान्तो जाह्नवीधृदुमाधवः॥ १३७

वरो वराहो वरदो वरेण्यः सुमहास्वनः ।
महाप्रसादो दमनः शत्रुहा श्वेतपिङ्गलः ॥ १३८

पूतात्मा परमात्मा च प्रयतात्मा प्रधानधृत् ।
सर्वपार्श्वमुखस्त्र्यक्षो धर्मसाधारणो वरः ॥ १३९

चराचरात्मा सूक्ष्मात्मा अमृतो गोवृषेश्वरः ।
साध्यर्षिर्वसुरादित्यो विवस्वान् सवितामृतः ॥ १४०

व्यासः सर्गः सुसंक्षेपो विस्तरः पर्ययो नरः ।
ऋतुः संवत्सरो मासः पक्षः संख्यासमापनः ॥ १४१

1. छत्रपद्मः सुविख्यातः 2. सर्वलोकाश्रयो महान् ।

कला काष्ठा लवो मात्रा मुहूर्तोऽहः क्षपा क्षणः ।
विश्वक्षेत्रं प्रजाबीजं लिङ्गमाद्यस्तु निर्गमः ॥ १४२

सदसद्व्यक्तमव्यक्तं पिता माता पितामहः ।
स्वर्गद्वारं प्रजाद्वारं मोक्षद्वारं त्रिविष्टपम् ॥ १४३

निर्वाणं ह्लादनश्चैव ब्रह्मलोकः परा गतिः।
देवासुरविनिर्माता देवासुरपरायणः ॥ १४४

देवासुरगुरुर्देवो देवासुरनमस्कृतः ।
देवासुरमहामात्रो देवासुरगणाश्रयः ॥ १४५

देवासुरगणाध्यक्षो देवासुरगणाग्रणीः ।
देवातिदेवो देवर्षिर्देवासुरवरप्रदः ॥ १४६

देवासुरेश्वरो विश्वो देवासुरमहेश्वरः ।
सर्वदेवमयोऽचिन्त्यो देवतात्माऽऽत्मसम्भवः ॥ १४७

उद्भित् त्रिविक्रमो वैद्यो विरजो नीरजोऽमरः ।
ईड्यो हस्तीश्वरो व्याघ्रो देवसिंहो नरर्षभः ॥ १४८

विबुधोऽग्रवरः सूक्ष्मः सर्वदेवस्तपोमयः ।
सुयुक्तः शोभनो वज्री प्रासा[1]नां प्रभवोऽव्ययः ॥ १४९

गुहः कान्तो निजः सर्गः पवित्रं सर्वपावनः ।
शृङ्गी शृङ्गप्रियो बभ्रू राजराजो निरामयः ॥ १५०

अभिरामः सुर[2]गणो विरामः सर्वसाधनः ।
ललाटाक्षो विश्वदेवो हरिणो ब्रह्मवर्चसः ॥ १५१

स्थावराणां पतिश्चैव नियमेन्द्रियवर्धनः ।
सिद्धार्थः सिद्धभूतार्थोऽचिन्त्यः सत्यव्रतः शुचिः ॥ १५२

1. ईशानः प्रभुरव्ययः, 2. सुशरणो

व्रताधिपः परं ब्रह्म भक्तानां परमा गतिः ।
विमुक्तो मुक्ततेजाश्च श्रीमाञ्श्रीवर्धनो जगत् ॥ १५३

यथाप्रधानं भगवानिति भक्त्या स्तुतो मया ।
यन्न ब्रह्मादयो देवा विदुस्तत्त्वेन नर्षयः ॥ १५४

स्तोतव्यमर्च्यं वन्द्यं च कः स्तोष्यति जगत्पतिम् ।
भक्त्या त्वेवं पुरस्कृत्य मया यज्ञपतिर्विभुः ॥ १५५

ततोऽभ्यनुज्ञां सम्प्राप्य स्तुतो मतिमतां वरः ।
शिवमेभिः स्तुवन् देवं नामभिः पुष्टिवर्धनैः ॥ १५६

नित्ययुक्तः शुचिर्भक्तः प्राप्नोत्यात्मानमात्मना ॥ १५७

एतद्धि परमं ब्रह्म परं ब्रह्माधिगच्छति ।
ऋषयश्चैव देवाश्च स्तुवन्त्येतेन तत्परम् ॥ १५८

स्तूयमानो महादेवस्तुष्यते नियतात्मभिः ।
भक्तानुकम्पी भगवानात्मसंस्थाकरो विभुः ॥ १५९

तथैव च मनुष्येषु ये मनुष्याः प्रधानतः ।
आस्तिकाः श्रद्दधानाश्च बहुभिर्जन्मभिः स्तवैः ॥ १६०

भक्त्या ह्यनन्यमीशानं परं देवं सनातनम् ।
कर्मणा मनसा वाचा भावेनामिततेजसः ॥ १६१

शयाना जाग्रमाणाश्च व्रजन्नुपविशंस्तथा ।
उन्मिषन् निमिषंश्चैव चिन्तयन्तः पुनः पुनः ॥ १६२

शृण्वन्तः श्रावयन्तश्च कथयन्तश्च ते भवम् ।
स्तुवन्तः स्तूयमानाश्च तुष्यन्ति च रमन्ति च ॥ १६३

जन्मकोटिसहस्रेषु नानासंसारयोनिषु ।
जन्तोर्विगतपापस्य भवे भक्तिः प्रजायते ॥ १६४

उत्पन्ना च भवे भक्तिरनन्या सर्वभावतः ।
भाविनः कारणे चास्य सर्वयुक्तस्य सर्वथा ॥ १६५

एतद् देवेषु दुष्प्रापं मनुष्येषु न लभ्यते ।
निर्विघ्ना निश्चला रुद्रे भक्तिरव्यभिचारिणी ॥ १६६

तस्यैव च प्रसादेन भक्तिरुत्पद्यते नृणाम् ।
येन यान्ति परां सिद्धिं तद्भावगतचेतसः ॥ १६७

ये सर्वभावानुगताः प्रपद्यन्ते महेश्वरम् ।
प्रपन्नवत्सलो देवः संसारात् तान् समुद्धरेत् ॥ १६८

एवमन्ये विकुर्वन्ति देवाः संसारमोचनम् ।
मनुष्याणामृते देवं नान्या शक्तिस्तपोबलम् ॥ १६९

इति तेनेन्द्रकल्पेन भगवान् सदसत्पतिः ।
कृत्तिवासाः स्तुतः कृष्ण तण्डिना शुभबुद्धिना ॥ १७०

स्तवमेतं भगवतो ब्रह्मा स्वयमधारयत् ।
गीयते च स बुद्ध्येत ब्रह्मा शङ्करसंनिधौ ॥ १७१

इदं पुण्यं पवित्रं च सर्वदा पापनाशनम् ।
योगदं मोक्षदं चैव स्वर्गदं तोषदं तथा ॥ १७२

एवमेतत् पठन्ते य एकभक्त्या तु शङ्करम् ।
या गतिः सांख्ययोगानां व्रजन्त्येतां गतिं तदा ॥ १७३

स्तवमेतं प्रयत्नेन ब्रह्मणो हृदि संस्थितम् ।
ब्रह्मा प्रोवाच शक्राय शक्रः प्रोवाच मृत्यवे ॥ १७५

मृत्युः प्रोवाच रुद्रेभ्यो रुद्रेभ्यस्तण्डिमागमत् ।
महता तपसा प्राप्तस्तण्डिना ब्रह्मसद्मनि ॥ १७६

तण्डिः प्रोवाच शुक्राय गौतमाय च भार्गवः ।
वैवस्वताय मनवे गौतमः प्राह माधव ॥ १७७

नारायणाय साध्याय समाधिष्ठाय धीमते ।
यमाय प्राह भगवान् साध्यो नारायणोऽच्युतः ॥ १७८

नाचिकेताय भगवानाह वैवस्वतो यमः ।
मार्कण्डेयाय वार्ष्णेय नाचिकेतोऽभ्यभाषत ॥ १७९

मार्कण्डेयान्मया प्राप्तो नियमेन जनार्दन ।
तवाप्यहममित्रघ्न स्तवं दद्यां ह्यविश्रुतम् ॥ १८०

स्वर्ग्यमारोग्यमायुष्यं धन्यं वेदेन सम्मितम् ।

नास्य विघ्नं विकुर्वन्ति दानवा यक्षराक्षसाः ।
पिशाचा यातुधाना वा गुह्यका भुजगा अपि ॥ १८१

यः पठेत् शुचिः पार्थ ब्रह्मचारी जितेन्द्रियः ।
अभग्नयोगो वर्षं तु सोऽश्वमेधफलं लभेत् ॥ १८२

*इति श्रीमहाभारते अनुशासनपर्वणि शिवसहस्रनामस्तोत्रं सम्पूर्णम् ॥*

* * *

# [१]श्री शिवसहस्रनामावलिः (२)

ओं स्थिराय नमः । स्थाणवे । प्रभवे । भीमाय । प्रवराय । वरदाय । वराय । सर्वात्मने । सर्वविख्याताय । सर्वाय । सर्वकराय । भवाय । जटिने । चर्मिणे । शिखण्डिने । सर्वाङ्गाय । सर्वभावनाय । हराय । हरिणाक्षाय । सर्वभूतहराय नमः । (२०)

प्रभवे नमः । प्रवृत्तये । निवृत्तये । नियताय । शाश्वताय । ध्रुवाय । श्मशानवासिने । भगवते । खचराय । गोचराय । अर्दनाय ।

---

१. इयमेव शरभसहस्रनामावलिः आकाशभैरवतन्त्रे ।

अभिवाद्याय। महाकर्मणे। तपस्विने। भूतभावनाय। उन्मत्तवेष प्रच्छन्नाय। सर्वलोकप्रजापतये। महारूपाय। महाकायाय। वृषरूपाय नमः। (४०)

लोकपालाय नमः। अन्तर्हितात्मने। प्रसादाय। हयगर्दभिणे। पवित्राय। महते। नियमाय। यमाश्रिताय। सर्वकर्मणे। आदये। आदिकराय। निधये। सहस्राक्षाय। विशालाक्षाय। सोमाय। नक्षत्रसाधकाय। चन्द्राय। सूर्याय। शनये। केतवे नमः। (६०)

ग्रहाय नमः। ग्रहपतये। वराय। अत्रये। अत्र्या नमस्कर्त्रे। मृगबाणार्पणाय। अनघाय। महातपसे। घोरतपसे। अदीनाय। दीनसाधकाय। संवत्सरकाय। मन्त्राय। प्रमाणाय। परमाय तपसे। योगिने। योज्याय। महाबीजाय। महारेतसे। महाबलायनमः। (८०)

सुवर्णरेतसे नमः। सर्वज्ञाय। सुबीजाय। बीजवाहनाय। दशबाहवे। अनिमिषाय। नीलकण्ठाय। उमापतये। विश्वरूपाय। स्वयं श्रेष्ठाय। बलवीराय। अबलाय। गणाय। गणकर्त्रे। गणपतये। दिग्वाससे। कामाय। मन्त्रविदे। परमाय मन्त्राय। सर्वभावकराय नमः। (१००)

हराय नमः। कमण्डलुधराय। धन्विने। बाणहस्ताय। कपालवते। अशनिने। शतघ्निने। खड्गिने। पट्टिशिने। आयुधिने। महते। स्रुवहस्ताय। सुरूपाय। तेजसे। तेजस्कराय। निधये। उष्णीषिणे। सुवक्त्राय। उदग्राय। विनताय नमः॥ (१२०)

दीर्घाय नमः। हरिकेशाय। सुतीर्थाय। कृष्णाय। शृगाल रूपाय। सिद्धार्थाय। मुण्डाय। सर्वशुभङ्कराय। अजाय।

बहुरूपाय। गन्धधारिणे। कपर्दिने। ऊर्ध्वरेतसे। ऊर्ध्वलिङ्गाय। ऊर्ध्वशायिने। नभःस्थलाय। त्रिजटिने। चीरवाससे। रुद्राय। सेनापतये नमः। (१४०)

विभवे नमः। अहश्चराय। नक्तश्चराय। तिग्ममन्यवे। सुवर्चसाय। गजघ्ने। दैत्यघ्ने। कालाय। लोकधात्रे। गुणाकराय। सिंहशार्दूल रूपाय। आर्द्रचर्माम्बरावृताय। कालयोगिने। महानादाय। सर्वकामचतुष्पथाय। निशाचराय। प्रेतचारिणे। भूतचारिणे। महेश्वराय। बहुभूताय नमः। (१६०)

बहुधराय नमः। स्वर्भानवे। अमितायै गतये। नृत्यप्रियाय। नित्यनर्ताय। नर्तकाय। सर्वलालसाय। घोराय। महातपसे। पाशाय। नित्याय। गिरिरुहाय। नभसे। सहस्रहस्ताय। विजयाय। व्यवसायाय। अतन्द्रिताय। अधर्षणाय। धर्षणात्मने। यज्ञघ्ने। (१८०)

कामनाशकाय नमः। दक्षयागापहारिणे। सुसहाय। मध्यमाय। तेजोऽपहारिणे। बलघ्ने। मुदितार्थाय। अजिताय। अवराय। गम्भीरघोषाय। गम्भीराय। गम्भीरबलवाहनाय। न्यग्रोधरूपाय। न्यग्रोधाय। वृक्षकर्णस्थितये। विभवे। सुतीक्ष्णदशनाय। महाकायाय। महाननाय। विष्वक्सेनाय। २००

हविर्यज्ञाय नमः। संयुगापीडवाहनाय। तीक्ष्णतापाय। हर्यश्वसहायाय। कर्मकालविदे। विष्णुप्रसादिताय। यज्ञाय। समुद्राय। वडवामुखाय। हुताशनसहायाय। प्रशान्तात्मने। हुताशनाय। उग्रतेजसे। महातेजसे। जन्याय। विजय कालविदे। ज्योतिषामयनाय। सिद्धये। सर्वविग्रहाय। शिखिने नमः। (२२०)

मुण्डिने नमः । जटिने । ज्वालिने । मूर्तिजाय । मूर्धगाय । बलिने । वेणविने । पणविने । तालिने । खलिने । कालकटंकटाय । नक्षत्रविग्रहमतये । गुणबुद्धिलयाय । अगमाय । प्रजापतये । विश्वबाहवे । विभागाय । सर्वतोमुखाय । विमोचनाय । सुसरणाय नमः । (२४०)

हिरण्यकवचोद्भवाय । मेढ्रजाय । बलचारिणे । महीचारि सुताय । सर्वतूर्य निनादिने । सर्वातोद्यपरिग्रहाय । व्यालरूपाय । गुहावासिने । गुहामालिने । तरङ्गविदे । त्रिदशाय । त्रिकालधृते । कर्मसर्वबन्धविमोचनाय । असुरेन्द्राणां बन्धनाय । युधिशत्रु विनाशनाय । सांख्यप्रसादाय । दुर्वाससे । सर्वसाधुनिषेविताय । प्रस्कन्दनाय । विभागज्ञाय नमः । (२६०)

अतुल्याय नमः । यज्ञविभागविदे । सर्ववासाय । सर्वचारिणे । दुर्वाससे । वासवाय । अमराय । हैमाय । हेमकराय । अयज्ञाय । सर्वधारिणे । धरोत्तमाय । लोहिताक्षाय । महाक्षाय । विजयाक्षाय । विशारदाय । संग्रहाय । निग्रहाय । कर्त्रे । सर्पचीरनिवासनाय नमः । (२८०)

मुख्यामुख्याय नमः । देहाय । काहलिने । सर्वकामदाय । सर्वकालप्रसादाय । सुबलाय । बलरूपधृते । सर्वकामवराय । सर्वदाय । सर्वतोमुखाय । आकाशनिधिरूपाय । निपातिने । अवशाय । खगाय । रौद्ररूपाय । असुरादित्याय । बहुरश्मये । सुवर्चसिने । वसुवेगाय । महावेगाय नमः । (३००)

मनोवेगाय नमः । सर्ववासिने । श्रियावासिने । उपदेशकराय । अकराय । मुनये । आत्मनिरालोकाय । संभग्नाय । सहस्रदाय । पक्षिणे । पक्षरूपाय । अतिदीप्ताय । विशांपतये ।

उन्मादाय। मदनाय। कामाय। अश्वत्थाय। अर्थकराय। यशसे नमः। (३२०)

वामदेवाय नमः। वामाय। प्राग्दक्षिणाय। वामनाय। सिद्धयोगिने। महर्षये। सिद्धार्थाय। सिद्धसाधकाय। भिक्षवे। भिक्षुरूपाय। मृदवे। अव्ययाय। महासेनाय। विशाखाय। षष्टिभागाय। गवां पतये। वज्रहस्ताय। विष्कम्भिने। चमूस्तम्भनाय। वृत्तावृत्तकराय नमः। (३४०)

तालाय नमः। मधवे। मधुकलोचनाय। वाचस्पत्याय। वाजसनाय। नित्यमाश्रमपूजिताय। ब्रह्मचारिणे। लोकचारिणे। सर्वचारिणे। विचारविदे। ईशानाय। ईश्वराय। कालाय। निशाचारिणे। पिनाकवते। निमित्तस्थाय। निमित्ताय। नन्दिनन्दिकराय। हरये। नन्दीश्वराय नमः। (३६०)

नन्दिने नमः। नन्दनाय। नन्दिवर्धनाय। भगाहारिणे। निहन्त्रे। कालाय। ब्रह्मणे। पितामहाय। चतुर्मुखाय। महालिङ्गाय। चारुलिङ्गाय। लिङ्गाध्यक्षाय। सुराध्यक्षाय। योगाध्यक्षाय। युगावहाय। बीजाध्यक्षाय। बीजकर्त्रे। अध्यात्मानुगताय। बलाय। इतिहासाय नमः। (३८०)

सकल्पाय नमः। गौतमाय। निशाकराय। दम्भाय। अदम्भाय। वैदम्भाय। वश्याय। वशकराय। कलये। लोककर्त्रे। पशुपतये। महाकर्त्रे। अनौषधाय। अक्षराय। परमाय ब्रह्मणे। बलवच्छक्राय। नीतये। अनतये। शुद्धात्मने। शुद्धाय। (४००)

मान्यगतागताय नमः। बहुप्रसादाय। सुस्वप्नाय। दर्पणाय। अमित्रजिते। वेदकाराय। मन्त्रकाराय। विदुषे। समरमर्दनाय।

महामेघनिवासिने । महाघोराय । वशीकराय । अग्निज्वालाय । महाज्वालाय । अतिधूम्राय । हुताय । हविषे । वृषणाय । शङ्कराय । नित्यं वर्चस्विने । (४२०)

धूमकेतनाय नमः । नीलाय । अङ्गलुब्धाय । शोभनाय । निरवग्रहाय । स्वस्तिदाय । स्वस्तिभावाय । भागिने । भागकराय । लघवे । उत्सङ्गाय । महाङ्गाय । महागर्भपरायणाय । कृष्णवर्णाय । सुवर्णाय । सर्वदेहिनां इन्द्रियाय । महापादाय । महाहस्ताय । महाकायाय । महायशसे । ४४०

महामूर्ध्ने नमः । महामात्राय । महानेत्राय । निशालयाय । महान्तकाय । महाकर्णाय । महोष्ठाय । महाहनवे । महानासाय । महाकम्बवे । महाग्रीवाय । श्मशानभाजे । महावक्षसे । महोरस्काय । अन्तरात्मने । मृगालयाय । लम्बनाय । लम्बितोष्ठाय । महामायाय । पयोनिधये । (४६०)

महादन्ताय नमः । महादंष्ट्राय । महाजिह्वाय । महामुखाय । महानखाय । महारोम्णे । महाकोशाय । महाजटाय । प्रसन्नाय । प्रसादाय । प्रत्ययाय । गिरिसाधनाय । स्नेहनाय ।अस्नेहनाय । अजिताय । महामुनये । वृक्षाकाराय । वृक्षकेतवे । अमलाय । वायुवाहनाय नमः । (४८०)

गण्डलिने नमः । मेरुधाम्ने । देवाधिपतये । अथर्वशीर्षाय । सामास्याय । ऋक्सहस्रामितेक्षणाय । यजुःपादभुजाय । गुह्याय । प्रकाशाय । जङ्गमाय । अमोघार्थाय । प्रसादाय । अभिगम्याय । सुदर्शनाय । उपकारप्रियाय । सर्वकनकाय । काञ्चनच्छवये । नाभिनन्दिकराय भावाय । पुष्करस्थपतये । स्थिराय नमः (५००)

द्वादशाम्नासनाय । आद्याय यज्ञाय । यज्ञसमाहिताय । नक्ताय । कलये । कालाय । मकराय । कालपूजिताय । सगणाय । गणकाराय । भूतवाहन सारथये । भस्मशायिने । भस्मगोप्त्रे । भस्मभूताय । तमोगुणाय । लोकपालाय । लोकाय । महात्मने । सर्वपूजिताय । शुक्लाय नमः (५२०)

त्रिशुक्लाय नमः । संपन्नाय । शुचये । भूतनिषेविताय । आश्रमस्थाय । क्रियावस्थाय । विश्वकर्ममतये । वराय । विशालशाखाय । ताम्रोष्ठाय । अम्बुजालाय । सुनिश्चलाय । कपिलाय । कपिशाय । शुक्लाय । आयुषे । पराय । अपराय । गन्धर्वाय । अदितये । (५४०)

तार्क्ष्याय । सुविज्ञेयाय । सुशारदाय । परश्वधायुधाय । देवाय । अनुकारिणे । सुबान्धवाय । तुम्बवीणाय । महाक्रोधाय । ऊर्ध्वरेतसे । जलेशयाय । उग्राय । वंशकराय । वंशाय । वंशनादाय । अनिन्दिताय । सर्वाङ्गरूपाय । मायाविने । सुहृदाय । अनिलाय नमः (५६०)

अनलाय नमः । बन्धनाय । बन्धकर्त्रे । सुबन्धन विमोचनाय । सयज्ञारये । सकामारये । महादंष्ट्राय । महायुधाय । बहुधानिन्दिताय । शर्वाय । शङ्कराय । शङ्कराय । अधनाय । अमरेशाय । महादेवाय । विश्वदेवाय । सुरारिघ्ने । अहिर्बुध्न्याय । अनिलाभाय । चेकितानायनमः । (५८०)

हविषेनमः । अजैकपादे । कपालिने । त्रिशङ्कवे । अजिताय । शिवाय । धन्वन्तरये । धूमकेतवे । स्कन्दाय । वैश्रवणाय । धात्रे । शक्राय । विष्णवे । मित्राय । त्वष्ट्रे । ध्रुवाय । धराय । प्रभावाय । सर्वगाय । वायवे नमः (६००)

अर्यम्णे नमः। सवित्रे। रवये। उषङ्गवे। विधात्रे। मान्धात्रे। भूतभावनाय। विभवे। वर्णविभाविने। सर्वकामगुणावहाय। पद्मनाभाय। महागर्भाय। चन्द्रवक्त्राय। अनिलाय। अनलाय। बलवते। उपशान्ताय। पुराणाय। पुण्यचञ्चुरिणे। कुरुकर्त्रे नमः। (६२०)

कुरुवासिने नमः। कुरुभूताय। गुणौषधाय। सर्वाशयाय। दर्भचारिणे। सर्वेषां प्राणिनां पतये। देवदेवाय। सुखासक्ताय सते। असते। सर्वरत्नविदे। कैलासगिरिवासिने। हिमवद्गिरिसंश्रयाय। कूलहारिणे। कूलकर्त्रे। बहुविद्याय। बहुप्रदाय। वणिजाय। वर्धकिने। वृक्षाय नमः। ६४०

बकुलाय नमः। चन्दनाय। छदाय। सारग्रीवाय। महाजत्रवे। अलोलाय। महौषधाय। सिद्धार्थकारिणे। सिद्धार्थाय। छन्दसे। व्याकरणोत्तराय। सिंहनादाय। सिंहदंष्ट्राय। सिंहगाय। सिंहवाहनाय। प्रभावात्मने। जगत्कालस्थालाय[१]। लोकहिताय। तरवे। सारङ्गाय नमः। ६६०

नवचक्राङ्गाय। केतुमालिने। सभावनाय। भूतालयाय। भूतपतये। अहोरात्राय। अनिन्दिताय। वाहित्रे। सर्वभूतानां निलयाय। विभवे। भवाय। अमोघाय। संयताय। अश्वाय। भोजनाय। प्राणधारणाय। धृतिमते। मतिमते। दक्षाय। सत्कृताय नमः ६८०

युगाधिपाय नमः। गोपालिने। गोपतये। ग्रामाय। गोचर्मवसनाय। हरये। हिरण्यबाहवे। प्रवेशिनां गुहापालाय। प्रकृष्टारये। महाहर्षाय। जितकामाय। जितेन्द्रियाय। गान्धाराय। सुवासाय। तपःसक्ताय। रतये। नराय। महागीताय। महानृत्याय। अप्सरोगणसेविताय नमः (७००)

महाकेतवे नमः । महाधातवे । नैकसानुचराय । चलाय । आवेदनीयाय । आदेशाय । सर्वगन्धसुखावहाय । तोरणाय । तारणाय । वाताय । परिधये । पतिखेचराय । संयोगाय । वर्धनाय । वृद्धाय । महावृद्धाय । गुणाधिकाय । नित्याय । आत्मसहायाय । देवासुरपतये नमः । ७२०

पतये नमः । युक्ताय । युक्तबाहवे । देवाय । दिविसुपर्वणाय । आषाढाय । सुषाढाय । ध्रुवाय । हरिणाय । हराय । आवर्तमानेभ्यो वपुषे । वसुश्रेष्ठाय । महापथाय । शिरोहारिणे । विमर्शाय । सर्वलक्षणलक्षिताय । अक्षाय । रथयोगिने । सर्वयोगिने । महाबलाय नमः । (७४०)

समाम्नायाय नमः । असमाम्नायाय । तीर्थदेवाय । महारथाय । निर्जीवाय । जीवनाय । मन्त्राय । शुभाक्षाय । बहुकर्कशाय । रत्नप्रभूताय । रत्नाङ्गाय । महार्णवनिपानविदे । मूलाय । विशालाय । अमृताय । व्यक्ताय । अव्यक्ताय ।तपोनिधये । आरोहणाय । अधिरोहाय नमः । ७६०

शीलधारिणे नमः । महायशसे । सेनाकल्पाय । महाकल्पाय । योगाय । युगकराय । हरये । युगरूपाय । महारूपाय । महानागहनाय । अवधाय । न्यायनिर्वापणाय । पादाय । पण्डिताय । अचलोपमाय । बहुमालाय । महामालाय । शशिने । हरसुलोचनाय । विस्ताराय नमः (७८०)

लवणाय नमः । कूपाय । त्रियुगाय । सफलोदयाय । त्रिलोचनाय । विषण्णाङ्गाय । मणिविद्धाय । जटाधराय । बिन्दवे । विसर्गाय । सुमुखाय । शराय । सर्वायुधाय । सहाय । निवेदनाय । सुखाजाताय । सुगन्धाराय । महाधनुषे । गन्धपालिने । भगवते नमः । (८००)

सर्वकर्मणां उत्थानाय नमः। मन्थानाय। बहुलाय। वायवे। सकलाय। सर्वलोचनाय। तताय। तालाय। करस्थालिने। ऊर्ध्वसंहननाय। महते। छत्राय। सुच्छत्राय। विख्याताय। लोकाय। सर्वाश्रयाय। क्रमाय। मुण्डाय। विरूपाय। विकृताय नमः। (८२०)

दण्डिने नमः। कुण्डिने। विकुण्डलाय। हर्यक्षाय। ककुभाय। वज्रिणे। शतजिह्वाय। सहस्रपदे। सहस्रमूर्ध्ने। देवेन्द्राय। सर्वदेवमयाय। गुरवे। सहस्रबाहवे। सर्वाङ्गाय। शरण्याय। सर्वलोककृते। पवित्राय। त्रिककुन्मन्त्राय। कनिष्ठाय। कृष्णपिङ्गलाय नमः॥ ८४०

ब्रह्मदण्डविनिर्मात्रे नमः। शतघ्नीपाशशक्तिमते। पद्मगर्भाय। महागर्भाय। ब्रह्मगर्भाय। जलोद्भवाय। गभस्तये। ब्रह्मकृते। ब्रह्मिणे। ब्रह्मविदे। ब्राह्मणाय। गतये। अनन्तरूपाय। नैकात्मने। तिग्मतेजसे। स्वयंभुवाय। ऊर्ध्वगात्मने। पशुपतये। वातरंहसे। मनोजवाय नमः। (८६०)

चन्दनिने नमः। पद्मनालाग्राय। सुरभ्युत्तरणाय। नराय। कर्णिकारमहास्रग्विणे। नीलमौलये। पिनाकधृते। उमापतये। उमाकान्ताय। जाह्नवीधृते। उमाधवाय। वराय। वराहाय। वरदाय। वरेण्याय। सुमहास्तनाय। महाप्रसादाय। दमनाय। शत्रुघ्ने। श्वेतपिङ्गलाय नमः। (८८०)

पूतात्मने नमः। परमात्मने। प्रयतात्मने। प्रधानधृते। सर्वपार्श्वमुखाय। त्र्यक्षाय। धर्मसाधारणाय। वराय। चराचरात्मने। सूक्ष्मात्मने। अमृताय। गोवृषेश्वराय। साध्यर्षये। वसवे। आदित्याय। विवस्वते। सवित्रे। अमृताय। व्यासाय। सर्गाय नमः। (९००)

सुसंक्षेपाय नमः । विस्तराय । पर्ययाय । नराय । ऋतवे । संवत्सराय । मासाय । पक्षाय । संख्यासमापनाय । कलायै । काष्ठायै । लवाय । मात्रायै । मुहूर्ताय । अह्ने । क्षपायै । क्षणाय । विश्वक्षेत्राय । प्रजाबीजाय । लिङ्गाय नमः । (९२०)

आद्याय निर्गमाय नमः । सदसते । व्यक्ताव्यक्ताय । पित्रे । मात्रे । पितामहाय । स्वर्गद्वाराय । प्रजाद्वाराय । मोक्षद्वाराय । त्रिविष्टपाय । निर्वाणाय । ह्लादनाय । ब्रह्मलोकाय । परायै गतये । देवासुरविनिर्मात्रे । देवासुरपरायणाय । देवासुरगुरवे । देवाय । देवासुरनमस्कृताय । देवासुरमहामात्राय नमः । (९४०)

देवासुरगणाश्रयाय नमः । देवासुरगणाध्यक्षाय । देवासुरगणाग्रण्ये । देवातिदेवाय । देवर्षये । देवासुरवरप्रदाय । देवासुरेश्वराय । विश्वाय । देवासुरमहेश्वराय । सर्वदेवमयाय । अचिन्त्याय । देवतात्मने । आत्मसंभवाय । उद्भिदे । त्रिविक्रमाय । वैद्याय । विरजाय । नीरजाय । अमराय । ईड्याय नमः । (९६०)

हस्तीश्वराय नमः । व्याघ्राय । देवसिंहाय । नरर्षभाय । विबुधाय । अग्रवराय । सूक्ष्माय । सर्वदेवाय । तपोमयाय । सुयुक्ताय । शोभनाय । वज्रिणे । प्रासानां प्रभवाय । अव्ययाय । गुहाय । कान्ताय । निजाय । सर्गाय । पवित्राय । सर्वपावनाय नमः । (९८०)

शृङ्गिणे नमः । शृङ्गप्रियाय । बभ्रवे । राजराजाय । निरामयाय । अभिरामाय । सुरगणाय । विरामाय । सर्वसाधनाय । ललाटाक्षाय । विश्वदेवाय । हरिणाय । ब्रह्मवर्चसाय । स्थावराणां पतये । नियमेन्द्रियवर्धनाय । सिद्धार्थाय । सिद्धभूतार्थाय । अचिन्त्याय । सत्यव्रताय । शुचये नमः (१०००)

व्रताधिपाय नमः । परस्मै ब्रह्मणे । भक्तानां परमायै गतये । विमुक्ताय । मुक्ततेजसे । श्रीमते । श्रीवर्धनाय । जगते । (१००८)

## श्रीशिवसहस्रनामस्तोत्रम् ३

ऋषय ऊचुः

सूत वेदार्थतत्वज्ञ शिवध्यानपरायण।
मुक्त्युपायं वदास्मभ्यं कृपालो मुनिसत्तम ।। १

कः सेव्यः सर्वदेवेषु को वा जप्यो मनुः सदा।
स्थातव्यं कुत्र वा नित्यं किं वा सर्वार्थसाधकम् ।। २

श्री सूत उवाच—

धन्यान्मन्यामहे नूनमनन्यशरणान्मुनीन्।
वन्याशिनो वनेवासान् न्यस्तमानुष्यकल्मषान् ।। ३

भवद्भिः सर्ववेदार्थतत्वं ज्ञातमतन्द्रितैः ।
भवद्भिः सर्ववेदार्थो ज्ञात एवास्ति यद्यपि ।। ४

तथापि किञ्चिद्वक्ष्यामि यथा ज्ञातं मया तथा।
पुरा कैलासशिखरे सुखासीनं जगत्प्रभुम् ।। ५

वेदान्तवेद्यमीशानं शङ्करं लोकशङ्करम्।
विलोक्यातीव सन्तुष्टः षण्मुखः साम्बमीश्वरम् ।। ६

मत्वा कृतार्थमात्मानं प्रणिपत्य सदाशिवम्।
पप्रच्छ सर्वलोकानां मुक्त्युपायं कृताञ्जलिः ।। ७

श्रीस्कन्द उवाच—

विश्वेश्वर महादेव विष्णुब्रह्मादिवन्दित।
देवानां मानवानां च किं मोक्षस्यास्ति साधनम् ।। ८

तव नामान्यनन्तानि सन्ति यद्यपि शङ्कर।
तथापि तानि दिव्यानि न ज्ञायन्ते मयाधुना ।। ९

प्रियाणि शिवनामानि सर्वाणि शिव यद्यपि।
तथापि कानि रम्याणि तेषु प्रियतमानि ते।।

तानि सर्वार्थदान्यद्य कृपया वक्तुमर्हसि।। १०

श्री सूत उवाच—
कुमारोदीरितां वाचं सर्वलोकहितावहाम्।
श्रुत्वा प्रसन्नवदनस्तमुवाच सदाशिवः ।। ११

श्रीसदाशिव उवाच—
साधु साधु महाप्राज्ञ सम्यक्पृष्टं त्वयाऽधुना।
यदिदानीं त्वया पृष्टं तद्वक्ष्ये शृणु सादरम्।। १२

एवमेव पुरा गौर्या पृष्टः काश्यामहं तदा।
समाख्यातं मया सम्यक्सर्वेषां मोक्षसाधनम्।। १३

दिव्यान्यनन्तनामानि सन्ति तन्मध्यगं परम्।
अष्टोत्तरसहस्रं तु नाम्नां प्रियतरं मम।। १४

एकैकमेव तन्मध्ये नाम सर्वार्थसाधकम्।
मयापि नाम्नां सर्वेषां फलं वक्तुं न शक्यते।। १५

तिलाक्षतैर्बिल्वपत्रैः कमलैः कोमलैर्नवैः।
पूजयिष्यति मां भक्त्या यस्त्वेतन्नामसंख्यया।। १६

स पापेभ्यः संसृतेश्च मुच्यते नात्र संशयः।
ततो ममान्तिकं याति पुनरावृत्तिदुर्लभम्।। १७

एकैकेनैव नाम्ना मां अर्चयित्वा दृढव्रताः।
स्वेष्टं फलं प्राप्नुवन्ति सत्यमेवोच्यते मया।। १८

एतन्नामावलीं यस्तु पठन्मां प्रणमेत्सदा।
स याति मम सायुज्यं स्वेष्टं बन्धुसमन्वितः।। १९

स्पृष्ट्वा मल्लिङ्गममलं एतन्नामानि यः पठेत्।
स पातकेभ्यः सर्वेभ्यः सत्यमेव प्रमुच्यते ॥ २०

यस्त्वेतन्नामभिः सम्यक् त्रिकालं वत्सरावधि।
मामर्चयति निर्दम्भः स देवेन्द्रो भविष्यति ॥ २१

एतन्नामानुसन्धाननिरतः सर्वदाऽमुना।
मम प्रियकरस्तस्मान्निवसाम्यत्र सादरम् ॥ २२

तत्पूजया पूजितोऽहं स एवाहं मतो मम।
तस्मात् प्रियतरं स्थानमन्यन्नैव हि दृश्यते ॥ २३

हिरण्यबाहुरित्यादिनाम्नां शम्भुरहं ऋषिः।
देवताप्यहमेवात्र शक्तिर्गौरी मम प्रिया ॥ २४

महेश एव संसेव्यः सर्वैरिति हि कीलकम्।
धर्माद्यर्थाः फलं ज्ञेयं फलदायी सदाशिवः ॥ २५

न्यासः—

ॐ अस्य श्री शिवसहस्रनामस्तोत्र महामन्त्रस्य शम्भुः ऋषिः । अनुष्टुप् छन्दः। परमात्मा श्रीसदाशिवो देवता । महेश्वर इति बीजम्। गौरी शक्तिः। महेश एव संसेव्यः सर्वैरिति कीलकम्। श्री साम्बसदाशिवप्रीत्यर्थे मुख्यसहस्रनामजपे विनियोगः ।

ध्यानम्—

शान्तं पद्मासनस्थं शशिधरमकुटं पञ्चवक्त्रं त्रिणेत्रं
शूलं वज्रं च खड्गं परशुमभयदं दक्षभागे वहन्तम्।
नागं पाशं च घण्टां वरडमरुयुतं चांकुशं वामभागे
नानालङ्कारयुक्तं स्फटिकमणिनिभं पार्वतीशं नमामि ॥

। ॐ नमो भगवते रुद्राय ।

ॐ हिरण्यबाहुः सेनानीर्दिक्पतिस्तरुराट् हरः ।
हरिकेशः पशुपतिः महान् सस्पिञ्जरो मृडः ॥ १

विव्याधी बभ्लुशः श्रेष्ठः परमात्मा सनातनः ।
सर्वान्नराट् जगत्कर्ता पुष्टेशो नन्दिकेश्वरः ॥ २

आततावी महारुद्रः संसारास्त्रः सुरेश्वरः ।
उपवीतिरहन्त्यात्मा क्षेत्रेशो वननायकः ॥ ३

रोहितः स्थपतिः सूतो वाणिजो मन्त्रिरुन्नतः ।
वृक्षेशो हुतभुग्देवो भुवन्तिर्वारिवस्कृतः ॥ ४

उच्चैर्घोषो घोररूपः पत्तीशः पाशमोचकः ।
ओषधीशः पञ्चवक्त्रः कृत्स्नवीतो भयानकः ॥ ५

सहमानः स्वर्णरेताः निव्याधिर्निरुपप्लवः ।
आव्याधिनीशः ककुभो निषङ्गी स्तेनरक्षकः ॥ ६

मन्त्रात्मा तस्कराध्यक्षो वञ्चकः परिवञ्चकः ।
अरण्येशः परिचरो निचेरुः स्तायुरक्षकः ॥ ७

प्रकृन्तेशो गिरिचरः कुलुञ्चेशो गुहेष्टदः ।
भवः शर्वो नीलकण्ठः कपर्दी त्रिपुरान्तकः ॥ ८

व्युप्तकेशो गिरिशयः सहस्राक्षः सहस्रपात् ।
शिपिविष्टश्चन्द्रमौलिर्ह्रस्वो मीढुष्टमोऽनघः ॥ ९

वामनो व्यापकः शूली वर्षीयानजडोऽनणुः ।
ऊर्व्यः सूर्म्योऽग्रियः शीभ्यः प्रथमः पावकाकृतिः ॥ १०

आचारस्तारकस्तारोऽवस्वन्योऽनन्तविग्रहः ।
द्वीप्यः स्रोतस्य ईशानो धुर्यो गव्ययनो यमः ॥ ११

पूर्वजोऽपरजो ज्येष्ठः कनिष्ठो विश्वलोचनः ।
अपगल्भो मध्यमोर्म्यो जघन्यो बुध्नियः प्रभुः ॥ १२

प्रतिसर्योऽनन्तरूपः सोभ्यः याम्यो सुराश्रयः ।
खल्योर्वर्योऽभयः क्षेम्यः श्लोक्यः पथ्यो नभोऽग्रणीः ॥ १३

वन्योऽवसान्यः पूतात्मा श्रवः कक्ष्यः प्रतिश्रवः ।
आशुषेणो महासेनो महावीरो महारथः ॥ १४

शूरोऽतिघातको वर्मी वरूथी बिल्मिरुद्यतः ।
श्रुतसेनः श्रुतः साक्षी कवची वशकृद्वशी ॥ १५

आहनन्योऽनन्यनाथो दुन्दुभ्योऽरिष्टनाशकः ।
धृष्णुः प्रमृश इत्यात्मा वदान्यो वेदसम्मतः ॥ १६

तीक्ष्णेषुपाणिः प्रहितः स्वायुधः शस्त्रवित्तमः ।
सुधन्वा सुप्रसन्नात्मा विश्ववक्त्रः सदागतिः ॥ १७

स्रुत्यः पथ्यो विश्वबाहुः काट्यो नीप्यः शुचिस्मितः ।
सूद्यः सरस्यो वैशन्तो नाद्यः कूप्यो ऋषिर्मनुः ॥ १८

सर्वो वर्ष्यो वर्षरूपः कुमारः कुशलोऽमलः ।
मेघ्योऽवर्ष्योऽमोघशक्तिः विद्युत्योऽमोघविक्रमः ॥ १९

दुरासदो दुराराध्यो निर्द्वन्द्वो दुःसहर्षभः ।
ईध्रियः क्रोधशमनो जातुकर्णः पुरुष्टुतः ॥ २०

आतप्यो वायुरजरो वात्यः कात्यायनीप्रियः ।
वास्तव्यो वास्तुपो रेष्म्यो विश्वमूर्धा वसुप्रदः ॥ २१

सोमस्ताम्रोऽरुणः शङ्गो रुद्रः सुखकरः सुकृत् ।
उग्रोऽनुग्रो भीमकर्मा भीमो भीमपराक्रमः ॥ २२

अग्रेवधो हनीयात्मा हन्ता दूरेवधो वधः ।
शम्भुर्मयोभवो नित्यः शङ्करः कीर्तिसागरः ।। २३

मयस्करः शिवतरः खण्डपर्शुरजः शुचिः ।
तीर्थ्यः कूल्योऽमृताधीशः पार्योऽवार्योऽमृताकरः ।। २४

शुद्धः प्रतरणो मुख्यः शुद्धपाणिरलोलुपः ।
उच्च उत्तरणस्तार्यस्तार्यज्ञस्तार्यहृद्गतिः ।। २५

आतार्यः सारभूतात्मा सारग्राही दुरत्ययः ।
आलाद्यो मोक्षदः पथ्योऽनर्थहा सत्यसङ्गरः ।। २६

शष्प्यः फेन्यः प्रवाह्योढा सिकत्यः सैकताश्रयः ।
इरिण्यो ग्रामणीः पुण्यः शरण्यः शुद्धशासनः ।। २७

वरेण्यो यज्ञपुरुषो यज्ञेशो यज्ञनायकः ।
यज्ञकर्ता यज्ञभोक्ता यज्ञविघ्नविनाशकः ।। २८

यज्ञकर्मफलाध्यक्षो यज्ञमूर्तिरनातुरः ।
प्रपथ्यः किंशलो गेह्यो गृह्यस्तल्प्यो धनाकरः ।। २९

पुलस्त्यः क्षयणो गोष्ठ्यो गोविन्दो गीतसत्क्रियः ।
हृदय्यो हृद्यकृत् हृद्यो गह्वरेष्ठः प्रभाकरः ।। ३०

निवेष्प्यो नियतोऽयन्ता पांसव्यः सम्प्रतापनः ।
शुष्क्यो हरित्योऽपूतात्मा रजस्यः सात्विकप्रियः ।। ३१

लोप्योलप्यः पर्णशद्यः पर्ण्यः पूर्णः पुरातनः ।
भूतो भूतपतिर्भूप्यो भूधरो भूधरायुधः।। ३२

भूतसङ्घो भूतमूर्तिर्भूतहा भूतिभूषणः ।
मदनो मादको माद्यो मदहा मधुरप्रियः ।। ३३

मधुर्मधुकरः क्रूरो मधुरो मदनान्तकः ।
निरञ्जनो निराधारो निर्लुप्तो निरुपाधिकः ।। ३४

निष्प्रपञ्चो निराकारो निरीहो निरुपद्रवः ।
सत्त्वः सत्त्वगुणोपेतः सत्त्ववित् सत्त्ववित्प्रियः ।। ३५

सत्त्वनिष्ठः सत्त्वमूर्तिः सत्त्वेशः सत्त्ववित्तमः ।
समस्तजगदाधारः समस्तगुणसागरः ।। ३६

समस्तदुःखविध्वंसी समस्तानन्दकारणः ।
रुद्राक्षमालाभरणो रुद्राक्षप्रियवत्सलः ।। ३७

रुद्राक्षवक्षा रुद्राक्षरूपो रुद्राक्षपक्षकः ।
विश्वेश्वरो वीरभद्रः सम्राद् दक्षमखान्तकः ।। ३८

विघ्नेश्वरो विघ्नकर्ता गुरुर्देवशिखामणिः ।
भुजगेन्द्रलसत्कण्ठो भुजङ्गाभरणप्रियः ।। ३९

भुजङ्गविलसत्कर्णो भुजङ्गवलयावृतः ।
मुनिवन्द्यो मुनिश्रेष्ठो मुनिवृन्दनिषेवितः ।। ४०

मुनिहृत्पुण्डरीकस्थो मुनिसङ्घैकजीवनः ।
मुनिमृग्यो वेदमृग्यो मृगहस्तो मुनीश्वरः ।। ४१

मृगेन्द्र चर्मवसनो नरसिंहनिपातनः ।
मृत्युञ्जयो मृत्युमृत्युरपमृत्युविनाशकः ।। ४२

दुष्टमृत्युरदुष्टेष्टः मृत्युहा मृत्युपूजितः ।
ऊर्ध्वो हिरण्यः परमो निधनेशो धनाधिपः ।। ४३

यजुर्मूर्तिः साममूर्तिः ऋङ्मूर्तिर्मूर्तिवर्जितः ।
व्यक्तो व्यक्ततमोऽव्यक्तो व्यक्ताव्यक्तस्तमो जवी ।। ४४

लिङ्गमूर्तिरलिङ्गात्मा लिङ्गालिंगात्मविग्रहः ।
ग्रहग्रहो ग्रहाधारो ग्रहाकारो ग्रहेश्वरः ।। ४५

ग्रहकृद् ग्रहभिद् ग्राही ग्रहो ग्रहविलक्षणः ।
कल्पाकारः कल्पकर्ता कल्पलक्षणतत्परः ।। ४६

कल्पः कल्पाकृतिः कल्पनाशकः कल्पकल्पकः ।
परमात्मा प्रधानात्मा प्रधानपुरुषः शिवः ।। ४७

वेद्यो वैद्यो वेदवेद्यो वेदवेदान्तसंस्तुतः ।
वेदवक्त्रो वेदजिह्वो विजिह्वो जिह्मनाशकः ।। ४८

कल्याणरूपः कल्याणः कल्याणगुणसंश्रयः ।
भक्तकल्याणदो भक्तकामधेनुः सुराधिपः ।। ४९

पावनः पावको वामो महाकालो मदापहः ।
घोरपातकदावाग्निर्दवभस्मकणप्रियः ।। ५०

अनन्तसोमसूर्याग्निमण्डलप्रतिमप्रभः ।
जगदेकप्रभुः स्वामी जगद्वन्द्यो जगन्मयः ।। ५१

जगदानन्ददो जन्मजरामरणवर्जितः ।
खट्वांगी नीतिमान् सत्यो देवतात्माऽऽत्मसम्भवः ।। ५२

कपालमालाभरणः कपाली विष्णुवल्लभः ।
कमलासनकालाग्निः कमलासनपूजितः ।। ५३

कालाधीशस्त्रिकालज्ञो दुष्टविग्रहवारकः ।
नाट्यकर्ता नटपरो महानाट्यविशारदः ।। ५४

विराड्रूपधरो धीरो वीरो वृषभवाहनः ।
वृषाङ्को वृषभाधीशो वृषात्मा वृषभध्वजः ।। ५५

महोन्नतो महाकायो महावक्षा महाभुजः ।
महास्कन्धो महाग्रीवो महावक्त्रो महाशिराः ॥ ५६

महाहनुर्महादंष्ट्रो महदोष्ठो महोदरः ।
सुन्दरभ्रूः सुनयनः सुललाटः सुकन्दरः ॥ ५७

सत्यवाक्यो धर्मवेत्ता सत्यज्ञः सत्यवित्तमः ।
धर्मवान्धर्मनिपुणो धर्मी धर्मप्रवर्तकः ॥ ५८

कृतज्ञः कृतकृत्यात्मा कृतकृत्यः कृतागमः ।
कृत्यवित् कृत्यविच्छ्रेष्ठः कृतज्ञप्रियकृत्तमः ॥ ५९

व्रतकृद् व्रतविच्छ्रेष्ठो व्रतविद्वान् महाव्रती ।
व्रतप्रियो व्रताधारो व्रताकारो व्रतेश्वरः ॥ ६०

अतिरागी वीतरागी रागहेतुर्विरागवित् ।
रागघ्नो रागशमनो रागदो रागिरागवित् ॥ ६१

विद्वान् विद्वत्तमो विद्वज्जनमानससंश्रयः ।
विद्वज्जनाश्रयो विद्वज्जनस्तव्यपराक्रमः ॥ ६२

नीतिकृन्नीतिविन्नीतिप्रदाता नीतिवित्प्रियः ।
विनीतवत्सलो नीतिस्वरूपो नीतिसंश्रयः ॥ ६३

क्रोधवित् क्रोधकृत् क्रोधिजनकृत् क्रोधरूपधृक् ।
सक्रोधः क्रोधहा क्रोधिजनहा क्रोधकारणः ॥ ६४

गुणवान् गुणविच्छ्रेष्ठो निर्गुणो गुणवित्प्रियः ।
गुणाधारो गुणाकारो गुणकृद् गुणनाशकः ॥ ६५

वीर्यवान् वीर्यविच्छ्रेष्ठो वीर्यविद्वीर्यसंश्रयः ।
वीर्याकारो वीर्यकरो वीर्यहा वीर्यवर्धकः ॥ ६६

कालवित्कालकृत्कालो बलकृद् बलविद्बली।
मनोन्मनो मनोरूपो बलप्रमथनो बलः ।। ६७

विद्याप्रदाता विद्येशो विद्यामात्रैकसंश्रयः ।
विद्याकारो महाविद्यो विद्याविद्यो विशारदः ।। ६८

वसन्तकृद्वसन्तात्मा वसन्तेशो वसन्तदः ।
ग्रीष्मात्मा ग्रीष्मकृद् ग्रीष्मवर्धको ग्रीष्मनाशकः ।। ६९

प्रावृट् कृत् प्रावृडाकारः प्रावृट्कालप्रवर्तकः ।
प्रावृट्प्रवर्धकः प्रावृण्णाथः प्रावृड्विनाशकः ।। ७०

शरदात्मा शरद्धेतुः शरत्कालप्रवर्तकः ।
शरन्नाथः शरत्कालनाशकः शरदाश्रयः ।। ७१

हिमस्वरूपो हिमदो हिमहा हिमनायकः ।
शैशिरात्मा शैशिरेशः शैशिरर्तुप्रवर्तकः ।। ७२

प्राच्यात्मा दक्षिणाकारः प्रतीच्यात्मोत्तराकृतिः ।
आग्नेयात्मा निर्ऋतीशो वायव्यात्मेशनायकः ।। ७३

ऊर्ध्वाधः सुदिगाकारो नानादेशैकनायकः ।
सर्वपक्षिमृगाकारः सर्वपक्षिमृगाधिपः ।। ७४

सर्वपक्षिमृगाधारो मृगाद्युत्पत्तिकारणः ।
जीवाध्यक्षो जीववन्द्यो जीवविज्जीवरक्षकः ।। ७५

जीवकृज्जीवहा जीवजीवनो जीवसंश्रयः ।
ज्योतिः स्वरूपो विश्वात्मा विश्वनाथो वियत्पतिः ।। ७६

वज्रात्मा वज्रहस्तात्मा वज्रेशो वज्रभूषितः ।
कुमारगुरुरीशानो गणाध्यक्षो गणाधिपः ।। ७७

पिनाकपाणिः सूर्यात्मा सोमसूर्याग्निलोचनः ।
अपायरहितः शान्तो दान्तो दमयिता दमः ।। ७८

ऋषिः पुराणपुरुषः पुरुषेशः पुरन्दरः ।
कालाग्निरुद्रः सर्वेशः शमरूपः शमेश्वरः ।। ७९

प्रलयानलकृद्दिव्यः प्रलयानलनाशकः ।
त्रियम्बकोऽरिषड्वर्गनाशको धनदप्रियः ।। ८०

अक्षोभ्यः क्षोभरहितः क्षोभदः क्षोभनाशकः ।
सदम्भो दम्भरहितो दम्भदो दम्भनाशकः ।। ८१

कुन्देन्दुशङ्खधवलो भस्मोद्धूलितविग्रहः ।
भस्मधारणहृष्टात्मा तुष्टिः पुष्ट्यरिसूदनः ।। ८२

स्थाणुर्दिगम्बरो भर्गो भगनेत्रभिदुद्यमः ।
त्रिकाग्निः कालकालाग्निरद्वितीयो महायशाः ।। ८३

सामप्रियः सामवेत्ता सामगः सामगप्रियः ।
धीरोदात्तो महाधीरो धैर्यदो धैर्यवर्धकः ।। ८४

लावण्यराशिः सर्वज्ञः सुबुद्धिर्बुद्धिमद्वरः ।
तुम्बवीणः कम्बुकण्ठः शम्बरारिनिकृन्तनः ।। ८५

शार्दूलचर्मवसनः पूर्णानन्दो जगत्प्रियः ।
जयप्रदो जयाध्यक्षो जयात्मा जयकारणः ।। ८६

जङ्गमाजङ्गमाकारो जगदुत्पत्तिकारणः ।
जगद्रक्षाकरो वश्यो जगत् प्रलयकारणः ।। ८७

पूषदन्तभिदुत्कृष्टः पञ्चयज्ञः प्रभञ्जकः ।
अष्टमूर्तिर्विश्वमूर्तिरतिमूर्तिरमूर्तिमान् ।। ८८

कैलासशिखरावासः कैलासशिखरप्रियः ।
भक्तकैलासदः सूक्ष्मो मर्मज्ञः सर्वशिक्षकः ॥ ८९

सोमः सोमकलाकारो महातेजा महातपाः ।
हिरण्यश्मश्रुरानन्दः स्वर्णकेशः सुवर्णदृक् ॥ ९०

ब्रह्मा विश्वसृगुर्वीशो मोचको बन्धवर्जितः ।
स्वतन्त्रः सर्वमन्त्रात्मा द्युतिमानमितप्रभः ॥ ९१

पुष्कराक्षः पुण्यकीर्तिः पुण्यश्रवणकीर्तनः ।
पुण्यमूर्तिः पुण्यदाता पुण्यापुण्यलप्रदः ॥ ९२

सारभूतः स्वरमयो रसभूतो रसाश्रयः ।
ओङ्कारः प्रणवो नादः प्रणतार्तिप्रभञ्जनः ॥ ९३

निकटस्थोऽतिदूरस्थो वशी ब्रह्माण्डनायकः ।
मन्दारमूलनिलयो मन्दारकवरार्चितः ॥ ९४

बृन्दारकप्रियतमो बृन्दारकवरार्चितः ।
श्रीमाननन्तकल्याणपरिपूर्णो महोदयः ॥ ९५

महोत्साहो विश्वभोक्ता विश्वाशापरिपूरकः ।
सुलभोऽसुलभो लभ्योऽलभ्यो लाभप्रवर्धकः ॥ ९६

लाभात्मा लाभदो वक्ता द्युतिमाननसूयकः ।
ब्रह्मचारी दृढाचारी देवसिंहो धनप्रियः ॥ ९७

वेदपो देवदेवेशो देवदेवोत्तमोत्तमः ।
बीजराजो बीजहेतुर्बीजदो बीजवृद्धिदः ॥ ९८

बीजाधारो बीजरूपो निर्बीजो बीजनाशकः ।
परापरेशो वरदः पिङ्गलोऽयुग्मलोचनः ॥ ९९

पिङ्गलाक्षः सुरगुरुः गुरुः सुरगुरुप्रियः ।
युगावहो युगाधीशो युगकृद्युगनाशकः ॥ १००

कर्पूरगौरो गौरीशो गौरीगुरुगुहाश्रयः ।
धूर्जटिः पिङ्गलजटो जटामण्डलमण्डितः ॥ १०१

मनोजवो जीवहेतुरन्धकासुरसूदनः ।
लोकबन्धुः कलाधारः पाण्डुरः प्रमथाधिपः ॥ १०२

अव्यक्तलक्षणो योगी योगीशो योगपुङ्गवः ।
श्रितावासो जनावासः सुरावासः सुमण्डलः ॥ १०३

भववैद्यो योगिवैद्यो योगिसिंहहृदासनः ।
उत्तमोऽनुत्तमोऽशक्तः कालकण्ठो विषादनः ॥ १०४

आशास्यः कमनीयात्मा शुभः सुन्दरविग्रहः ।
भक्तकल्पतरुः स्तोता स्तव्यः स्तोत्रवरप्रियः ॥१०५॥

अप्रमेयगुणाधारो वेदकृद्वेदविग्रहः ।
कीर्त्याधारः कीर्तिकरः कीर्तिहेतुरहेतुकः ॥१०६॥

अप्रधृष्यः शान्तभद्रः कीर्तिस्तम्भो मनोमयः ।
भूशयोऽन्नमयोऽभोक्ता महेष्वासो महीतनुः ॥१०७॥

विज्ञानमय आनन्दमयः प्राणमयोऽन्नदः ।
सर्वलोकमयो यष्टा धर्माधर्मप्रवर्तकः ॥१०८॥

अनिर्विण्णो गुणग्राही सर्वधर्मफलप्रदः ।
दयासुधार्द्रनयनो निराशीरपरिग्रहः ॥१०९॥

परार्थवृत्तिर्मधुरो मधुरप्रियदर्शनः ।
मुक्तादामपरीतांगो निःसंगो मंगलाकरः ॥११०॥

सुखप्रदः सुखाकारः सुखदुःखविवर्जितः ।
विशृंखलो जगत्कर्ता जितसर्वपितामहः ॥१११॥

अनपायोऽक्षयो मुण्डी सुरूपो रूपवर्जितः ।
अतीन्द्रियो महामायो मायावी विगतज्वरः ॥११२॥

अमृतः शाश्वतः शान्तो मृत्युहा मूकनाशनः ।
महाप्रेतासनासीनः पिशाचानुचरावृतः ॥११३॥

गौरीविलाससदनो नानागानविशारदः ।
विचित्रमाल्यवसनो दिव्यचन्दनचर्चितः ॥११४॥

विष्णुब्रह्मादिवन्द्यांघ्रिः सुरासुरनमस्कृतः ।
किरीट लेढिफालेन्दुर्मणिकंकणभूषितः ॥११५॥

रत्नांगदांगो रत्नेशो रत्नरञ्जितपादुकः ।
नवरत्नगणोपेतकिरीटी रत्नकञ्चुकः ॥११६॥

नानाविधानेकरत्नलसत्कुण्डलमण्डितः ।
दिव्यरत्नगणाकीर्णकण्ठाभरणभूषितः ॥११७॥

गलव्यालमणिर्नासापुटभ्राजितमौक्तिकः ।
रत्नांगुलीयविलसत्करशाखानख प्रभः ॥११८॥

रत्नभ्राजद्धेमसूत्रलसत्कटितटः पटुः ।
वामांकभागविलसत्पार्वतीवीक्षणप्रियः ॥११९॥

लीलावलम्बितवपुर्भक्तमानसमन्दिरः ।
मन्दमन्दारपुष्पौघलसद्वायुनिषेवितः ॥१२०॥

कस्तूरीविलसत्फालो दिव्यवेषविराजितः ।
दिव्यदेहप्रभाकूटसन्दीपितदिगन्तरः ॥१२१॥

देवासुरगुरुस्तव्यो देवासुरनमस्कृतः ।
हस्तराजत्पुण्डरीकः पुण्डरीकनिभेक्षणः ॥१२२॥

सर्वाशास्यगुणोऽमेयः सर्वलोकेष्टभूषणः ।
सर्वेष्टदाता सर्वेष्टः स्फुरन्मंगलविग्रहः ॥१२३॥

अविद्यालेशरहितो नानाविद्यैकसंश्रयः ।
मूर्तिभवः कृपापूरी भक्तेष्टफलपूरकः ॥१२४॥

सम्पूर्णकामः सौभाग्यनिधिः सौभाग्यदायकः ।
हितैषी हितकृत्सौम्यः परार्थैकप्रयोजनः ॥१२५॥

शरणागतदीनार्तपरित्राणपरायणः ।
जिष्णुर्नेता वषट्कारो भ्राजिष्णुर्भोजनं हविः ॥१२६॥

भोक्ता भोजयिता जेता जितारिर्जितमानसः ।
अक्षरः कारणं क्रुद्धसमरः शारदप्लवः ॥१२७॥

आज्ञापकेच्छो गम्भीरः कविर्दुःस्वप्ननाशकः ।
पञ्चब्रह्मसमुत्पत्तिः क्षेत्रज्ञः क्षेत्रपालकः ॥१२८॥

व्योमकेशो भीमवेषो गौरीपतिरनामयः ।
भवाब्धितरणोपायो भगवान् भक्तवत्सलः ॥१२९॥

वरो वरिष्ठो नेदिष्ठः प्रियः प्रियदवः सुधीः ।
यन्ता यविष्ठः क्षोदिष्ठः स्थविष्ठो यमशासकः ॥१३०॥

हिरण्यगर्भो हेमांगो हेमरूपो हिरण्यदः ।
ब्रह्मज्योतिरनावेक्ष्यश्चामुण्डाजनको रविः ॥१३१॥

मोक्षार्थिजनसंसेव्यो मोक्षदो मोक्षनायकः ।
महाश्मशाननिलयो वेदाश्वो भूरथः स्थिरः ॥१३२॥

मृगव्याधश्चर्मधामा प्रच्छन्नः स्फटिकप्रभः ।
सर्वज्ञः परमार्थात्मा ब्रह्मानन्दाश्रयो विभुः ।।१३३।।

महेश्वरो महादेवः परब्रह्म सदाशिवः ।।१३४।।
श्री परब्रह्म सदाशिव ॐ नम इति ।

उत्तर पीठिका

एवमेतानि नामानि मुख्यानि मम षण्मुख ।
शुभदानि विचित्राणि गौर्यै प्रोक्तानि सादरम् ।।१।।

विभूतिभूषितवपुः शुद्धो रुद्राक्षभूषणः ।
शिवलिंगसमीपस्थो निस्संगो निर्जितासनः ।।२।।

एकाग्रचित्तो नियतो वशी भूतहिते रतः ।
शिवलिंगार्चको नित्यं शिवैकशरणः सदा ।।३।।

मम नामानि दिव्यानि यो जपेद्भक्तिपूर्वकम् ।
एवमुक्तगुणोपेतः स देवैः पूजितो भवेत् ।।४।।

संसारपाशसम्बद्धजनमोक्षैकसाधनम् ।
मन्नामस्मरणं नूनं तदेव सकलार्थदम् ।।५।।

मन्नामैव परं जप्यमहमेवाक्षयार्थदः ।
अहमेव सदा सेव्यो ध्येयो मुक्त्यर्थमादरात् ।।६।।

विभूतिवज्रकवचैः मन्नामशरपाणिभिः ।
विजयः सर्वतो लभ्यो न तेषां दृश्यते भयम् ।।७।।

न तेषां दृश्यते भयम् ॐ नम इति ।

श्रीसूत उवाच

इत्युदीरितमाकर्ण्य महादेवेन तद्वचः ।
सन्तुष्टः षण्मुखः शम्भुं तुष्टाव गिरिजासुतः ।।८।।

श्रीस्कन्द उवाच

नमस्ते नमस्ते महादेव शम्भो नमस्ते नमस्ते प्रपन्नैकबन्धो ।
नमस्ते नमस्ते दयासारसिन्धो नमस्ते नमस्ते नमस्ते महेश ॥९॥

नमस्ते नमस्ते महामृत्युहारिन् नमस्ते नमस्ते महादुःखहारिन् ।
नमस्ते नमस्ते महापापहारिन् नमस्ते नमस्ते नमस्ते महेश ।

नमस्ते नमस्ते सदा चन्द्रमौले नमस्ते नमस्ते सदा शूलपाणे ।
नमस्ते नमस्ते सदोमैकजाने नमस्ते नमस्ते नमस्ते महेश ॥११॥

वेदान्तवेद्याय महादयाय कैलासवासाय शिवाधवाय ।
शिवस्वरूपाय सदाशिवाय शिवासमेताय नमः शिवाय ॥१२॥

श्रीसूत उवाच -

इति स्तुत्वा महादेवं सर्वव्यापिनमीश्वरम् ।
पुनः प्रणम्याथ ततः स्कन्दस्तस्थौ कृताञ्जलिः ॥१३॥

भवन्तोऽपि मुनिश्रेष्ठाः साम्बध्यानपरायणाः ।
शिवनामजपं कृत्वा तिष्ठन्तु सुखिनः सदा ॥१४॥

शिव एव सदा ध्येयः सर्वदेवोत्तमः प्रभुः ।
शिव एव सदा पूज्यो मुक्तिकामैर्न संशयः ॥१५॥

महेशान्नाधिको देवः स एव सुरसत्तमः ।
स एव सर्ववेदान्तवेद्यो नात्रास्ति संशयः ॥१६॥

जन्मान्तरसहस्रेषु यदि तप्तं तपस्तदा ।
तस्य श्रद्धा महादेवे भक्तिश्च भवति ध्रुवम् ॥१७॥

सुभगा जननी तस्य तस्यैव कुलमुन्नतम् ।
तस्यैव जन्म सफलं यस्य भक्तिः सदाशिवे ॥१८॥

ये शम्भुं सुरसत्तमं सुरगणैराराध्यमीशं शिवं
शैलाधीशसुतासमेतममलं संपूजयन्त्यादरात्।
ते धन्याः शिवपादपूजनपराः ह्यन्यो न धन्यो जनः
सत्यं सत्यमिहोच्यते मुनिवराः सत्यं पुनः सर्वथा ॥१९॥

सत्यं पुनः सर्वथा ॐ नम इति।

नमः शिवाय साम्बाय सगणाय ससूनवे।
प्रधानपुरुषेशाय सर्गस्थित्यन्तहेतवे ॥२०॥

नमस्ते गिरिजानाथ भक्तानामिष्टदायक।
देहि भक्तिं त्वयीशान सर्वाभीष्टं च देहि मे ॥२१॥

साम्ब शम्भो महादेव दयासागर शंकर।
मच्चित्तभ्रमरो नित्यं तवास्तु पदपंकजे ॥२२॥

* * *

# श्रीशिवसहस्रनामावलिः ३

हिरण्यबाहवे नमः। सेनान्ये। दिक्पतये। तरुराजे। हराय। हरिकेशाय। पशुपतये। महते। सस्पिञ्जराय। मृडाय। विव्याधिने। बभ्लुशाय। श्रेष्ठाय। परमात्मने सनातनाय। सर्वान्नराजे। जगत्कर्त्रे। पुष्टेशाय। नन्दिकेश्वराय। आततायिने। महारुद्राय नमः। २०

संसारास्त्राय नमः। सुरेश्वराय। उपवीतये। अहन्त्यात्मने। क्षेत्रेशाय। वननायकाय। रोहिताय। स्थपतये। सूताय। वाणिजाय। मन्त्रिणे। उन्नताय। वृक्षेशाय। हुतभुजे। देवाय। भुवन्तये। वारिवस्कृताय। उच्चैर्घोषाय। घोररूपाय। पत्तीशाय नमः। ४०

पाशमोचकाय नमः । ओषधीशाय । पञ्चवक्त्राय । कृत्स्नवीताय । भयानकाय । सहमानाय । स्वर्णरेतसे । निव्याधये । निरुपप्लवाय । आव्याधिनीशाय । ककुभाय । निषंगिणे । स्तेनरक्षकाय । मन्त्रात्मने । तस्कराध्यक्षाय । वञ्चकाय । परिवञ्चकाय । अरण्येशाय । परिचराय । निचेरवे नमः ६०

स्तायुरक्षकाय नमः । प्रकृन्तेशाय । गिरिचराय । कुलुञ्चेशाय । गुहेष्टदाय । भवाय । शर्वाय । नीलकण्ठाय । कपर्दिने । त्रिपुरान्तकाय । व्युप्तकेशाय । गिरिशयाय । सहस्राक्षाय । सहस्रपदे । शिपिविष्टाय । चन्द्रमौलये । ह्रस्वाय । मीढुष्टमाय । अनघाय । वामनाय नमः । ८०

व्यापकाय नमः । शूलिने । वर्षीयसे । अजडाय । अनणवे । ऊर्व्याय । सूर्म्याय । अग्रियाय । शीभ्याय । प्रथमाय । पावकाकृतये । आचाराय । तारकाय । ताराय । अवस्वन्याय । अनन्तविग्रहाय । द्वीप्याय । स्रोतस्याय । ईशानाय । धुर्याय नमः । १००

गव्ययनाय नमः । यमाय । पूर्वजाय । अपरजाय । ज्येष्ठाय । कनिष्ठाय । विश्वलोचनाय । अपगल्भाय । मध्यमाय । ऊर्म्याय । जघन्याय । बुध्नियाय । प्रभवे । प्रतिसर्याय । अनन्तरूपाय । सोभ्याय । याम्याय । सुराश्रयाय । खल्याय । उर्वर्याय नमः । १२०

अभयाय नमः । क्षेम्याय । श्लोक्याय । पथ्याय नभसे । अग्रण्ये । वन्याय । अवसान्याय । पूतात्मने । श्रवाय । कक्ष्याय । प्रतिश्रवाय । आशुषेणाय । महासेनाय । महावीराय । महारथाय । शूराय । अतिघातकाय । वर्मिणे । वरूथिने । बिल्मिने नमः । १४०

उद्यताय नमः । श्रुतसेनाय । श्रुताय । साक्षिणे । कवचिने । वशाकृते वशिने । आहनन्याय । अनन्यनाथाय । दुन्दुभ्याय । अरिष्टनाशकाय । धृष्णवे । प्रमृशाय । इत्यात्मने । वदान्याय ।

वेदसम्मताय । तीक्ष्णेषुपाणये । प्रहिताय । स्वायुधाय । शस्त्रवित्तमाय । सुधन्वने नमः । १६०

सुप्रसन्नात्मने नमः । विश्ववक्त्राय । सदागतये । स्रुत्याय । पथ्याय । विश्वबाहवे । काट्याय । नीप्याय । शुचिस्मिताय । सूद्याय । सरस्याय । वैशन्ताय । नाद्याय । कूप्याय । ऋषये । मनवे । सर्वस्मै । वर्ष्याय । वर्षरूपाय । कुमाराय नमः । १८०

कुशलाय नमः । अमलाय । मेघ्याय । अवर्ष्याय । अमोघशक्तये । विद्युत्याय । अमोघविक्रमाय । दुरासदाय । दुराराध्याय । निर्द्वन्द्वाय । दुःसहर्षभाय । ईध्रियाय । क्रोधशमनाय । जातुकर्णाय । पुरुष्टुताय । आतप्याय । वायवे । अजराय । वात्याय । कात्यायनीप्रियाय नमः । २००

वास्तव्याय नमः । वास्तुपाय । रेष्म्याय । विश्वमूर्धे । वसुप्रदाय । सोमाय । ताम्राय । अरुणाय । शंगाय । रुद्राय । सुखकराय । सुकृते । उग्राय । अनुग्राय । भीमकर्मणे । भीमाय । भीमपराक्रमाय । अग्रेवधाय । हनीयात्मने । हन्त्रे नमः । २२०

दूरेवधाय नमः । वधाय । शंम्भवे । मयोभवाय । नित्याय । शंकराय । कीर्तिसागराय । मयस्कराय । शिव तराय । खण्डपर्शवे । अजाय । शुचये । तीर्थ्याय । कूल्याय । अमृताधीशाय । पार्याय । अवार्याय । अमृताकराय । शुद्धाय । प्रतरणाय नमः । २४०

मुख्याय नमः । शुद्धपाणये । अलोलुपाय । उच्चाय । उत्तरणाय । तार्याय । तार्यज्ञाय । तार्यहृद्गतये । आतार्याय । सारभूतात्मने । सारग्राहिणे । दुरत्ययाय । आलाद्याय । मोक्षदाय पथ्याय । अनर्थघ्ने । सत्यसंगराय । शष्प्याय । फेन्याय । प्रवाह्याय । ऊर्द्वे नमः । २६०

सिकत्याय नमः । सैकताश्रयाय । इरिण्याय । ग्रामण्ये । पुण्याय । शरण्याय । शुद्धशासनाय । वरेण्याय । यज्ञपुरुषाय । यज्ञेशाय । यज्ञनायकाय । यज्ञकर्त्रे । यज्ञभोक्त्रे । यज्ञविघ्नविनाशकाय । यज्ञकर्मफलाध्यक्षाय । यज्ञमूर्तये । अनातुराय । प्रपथ्याय । किंशिलाय । गेह्याय नमः । २८०

गृह्याय नमः । तल्प्याय । धनाकराय । पुलस्त्याय । क्षयणाय । गोष्ठ्याय । गोविन्दाय । गीतसत्क्रियाय । हृदय्याय । हृद्यकृते । हृद्याय । गह्वरेष्ठाय । प्रभाकराय । निवेष्प्याय । नियताय । अयन्त्रे । पांसव्याय । संप्रतापनाय । शुष्क्याय । हरित्याय नमः । ३००

अपूतात्मने नमः । रजस्याय । सात्विकप्रियाय । लोप्याय । उलप्याय । पर्णशद्याय । पर्ण्याय । पूर्णाय । पुरातनाय । भूताय । भूतपतये । भूपाय । भूधराय । भूधरायुधाय । भूतसंघाय । भूतमूर्तये । भूतघ्ने । भूतिभूषणाय । मदनाय । मादकाय नमः । ३२०

माद्याय नमः । मदघ्ने । मधुरप्रियाय । मधवे । मधुकराय । क्रूराय । मधुराय । मदनान्तकाय । निरञ्जनाय । निराधाराय । निर्लुप्ताय । निरुपाधिकाय । निष्प्रपञ्चाय । निराकाराय । निरीहाय । निरुपद्रवाय । सत्वाय । सत्वगुणोपेताय । सत्वविदे । सत्ववित्प्रियाय नमः । ३४०

सत्वनिष्ठाय नमः । सत्वमूर्तये । सत्वेशाय । सत्ववित्तमाय । समस्तजगदाधाराय । समस्तगुण सागराय । समस्तदुःख-विध्वंसिने । समस्तानन्दकारणाय । रुद्राक्षमालाभरणाय । रुद्राक्षप्रिय वत्सलाय । रुद्राक्षवक्षसे । रुद्राक्षरूपाय । रुद्राक्षपक्षकाय । विश्वेश्वराय । वीरभद्राय । सम्राजे ।

दक्षमखान्तकाय । विघ्नेश्वराय । विघ्नकर्त्रे । गुरवे देवशिखामणये नमः । ३६०

भुजगेन्द्रलसत्कण्ठाय नमः । भुजंगाभरणप्रियाय । भुजंगविलसत्कर्णाय । भुजंगवलयावृताय । मुनिवन्द्याय । मुनिश्रेष्ठाय । मुनिवृन्दनिषेविताय । मुनिहृत्पुण्डरीकस्थाय । मुनिसंघैकजीवनाय । मुनिमृग्याय । वेदमृग्याय । मृगहस्ताय । मुनीश्वराय । मृगेन्द्र चर्मवसनाय । नरसिंहनिपातनाय । मृत्युञ्जयाय । मृत्युमृत्यवे । अपमृत्युविनाशकाय । दुष्टमृत्यवे । अदुष्टेष्टाय नमः । ३८०

मृत्युघ्ने मृत्युपूजिताय नमः । ऊर्ध्वाय । हिरण्याय । परमाय । निधनेशाय । धनाधिपाय । यजुर्मूर्तये । साममूर्तये । ऋङ्मूर्तये । मूर्तिवर्जिताय । व्यक्ताय । व्यक्ततमाय । अव्यक्ताय । व्यक्ताव्यक्ताय । तमसे । जविने । लिंगमूर्तये । अलिंगात्मने । लिंगालिंगात्म विग्रहाय । ग्रहग्रहाय नमः । ४००

ग्रहाधाराय नमः । ग्रहाकाराय । ग्रहेश्वराय । ग्रहकृते । ग्रहभिदे । ग्राहिणे । ग्रहाय । ग्रहविलक्षणाय । कल्पाकाराय । कल्पकर्त्रे । कल्पलक्षणतत्पराय । कल्पाय । कल्पाकृतये । कल्पनाशकाय । कल्पकल्पकाय । परमात्मने । प्रधानात्मने । प्रधानपुरुषाय । शिवाय । वेद्याय नमः । ४२०

वैद्याय नमः । वेदवेद्याय । वेदवेदान्तसंस्तुताय । वेदवक्त्राय । वेदजिह्वाय । विजिह्वाय । जिह्मनाशकाय । कल्याणरूपाय । कल्याणाय । कल्याणगुणसंश्रयाय । भक्तकल्याणदाय । भक्तकामधेनवे । सुराधिपाय । पावनाय । पावकाय । वामाय । महाकालाय । मदापहाय । घोरपातकदावाग्नये । देवभस्मकरप्रियाय नमः । ४४०

अनन्तसोमसूर्याग्निमण्डलप्रतिमप्रभाय नमः । जगदेकप्रभवे । स्वामिने । जगद्वन्द्याय । जगन्मयाय । जगदानन्ददाय । जन्मजरामरणवर्जिताय । खट्वांगिने । नीतिमते । सत्याय । देवतात्मने । आत्मसम्भवाय । कपालमालाभरणाय । कपालिने । विष्णुवल्लभाय । कमलासनकालाग्नये । कमलासनपूजिताय । कालाधीशाय । त्रिकालज्ञाय । दुष्टविग्रहवारकाय नमः । ४६०

नाट्यकर्त्रे नमः । नटपराय । महानाट्यविशारदाय । विराड्रूपधराय । धीराय । वीराय । वृषभवाहनाय । वृषांकाय । वृषभाधीशाय । वृषात्मने । वृषभध्वजाय । महोन्नताय । महाकायाय । महावक्षसे । महाभुजाय । महास्कन्धाय । महाग्रीवाय । महावक्त्राय । महाशिरसे । महाहनवे नमः । ४८०

महादंष्ट्राय नमः । महदोष्ठाय । महोदराय । सुन्दरभ्रुवे । सुनयनाय । सुललाटाय । सुकन्दराय । सत्यवाक्याय । धर्मवेत्रे । सत्यज्ञाय । सत्यवित्तमाय । धर्मवते । धर्मनिपुणाय । धर्माय । धर्मप्रवर्तकाय । कृतज्ञाय । कृतकृत्यात्मने । कृतकृत्याय । कृतागमाय । कृत्यविदे नमः । ५००

कृत्यविच्छ्रेष्ठाय । कृतज्ञप्रियकृत्तमाय । व्रतकृते । व्रतविच्छ्रेष्ठाय । व्रतविदुषे । महाव्रतिने । व्रतप्रियाय । व्रताधाराय । व्राताकाराय । व्रतेश्वराय । अतिरागिणे । वीतरागिणे । रागहेतवे । विरागविदे । रागघ्नाय । रागशमनाय । रागदाय । रागिरागविदे । विदुषे । विद्वत्तमाय नमः । ५२०

विद्वज्जनमानससंश्रयाय नमः । विद्वज्जनाश्रयाय । विद्वज्जनस्तव्य पराक्रमाय । नीतिकृते । नीतिविदे । नीतिप्रदात्रे । नीतिवित्प्रियाय । बिनीतवत्सलाय । नीतिस्वरूपाय ।

नीतिसंश्रयाय । क्रोधविदे । क्रोधकृते । क्रोधिजनकृते । क्रोधरूपधृषे । सक्रोधाय । क्रोधघ्ने । क्रोधिजनघ्ने । क्रोधकारणाय । गुणवते । गुणविच्छ्रेष्ठाय नमः । ५४०

निर्गुणाय । गुणवित्प्रियाय । गुणाधाराय । गुणाकाराय । गुणकृते । गुणनाशकाय । वीर्यवते । वीर्यविच्छ्रेष्ठाय । वीर्यविदे । वीर्यसंश्रयाय । वीर्याकाराय । वीर्यकराय । वीर्यघ्ने । वीर्यवर्धकाय । कालविदे । कालकृते । कालाय । बलकृते । बलविदे । बलिने नमः । ५६०

मनोन्मनाय नमः । मनोरूपाय । बलप्रमथनाय । बलाय । विद्याप्रदात्रे । विद्येशाय । विद्यामात्रैकसंश्रयाय । विद्याकाराय । महाविद्याय । विद्याविद्याय । विशारदाय । वसन्तकृते । वसन्तात्मने । वसन्तेशाय । वसन्तदाय । ग्रीष्मात्मने । ग्रीष्मकृते । ग्रीष्मवर्धकाय । ग्रीष्मनाशकाय । प्रावृट्कृते नमः । ५८०

प्रावृडाकाराय नमः । प्रावृट्कालप्रवर्तकाय । प्रावृट्-प्रवर्धकाय । प्रावृण्णाथाय । प्रावृड्विनाशकाय । शरदात्मने । शरद्धेतवे । शरत्कालप्रवर्तकाय । शरन्नाथाय । शरत्कालनाशकाय । शरदाश्रयाय । हिमस्वरूपाय । हिमदाय । हिमघ्ने । हिमनायकाय । शैशिरात्मने । शैशिरेशाय । शैशिरर्तुप्रवर्तकाय । प्राच्यात्मने । दक्षिणाकाराय नमः । ६००

प्रतीच्यात्मने नमः । उत्तराकृतये । आग्नेयात्मने । निर्ऋतीशाय । वायव्यात्मने । ईशनायकाय । ऊर्ध्वाधः सुदिगाकाराय । नानादेशैकनायकाय । सर्वपक्षिमृगाकाराय । सर्वपक्षिमृगाधिपाय । सर्वपक्षिमृगाधाराय । मृगाद्युत्पत्ति-कारणाय । जीवाध्यक्षाय । जीवबन्धाय । जीवविदे । जीवरक्षकाय ।

जीवकृते। जीवघ्ने। जीवजीवनाय। जीवसंश्रयाय नमः। ६२०

ज्योतिःस्वरूपाय नमः । विश्वात्मने । विश्वनाथाय । वियत्पतये। वज्रात्मने। वज्रहस्तात्मने। वज्रेशाय। वज्रभूषिताय। कुमारगुरवे ईशानाय । गणाध्यक्षाय । गणाधिपाय । पिनाकपाणये। सूर्यात्मने । सोमसूर्याग्नि लोचनाय । अपायरहिताय। शान्ताय। दान्ताय। दमयित्रे। दमाय। ऋषये नमः। ६४०

पुराणपुरुषाय नमः । पुरुषेशाय । पुरन्दराय । कालाग्निरुद्राय। सर्वेशाय । शमरूपाय । शमेश्वराय । प्रलयानलकृते। दिव्याय। प्रलयानलनाशकाय। त्रियम्बकाय। अरिषड्वर्गनाशकाय। धनदप्रियाय। अक्षोभ्याय। क्षोभरहिताय। क्षोभदाय। क्षोभनाशकाय। सदम्भाय। दम्भरहिताय। दम्भदाय नमः। ६६०

दम्भनाशकाय नमः। कुन्देन्दुशंखधवलाय। भस्मोद्धूलित-विग्रहाय। भस्मधारणहृष्टात्मने। तुष्टये। पुष्टये। अरिसूदनाय। स्थाणवे । दिगम्बराय । भर्गाय । भगनेत्रभिदे । उद्यमाय । त्रिकाग्नये। कालकालाग्नये । अद्वितीयाय । महायशसे । सामप्रियाय। सामवेत्रे। सामगाय। सामगप्रियाय नमः। ६८०

धीरोदात्ताय नमः। महाधीराय। धैर्यदाय। धैर्यवर्धकाय। लावण्यराशये। सर्वज्ञाय सुबुद्धये। बुद्धिमद्वराय। तुम्बवीणाय। कम्बुकण्ठाय । शम्बरारिनिकृन्तनाय । शार्दूलचर्मवसनाय । पूर्णानन्दाय। जगत्प्रियाय। जयप्रदाय। जयाध्यक्षाय। जयात्मने। जयकारणाय । जंगमाजंगमाकाराय । जगदुत्पत्तिकारणाय । जगद्रक्षाकराय नमः। ७००

वश्याय नमः । जगत्प्रलयकारणाय । पूषदन्तभिदे । उत्कृष्टाय । पञ्चयज्ञाय । प्रभञ्जकाय । अष्टमूर्तये । विश्वमूर्तये । अतिमूर्तये । अमूर्तिमते । कैलासशिखरावासाय । कैलासशिखरप्रियाय । भक्तकैलासदाय । सूक्ष्माय । मर्मज्ञाय । सर्वशिक्षकाय । सोमाय सोमकलाकाराय । महातेजसे । महातपसे । हिरण्य श्मश्रवे नमः । ७२०

आनन्दाय नमः । स्वर्णकेशाय । सुवर्णदृशे । ब्रह्मणे । विश्वसृजे । उर्वीशाय । मोचकाय । बन्धवर्जिताय । स्वतन्त्राय । सर्वमन्त्रात्मने । द्युतिमते । अमित प्रभाय । पुष्कराक्षाय । पुण्यकीर्तये । पुण्यश्रवणकीर्तनाय । पुण्यमूर्तये । पुण्यदात्रे । पुण्यापुण्यफलप्रदाय । सारभूताय । स्वरमयाय नमः । ७४०

रसभूताय नमः । रसाश्रयाय । ओंकाराय । प्रणवाय । नादाय । प्रणतार्तिप्रभञ्जनाय । निकटस्थाय । अतिदूरस्थाय । वशिने । ब्रह्माण्डनायकाय । मन्दारमूलनिलयाय । मन्दारकुसुमावृताय । वृन्दारकप्रियतमाय । वृन्दारकवरार्चिताय । श्रीमते । अनन्तकल्याणपरिपूर्णाय । महोदयाय । महोत्साहाय । विश्वभोक्त्रे । विश्वाशापरिपूरकाय नमः । ७६०

सुलभाय नमः । असुलभाय । लभ्याय । अलभ्याय । लाभप्रवर्धकाय । लाभात्मने । लाभदाय । वक्त्रे । द्युतिमते । अनसूयकाय । ब्रह्मचारिणे । दृढाचारिणे । देवसिंहाय । धनप्रियाय । वेदपाय । देवदेवेशाय । देवदेवोत्तमोत्तमाय । बीजराजाय । बीजहेतवे । बीजदाय नमः । ७८०

बीजवृद्धिदाय नमः । बीजाधाराय । बीजरूपाय । निर्बीजाय । बीजनाशकाय । परापरेशाय । वरदाय । पिंगलाय ।

अयुग्म लोचनाय। पिंगलाक्षाय। सुरगुरवे। गुरवे। सुरगुरुप्रियाय। युगावहाय। युगाधीशाय। युगकृते। युगनाशकाय। कर्पूरगौराय। गौरीशाय। गौरीगुरुगुहाश्रयाय नमः। ८००

धूर्जटये नमः। पिंगलजटाय। जटामण्डलमण्डिताय। मनोजवाय। जीवहेतवे। अन्धकासुरसूदनाय। लोकबन्धवे। कलाधाराय। पाण्डुराय। प्रमथाधिपाय। अव्यक्तलक्षणाय। योगिने। योगीशाय। योगपुंगवाय। श्रितावासाय। जनावासाय। सुरावासाय। सुमण्डलाय। भववैद्याय। योगिवैद्याय नमः। ८२०

योगिसिंहहृदासनाय नमः। उत्तमाय। अनुत्तमाय। अशक्ताय। कालकण्ठाय। विषादनाय। आशास्याय। कमनीयात्मने। शुभाय। सुन्दरविग्रहाय। भक्तकल्पतरवे। स्तोत्रे। स्तव्याय। स्तोत्रवरप्रियाय। अप्रमेयगुणाधाराय। वेदकृते। वेदविग्रहाय। कीर्त्याधाराय। कीर्तिकराय। कीर्तिहेतवे नमः। ८४०

अहेतुकाय नमः। अप्रधृष्याय। शान्तभद्राय। कीर्तिस्तम्भाय। मनोमयाय। भूशयाय। अन्नमयाय। अभोक्त्रे। महेष्वासाय। महीतनवे। विज्ञानमयाय। आनन्दमयाय। प्राणमयाय। अन्नदाय। सर्वलोकमयाय। यष्ट्रे। धर्माधर्मप्रवर्तकाय। अनिर्विण्णाय। गुणग्राहिणे। सर्वधर्मफलप्रदाय नमः। ८६०

दयासुधार्द्रनयनाय नमः। निराशिषे। अपरिग्रहाय। परार्थवृत्तये। मधुराय। मधुरप्रियदर्शनाय। मुक्तादामपरीतांगाय। निःसंगाय। मंगलाकराय। सुखप्रदाय। सुखाकाराय। सुखदुःखविवर्जिताय। विशृंखलाय। जगत्कर्त्रे। जितसर्वपिता-महाय। अनपायाय। अक्षयाय। मुण्डिने। सुरूपाय। रूपवर्जिताय नमः। ८८०

अतीन्द्रियाय नमः । महामायाय । मायाविने । विगतज्वराय । अमृताय । शाश्वताय । शान्ताय । मृत्युघ्ने । मूकनाशनाय । महाप्रेतासनासीनाय । पिशाचानुचरावृताय । गौरीविलाससदनाय । नानागानविशारदाय । विचित्रमाल्य-वसनाय । दिव्यचन्दनचर्चिताय । विष्णुब्रह्मादिवन्द्यांघ्रये । सुरासुरनमस्कृताय । किरीटलेढिफालेन्दवे । मणिकंकणभूषिताय । रत्नांगदाय नमः । ९००

रत्नेशाय नमः । रत्नरञ्जितपादुकाय । नवरत्नगणोपेत-किरीटिने । रत्नकञ्चुकाय । नानाविधानेकरत्नलसत्कुण्डल-मण्डिताय । दिव्यरत्नगणाकीर्णकण्ठाभरणभूषिताय । गलव्याल-मणये । नासापुटभ्राजितमौक्तिकाय । रत्नांगुलीय-विलसत्कर-शाखानखप्रभाय । रत्नभ्राजद्धेमसूत्रलसत्कटितटाय । पटवे । वामांकभागविलसत्पार्वतीवीक्षणप्रियाय । लीलावलम्बित-वपुषे ।भक्तमानसमन्दिराय । मन्दमन्दारपुष्पौघलसद्वायुनिषे-विताय । कस्तूरीविलसत्फालाय । दिव्यवेषविराजिताय । दिव्यदेहप्रभाकूटसन्दीपितदिगन्तराय । देवासुरगुरुस्तव्याय । देवासुरनमस्कृताय नमः । ९२०

हस्तराजत्पुण्डरीकाय नमः । पुण्डरीकनिभेक्षणाय । सर्वाशास्यगुणाय । अमेयाय । सर्वलोकेष्टभूषणाय । सर्वेष्टदात्रे । सर्वेष्टाय । स्फुरन्मंगलविग्रहाय । अविद्यालेशरहिताय । नानाविधैकसंश्रयाय । मूर्तिभवाय । कृपापूराय । भक्तेष्टफल-पूरकाय । सम्पूर्णकामाय । सौभाग्यनिधये । सौभाग्यदायकाय । हितैषिणे । हितकृते । सौम्याय । परार्थैकप्रयोजनाय नमः । ९४०

शरणागतदीनार्तपरित्राणपरायणाय । जिष्णवे । नेत्रे । वषट्काराय । भ्राजिष्णवे । भोजनाय । हविषे । भोक्त्रे । भोजयित्रे । जेत्रे । जितारये । जितमानसाय । अक्षराय । कारणाय । क्रुद्धसमराय । शारदप्लवाय । आज्ञापकेच्छाय । गम्भीराय । कवये । दुःस्वप्ननाशकाय नमः । ९६०

पञ्चब्रह्मसमुत्पत्तये नमः । क्षेत्रज्ञाय । क्षेत्रपालकाय । व्योमकेशाय । भीमवेषाय । गौरीपतये । अनामयाय । भवाब्धितरणोपायाय । भगवते । भक्तवत्सलाय । वराय । वरिष्ठाय । नेदिष्ठाय । प्रियाय । प्रियदवाय । सुधिये । यन्त्रे । यविष्ठाय । क्षोदिष्ठाय । स्थविष्ठाय नमः । ९८०

यमशासकाय नमः । हिरण्यगर्भाय । हेमांगाय । हेमरूपाय । हिरण्यदाय । ब्रह्मज्योतिषे । अनावेक्ष्याय । चामुण्डाजनकाय । रवये । मोक्षार्थिजनसंसेव्याय । मोक्षदाय । मोक्षनायकाय । महाश्मशाननिलयाय । वेदाश्वाय । भूरथाय । स्थिराय । मृगव्याधाय । चर्मधाम्ने । प्रच्छन्नाय । स्फटिकप्रभाय नमः । १०००

सर्वज्ञाय नमः । परमार्थात्मने । ब्रह्मानन्दाश्रयाय । विभवे । महेश्वराय । महादेवाय । परब्रह्मणे । सदाशिवाय नमः । १००८

## नमो मृत्युञ्जयाय ।

स्फुटितनलिनसंस्थं मौलिबद्धेन्दुरेखा-
गलदमृतजलार्द्रं चन्द्रवह्न्यर्क नेत्रम् ।
स्वकरकलित मुद्रापाश वेदाक्षमालं
स्फटिकरजतमुक्तागौरमीशं नमामि ।।

* * *

# श्री शिवसहस्रनामस्तोत्रम् ४

## भगीरथकृतम्

भगीरथ उवाच—

ॐ नमस्ते पार्वतीनाथ देवदेव परात्पर ।
अच्युतानघ पञ्चास्य भीमास्य रुचिरानन ॥ १

व्याघ्राजिनधरानन्त पारावारविवर्जित ।
पञ्चानन महासत्त्व महाज्ञानमय प्रभो ॥ २

अजितामितदुर्धर्ष विश्वेश परमेश्वर ।
विश्वात्मन्विश्वभूतेश विश्वाश्रय जगत्पते ॥ ३

विश्वोपकारिन्विश्वैकधाम विश्वाश्रयाश्रय ।
विश्वाधार सदानन्द विश्वानन्द नमोऽस्तु ते ॥ ४

शर्व सर्वविदज्ञानविवर्जित सुरोत्तम ।
सुरवन्द्य सुरस्तुत्य सुरराज सुरोत्तम ॥ ५

सुरपूज्य सुरध्येय सुरेश्वर सुरान्तक ।
सुरारिमर्दक सुरश्रेष्ठ तेऽस्तु नमो नमः ॥ ६

त्वं शुद्धः शुद्धबोधश्च शुद्धात्मा जगतां पतिः ।
शम्भुः स्वयम्भूरत्युग्र उग्रकर्मोग्रलोचनः ॥ ७

उग्रप्रभावश्चात्युग्रमर्दकोऽत्युग्ररूपवान् ।
उग्रकण्ठः शिवः शान्तः सर्वशान्तिविधायकः ॥ ८

सर्वार्थदः शिवाधारः शिवायनिरमित्रजित् ।
शिवदः शिवकर्ता च शिवहन्ता शिवेश्वरः ॥ ९

शिशुः शैशवयुक्तश्च पिङ्गकेशो जटाधरः ।
गङ्गाधरकपर्दी च जटाजूटविराजितः ॥ १०

जटिलो जटिलाराध्यः सर्वदोन्मत्तमानसः ।
उन्मत्तकेश उन्मत्त उन्मत्तानामधीश्वरः ॥ ११

उन्मत्तलोचनो भीमस्त्रिनेत्रो भीमलोचनः ।
बहुनेत्रो द्विनेत्री च रक्तनेत्रः सुनेत्रकः ॥ १२

दीर्घनेत्रश्च पिङ्गाक्षः सुप्रभाख्यः सुलोचनः ।
सोमनेत्रोऽग्निनेत्राख्यः सूर्यनेत्रः सुवीर्यवान् ॥ १३

पद्माक्षः कमलाक्षश्च नीलोत्पलदलेक्षणः ।
सुलक्षणः शूलपाणिः कपाली कपिलेक्षणः ॥ १४

व्याघूर्णनयनो धूर्तो व्याघ्रचर्माम्बरावृतः ।
श्रीकण्ठो नीलकण्ठाख्यः शितिकण्ठः सुकण्ठकः ॥ १५

चन्द्रचूडश्चन्द्रधरश्चन्द्रमौलिः शशाङ्कभृत् ।
शशिकान्तः शशाङ्काभः शशाङ्काङ्कितमूर्धजः ॥ १६

शशाङ्कवदनो वीरो वरदो वरलोचनः ।
शरच्चन्द्रसमाभासः शरदिन्दुसमप्रभः ॥ १७

कोटिसूर्यप्रतीकाशश्चन्द्रास्यश्चन्द्रशेखरः ।
अष्टमूर्तिर्महामूर्तिर्भीममूर्तिर्भयानकः ॥ १८

भयदाता भयत्राता भयहर्ता भयोज्झितः ।
निर्भूतो भूतवन्द्यश्च भूतात्मा भूतभावनः ॥ १९

कौपीनवासा दुर्वासा विवासाः कामिनीपतिः ।
करालः कीर्तिदो वैद्यः किशोरः कामनाशनः ॥ २०

कीर्तिरूपः कुन्तधारी कालकूटकृताशनः ।
कालकूटः सुरूपी च कुलमन्त्रप्रदीपकः ॥ २१

कलाकाष्ठात्मकः काशीविहारी कुटिलाननः ।
महाकाननसंवासी कालीप्रतिविवर्धनः ॥ २२

कालीधरः कामचारी कुलकीर्तिविवर्धनः ।
कामाद्रिः कामुकवरः कार्मुकी काममोहितः ॥ २३

कटाक्षः कनकाभासः कनकोज्ज्वलगात्रकः ।
कामातुरः कणत्पादः कुटिलभ्रुकुटीधरः ॥ २४

कार्तिकेयपिता कोकनदभूषणभूषितः ।
खड्गाङ्गयोद्धा खड्गी च गिरीशो गगनेश्वरः ॥ २५

गणाध्यक्षः खेटकधृक् खर्वः खर्वतरः खगः ।
खगारूढः खगाराध्यः खेचरः खेचरेश्वरः ॥ २६

खेचरत्वप्रदः क्षोणीपतिः खेचरमर्दकः ।
गणेश्वरो गणपिता गरिष्ठो गणभूपतिः ॥ २७

गुरुर्गुरुतरो ज्ञेयो गङ्गापतिरमर्षणः ।
गीतप्रियो गीतरतः सुगोप्यो गोपवृन्दपः ॥ २८

गवारूढो जगद्धर्ता गोस्वामी गोस्वरूपकः ।
गोप्रदो गोधरो गृध्रो गरुत्मान् गोकृतासनः ॥ २९

गोपीशो गुरुतातश्च गुहावासी सुगोपितः ।
गजारूढो गजास्यश्च गजाजिनधरोऽग्रजः ॥ ३०

ग्रहाध्यक्षो ग्रहगणो दुष्टग्रहविमर्दकः ।
गानरूपी गानरतः प्रचण्डो गानविह्वलः ॥ ३१

गानमत्तो गुणी गुह्यो गुणग्रामाशयो गुणः ।
गूढबुद्धिर्गूढमूर्तिर्गूढपादविभूषितः ॥ ३२

गोप्ता गोलोकवासी च गुणवान्गुणिनां वरः ।
हरो हरितवर्णाक्षो मृत्युर्मृत्युञ्जयो हरिः ॥ ३३

हव्यभुग्हरिसम्पूज्यो हविर्हविर्भुजां वरः ।
अनादिरादिः सर्वाद्य आदितेयवरप्रदः ॥ ३४

अनन्तविक्रमो लोको लोकानां पापहारकः ।
गीष्पतिः सद्गुणोपेतः सगुणो निर्गुणो गुणी ॥ ३५

गुणप्रीतो गुणवरो गिरिजानायको गिरिः ।
गौरीभर्ता गुणाढ्यश्च गोश्रेष्ठासनसंस्थितः ॥ ३६

पद्मासनः पद्मनेत्रः पद्मतुष्टः सुपद्मकः ।
पद्मवक्त्रः पद्मकरः पद्मारूढपदाम्बुजः ॥ ३७

पद्मप्रियतमः पद्मालयः पद्मप्रकाशकः ।
पद्मकाननसंवासः पद्मकाननभञ्जकः ॥ ३८

पद्मकाननसंवासी पद्मारण्यकृतालयः ।
प्रफुल्लवदनः फुल्लकमलाक्षः प्रफुल्लकृत् ॥ ३९

फुल्लेन्दीवरसन्तुष्टः प्रफुल्लकमलासनः ।
फुल्लाम्भोजकरः फुल्लमानसः पापहारकः ॥ ४०

पापापहारी पुण्यात्मा पुण्यकीर्तिः सुपुण्यवान् ।
पुण्यः पुण्यतमो धन्यः सुपूतात्मा परात्मकः ॥ ४१

पुण्येशः पुण्यदः पुण्यनिरतः पुण्यभाजनः ।
परोपकारी पापिष्ठनाशकः पापहारकः ॥ ४२

पुरातनः पूर्वहीनः परद्रोहविवर्जितः ।
पीवरः पीवरमुखः पीनकायः पुरान्तकः ॥ ४३

पाशी पशुपतिः पाशहस्तः पाषाणवित्पतिः ।
पलात्मकः परो वेत्ता पाशबद्धविमोचकः ॥ ४४

पशूनामधिपः पाशच्छेत्ता पाशविभेदकः ।
पाषाणधारी पाषाणशयानः पाशिपूजितः ॥ ४५

पश्वारूढः पुष्पधनुः पुष्पवृन्दसुपूजितः ।
पुण्डरीकः पीतवासा पुण्डरीकाक्षवल्लभः ॥ ४६

पानपात्रकरः पानमत्तः पानातिभूतकः ।
पोष्टा पोष्टृवरः पूतः परित्राताऽखिलेश्वरः ॥ ४७

पुण्डरीकाक्षकर्ता च पुण्डरीकाक्षसेवितः ।
पल्लवस्थः प्रपीठस्थः पीठभूमिनिवासकः ॥ ४८

पिता पितामहः पार्थप्रसन्नोऽभीष्टदायकः ।
पितॄणां प्रीतिकर्ता च प्रीतिदः प्रीतिभाजनः ॥ ४९

प्रीत्यात्मकः प्रीतिवशी सुप्रीतः प्रीतिकारकः ।
प्रीतिहृत्प्रीतिरूपात्मन् प्रीतियुक्तस्त्वमेव हि ॥ ५०

प्रणतार्तिहरः प्राणवल्लभः प्राणदायकः ।
प्राणी प्राणस्वरूपश्च प्राणग्राही मुनिर्दयः ॥ ५१

प्राणनाथः प्रीतमनाः सर्वेषां प्रपितामहः ।
वृद्धः प्रवृद्धरूपश्च प्रेतः प्रणयिनां वरः ॥ ५२

पराधीशः परं ज्योतिः परनेत्रः परात्मकः ।
पारुष्यरहितः पुत्री पुत्रदः पुत्ररक्षकः ॥ ५३

पुत्रप्रियः पुत्रवश्यः पुत्रवत्परिपालकः ।
परित्राता परावासः परचेताः परेश्वरः ॥ ५४

पतिः सर्वस्य सम्पाल्यः पवमानः परोऽन्तकः ।
पुरहा पुरुहूतश्च त्रिपुरारिः पुरान्तकः ॥ ५५

पुरन्दरोऽतिसम्पूज्यः प्रधर्षो दुष्प्रधर्षणः ।
पटुः पटुतरः प्रौढः प्रपूज्यः पर्वतालयः ॥ ५६

पुलिनस्थः पुलस्त्याख्यः पिङ्गचक्षुः प्रपन्नगः ।
अभीरुरसिताङ्गश्च चण्डरूपः सिताङ्गकः ॥ ५७

सर्वविद्याविनोदश्च सर्वसौख्ययुतः सदा ।
सुखहर्ता सर्वसुखी सर्वलोकैकपावनः ॥ ५८

सदावनः सारदक्ष सुसिद्धः शुद्धरूपकः ।
सारः सारतरः सूर्यः सोमः सर्वप्रकाशकः ॥ ५९

सोममण्डलधारी च समुद्रः सिन्धुरूपवान् ।
सुरज्येष्ठः सुरश्रेष्ठः सुरासुरनिषेवितः ॥ ६०

सर्वधर्मविनिर्मुक्तः सर्वलोकनमस्कृतः ।
सर्वाचारयुतः सौरः शाक्तः परमवैष्णवः ॥ ६१

सर्वधर्मविधानज्ञः सर्वाचारपरायणः ।
सर्वरोगप्रशमनः सर्वरोगापहारकः ॥ ६२

प्रकृष्टात्मा महात्मा च सर्वधर्मप्रदर्शकः ।
सर्वसम्पद्युतः सर्वसम्पद्दानसमेक्षणः ॥ ६३

सहास्यवदनो हास्ययुक्तः प्रहसिताननः ।
साक्षी समक्षवक्ता च सर्वदर्शी समस्तवित् ॥ ६४

सकलज्ञः समर्थज्ञः सुमनाः शैवपूजितः ।
शोकप्रशमनः शोकहन्ताऽशोच्यः शुभान्वितः ॥ ६५

शैलज्ञः शैलजानाथः शैलनाथः शनैश्चरः ।
शशाङ्कसदृशज्योतिः शशाङ्कार्धविराजितः ॥ ६६

साधुप्रियः साधुतमः साध्वीपतिरलौकिकः ।
शून्यरूपः शून्यदेहः शून्यस्थः शून्यभावनः ॥ ६७

शून्यगामी श्मशानस्थः श्मशानाधिपतिः सुवाक् ।
शतसूर्यप्रभः सूर्यः सूर्यदीप्तः सुरारिहा ।
शुभान्वितः शुभतनुः शुभबुद्धिः शुभात्मकः ॥ ६८

शुभान्विततनुः शुक्लतनुः शुक्लप्रभान्वितः ।
सुशीलः शुक्लदशनः शुक्लाभः शुक्लमाल्यधृत् ॥ ६९

शुक्लपुष्पप्रियः शुक्लवसनः शुक्लकेतनः ।
शेषालङ्करणः शेषरहितः शेषवेष्टितः ॥ ७०

शेषारूढः शेषशायी शेषाङ्गदविराजितः ।
सतीप्रियः साशंकश्च समदर्शी समाधिमान् ॥ ७१

सत्सङ्गी सत्प्रियः सङ्गी निःसङ्गी सङ्गवर्जितः ।
सहिष्णुः शाश्वतैश्वर्यः सामगानरतः सदा ॥ ७२

सामवेत्ता साम्यतरः श्यामापतिरशेषभुक् ।
तारिणीपतिराताम्रनयनस्त्वरिताप्रियः ॥ ७३

तारात्मकस्त्वग्वसनस्तरुणीरमणो रतः ।
तृप्तिरूपस्तृप्तिकर्ता तारकारिनिषेवितः ॥ ७४

वायुकेशो भैरवेशो भवानीशो भवान्तकः ।
भवबन्धुर्भवहरो भवबन्धनमोचकः ॥ ७५

अभिभूतोऽभिभूतात्मा सर्वभूतप्रमोहकः ।
भुवनेशो भूतपूज्यो भोगमोक्षफलप्रदः ॥ ७६

दयालुर्दीननाथश्च दुःसह्यो दैत्यमर्दकः ।
दक्षकन्यापतिर्दुःखनाशको धनधान्यदः ॥ ७७

दयावान् दैवतश्रेष्ठो देवगन्धर्वसेवितः ।
नानायुधधरो नानापुष्पगुच्छविराजितः ॥ ७८

नानासुखप्रदो नानामूर्तिधारी च नर्तकः ।
नित्यविज्ञानसंयुक्तो नित्यरूपोऽनिलोऽनलः ॥ ७९

लब्धवर्णो लघुतरो लघुत्वपरिवर्जितः ।
लोलाक्षो लोकसंपूज्यो लावण्य परिसंयुतः ॥ ८०

नपुरीन्याससंस्थश्च नागेशो नगपूजितः ।
नारायणो नारदश्च नानाभरणभूषितः ॥ ८१

नगभूतो नग्नदेशो नग्नः सानन्दमानसः ।
नमस्यो नतनाभिश्च नम्रमूर्धाभिवन्दितः ॥ ८२

नन्दिकेशो नन्दिपूज्यो नानानीरजमध्यगः ।
नवीनबिल्वपत्रौघतुष्टो नवघनद्युतिः ॥ ८३

नन्दः सानन्द आनन्दमयश्चानन्दविह्वलः ।
नालसंस्थः शोभनस्थः सुस्थः सुस्थमतिस्तथा ॥ ८४

स्वल्पासनो भीमरुचिर्भुवनान्तकराम्बुदः ।
आसन्नः सिकतालीनो वृषासीनो वृषासनः ॥ ८५

वैरस्यरहितो वार्यो व्रती व्रतपरायणः ।
ब्राह्म्यो विद्यामयो विद्याभ्यासी विद्यापतिस्तथा ॥ ८६

घण्टाकारो घोटकस्थो घोररावो घनस्वनः ।
घूर्णचक्षुरघूर्णात्मा घोरहासो गभीरधीः ॥ ८७

चण्डीपतिश्चण्डमूर्तिश्चण्डो मुण्डी प्रचण्डवाक् ।
चितासंस्थश्चितावासश्चितिर्दण्डकरः सदा ॥ ८८

चिताभस्माभिसंलिप्तश्चितानृत्यपरायणः ।
चिताप्रमोदी चित्साक्षी चिन्तामणिरचिन्तकः ॥ ८९

चतुर्वेदमयश्चक्षुश्चतुराननपूजितः ।
चीरवासाश्चकोराक्षश्चलन्मूर्तिश्चलेक्षणः ॥ ९०

चलत्कुण्डलभूषाढ्यश्चलद्भूषणभूषितः ।
चलन्नेत्रश्चलत्पादश्चलन्नूपुरराजितः ॥ ९१

स्थावरः स्थिरमूर्तिश्च स्थावरेशः स्थिरासनः ।
स्थापकः स्थैर्यनिरतः स्थूलरूपी स्थलालयः ॥ ९२

स्थैर्यातिगः स्थितिपरः स्थाणुरूपी स्थलाधिपः ।
ऐहिको मदनार्तश्च महीमण्डलपूजितः ॥ ९३

महीप्रियो मत्तरवो मीनकेतुविमर्दकः ।
मीनरूपो मीनसंस्थो मृगहस्तो मृगासनः ॥ ९४

मार्गस्थो मेखलायुक्तो मैथिलीश्वरपूजितः ।
मिथ्याहीनो मङ्गलदो माङ्गल्यो मकरासनः ॥ ९५

मत्स्यप्रियो मधुरगीर्मधुपानपरायणः ।
मृदुवाक्यपरः सौरप्रियो मोदान्वितस्तथा ॥ ९६

मुण्डालिर्भूषणो दण्डी उद्दण्डो ज्वललोचनः ।
असाध्यसाधकः शूरसेव्यः शोकापनोदनः ॥ ९७

श्रीपतिः श्रीसुसेव्यश्च श्रीधरः श्रीनिकेतनः ।
श्रीमतां श्रीस्वरूपश्च श्रीमाञ्श्रीनिलयस्तथा ॥ ९८

श्रमादिक्लेशरहितः श्रीनिवासः श्रियान्वितः ।
श्रद्धालुः श्राद्धदेवश्च श्राद्धो मधुरवाक् तथा ॥ ९९

प्रलयाग्र्यर्कसंकाशः प्रमत्तनयनोज्ज्वलः ।
असाध्यसाधकः शूरसेव्यः शोकापनोदनः ॥ १००

विश्वभूतमयो वैश्वानरनेत्रोऽधिमोहकृत् ।
लोकत्राणपरोऽपारगुणः पारविवर्जितः ॥ १०१

अग्निजिह्वो द्विजास्यश्च विश्वास्यः सर्वभूतधृत् ।
खेचरः खेचराधीशः सर्वगः सार्वलौकिकः ॥ १०२

सेनानीजनकः क्षुब्धाब्धिर्वारिक्षोभविनाशकः ।
कपालविलसद्धस्तः कमण्डलुभृदर्चितः ॥ १०३

केवलात्मस्वरूपश्च केवलज्ञानरूपकः ।
व्योमालयनिवासी च बृहद्व्योमस्वरूपकः ॥ १०४

अम्भोजनयनोऽम्भोधिशयानः पुरुषातिगः ।
निरालम्बोऽवलम्बश्च सम्भोगानन्दरूपकः ॥ १०५

योगनिद्रामयो लोकप्रमोहापहरात्मकः ।
बृहद्वक्त्रो बृहन्नेत्रो बृहद्बाहुर्बृहद्बलः ॥ १०६

बृहत्सर्पाङ्गदो दुष्टबृहद्व्यालविमर्दकः ।
बृहद्भुजबलोन्मत्तो बृहत्तुण्डो बृहद्वपुः ॥ १०७

बृहदैश्वर्ययुक्तश्च बृहदैश्वर्यदः स्वयम् ।
बृहत्सम्भोगसन्तुष्टो बृहदानन्ददायकः ॥ १०८

बृहज्जटाजूटधरो बृहन्माली बृहद्धनुः ।
इन्द्रियाधिष्ठितः सर्वलोकेन्द्रियविमोहकृत् ॥ १०९

सर्वेन्द्रियप्रवृत्तिकृत् सर्वेन्द्रियनिवृत्तिकृत् ।
प्रवृत्तिनायकः सर्वविपत्तिपरिनाशकः ॥ ११०

प्रवृत्तिमार्गनेता त्वं स्वतन्त्रेच्छामयः स्वयम् ।
सत्प्रवृत्तिरतो नित्यं दयानन्दशिवाधरः ॥ १११

क्षितिरूपस्तोयरूपी विश्वतृप्तिकरस्तथा ।
तर्पस्तर्पणसम्प्रीतस्तर्पकस्तर्पणात्मकः ॥ ११२

तृप्तिकारणभूतश्च सर्वतृप्तिप्रसाधकः ।
अभेदो भेदकोऽच्छिद्यच्छेदकोऽच्छेद्य एव हि ॥ ११३

अच्छिन्नधन्वाऽच्छिन्नेषुरच्छिन्नध्वजवाहनः ।
अदृष्टः समधृष्टास्त्रः समधृष्टो बलोन्नतः ॥ ११४

चित्रयोधी चित्रकर्मा विश्वसङ्कर्षकः स्वयम् ।
भक्तानामीप्सितकरः सर्वेप्सितफलप्रदः ॥ ११५

वाञ्छिताभीष्टफलदोऽभिन्नज्ञानप्रवर्तकः ।
बोधनात्मा बोधनार्थातिगः सर्वप्रबोधकृत् ॥ ११६

त्रिजटश्चैकजटिलश्चलज्जूटो भयानकः ।
जटाटीनो जटाजूटस्पृष्टावरवचः स्वयम् ॥ ११७

षाण्मासुरस्य जनकः शक्तिः प्रहरतां वरः ।
अनर्घास्त्रप्रहारी चानर्घधन्वा महार्घ्यपात् ॥ ११८

योनिमण्डलमध्यस्थो मुखयोनिरजृम्भणः ।
महाद्रिसदृशः श्वेतः श्वेतपुष्पस्रगन्वितः ॥ ११९

मकरन्दप्रियो नित्यं मासर्तुहायनात्मकः ।
नानापुष्पप्रसूर्नानापुष्पैरर्चितगात्रकः ॥ १२०

षडङ्गयोगनिरतः सदायोगार्द्रमानसः ।
सुरासुरनिषेव्याङ्घ्रिर्विलसत्पादपङ्कजः ॥ १२१

सुप्रकाशितवक्त्राब्जः सितेतरगलोज्ज्वलः ।
वैनतेयसमारूढः शरदिन्दुसहस्रवत् ॥ १२२

जाज्वल्यमानस्तेजोभिर्ज्वालापुञ्जो यमः स्वयम् ।
प्रज्वलद्विद्युदाभश्च साट्टहासभयङ्करः ॥ १२३

प्रलयानलरूपी च प्रलयाग्निरुचिः स्वयम् ।
जगतामेकपुरुषो जगतां प्रलयात्मकः ॥ १२४

प्रसीद त्वं जगन्नाथ जगद्योने नमोऽस्तु ते ॥ १२५

श्रीमहादेव उवाच—

एवं नामसहस्रेण राज्ञा वै संस्तुती हरः ।
प्रत्यक्षमगमत्तस्य सुप्रसन्नमुखाम्बुजः ॥ १२६

स तं विलोक्य त्रिदशैकनाथं पञ्चाननं श्वेतरुचिं प्रसन्नम् ।
वृषाधिरूढं भुजगाङ्गदैर्युतं ननर्त राजा धरणीभुजां वरः ॥
१२७

प्रोवाच चेदं परमेश्वराद्य मे एतानि सर्वाणि सुखार्थकानि ।
तपश्च होमश्च मनुष्यजन्म यत्त्वां प्रपश्यामि दृशा परेशम् ॥१२८

मत्तो न धन्योस्ति महीतले वा स्वर्गे यतस्त्वं मम नेत्रगोचरः ।
सुरासुराणामपि दुर्लभेक्षणः परात्परः पूर्णमयो निरामयः ॥ १२९

ततस्तमेवं प्रतिभाषमाणं प्राह प्रपन्नार्तिहरो महेश्वरः ।
किं ते मनोवाञ्छितमेव विद्यते वृणुष्व तत्पुत्र ददामि तुभ्यम् ॥

स चाह पूर्वं कपिलस्य शापतः पातालरन्ध्रे मम पूर्ववंशजाः ।
भस्मीबभूवुः सगरस्य पुत्रा महाबला देवसमानविक्रमाः ॥ १३१

तेषां तु निस्तारणकाम्यया ह्यहं गङ्गां धरण्यामभिनेतुमीहे ।
सा तु त्वदीया परमा हि शक्तिः विनाज्ञया ते न हि याति पृथ्वीम् ॥
१३२

तदेतदिच्छामि समेत्य गङ्गा क्षितौ महावेगवती महानदी ।
प्रविश्य तस्मिन्विवरे महेश्वरी पुनातु सर्वान्सगरस्य पुत्रान् ॥१३३

इत्येवमाकर्ण्य वचः परेश्वरः प्रोवाच वाक्यं क्षितिपालपुङ्गवम् ।
मनोरथस्तेऽयमवेहि पूर्णो मम प्रसादादचिराद्भविष्यति ॥ १३४

ये चापि मां भक्तित एव मर्त्याः स्तोत्रेण चानेन नृप स्तुवन्ति ।
तेषां तु पूर्णाः सकला मनोरथा ध्रुवं भविष्यन्ति मम प्रसादात्॥ १३५

श्रीमहादेव उवाच—

इत्येवं स वरं लब्ध्वा राजा हृष्टमनास्ततः ।
दण्डवत्प्रणिपत्याह धन्योऽहं त्वत्प्रसादतः ॥ १३६

ततश्चान्तर्दधे देवः क्षणादेव महामते ।
राजा निर्वृत्तचेताः स बभूव मुनिसत्तम ॥ १३७

राज्ञा कृतमिदं स्तोत्रं सहस्रनामसंज्ञकम् ।
यः पठेत्परया भक्त्या स कैवल्यमवाप्नुयात् ॥ १३८

न चेह दुःखं कुत्रापि जायते तस्य नारद ।
जायते परमैश्वर्यं प्रसादाच्च महेशितुः ॥ १३९

महापदि भये घोरे यः पठेत्स्तोत्रमुत्तमम् ।
शम्भोर्नामसहस्राख्यं सर्वमङ्गलवर्धनम् ॥ १४०

महाभयहरं सर्वसुखसम्पत्तिदायकम् ।
स मुच्यते महादेवप्रसादेन महाभयात् ॥ १४१
दुर्भिक्ष्ये लोकपीडायां देशोपद्रव एव वा ।
सम्पूज्य परमेशानं धूपदीपादिभिर्मुने ॥ १४२
यः पठेत्परया भक्त्या स्तोत्रं नामसहस्रकम् ।
न तस्य देशे दुर्भिक्षं न च लोकादिपीडनम् ॥ १४३
न चान्योपद्रवो वापि भवेदेतत्सुनिश्चितम् ।
पर्जन्योऽपि यथाकाले वृष्टिं तत्र करोति हि ॥ १४४
यत्रेदं पठ्यते स्तोत्रं सर्वपापप्रणाशनम् ।
सर्वसस्ययुता पृथ्वी तस्मिन्देशे भवेद्ध्रुवम् ॥ १४५
न दुष्टबुद्धिर्लोकानां तत्रस्थानां भवेदपि ।
नाकाले मरणं तत्र प्राणिनां जायते मुने ॥ १४६
न हिंस्रास्तत्र हिंसन्ति देवदेवप्रसादतः ।
धन्या देशाः प्रजा धन्या यत्र देशे महेश्वरम् ॥ १४७
सम्पूज्य पार्थिवं लिङ्गं पठेद्यत्रेदमुत्तमम् ।
चतुर्दश्यां तु कृष्णायां फाल्गुने मासि भक्तितः ॥ १४८
यः पठेत्परमेशस्य नाम्नां दशशताख्यकम् ।
स्तोत्रमत्यन्तसुखदं न पुनर्जन्मभाग्भवेत् ॥ १४९
वायुतुल्यबलो नूनं विहरेद्धरणीतले ।
धनेशतुल्यो धनवान्कन्दर्पसमरूपवान् ॥ १५०
विहरेद्देवतातुल्यो निग्रहानुग्रहे क्षमः ।
गङ्गायां वा कुरुक्षेत्रे प्रयागे वा महेश्वरम् ।
परिपूज्य पठेद्यस्तु स कैवल्यमवाप्नुयात् ॥ १५१
काश्यां यस्तु पठेदेतत्स्तोत्रं परममङ्गलम् ।
तस्य पुण्यं मुनिश्रेष्ठ किमहं कथयामि ते ॥ १५२

एतत्स्तोत्रप्रसादेन स जीवन्नेव मानवः ।
साक्षान्महेशतामेति मुक्तिरन्ते करस्थिता ॥ १५३

प्रत्यहं प्रपठेदेतद्बिल्वमूले नरोत्तमः ।
स सालोक्यमवाप्नोति देवदेवप्रसादतः ॥ १५४

यो ह्येतत्पाठयेत्स्तोत्रं सर्वपापनिबर्हणम् ।
स मुच्यते महापापात्सत्यं सत्यं वदामि ते ॥ १५५

न तस्य ग्रहपीडा स्यान्नापमृत्युभयं तथा ।
न तं द्विषन्ति राजानो न वा व्याधिभयं भवेत् ॥ १५६

पठेदेतद्धृदि ध्यात्वा देवदेवं सनातनम् ।
सर्वदेवमयं पूर्णं रजताद्रिसमप्रभम् ॥ १५७

प्रफुल्लपङ्कजास्यं च चारुरूपं वृषध्वजम् ।
जटाजूटज्वलत्कालकूटशोभितविग्रहम् ॥ १५८

त्रिशूलं डमरुं चैव दधानं दक्षवामयोः ।
द्वीपिचर्माम्बरधरं शान्तं त्रैलोक्यमोहनम् ॥ १५९

एवं हृदि नरो भक्त्या विभाव्यैतत्पठेद्यदि ।
इह भुक्त्वा परं भोगं परत्र च महामते ॥ १६०

शम्भोः स्वरूपतां याति किमन्यत्कथयामि ते ॥ १६१

तत्रैव सद्भक्तियुतः पठेदिदं
स्तोत्रं मम प्रीतिकरं परं मुने ।
मर्त्यो हि योऽन्यः खलु सोऽपि कृच्छ्रं
जगत्पवित्रायत एव पापतः ॥ १६२

*श्रीमहाभागवते उपपुराणे शिवसहस्रनामकथनं सप्तषष्टितमोऽध्यायः*

★ ★ ★

# श्री शिवसहस्रनामावलिः-४

(भगीरथोक्ता)

पार्वतीनाथाय नमः। देवदेवाय। परात्पराय। अच्युताय। अनघाय। पञ्चास्याय। भीमास्याय। रुचिराननाय। व्याघ्राजिनधराय। अनन्ताय। पारावारविवर्जिताय। पञ्चाननाय। महासत्त्वाय। महाज्ञानमयाय। प्रभवे। अजिताय। अमिताय। दुर्धर्षाय। विश्वेशाय। परमेश्वराय नमः। (२०)

विश्वात्मने नमः। विश्वभूताय। ईशाय। विश्वाश्रयाय। जगत्पतये। विश्वोपकारिणे। विश्वैकधाम्ने। विश्वाश्रयाय। आश्रयाय। विश्वाधाराय। सदानन्दाय। विश्वानन्दाय। शर्वाय। सर्वविदे। अज्ञानविवर्जिताय। सुरोत्तमाय। सुरवन्द्याय। सुरस्तुत्याय। सुरराजाय। सुरोत्तमाय नमः। (४०)

सुरपूज्याय नमः। सुरध्येयाय। सुरेश्वराय। सुरान्तकाय। सुरारिमर्दकाय। सुरश्रेष्ठाय। शुद्धाय। शुद्धबोधाय। शुद्धात्मने। जगतां पतये। शम्भवे। स्वयंभुवे। अत्युग्राय। उग्रकर्मणे। उग्रलोचनाय। उग्रप्रभावाय। अत्युग्रमर्दकाय। अत्युग्ररूपवते। उग्रकण्ठाय। शिवाय नमः॥ (६०)

शान्ताय नमः। सर्वशान्तिविधायकाय। सर्वार्थदाय। शिवाधाराय। शिवायनये। अमित्रजिते। शिवदाय। शिवकर्त्रे। शिवहन्त्रे। शिवाय। ईश्वराय। शिशवे। शैशवयुक्ताय। पिङ्गकेशाय। जटाधराय। गङ्गाधराय। कपर्दिने। जटाजूटविराजिताय। जटिलाय। जटिलाराध्याय नमः। (८०)

सर्वदोन्मत्तमानसाय नमः। उन्मत्तकेशाय। उन्मत्ताय। उन्मत्तानामधीश्वराय। उन्मत्तलोचनाय। भीमाय। त्रिनेत्राय।

भीमलोचनाय। बहुनेत्राय। द्विनेत्रिणे। रक्तनेत्राय। सुनेत्रकाय। दीर्घनेत्राय। पिङ्गाक्षाय। सुप्रभाख्याय। सुलोचनाय। सोमनेत्राय। अग्निनेत्राय। सूर्यनेत्राय। सुवीर्यवते नमः। (१००)

पद्माक्षाय नमः। कमलाक्षाय। नीलोत्पलदलेक्षणाय। सुलक्षणाय। शूलपाणये। कपालिने। कपिलेक्षणाय। व्याघूर्णनयनाय। धूर्ताय। व्याघ्रचर्माम्बरावृताय। श्रीकण्ठाय। नीलकण्ठाख्याय। शितिकण्ठाय। सुकण्ठकाय। चन्द्रचूडाय। चन्द्रधराय। चन्द्रमौलये। शशाङ्कभृते। शशिकान्ताय। शशाङ्काभाय नमः। (१२०)

शशाङ्काङ्कितमूर्धजाय नमः। शशाङ्कवदनाय। वीराय। वरदाय। वरलोचनाय। शरच्चन्द्रसमाभासाय। शरदिन्दुसमप्रभाय। कोटिसूर्यप्रतीकाशाय। चन्द्रास्याय। चन्द्रशेखराय। अष्टमूर्तये। महामूर्तये। भीममूर्तये। भयानकाय। भयदात्रे। भयत्रात्रे। भयहर्त्रे। भयोज्झिताय। निर्भूताय। भूतवन्द्याय नमः॥ (१४०)

भूतात्मने नमः। भूतभावनाय। कौपीनवाससे। दुर्वाससे। विवाससे। कामिनीपतये। करालाय। कीर्तिदाय। वैद्याय। किशोराय। कामनाशनाय। कीर्तिरूपाय। कुन्तधारिणे। कालकूटकृताशनाय। कालकूटाय। सुरूपिणे। कुलमन्त्रप्रदीपकाय। कलाकाष्ठात्मकाय नमः। (१६०)

काशीविहारिणे नमः। कुटिलाननाय। महाकाननसंवासिने। कालीप्रीतिविवर्धनाय। कालीधराय। कामचारिणे। कुलकीर्तिविवर्धनाय। कामाद्रये। कामुकवराय। कार्मुकिने। काममोहिताय। कटाक्षाय। कनकाभासाय। कनकोज्ज्वलगात्रकाय। कामातुराय। कणत्पादाय। कुटिलभ्रुकुटीधराय। कार्तिकेयपित्रे। कोकनदभूषणभूषिताय। खट्वाङ्गयोद्ध्रे नमः। (१८०)

खड्गिने नमः । गिरिशाय । गगनेश्वराय । गणाध्यक्षाय । खेटकद्दशे । खर्वाय । खर्वतराय । खगाय । खगारूढाय । खगाराध्याय । खेचराय । खेचरेश्वराय । खेचरत्वप्रदाय । क्षोणीपतये । खेचरमर्दकाय । गणेश्वराय । गणपित्रे । गरिष्ठाय गणभूपतये । गुरवे नमः । (२००)

गुरुतराय नमः । ज्ञेयाय । गङ्गापतये । अमर्षणाय । गीतप्रियाय । गीतरताय । सुगोप्याय । गोपवृन्दपाय । गवारूढाय । जगद्धर्त्रे । गोस्वामिने । गोस्वरूपकाय । गोप्रदाय । गोधराय । गृध्राय । गरुत्मते । गोकृतासनाय । गोपीशाय । गुरुताताय । गुहावासिने नम्यः । २२०

सुगोपिताय नमः । गजारूढाय । गजास्याय । गजाजिनधराय । अग्रजाय । ग्रहाध्यक्षाय । ग्रहगणाय । दुष्टग्रहविमर्दकाय । गानरूपिणे । गानरताय । प्रचण्डाय । गानविह्वलाय । गानमत्ताय । गुणिने । गुह्याय । गुणग्रामाशयाय । गुणाय । गूढबुद्धये । गूढमूर्तये । गूढपादविभूषिताय नमः । (२४०)

गोप्त्रे नमः । गोलोकवासिने । गुणवते । गुणिनां वराय । हराय । हरितवर्णाक्षाय । मृत्यवे । मृत्युञ्जयाय । हरये । हव्यभुजे । हरिसंपूज्याय । हविषे । हविर्भुजां वराय । अनादये । आदये । सर्वाद्याय । आदितेयवरप्रदाय । अनन्तविक्रमाय । लोकाय । लोकानां पापहारकाय नमः ।। (२६०)

गीष्पतये नमः । सद्गुणोपेताय । सगुणाय । निर्गुणाय । गुणिने । गुणप्रीताय । गुणवराय । गिरिजानायकाय । गिरये । गौरीभर्त्रे । गुणाढ्याय । गोश्रेष्ठासनसंस्थिताय । पद्मासनाय । पद्मनेत्राय । पद्मतुष्टाय । सुपद्मकाय । पद्मवक्त्राय । पद्मकराय । पद्मारूढपदाम्बुजाय । पद्मप्रियतमाय नमः । २८०

पद्मालयाय नमः । पद्मप्रकाशकाय । पद्मकानन संवासाय । पद्मकाननभञ्जकाय । पद्मकाननसंवासिने । पद्मारण्यकृतालयाय । प्रफुल्लवदनाय । फुल्लकमलाक्षाय । प्रफुल्लकृते । फुल्लेन्दीवरसन्तुष्टाय । प्रफुल्लकमलासनाय । फुल्लांभोजकराय । फुल्लमानसाय । पापहारकाय । पापापहारिणे । पुण्यात्मने । पुण्यकीर्तये । सुपुण्यवते । पुण्याय । पुण्यतमाय नमः । (३००)

धन्याय नमः । सुपूतात्मने । परात्मकाय । पुण्येशाय । पुण्यदाय । पुण्यनिरताय । पुण्यभाजनाय । परोपकारिणे । पापिष्ठनाशकाय । पापहारकाय । पुरातनाय । पूर्वहीनाय । परद्रोहविवर्जिताय । पीवराय । पीवरमुखाय । पीनकायाय । पुरान्तकाय । पाशिने । पशुपतये । पाशहस्ताय नमः । ३२०

पाषाणविदे नमः । पतये । पलात्मकाय । पराय । वेत्त्रे । पाशबद्धविमोचकाय । पशूनामधिपाय । पाशच्छेत्रे । पाशविभेदकाय । पाषाणधारिणे । पाषाणशयानाय । पाशिपूजिताय । पश्वारूढाय । पुष्पधनुषे । पुष्पवृन्दसुपूजिताय । पुण्डरीकाय । पीतवाससे । पुण्डरीकाक्षवल्लभाय । पानपात्रकराय । पानमत्ताय । पोष्ट्रे । पोष्टृवराय नमः ।। ३४०

पूताय नमः । परित्रात्रे । अखिलेश्वराय । पुण्डरीकाक्षकर्त्रे । पुण्डरीकाक्षसेविताय । पल्लवस्थाय । प्रपीठस्थाय । पीठभूमिनिवासकाय । पित्रे । पितामहाय । पार्थप्रसन्नाय । अभीष्टदायकाय । पितॄणां प्रीतिकर्त्रे । प्रीतिदाय । प्रीति भाजनाय । प्रीत्यात्मकाय । प्रीतिवशिने । सुप्रीताय । प्रीतिकारकाय नमः । प्रीतिहृदे नमः । (३६०)

प्रीतिरूपात्मने नमः । प्रीतियुक्ताय । प्रणतार्तिहराय । प्राणवल्लभाय । प्राणदायकाय । प्राणिने । प्राणस्वरूपाय ।

प्राणग्राहिणे । मुनये । दयाय । प्राणनाथाय । प्रीतमनसे । सर्वेषां प्रपितामहाय । वृद्धाय । प्रवृद्धरूपाय । प्रेताय । प्रणयिनां वराय । पराधीशाय । परस्मै ज्योतिषे । परनेत्राय नमः । ३८०

परात्मकाय नमः । पारुष्यरहिताय । पुत्रिणे । पुत्रदाय । पुत्ररक्षकाय । पुत्रप्रियाय । पुत्रवश्याय । पुत्रवत्परिपालकाय । परित्रात्रे । परावासाय । परचेतसे । परेश्वराय । सर्वस्य पतये । संपाल्याय । पवमानाय । परस्मै । अन्तकाय । पुरघ्ने । पुरुहूताय । त्रिपुरारये नमः (४००)

पुरान्तकाय । पुरन्दराय । अतिसंपूज्याय । प्रधर्षाय । दुष्प्रधर्षणाय । पटवे । पटुतराय । प्रौढाय । प्रपूज्याय । पर्वतालयाय । पुलिनस्थाय । पुलस्त्याख्याय । पिङ्गचक्षुषे । प्रपन्नगाय । अभीरवे । असिताङ्गाय । चण्डरूपाय । सिताङ्गकाय । सर्वविद्याविनोदाय । सदा सर्वसौख्ययुताय नमः । (४२०)

सुखहर्त्रे नमः । सर्वसुखिने । सर्वलोकैकपावनाय । सदावनाय । सारदाय । सुसिद्धाय । शुद्धरूपकाय । साराय । सारतराय । सूर्याय । सोमाय । सर्वप्रकाशकाय । सोममण्डलधारिणे । समुद्राय । सिन्धुरूपवते । सुरज्येष्ठाय । सुरश्रेष्ठाय । सुरासुरनिषेविताय । सर्वधर्मविनिर्मुक्ताय । सर्वलोकनमस्कृताय नमः । ४४०

सर्वाचारयुताय नमः । सौराय । शाक्ताय । परमवैष्णवाय । सर्वधर्मविधानज्ञाय । सर्वाचारपरायणाय । सर्वरोगप्रशमनाय । सर्वरोगापहारकाय । प्रकृष्टात्मने । महात्मने । सर्वधर्मप्रदर्शकाय । सर्वसंपद्युताय । सर्वसंपद्दानसमेक्षणाय । सहास्यवदनाय । हास्ययुक्ताय । प्रहसिताननाय । साक्षिणे । समक्षवक्त्रे । सर्वदर्शिने । समस्तविदे नमः । (४६०)

सकलज्ञाय नमः । समर्थज्ञाय । सुमनसे । शैवपूजिताय । शोक प्रशमनाय । शोकहन्त्रे । अशोच्याय । शुभान्विताय । शैलज्ञाय । शैलजानाथाय । शैलनाथाय । शनैश्चराय । शशाङ्कसदृशज्योतिषे । शशाङ्कार्धविराजिताय । साधुप्रियाय । साधुतमाय।साध्वीपतये। अलौकिकाय। शून्यरूपाय। शून्यदेहाय नमः। (४८०)

शून्यस्थाय नमः। शून्यभावनाय । शून्यगामिने । श्मशानस्थाय । श्मशानाधिपतये । सुवाचे । शतसूर्यप्रभाय । सूर्याय। सूर्यदीप्ताय । सुरारिघ्ने । शुभान्विताय । शुभतनवे । शुभबुद्धये । शुभात्मकाय । शुभान्विततनवे । शुक्लतनवे । शुक्लप्रभान्विताय । सुशौक्लाय । शुक्लदशनाय । शुक्लाभाय नमः । ५००

शुक्लमाल्यधृते नमः । शुक्लपुष्पप्रियाय । शुक्लवसनाय । शुक्लकेतनाय । शेषालङ्करणाय । शेषरहिताय । शेषवेष्टिताय । शेषारूढाय । शेषशायिने । शेषाङ्गदविराजिताय । सतीप्रियाय । साशङ्काय । समदर्शिने । समाधिमते । सत्सङ्गिने । सत्प्रियाय । सङ्गिने। निःसङ्गिने। सङ्गवर्जिताय। सहिष्णवे नमः (५२०)

शाश्वतैश्वर्याय नमः । सदा सामगानरताय । सामवेत्त्रे । साम्यतराय । श्यामापतये । अशेषभुजे । तारिणीपतये । आताम्रनयनाय । त्वरिताप्रियाय । तारात्मकाय । त्वग्वसनाय । तरुणीरमणाय । रताय । तृप्तिरूपाय । तृप्तिकर्त्रे । तारकारि निषेविताय। वायुकेशाय। भैरवेशाय। भवानीशाय। भवान्तकाय नमः (५४०)

भवबन्धवे। भवहराय। भवबन्धनमोचकाय। अभिभूताय। अभिभूतात्मने । सर्वभूतप्रमोहकाय । भुवनेशाय । भूतपूज्याय ।

भोगमोक्षफलप्रदाय । दयालवे । दीननाथाय । दुःसहाय । दैत्यमर्दकाय । दक्षकन्यापतये । दुःखनाशकाय । धनधान्यदाय । दयावते । दैवतश्रेष्ठाय । देवगन्धर्वसेविताय । नानायुधधराय नमः । (५६०)

नानापुष्पगुच्छविराजिताय । नानासुखप्रदाय । नानामूर्तिधारिणे । नर्तकाय । नित्यविज्ञानसंयुक्ताय । नित्यरूपाय । अनिलाय । अनलाय । लब्धवर्णाय । लघुतराय । लघुत्वपरिवर्जिताय । लोलाक्षाय । लोकसंपूज्याय । लावण्यपरिसंयुताय । नपुरीन्याससंस्थाय । नागेशाय । नगपूजिताय । नारायणाय । नारदाय । नानाभरणभूषिताय नमः । ५८०

नगभूताय नमः । नग्नदेशाय । नग्नाय । सानन्दमानसाय । नमस्याय । नतनाभये । नम्रमूर्धाभिवन्दिताय । नन्दिकेशाय । नन्दिपूज्याय । नानानीरजमध्यगाय । नवीनबिल्वपत्रौघतुष्टाय । नवघनद्युतये । नन्दाय । सानन्दाय । आनन्दमयाय । आनन्दविह्वलाय । नालसंस्थाय । शोभनस्थाय । सुस्थाय । सुस्थमतये नमः । (६००)

स्वल्पासनाय नमः । भीमरुचये । भुवनान्तकराम्बुदाय । आसन्नाय । सिकतालीनाय । वृषासीनाय । वृषासनाय । वैरस्यरहिताय । वार्याय । व्रतिने । व्रतपरायणाय । ब्राह्मच्चाय । विद्यामयाय । विद्याभ्यासिने । विद्यापतये । घण्टाकाराय । घोटकस्थाय । घोररावाय । घनस्वनाय । घूर्णचक्षुषे नमः । (६२०)

अघूर्णात्मने नमः । घोरहासाय । गभीरधिये । चण्डीपतये । चण्डमूर्तये । चण्डाय । मुण्डिने । प्रचण्डवाचे । चितासंस्थाय । चितावासाय । चितये । सदादण्डकराय । चिताभस्माभिसंलिप्ताय । चितानृत्यपरायणाय । चिताप्रमोदिने । चित्साक्षिणे ।

चिन्तामणये। अचिन्तकाय । चतुर्वेदमयाय । चक्षुषे नमः । (६४०)

चतुराननपूजिताय नमः । चीरवाससे । चकोराक्षाय । चलन्मूर्तये । चलेक्षणाय । चलत्कुण्डलभूषाढ्याय । चलद्भूषण-भूषिताय । चलन्नेत्राय । चलत्पादाय । चलन्नूपुरराजिताय । स्थावराय। स्थिरमूर्तये। स्थावरेशाय। स्थिरासनाय। स्थापकाय। स्थैर्यनिरताय । स्थूलरूपिणे । स्थलालयाय । स्थैर्यातिगाय । स्थितिपराय नमः। (६६०)

स्थाणुरूपिणे नमः। स्थलाधिपाय। ऐहिकाय। मदनार्ताय। महीमण्डलपूजिताय । महीप्रियाय । मत्तरवाय । मीनकेतु विमर्दकाय । मीनरूपाय । मीनसंस्थाय । मृगहस्ताय । मृगासनाय। मार्गस्थाय। मेखलायुक्ताय। मैथिलीश्वरपूजिताय। मिथ्याहीनाय । मङ्गलदाय । माङ्गल्याय । मकरासनाय । मत्स्यप्रियाय नमः। (६८०)

मधुरगिरे नमः । मधुपानपरायणाय । मृदुवाक्यपराय । सौरप्रियाय। मोदान्विताय। मुण्डालये। भूषणाय। दण्डिने। उद्दण्डाय। ज्वललोचनाय। असाध्यसाधकाय। शूरसेव्याय। शोकापनोदनाय । श्रीपतये । श्रीसुसेव्याय । श्रीधराय । श्रीनिकेतनाय। श्रीमतां श्रीस्वरूपाय। श्रीमते। श्रीनिलयाय नमः (७००)

श्रमादिक्लेशरहिताय नमः। श्रीनिवासाय। श्रियान्विताय। श्रद्धालवे । श्राद्धदेवाय । श्राद्धाय । मधुरवाचे । प्रलयाग्न्यर्क सङ्काशाय। प्रमत्तनयनोज्ज्वलाय। असाध्यसाधकाय। शूरसेव्याय। शोकापनोदनाय। विश्वभूतमयाय। वैश्वानरनेत्राय। अधिमोहकृते।

लोकत्राणपराय। अपारगुणाय। पारविवर्जिताय। अग्निजिह्वाय। द्विजास्याय नमः।(७२०)

विश्वास्याय नमः। सर्वभूतधृते। खेचराय। खेचराधीशाय। सर्वगाय। सार्वलौकिकाय। सेनानीजनकाय। क्षुब्धाब्धये। वारिक्षोभविनाशकाय। कपालविलसद्धस्ताय। कमण्डलुभृते। अर्चिताय। केवलात्मस्वरूपाय। केवलज्ञानरूपकाय। व्योमालयनिवासिने। बृहते। व्योमस्वरूपकाय। अम्भोजनयनाय। अम्भोधिशयनाय। पुरुषातिगाय नमः। ७४०

निरालम्बाय नमः। अवलम्बाय। संभोगानन्दरूपकाय। योगनिद्रामयाय। लोकप्रमोहापहरात्मकाय। बृहद्वक्त्राय। बृहन्नेत्राय। बृहद्बाहवे। बृहद्बलाय। बृहत्सर्पाङ्गदाय। दुष्टबृहद्व्यालविमर्दकाय। बृहद्भुजबलोन्मत्ताय। बृहत्तुण्डाय। बृहद्वपुषे। बृहदैश्वर्ययुक्ताय। स्वयं बृहदैश्वर्यदाय। बृहत्सम्भोगसन्तुष्टाय। बृहदानन्ददायकाय। बृहज्जटाजूटधराय। बृहन्मालिने नमः। ७६०

बृहद्धनुषे नमः। इन्द्रियाधिष्ठिताय। सर्वलोकेन्द्रिय विमोहकृते। सर्वेन्द्रियप्रवृत्तिकृते। सर्वेन्द्रियनिवृत्तिकृते। प्रवृत्तिनायकाय। सर्वविपत्तिपरिनाशकाय। प्रवृत्तिमार्गनेत्रे। स्वयं स्वतन्त्रेच्छामयाय। नित्यं सत्प्रवृत्तिरताय। दयानन्दशिवाधराय। क्षितिरूपाय। तोयरूपिणे। विश्वतृप्तिकराय। तर्पाय। तर्पणसंप्रीताय। तर्पकाय। तर्पणात्मकाय। तृप्तिकारणभूताय। सर्वतृप्तिप्रसाधकाय। नमः। ७८०

अभेदाय नमः। भेदकाय नमः। अछिद्यते। छेदकाय। अच्छेद्याय। अच्छिन्नधन्वने। अच्छिन्नेषवे। अच्छिन्नध्वज-

वाहनाय। अधृष्टाय। समधृष्टाम्नाय। समदृष्टाय। बलोन्नताय। चित्रयोधिने। चित्रकर्मणे। विश्वसंकर्षकाय। भक्तानामीप्सितकराय। सर्वेप्सितफलप्रदाय। वाञ्छिताभीष्टफलदाय। अभिन्नज्ञानप्रवर्तकाय। बोधनात्मने नमः। ८००

बोधनार्थातिगाय नमः। सर्वप्रबोधकृते। त्रिजटाय। एकजटिलाय। चलज्जूटाय। भयानकाय। जटाटीनाय। जटाजूटस्पृष्टावरवचसे। षाण्मातुरस्य जनकाय। शक्तये। प्रहरतां वराय। अनर्घास्त्रप्रहारिणे। अनर्घधन्वने। महार्घ्यपदे। योनिमण्डलमध्यस्थाय। मुखयोनये। अजृम्भणाय। महाद्रिसदृशाय। श्वेताय। श्वेतपुष्पस्रगन्विताय नमः। (८२०)

नित्यं मकरन्दप्रियाय नमः। मासर्तुहायनात्मकाय। नानापुष्पप्रसुवे। नानापुष्पैरर्चितगात्रकाय। षडङ्गयोगनिरताय। सदायोगार्द्रमानसाय। सुरासुरनिषेव्याङ्घ्रये। विलसत्पादपङ्कजाय। सुप्रकाशितवक्त्राब्जाय। सितेतरगलोज्ज्वलाय। वैनतेयसमारूढाय। शरदिन्दुसहस्रवत् तेजोभिर्जाज्वल्यमानाय। ज्वालापुञ्जाय। स्वयं यमाय। प्रज्वलद्विद्युदाभाय। साट्टहासभयङ्कराय। प्रलयानलरूपिणे। प्रलयाग्निरुचये। जगतामेकपुरुषाय। जगतां प्रलयात्मकाय। जगन्नाथाय। जगद्योनये नमः। (८४२) श्री साम्बपरमेश्वराय नमः।

(८४२ नामान्येव सन्त्यत्र।)

दलत्सरोजमध्यस्थं चन्द्रसूर्याग्निलोचनम्।
मौलिबद्धेन्दु विगलदमृतार्द्रसितद्युतिम्॥
मुद्रां पाशं पुस्तकं च बिभ्राणं चाक्षसूत्रकम्।
भक्तार्तिं हरमीशानं मृत्युञ्जयमुपास्महे॥

* * *

# श्री शिवसहस्रनामस्तोत्रम् - ५

हरश्शम्भुर्महादेवो नीलकण्ठस्सदाशिवः ।
भर्ता वरः पाण्डराङ्ग आनन्दश्शान्तविग्रहः ।। १

एकोऽनन्तो मृगधरः शूलपाणिर्भवः शिवः ।
वह्निमध्यनटो मुक्तः स्वयंभूर्निशिनर्तनः ।। २

नन्दी परशुपाणिश्च ज्योतिर्भस्माङ्गरागभृत् ।
गजोत्पादी कपाली च नित्यश्शुद्धोऽग्निधारकः ।। ३

शङ्करो भूरथो मेरुचापो वृषभवाहनः ।
उत्पत्तिशून्यो भूतेशो नागाभरणधारणः ।। ४

उमार्धदेही हिमवज्जामाता भर्ग उत्तमः ।
उमापतिर्वह्निपाणिश्छेत्ता प्रळयनिर्भयः ।। ५

एकरुद्रः पार्थबाणप्रदो रुद्रोऽतिवीर्यवान् ।
रविचक्ररथस्तद्वत्सोमचक्ररथःस्मृतः ।। ६

दिगम्बरस्सर्वनेता विष्णुमत्स्यनिबर्हकः ।
मत्स्यनेत्रापहारीच मत्स्यनेत्र विभूषणः ।। ७

मत्स्यपूजितपादश्च तथैव कमलासनः ।
वेदवेद्यः स्मृतस्तद्वद्वेदाश्वरथ ईरितः ।। ८

वेदश्च वेदकौपीनो वेदनूपुरकस्तथा ।
वेदवाक्यो वेदमूर्तिर्वेदान्तो वेदपूजितः ।। ९

सर्वेश्वरो नादवाच्यो ब्रह्ममूर्धनिकृन्तनः ।
ताण्डवश्चामृतस्तद्वदूर्ध्वताण्डवपण्डितः ।। १०

आनन्दश्चण्ड आनन्दताण्डवः पूषदन्तभित् ।
भगनेत्रहरस्तद्वद्गजचर्माम्बरप्रियः ।। ११

कामान्तको व्याघ्रभेदी मृगी चैकाङ्गकस्तथा।
निर्विकारः पशुपतिस्सर्वात्मगोचरस्तथा॥ १२

अग्निनेत्रो भानुनेत्रश्चन्द्रनेत्रोऽपि कथ्यते।
कूर्मनिग्राहकः कूर्मकपालाहारकस्तथा॥ १३

कूर्मपूज्यस्तथा कूर्मकपालाभरणस्तथा।
व्याघ्रचर्माम्बरः स्वामी तथा पाशविमोचकः॥ १४

ओङ्काराभेनतद् द्वंद्वभञ्जकज्ञानमूर्तयः।
विष्णुबाणो गणपतिः पूतोऽयन्तु पुरातनः॥ १५

भूतनुश्च कृपामूर्तिः विष्णूत्पादकपादवान्।
सुब्रह्मण्यपिता ब्रह्मपिता स्थाणुरथ स्मृतः॥ १६

अर्भकक्षीरजलधिप्रदो पोत्रिविभेदकः।
पोत्रिदन्तापहारी च पोत्रिदन्तविभूषणः॥ १७

पोत्रिपूजितपादश्च चन्द्रपुष्पेषुकस्तथा।
सर्वोपादानकस्तद्वदार्द्रभोऽग्निसमाकृतिः॥ १८

मातापितृविहीनश्च धर्माधर्मावुभावपि।
नियुक्तरथसारथ्यब्रह्मपूजितपादवान्॥ १९

रक्तपिङ्गजटो विष्णुरभयो भानुदीपवान्।
भूतसेनो महायोगी योगी कालियनर्तनः॥ २०

गीतप्रियो नारसिंहनिग्रहीताऽपि कथ्यते।
नारसिंहशिरोभूषो नारसिंहत्वगम्बरः॥ २१

नारसिंहत्वगुत्पाटी नारसिंहसुपूजितः।
अणुरूपी महारूपी अतिसुन्दरविग्रहः॥ २२

आचार्यश्च पुण्यगिरिराचार्योऽपि च कथ्यते।
भिक्षामर्दनगोळानां गिरिष्वाचार्य ईरितः॥ २३

तथैवाष्टमहासिद्धिरन्तकान्तक ईरितः ।
घोरस्तथैव गिरिशः कृतमालविभूषणः ।। २४

वृषध्वजो डमरुकधरो विष्ण्वक्षिधारकः ।
रक्ताङ्गश्च ब्रह्मसृष्टिप्रदश्चाभयरूपवान् ।। २५

विष्णुरक्षाप्रदस्तद्वदष्टैश्वर्यसमन्वितः ।
तथैवाष्टगुणेशो वै चाष्टमङ्गळकेश्वरः ।। २६

बकासुरस्य हर्ता च बकपक्षधरोऽपि सः ।
तथा मन्मथनाथोऽपि वासुदेवसुतप्रदः ।। २७

महाव्रतोऽध्वनित्यश्च त्यक्तकेतक ईरितः ।
महाव्रतो बिल्वमालाधारी पाशुपतः स्मृतः ।। २८

त्रिधाभाश्च परञ्ज्योतिर्द्विसहस्रद्विजो भवान् ।
त्रिविक्रमनिहन्ता च त्रिविक्रमसुपूजितः ।। २९

त्रिविक्रमत्वगुत्पाटी तथा तच्चर्मकञ्चुकः ।
त्रिविक्रमास्थिदण्डी च सर्वो मध्यस्थकोऽपि सः ।। ३०

वटमूलो वेणिजटस्तथा विष्ण्वस्थिभूषणः ।
विकृतो विजयश्चैव तथा भक्तकृपाकरः ।। ३१

स्तोत्रपूजाप्रियो रामवरदो हृदयाम्बुजः ।
तथा परशुरामैनोहारकस्तेन पूजितः ।। ३२

रुद्राक्षमाली भोगी च महाभोगी च संस्मृतः ।
भोगातीतश्च सर्वेशो योगातीतो हरिप्रियः ।। ३३

वेदवेदान्तकर्ता च त्रियम्बकमनोहरौ ।
विनायको वितरणो विचित्रो व्रत इत्यपि ।। ३४

परमेशो विरूपाक्षो देवदेवस्त्रिलोचनः ।
वैणिको विष्टरस्थोऽयं तथा क्षीरसमाकृतिः ॥ ३५

आरणः काठकश्चैव सुमुखोऽमृतवागपि ।
धुस्तूरपुष्पधारी च ऋग्यजुर्वेदिनावुभौ ॥ ३६

सामवेदी तथाऽथर्ववेदी कामिककारणौ ।
विमलो मकुटश्चैव वातुलोऽचिन्त्ययोगजौ ॥ ३७

दीप्तस्सूक्ष्मस्तथैवायं वीरश्च किरणोऽपि च ।
अजितश्च सहस्रश्च अंशुमान् सुप्रभेदकः ॥ ३८

तथा विजयनिश्वासौ नाम्ना स्वायंभुवोऽप्ययम् ।
अनलो रौरवश्चन्द्रज्ञानो बिम्ब उदीरितः ॥ ३९

प्रोद्गीतो ललितस्सिद्धस्तथा सन्ताननामवान् ।
शर्वोत्तरस्तथाचार्यपारमेश्वर ईरितः ॥ ४०

उपागमसमाख्योऽपि तथा शिवपुराणकः ।
भविष्यश्च तथैवायं मार्कण्डेयोऽपि लैङ्गकः ॥ ४१

स्कान्दो वराहोऽपि तथा वामनो मत्स्यकूर्मकौ ।
ब्रह्माण्डो ब्राह्मपाद्मौ च गारुडो विष्णुनारदौ ॥ ४२

तथा भागवताग्नेयौ ब्रह्मकैवर्तकोऽप्ययम् ।
तथैवोपपुराणोऽपि रामस्यास्त्रप्रदोऽपि सः ॥ ४३

रामस्य चापहारी च रामपूजितपादवान् ।
मायी च शुद्धमायी च वैखरी मध्यमा परा ॥ ४४

पश्यन्ती च तथा सूक्ष्मा तथा प्रणवरूपवान् ।
ज्ञानास्त्रस्सकलश्चैव निष्कळस्सकलश्च वै ॥ ४५

विष्णोः पतिरयं तद्वद्वलभद्रबलप्रदः ।
बलचापापहर्त्ता च बलपूजितपादवान् ॥ ४६

दण्डायुधो वाङ्मनसोरगोचरसुगन्धिनौ।
श्रीकण्ठोऽप्ययमाचारः खट्वाङ्गः पाशभृत्तथा ॥ ४७

स्वर्णरूपी स्वर्णवीर्यस्सकलात्माऽधिपः स्मृतः ।
प्रलयः कालनाथोऽपि विज्ञानं कालनायकः ॥ ४८

पिनाकपाणिस्सुकृतो विष्कारो विष्णुरक्तपः ।
विष्णोः क्षारकरस्तद्वत्कृष्णज्ञानप्रदो हि सः ॥ ४९

कृष्णाय पुत्रदः कृष्णयुद्धदः कृष्णपापहा ।
कृष्णपूजितपादश्च कर्किविष्वक्श्वभञ्जनः ॥ ५०

कर्किपूजितपादश्च वह्निजिह्वातिकृन्तनः ।
भारतीनासिकाच्छेत्ता पापनाशो जितेन्द्रियः ॥ ५१

शिष्टो विशिष्टः कर्ता च भीमेभ्यो भीम उच्यते ।
शिवतत्वं तथा विद्यातत्वं पञ्चाक्षरोऽपि सः ॥ ५२

पञ्चवक्त्रः स्मितशिरोधारी ब्रह्मास्थिभूषणः ।
आत्मतत्वं तथा दृश्यसहायो रसवीर्यवान् ॥ ५३

अदृश्यद्रष्टा मेनाया जामातोग्रष्षडङ्गवान् ।
तथा दक्षशिरश्छेत्ता तत्पुरुषो ब्राह्मणश्शिखी ॥ ५४

अष्टमूर्तिश्चाष्टभुजष्षडक्षरसमाह्वयः ।
पञ्चकृत्यः पञ्चधेनुः पञ्चवृक्षोऽग्निकश्चिवान् ॥ ५५

शङ्खवर्णस्सर्पकटिस्सूत्रोऽहङ्कार ईरितः ।
स्वाहाकारः स्वधाकारः फट्कारस्सुमुखः स्मृतः ॥ ५६

दीनान्धककृपाळुश्च वामदेवोऽपि कथ्यते ।
धीरः कल्पो युगो वर्षमासावृतुसमाह्वयः ॥ ५७

राशिवासरनक्षत्रयोगाः करण ईरितः ।
घटी काष्ठा विनाडी च प्राणो गुरुनिमेषकौ ।। ५८

श्रवणर्क्षो मेघवाहो ब्रह्माण्डसृगुदीरितः ।
जाग्रत्स्वप्नसुषुप्तिश्च तुर्योऽयमतितुर्यवान् ।। ५९

तथैव केवलावस्थस्सकलावस्थ इत्यपि ।
शुद्धावस्थोत्तमाङ्गौ च सृष्टिरक्षाविधायिनौ ।। ६०

संहर्ता च तिरोभूत अनुग्रहकरस्तथा ।
स्वतन्त्रः परतन्त्रश्च षण्मुखः काल ईरितः ।। ६१

अकालश्च तथा पाशुपतास्त्रकर ईश्वरः ।
अघोरक्षुरिकास्त्रौ च प्रत्यङ्गास्त्रोऽपि कथ्यते ।। ६२

पादोत्सृष्टमहाचक्रो विष्णुवेश्याभुजङ्गकः ।
नागयज्ञोपवीती च पञ्चवर्णोऽपि मोक्षदः ।। ६३

वाय्वग्नीशौ सर्पकच्छः पञ्चमूर्तिश्च भोगदः ।
तथा विष्णुशिरश्छेत्ता शेषज्यो बिन्दुनादकः ।। ६४

सर्वज्ञो विष्णुनिगळमोक्षको बीजवर्णकः ।
बिल्वपत्रधरो बिन्दुनादपीठस्तु शक्तिदः ।। ६५

तथा रावणनिष्पेष्टा भैरवोत्पादकोऽप्ययम् ।
दक्षयज्ञविनाशी च त्रिपुरत्रयशिक्षकः ।। ६६

सिन्दूरपत्रधारी च मन्दारस्रगलङ्कृतः ।
निर्वीर्यो भावनातीतस्तथा भूतगणेश्वरः ।। ६७

विष्णुभ्रूमध्यपादी च सर्वोपादानकारणम् ।
निमित्तकारणं सर्वसहकार्यपि कथ्यते ।। ६८

तत्सद्व्यासकरच्छेत्ता शूलप्रोतहरिस्तथा ।
भेदाभेदौ वेदवल्लीकण्ठच्छेत्ता हि कथ्यते ।। ६९

पञ्चब्रह्मस्वरूपी च भेदाभेदोभयात्मवान् ।
अच्छस्फटिक सङ्काशो ब्रह्मभस्मावलेपनः ।। ७०

निर्दग्धविष्णुभस्माङ्गरागः पिङ्गजटाधरः ।
चण्डार्पितप्रसादश्च धाता धातृविवर्जितः ।। ७१

कल्पातीतः कल्पभस्म चागस्त्यकुसुमप्रियः ।
अनुकल्पोपकल्पौ च संकल्पश्छेददुन्दुभिः ।। ७२

विकल्पो विष्णुदुर्ज्ञेयपादो मृत्युञ्जयः स्मृतः ।
विष्णुश्मशाननटनो विष्णुकेशोपवीतवान् ।। ७३

ब्रह्मश्मशाननटनः पञ्चरावणघातकः ।
सर्पाधीशान्तरस्तद्वदनलासुरघातकः ।। ७४

महिषासुरसंहर्ता नाळीदूर्वावतंसकः ।
देवर्षिनरदैत्येशो राक्षसेशो धनेश्वरः ।। ७५

चराचरेशोऽनुपदो मूर्तिच्छन्दस्वरूपिणौ ।
एकद्वित्रिचतुःपञ्चजानिनो विक्रमाश्रमः ।। ७६

ब्रह्मविष्णुकपालास्रजयकिङ्किणिकाङ्घ्रिकः ।
संहारकाट्टहासोऽपि सर्वसंहारकः स्मृतः ।। ७७

सर्वसंहारनेत्राग्निः सृष्टिकृद्वाङ्गनोयुतः ।
संहारकृत् त्रिशूलोऽपि रक्षाकृत्पाणिपादवान् ।। ७८

भृङ्गिनाट्यप्रियश्शङ्खपद्मनिध्योरधीश्वरः ।
सर्वान्तरो भक्तचिन्तितार्थदो भक्तवत्सलः ।। ७९

भक्तापराधसोढा च विकीर्णजट ईरितः ।
जटामकुटधारीच विशदाङ्गोऽपि कथ्यते ॥ ८०

अपस्मारीकृताविद्यापृष्ठांघ्रिः स्थौल्यवर्जितः ।
युवा नित्ययुवा वृद्धो नित्यवृद्धोऽपि कथ्यते ॥ ८१

शक्त्युत्पाटी शक्तियुक्तस्सत्यात्सत्योऽपि कथ्यते ।
विष्णूत्पादक अद्वन्द्वः सत्यासत्यश्च ईरितः ॥ ८२

मूलाधारस्तथा स्वाधिष्ठानश्च मणिपूरकः ।
अनाहतो विशुद्धश्चाज्ञे तथा ब्रह्मबिलं स्मृतः ॥ ८३

वराभयकरश्शास्तृपिता तारकमारकः ।
सालोक्यदश्च सामीप्यदायी सारूप्यदः स्मृतः ॥ ८४

सायुज्यमुक्तिदस्तद्वद्धरिकन्धरपादुकः ।
निकृत्तब्रह्ममूर्धा च शाकिनीडाकिनीश्वरः ॥ ८५

योगिनीमोहिनीनाथो दुर्गानाथोऽपि कथ्यते ।
यज्ञो यज्ञेश्वरो यज्ञहविर्भुग्यज्वनां प्रियः ॥ ८६

विष्णुशापापहर्ता च चन्द्रशापापहारकः ।
इन्द्रशापापहर्ताच वेदागमपुराणकृत् ॥ ८७

विष्णुब्रह्मोपदेष्टा च स्कन्दोमादेशिकोऽप्ययम् ।
विघ्नेशस्योपदेष्टा च नन्दिकेशगुरुस्तथा ॥ ८८

तथा ऋषिगुरुस्सर्वगुरुर्दशादिगीश्वरः ।
दशायुधदशाङ्गौ च ज्ञानयज्ञोपवीतवान् ॥ ८९

ब्रह्मविष्णुशिरोमुण्डकन्दुकः परमेश्वरः ।
ज्ञानक्रियायोगचर्यानिरतोरगकुण्डलौ ॥ ९०

ब्रह्मताळप्रियो विष्णुपटहप्रीतिरप्ययम् ।
भण्डासुरापहर्ताच कङ्कपत्रधरोऽप्ययम् ॥ ९१

तन्त्रवाद्यरतस्तद्वदर्कपुष्पप्रियोऽप्ययम् ।
विष्ण्वास्यमुक्तवीर्योऽपि देव्यग्रकृतताण्डवः ॥ ९२

ज्ञानांबरो ज्ञानभूषो विष्णुशङ्खप्रियोऽप्ययम् ।
विष्णूदरविमुक्तात्मवीर्यश्चैव परात्परः ॥ ९३

महेश्वरश्चेश्वरोऽपि लिङ्गोद्भवसुखासनौ ।
उमासखश्चन्द्रचूडश्चार्धनारीश्वरः स्मृतः ॥ ९४

सोमास्कन्दस्तथा चक्रप्रसादी च त्रिमूर्तिकः ।
अर्धाङ्गविष्णुश्च तथा दक्षिणामूर्तिरव्ययः ॥ ९५

भिक्षाटनश्च कङ्काळः कामारिः कालशासनः ।
जलन्धरारिस्त्रिपुरहन्ता च विषभक्षणः ॥ ९६

कल्याणसुन्दरशरभमूर्ती च त्रिपादपि ।
एकपादो भैरवश्च वृषारूढस्सदानटः ॥ ९७

गङ्गाधरष्षण्णवतितत्वमप्ययमीरितः ।
तथा साष्टशतभेदमूर्तिरष्टशताह्वयः ॥ ९८

अष्टोत्तरशतं ताळरागनृत्तैकपण्डितः ।
सहस्राख्यस्सहस्राक्षस्सहस्रमुख ईरितः ॥ ९९

सहस्रबाहु स्तन्मूर्तिरनन्तमुख ईरितः ।
अनन्तनामापि तथा चानन्तश्रुतिरप्ययम् ॥ १००

अनन्तनयनस्तद्वदनन्तघ्राणमण्डितः ।
अनन्तरूप्ययं तद्वदनन्तैश्वर्यवान् स्मृतः ॥ १०१

अनन्तशक्तिकृत्यावाननन्तज्ञानवानयम्।
अनन्तानन्दसन्दोह अनन्तौदार्यवानयम्।। १०२

तथैव पृथिवीमूर्तिः पृथिवीशोऽपि कथ्यते।
पृथिवीधारकस्तद्वत्पृथिव्यान्तर ईरितः।। १०३

पृथिव्यतीतश्च तथा पार्थिवाण्डाभिमान्ययम्।
तदण्डपुरुषहृदयकमलोऽपि निगद्यते।। १०४

तदण्डभुवनेशानः तच्छक्तिधरणात्मकः।
आधारशक्त्यधिष्ठानानन्ताः कालाग्निरप्ययम्।। १०५

कालाग्निरुद्रभुवनपतिरप्ययमीरितः।
अनन्तश्च तथेशश्च शङ्करः पद्मपिङ्गळौ।। १०६

कालश्च जलजश्चैव क्रोधोऽतिबल ईरितः।
धनदश्चातिकूश्माण्डभुवनेशोऽपि कथ्यते।। १०७

कूश्माण्डस्सप्तपाताळनायकोऽपि निगद्यते।
पाताळान्तोऽपि चेशानो बलातिबलनावुभौ।। १०८

बलविकरणश्चायं बलेशोऽपि बलेश्वरः।
बलाध्यक्षश्च बलवान्हाटकेशोऽपि कथ्यते।। १०९

तथा तद्भुवनेशानस्तथैवाष्टगजेश्वरः।
अष्टनागेश्वरस्तद्वद्भूलोकेशोऽपि कथ्यते।। ११०

मेर्वीशो मेरुशिखरराजोऽवनिपतिस्तथा।
त्रियंबकश्चाष्टकुलपर्वतेशोऽपि कथ्यते।। १११

मानसोत्तरगिरि स्तद्वद्द्विश्वेशोऽपि निगद्यते।
स्वर्णलोकश्चक्रवाळगिरिवासविरामकः।। ११२

धर्मो विविधधामा च शङ्खपालश्च कथ्यते।
तथा कनकरोमा च पर्जन्यः केतुमानपि।। ११३

विरोचनो हरिच्छायो रक्तच्छायश्च कथ्यते।
महान्धकारनाथोऽपि अण्डभित्तीश्वरोऽप्ययम्।। ११४

प्राचीवज्रीश्वरो दक्षिणप्राचीशोऽपि गद्यते।
अग्नीश्वरो दक्षिणश्च दिगीशो धर्मराडपि।। ११५

दक्षिणाशापतिस्तद्वन्निर्ऋतीशोऽपि कथ्यते।
पश्चिमाशापतिस्तद्वद्वरुणेशोऽपि कथ्यते।। ११६

तथोदक्पश्चिमेशोऽपि वाय्वीशोऽपि तथोच्यते।
तथैवोत्तरदिङ्नाथः कुबेरेशोऽपि चोच्यते।। ११७

तथैवोत्तरपूर्वेश ईशानेशोऽपि कथ्यते।
कैलासशिखरीनाथः श्रीकण्ठपरमेश्वरः।। ११८

महाकैलासनाथोऽपि महासदाशिवः स्मृतः।
भुवर्लोकेशशंभूग्रास्सूर्यमण्डलनायकः।। ११९

प्रकाशरुद्रो यश्चन्द्रमण्डलेशोऽपि कथ्यते।
तथा चन्द्रमहादेवो नक्षत्राणामधीश्वरः।। १२०

ग्रहलोकेश गन्धर्वगान्धर्वेशावुभावपि।
सिद्धविद्याधरेशोऽयं किन्नरेशोऽपि कथ्यते।। १२१

यक्षचारणनाथोऽपि स्वर्लोकेशोऽपि स स्मृतः।
भीमश्चैव महर्लोकनाथश्चैव महाभवः।। १२२

जनलोकेश्वरो ज्ञानपादो जननवर्जितः।
अतिपिङ्गळ आश्चर्यो भौतिकश्च श्रुतोऽप्ययम्।। १२३

तपोलोकेश्वरस्तस्मो महादेवोऽपि स स्मृतः।
सत्यलोकेश्वरस्तद्वत् ब्रह्मेशानोऽपि चोच्यते।। १२४

विष्णुलोकेशविष्णवीशौ शिवलोकः परश्शिवः ।
अण्डान्तेशो दण्डपाणिरण्डपृष्ठेश्वरोऽप्ययम् ।। १२५

श्वेतश्च वायुवेगोऽपि सुपात्रश्च स्मृतोऽप्ययम् ।
विद्याह्वयात्मकस्तद्वत्कालाग्निश्च स्मृतोऽप्ययम् ।। १२६

महासंहारकस्तद्वन्महाकाळोऽपि कथ्यते ।
महानिर्ऋतिरप्येव महावरुण इत्यपि ।। १२७

वीरभद्रो महांस्तद्वच्छतरुद्रोऽपि कथ्यते ।
भद्रकालवीरभद्रौ कमण्डलुधरोऽप्ययम् ।। १२८

अब्भुवनेशोऽपि तथा लक्ष्मीनाथोऽपि कथ्यते ।
सरस्वतीशो देवेशः प्रभावेशोऽपि कथ्यते ।। १२९

तथैव डिण्डीवल्मीकनाथौ पुष्करनायकः ।
मण्डीशभारभूतेशौ बिलाळकमहेश्वर ।। १३०

तेजोमण्डलनाथोऽपि तेजोमण्डलमूर्तिपः ।
तेजोमण्डलविश्वेशश्शिवोऽग्निरपि कथ्यते ।। १३१

वायुमण्डलमूर्तिश्च वायुमण्डलधारकः ।
वायुमण्डलनाथश्च वायुमण्डलरक्षकः ।। १३२

महावायुसुवेगोऽयमाकाशमण्डलेश्वरः ।
आकाशमण्डलधरस्तन्मूर्तिरपि संस्मृतः ।। १३३

आकाशमण्डलातीतस्तन्मण्डलभुवनपः ।
महारुद्रश्च तन्मात्रमण्डलेशश्च संस्मृतः ।। १३४

तन्मात्रमण्डलपतिर्महाशर्वमहाभवौ ।
महापशुपतिश्चापि महाभीमो महाहरः ।। १३५

कर्मेन्द्रियमण्डलेशस्तन्मण्डलभुवः पतिः पतिः ।
क्रियासरस्वतीनाथः क्रिया (श्रियां) लक्ष्मीपतिस्तथा ।। १३६

क्रियेन्द्रियः क्रियामित्रःक्रियाब्रह्म पतिः पतिः ।
ज्ञानेन्द्रियमण्डलेशः तन्मण्डलभुवनपः ॥ १३७

भूमिदेवश्शिवेशश्च वरुणोऽपि च वह्निपः ।
वातेशो विविधाविष्टमण्डलेशावुभावपि ॥ १३८

विषयमण्डलभुवनेशो गन्धर्वेशः शिवेश्वरः ।
प्रासादबलभद्रश्च सूक्ष्मेशो मानवेश्वरः ॥ १३९

अन्तःकरणमण्डलेशो बुद्धिचित्तमनः पतिः ।
अहङ्कारेश्वरश्चापि गुणमण्डलनायकः ॥ १४०

संवर्तस्तामसगुणपतिस्तद्भुवनाधिपः ।
एकवीरः कृतान्तश्च संन्यासी सर्वशङ्करः ॥ १४१

पुरुषमृगानुग्रहदस्ससाक्षीको गुणाधिपः ।
काक्षीकश्च भुवनेशः कृतश्च कृतभैरवः ॥ १४२

ब्रह्मा श्रीकंण्ठदेवोऽयं सराजसगुणेश्वरः ।
राजसगुणभुवनेशो बलाध्यक्षश्च कथ्यते ॥ १४३

गुणाध्यक्षो महाशान्तो महात्रिपुरघातकः ।
सर्वरूपी निमेषश्च उन्मेष इति कथ्यते ॥ १४४

प्रकृतीमण्डलेशोऽयं तन्मण्डलभुवनपः ।
शुभरामशुभभीमशुद्धोग्रशुद्धभव शुद्धशर्वशुद्धैकवीराः ॥ १४५

प्रचण्डपुरुषशुभगन्धजनिरहितहरीशनागमण्डलेशाः ।
नागमण्डलभुवनेश अप्रतिष्ठः प्रतिष्ठकः ॥ १४६

रूपाङ्गमनोन्मनमहावीरस्वरूपकाः ।
कल्याणबहुवीरश्च बलमेधादिचेतनः ॥ १४७

दक्षो नियतिमण्डलेशो नियतिमण्डलभुवनपः।
वासुदेवश्च वज्री च विधाताऽभ्रमणिः स्मृतः ॥ १४८

कलविकरणश्चैव बलविकरणस्तथा।
बलप्रमथनश्चैव सर्वभूतदमश्च सः ॥ १४९

विद्यामण्डलेशो विद्यामण्डलभुवनपः।
महादेवो महाज्योतिर्महादेवेश इत्यपि ॥ १५०

कलामण्डलेशश्च कलामण्डलभुवनपः।
विशुद्धश्च प्रबुद्धश्च शुद्धश्चैव स्मृतश्च सः ॥ १५१

शुचिवर्णप्रकाशश्च महोक्षोक्षा च कीर्तितः।
मायातन्वीश्वरो मायाभुवनेशस्सुशक्तिमान् ॥ १५२

विद्योतनो विश्वबीजो ज्योतीरूपश्च गोपतिः।
त्रिकालब्रह्मकर्ता च अनन्तेशश्च संस्मृतः ॥ १५३

शुद्धविद्येशः शुद्धश्च विद्याभुवननायकः।
वामेशसर्वज्येष्ठेशौ रौद्रीकालेश्वरावुभौ ॥ १५४

कलविकरणीकश्च बलविकरणीश्वरः।
बलप्रमथिनीशोऽपि सर्वभूतदमेश्वरः ॥ १५५

मनोन्मनेशस्तत्वेशस्तथैव भुवनेश्वरः।
महामहेश्वरस्सदाशिवतत्वेश्वरावुभौ ॥ १५६

सदाशिवभुवनेशो ज्ञानवैराग्यनायकः।
ऐश्वर्येशश्च धर्मेशस्सदाशिव इति स्मृतः ॥ १५७

अणुसदाशिवोऽप्येष अष्टविद्येश्वरोऽप्ययम्।
शक्तितत्वेश्वरश्शक्तिभुवनेशोऽपि कथ्यते ॥ १५८

बिन्दुमूर्तिस्सप्तकोटिमहामन्त्रेश्वरोऽप्ययम्।
निवृत्तीशः प्रतिष्ठेशो विद्येशश्शान्तिनायकः ॥ १५९

शान्त्यतीतेश्वरस्तद्वदर्धचन्द्रेश्वरोऽप्ययम्।
सुशान्तीशश्च तथा शिवाश्रयसमाह्वयः ॥ १६०

योजनीयश्च योज्यश्च योजनातीतनायकः।
सुप्रभेदनिरोधीशौ इन्धनीरेचकेश्वरः ॥ १६१

रौद्रीशज्ञानबोधेशौ तमोपह इति स्मृतः।
नादतत्वेश्वरस्तद्वन्नादाख्यभुवनेश्वरः ॥ १६२

इन्धिकेशो दीपिकेशो मोचिकेशश्च संस्मृतः।
ऊर्ध्वगामिनीशोऽपि इडानाथोऽपि कथ्यते ॥ १६३

सुषुम्नेशः पिङ्गळेशो ब्रह्मरन्ध्रेश्वरोऽप्ययम्।
ब्रह्मरन्ध्रस्वरूपीशः पञ्चबीजेश्वरोऽप्ययम् ॥ १६४

अमृतेशश्च शक्तीशस्सूक्ष्मेशश्च सुसूक्ष्मपः।
मृतेशश्चामृतेशोऽपि व्यापिनीशोऽपि कथ्यते ॥ १६५

परनादेश्वरो व्योम व्योमरूपी च कथ्यते।
अनाश्रितोऽप्यनन्तश्च अनादश्च मुनीश्वरः ॥ १६६

उन्मनीशो मन्त्रमूर्तिर्मन्त्रेशो मन्त्रधारकः।
मन्त्रातीतः पदामूर्तिः पदेशः पदधारकः ॥ १६७

पदातीतोऽक्षरात्मा च अक्षरेशोऽक्षराश्रयः।
कलातीतश्च तथा ओङ्कारात्मा च कथ्यते ॥ १६८

ओङ्कारेशश्च तथा ओङ्कारासन ईरितः।
पराशक्तिपतिस्तद्वदादिशक्तिपतिश्च सः ॥ १६९

इच्छाशक्तिपतिश्चैव ज्ञानशक्तिपतिश्च सः ।
क्रियाशक्तिपतिस्तद्वत् शिवसादाख्य ईरितः ।। १७०

अमूर्तिसादाख्यश्चैव मूर्तिसादाख्य ईरितः ।
कर्तृसादाख्यश्च तथा कर्मसादाख्य ईरितः ।। १७१

सर्वस्रष्टा सर्वरक्षाकारकस्सर्वहारकः ।
तिरोभावकृदप्येष सर्वानुग्राहकस्तथा ।। १७२

निरञ्जनोऽचञ्चलश्च विमलोऽनल ईरितः ।
सच्चिदानन्दरूपी च विष्णुचक्रप्रसादकृत् ।। १७३

सर्वव्यापी तथाद्वैतविशिष्टाद्वैतकावुभौ ।
परिपूर्णो लिङ्गरूपो महालिङ्गस्वरूपवान् ।। १७४

श्रीसूतः -

एवमाख्यातमधुना युष्माकं ब्राह्मणोत्तमाः ।
अष्टोत्तरसहस्राणि नामानि गिरिजापतेः ।। १७५

यः पठेच्छंभुनामानि पवित्राणि महामतिः ।
शृणुयाद्वापि भक्त्या स रुद्र एव न संशयः ।। १७६

स धन्यस्स कुलीनश्च स पूज्यस्स महत्तरः ।
तस्यैव च महालक्ष्मीस्तस्यैव च सरस्वती ।। १७७

स शक्तानपि संग्रामे विभीषयति रुद्रवत् ।
पुत्रार्थी पुत्रमाप्नोति धनार्थी च महद्धनम् ।। १७८

आरोग्यकामस्त्वारोग्यमव्याधिदृढगात्रताम् ।
शिखायां धारयेद्योऽसौ लिखित्वा पुस्तके सदा ।। १७९

राजद्वारे च सदसि स वशीकुरुते जनान् ।
न च हिंसन्ति सर्पाद्या राक्षसा न पिशाचकाः ।।

किं पुनर्ब्राह्मणश्रेष्ठास्सर्वान्कामान् लभेदयम्।। १८०

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां

शिवरहस्यखण्डे उपदेशकाण्डे त्र्यशीतितमोऽध्यायः ।।

# श्री शिवसहस्रनामावलिः-९

हराय नमः । शंभवे । महादेवाय । नीलकण्ठाय । सदाशिवाय। भर्त्रे। वराय । पाण्डराङ्गाय । आनन्दाय । शान्तविग्रहाय । एकाय । अनन्ताय । मृगधराय । शूलपाणये । भवाय । शिवाय । वह्नि मध्यनटाय। मुक्ताय। स्वयंभुवे । निशिनर्तनाय नमः २०

नन्दिने । परशुपाणये । ज्योतिषे । भस्माङ्गरागभृते । गजोत्पादिने। कपालिने। नित्याय। शुद्धाय । अग्निधारकाय। शंकराय । भूरथाय । मेरुचापाय । वृषभ वाहनाय । उत्पत्तिशून्याय। भूतेशाय। नागाभरणधारणाय। उमार्ध देहिने। हिमवज्जामात्रे। भर्गाय। उत्तमायनमः ४०

उमापतये नमः । वह्निपाणये । छेत्रे । प्रलयनिर्भयाय । एकरुद्राय । पार्थबाणप्रदाय । रुद्राय । अतिवीर्यवते । रविचक्ररथाय। सोमचक्ररथाय । दिगंबराय । सर्वनेत्रे । विष्णुमत्स्य निबर्हकाय । मत्स्यनेत्रापहारिणे । मत्स्यनेत्र विभूषणाय। मत्स्य पूजित पादाय। कमलासनाय। वेदवेद्याय। वेदाश्वरथाय। वेदाय नमः ६०

वेदकौपीनाय नमः। वेदनूपुरकाय। वेदवाक्याय। वेदमूर्तये। वेदान्ताय । वेदपूजिताय । सर्वेश्वराय । नादवाच्याय। ब्रह्ममूर्धनिकृन्तनाय । ताण्डवाय । अमृताय । ऊर्ध्वताण्डव-पण्डिताय। आनन्दाय । चण्डाय । आनन्द ताण्डवाय।

पूषदन्तभिदे । भगनेत्रहराय । गजचर्माम्बरप्रियाय । कामान्तकाय । व्याघ्रभेदिने नमः ८०

मृगिणे नमः । एकाङ्गकाय । निर्विकाराय । पशुपतये । सर्वात्मगोचराय । अग्निनेत्राय । भानुनेत्राय । चन्द्रनेत्राय । कूर्मनिग्राहकाय । कूर्मकपालाहारकाय । कूर्मपूज्याय । कूर्मकपालाभरणाय । व्याघ्रचर्माम्बराय । स्वामिने । पाशविमोचकाय । ओंकाराभाय । इनाय । तद्द्वन्द्वभञ्जकाय । ज्ञान मूर्तये । विष्णुबाणाय नमः । १००

गणपतये नमः । पूताय । पुरातनाय । भूतनवे । कृपामूर्तये । विष्णूत्पादकपादवते । सुब्रह्मण्यपित्रे । ब्रह्मपित्रे । स्थाणवे । अर्भकक्षीरजलधिप्रदाय । पोत्रिविभेदकाय । पोत्रिद न्तापहारिणे । पोत्रिदन्त विभूषणाय । पोत्रिपूजितपादाय । चन्द्रपुष्पेषुकाय । सर्वोपादानकाय । आर्द्रभाय । अग्निसमाकृतये । मातापितृविहीनाय । धर्माय नमः १२०

अधर्माय नमः । नियुक्तरथसारथ्यब्रह्मपूजितपादवते । रक्तपिङ्ग जटाय । विष्णवे । अभयाय । भानुदीपवते । भूतसेनाय । महायेगिने । योगिने । कालियनर्तनाय । गीतप्रियाय । नारसिंहनिग्रहीत्रे । नारसिंहशिरोभूषाय । नारसिंहत्वगंबराय । नारसिंहत्वगुत्पाटिने । नारसिंहसुपूजिताय । अणुरूपिणे । महारूपिणे । अतिसुन्दरविग्रहाय । आचार्याय नमः १४०

पुण्यगिरये आचार्याय नमः । भिक्षामर्दनगोलानां गिरिष्वाचार्याय । अष्टमहासिद्धये । अन्तकान्तकाय । घोराय । गिरिशाय । कृतमालविभूषणाय । वृषध्वजाय । डमरुकधराय । विष्णवक्षिधारकाय । रक्ताङ्गाय । ब्रह्मसृष्टिप्रदाय । अभयरूपवते । विष्णुरक्षाप्रदाय । अष्टैश्वर्यसमन्विताय । अष्टगुणेशाय ।

अष्टमङ्गलकेश्वराय । बकासुरस्य हर्त्रे । बकपक्षधराय । मन्मथनाथाय नमः । १६०

वासुदेवसुतप्रदाय नमः । महाव्रताय । अध्वनित्याय । त्यक्तकेतकाय नमः । महाव्रताय । बिल्वमालाधारिणे । पाशुपताय । त्रिधाभासे । परस्मै ज्योतिषे । द्विसहस्रद्विजाय । भवते । त्रिविक्रमनिहन्त्रे । त्रिविक्रमसुपूजिताय । त्रिविक्रमत्व-गुत्पाटिने । त्रिविक्रम चर्मकञ्चुकाय । त्रिविक्रमास्थिदण्डिने । सर्वाय । मध्यस्थकाय । वटमूलाय । वेणिजटाय नमः १८०

विष्ण्वस्थिभूषणाय नमः । विकृताय । विजयाय । भक्तकृपाकराय । स्तोत्रपूजाप्रियाय । रामवरदाय । हृदयांबुजाय । परशुरामैनो हारकाय । परशुरामपूजिताय । रुद्राक्षमालिने । भोगिने । महाभोगिने । भोगातीताय । सर्वेशाय । योगातीताय । हरिप्रियाय । वेदवेदान्तकर्त्रे । त्रियंबकाय । मनोहराय । विनायकाय नमः २००

वितरणाय नमः । विचित्राय । व्रताय । परमेशाय । विरूपाक्षाय । देवदेवाय । त्रिलोचनाय । वैणिकाय । विष्टरस्थाय । क्षीरसमाकृतये । आरणाय । काठकाय । सुमुखाय । अमृतवाचे । धुस्तूरपुष्प धारिणे । ऋग्वेदिने । यजुर्वेदिने । सामवेदिने । अथर्ववेदिने । कामिकाय नमः । २२०

कारणाय नमः । विमलाय । मकुटाय । वातुलाय । अचिन्त्याय । योगजाय । दीप्ताय । सूक्ष्माय । वीराय । किरणाय । अजिताय । सहस्राय । अंशुमते । सुप्रभेदकाय । विजयाय । निःश्वासाय । स्वायंभुवाय । अनलाय । रौरवाय । चन्द्रज्ञानाय नमः २४०

बिम्बाय नमः । प्रोद्गीताय । ललिताय । सिद्धाय । सन्ताननामवते । शर्वोत्तराय । आचार्य पारमेश्वराय । उपागमसमाख्याय । शिवपुराणकाय । भविष्यते । मार्कण्डेयाय । लैङ्गकाय । स्कान्दाय । वराहाय । वामनाय । मत्स्याय । कूर्मकाय । ब्रह्माण्डाय । ब्राह्माय । पाद्माय नमः २६०

गारुडाय नमः । विष्णवे । नारदाय । भागवताय । आग्नेयाय ।ब्रह्मकैवर्तकाय । उपपुराणाय । रामस्यास्त्रप्रदाय । रामस्य चापहारिणे । रामपूजित पादवते । मायिने । शुद्धमायिने । वैखर्यै । मध्यमायै । परायै । पश्यन्त्यै । सूक्ष्मायै । प्रणवचापवते । ज्ञानास्त्राय । सकलाय नमः । २८०

निष्कलाय नमः । सकलाय । विष्णोः पतये । बलभद्रबलप्रदाय । बलचापापहर्त्रे । बलपूजित पादवते । दण्डायुधाय । वाङ्मनसोरगोचराय । सुगन्धिने । श्रीकण्ठाय । आचाराय । खट्वाङ्गाय । पाशभृते । स्वर्णरूपिणे । स्वर्णवीर्याय । सकलात्मने । अधिपाय । प्रलयाय । कालनाथाय । विज्ञानाय नमः । ३००

कालनायकाय नमः। पिनाकपाणये । सुकृताय । विष्काराय नमः। विष्णुरक्तपाय । विष्णोः क्षारकराय । कृष्णज्ञानप्रदाय । कृष्ण पुत्रदाय । कृष्णयुद्धदाय । कृष्ण पापघ्ने । कृष्णपूजितपादाय । कर्किविष्वक्श्वभञ्जनाय । कर्किपूजित पादाय । वह्निजिह्वाति कृन्तनाय । भारतीनासिकाच्छेत्रे । पापनाशाय । जितेन्द्रियाय । शिष्टाय । विशिष्टाय । कर्त्रे नमः ३२०

भीमेभ्यो भीमाय नमः । शिवतत्त्वाय । विद्यातत्त्वाय । पञ्चाक्षराय । पञ्चवक्त्राय नमः । स्मितशिरो धारिणे । ब्रह्मास्थिभूषणाय । आत्मतत्त्वाय । दृश्यसहायाय । रसवीर्यवते ।

अट्टम्यद्रष्ट्रे। मेनाया जामात्रे। उग्राय। षडङ्गवते। दक्षशिरश्छेत्रे। तत्पुरुषाय। ब्राह्मणाय। शिखिने। अष्टमूर्तये। अष्टभुजाय नमः। ३४०

षडक्षर समाह्वयाय। पञ्चकृत्याय। पञ्चधेनवे। पञ्चवृक्षाय। अग्निकश्चिवते। शङ्खवर्णाय। सर्पकटये। सूत्राय। अहङ्काराय। स्वाहाकाराय। स्वधाकाराय। फट्काराय। सुमुखाय। दीनान्धक कृपालवे। वामदेवाय। धीराय। कल्पाय। युगाय। वर्षाय। मासाय नमः। ३६०

ऋतुसमाह्वयाय नमः। राशये। वासराय। नक्षत्राय। योगाय। करणाय। घट्यै। काष्ठायै। विनाड्यै। प्राणाय। गुरवे। निमेषकाय। श्रवणर्क्षाय। मेघवाहाय। ब्रह्माण्डसृजे। जाग्रते। स्वप्नाय। सुषुप्तये। तुर्याय। अतितुर्यवते नमः। ३८०

केवलावस्थाय नमः। सकलावस्थाय। शुद्धावस्थाय। उत्तमाङ्गाय। सृष्टिविधायिने। रक्षाविधायिने। संहर्त्रे। तिरोभूताय। अनुग्रहकराय। स्वतन्त्राय। परतन्त्राय। षण्मुखाय। कालाय। अकालाय। पाशुपतास्त्रकराय। ईश्वराय। अघोरास्त्राय। क्षुरिकास्त्राय। प्रत्यङ्गास्त्राय। पादोत्सृष्टमहाचक्राय नमः। ४००

विष्णुवेश्याभुजङ्गकाय नमः। नागयज्ञोपवीतिने। पञ्चवर्णाय। मोक्षदाय। वाग्वीशाय। अग्नीशाय। सर्पकच्छाय। पञ्चमूर्तये। भोगदाय। विष्णुशिरश्छेत्रे। शेषज्याय। बिन्दुनादकाय। सर्वज्ञाय। विष्णुनिगल मोक्षकाय। बीजवर्णकाय। बिल्वपत्रधराय। बिन्दुनादपीठाय। शक्तिदाय। रावणनिष्पेष्ट्रे। भैरवोत्पादकाय नमः। ४२०

दक्षयज्ञविनाशिने नमः। त्रिपुरत्रयशिक्षकाय। सिन्दूरपत्र धारिणे। मन्दारस्रगलंकृताय। निर्वीर्याय। भावनातीताय।

भूतगणेश्वराय। विष्णुभ्रूमध्य पादिने। सर्वोपादानकारणाय। निमित्तकारणाय। सर्वसहकारिणे। तस्मै। सते। व्यासकरच्छेत्रे। शूलप्रोतहरये। भेदाय। अभेदाय। वेदवल्लीकण्ठच्छेत्रे। पञ्चब्रह्मस्वरूपिणे। भेदाभेदोभयात्मवते नमः। ४४०

अच्छस्फटिकसङ्काशाय नमः। ब्रह्मभस्मावलेपनाय। निर्दग्धविष्णु भस्माङ्गरागाय। पिङ्गजटाधराय। चण्डार्पितप्रसादाय। धात्रे। धातृविवर्जिताय। कल्पातीताय। कल्पभस्मने। अगस्त्य कुसुमप्रियाय। अनुकल्पाय। उपकल्पाय। संकल्पाय। छेददुन्दुभये। विकल्पाय। विष्णुदुर्ज्ञेय पादाय। मृत्युञ्जयाय। विष्णुश्मशाननटनाय। विष्णुकेशोपवीतवते। ब्रह्मश्मशाननटनाय नमः। ४६०

पञ्चरावणघातकाय नमः। सर्पाधीशान्तराय। अनलासुरघातकाय। महिषासुर संहर्त्रे। नालीदूर्वावतंसकाय। देवर्षिनरदैत्येशाय। राक्षसेशाय। धनेश्वराय। चराचरेशाय। अनुपदाय। मूर्तिस्वरूपिणे। छन्दःस्वरूपिणे। एकजानये। द्विजानये। त्रिजानये। चतुर्जानिये। पञ्चजानये। विक्रमाश्रमाय। ब्रह्मविष्णुकपालास्तजयकिङ्किणिकांघ्रिकाय। संहारकाट्टहासाय नमः। ४८०

सर्वसंहारकाट्टहासाय नमः। सर्वसंहारनेत्रा ग्रये। सृष्टिकृते।वाङ्मनोयुताय। संहारकृते। त्रिशूलाय। रक्षाकृत्पाणिपादवते। भृङ्गिनाट्यप्रियाय। शंखपद्मनिध्योरधीश्वराय। सर्वान्तराय। भक्तचिन्तितार्थदाय। भक्तवत्सलाय। भक्तापराधसोढ्रे। विकीर्णजटाय। जटामकुटधारिणे। विशदास्राय। अपस्मारीकृताविद्या पृष्ठांघ्रये। स्थौल्यवर्जिताय। यूने। नित्ययूने नमः। ५००

वृद्धाय नमः। नित्यवृद्धाय। शक्त्युत्पाटिने। शक्तियुक्ताय। सत्यात्सत्याय। विष्णूत्पादकाय। अद्वन्द्वाय। सत्यासत्याय। मूलाधाराय। स्वाधिष्ठानाय। मणिपूर काय। अनाहताय। विशुद्धये। आज्ञायै। ब्रह्मबिलाय। वराभयकराय। शास्तृपित्रे। तारकमारकाय। सालोक्यदाय। सामीप्यदायिने नमः। ५२०

सारूप्यदाय नमः। सायुज्यमुक्तिदाय। हरिकन्धर पादुकाय। निकृत्तब्रह्ममूर्ध्ने। शाकिनी डाकिनीश्वराय। योगिनी मोहिनीनाथाय। दुर्गानाथाय। यज्ञाय। यज्ञेश्वराय। यज्ञहविर्भुजे। यज्वनां प्रियाय। विष्णुशापापहर्त्रे। चन्द्रशापापहारकाय। इन्द्रशापापहर्त्रे। वेदागम पुराणकृते। विष्णुब्रह्मोपदेष्ट्रे। स्कन्दोमादेशिकाय। विघ्नेशस्योपदेष्ट्रे। नन्दिकेशगुरवे। ऋषिगुरवेनमः। ५४०

सर्वगुरवे नमः। दशदिगीश्वराय। दशायुधाय। दशाङ्गाय। ज्ञानयज्ञोपवीतवते। ब्रह्मविष्णु शिरोमुण्डकन्दु काय। परमेश्वराय। ज्ञानक्रियायोग चर्यानिरताय। उरगकुण्डलाय। ब्रह्मताल-प्रियाय। विष्णुपटहप्रीतये। भण्डासुराप हर्त्रे। कंकपत्रधराय। तन्त्रवाद्यरताय। अर्कपुष्पप्रियाय। विष्ण्वास्यमुक्तवीर्याय। देव्यग्रकृत ताण्डवाय। ज्ञानांबराय। ज्ञानभूषाय। विष्णुशंखप्रियाय नमः। ५६०

विष्णूदर विमुक्तात्मवीर्याय नमः। परात्पराय। महेश्वराय। ईश्वराय। लिंगोद्भवाय। सुखास नाय। उमासखाय। चन्द्रचूडाय। अर्धनारीश्वराय। सोमास्कन्दाय। चक्रप्रसादिने। त्रिमूर्तिकाय। अर्धाङ्गविष्णवे। दक्षिणामूर्तये। अव्ययाय। भिक्षाटनाय। कङ्कालाय। कामारये। कालशासनाय। जलन्धरारये नमः। ५८०

त्रिपुरहन्त्रे नमः । विषभक्षणाय । कल्याणसुन्दराय । शरभमूर्तये । त्रिपदे । एकपादाय । भैरवाय । वृषारूढाय । सदानटाय । गंगाधराय । षण्ण वतितत्वाय । साष्टशतभेदमूर्तये । अष्टशताह्वयाय। अष्टोत्तर शततालरागनृत्तैकपण्डिताय । सहस्राख्याय । सहस्राक्षाय । सहस्रमुखाय । सहस्रबाहवे । सहस्रमूर्तये । अनन्तमुखाय नमः । ६००

अनन्तनाम्ने नमः । अनन्तश्रुतये । अनन्तनयनाय । अनन्तघ्राण मण्डिताय । अनन्तरूपिणे । अनन्तैश्वर्यवते । अनन्तशक्ति कृत्यावते । अनन्तज्ञानवते । अनन्तानन्दसन्दोहाय । अनन्तौदार्यवते । पृथिवीमूर्तये । पृथिवीशाय । पृथिवीधारकाय । पृथिव्यान्तराय । पृथिव्यतीताय । पार्थिवाण्डाभिमानिने । पार्थिवाण्डपुरुषहृदय कमलाय । पार्थिवाण्डभुवने शाय । पार्थिवाण्ड शक्तिधरणात्मकाय । आधार शक्तये नमः । ६२०

अधिष्ठानाय नमः । अनन्ताय । कालाग्नये । कालाग्निरुद्रभुवनपतये । अनन्ताय । ईशाय । शङ्कराय । पद्माय । पिङ्गलाय । कालाय । जलजाय । क्रोधाय । अतिबलाय । धनदाय । अतिकूश्माण्डभुवनेशाय । कूश्माण्डाय । सप्तपातालनायकाय । पातालान्ताय । ईशानाय । बलाय नमः । ६४०

अतिबलनाय नमः । बलविकरणाय । बलेशाय । बलेश्वराय । बलाध्यक्षाय । बलवते । हाटकेशाय । हाटकभुवने शानाय । अष्टगजेश्वराय । अष्टनागेश्वराय । भूलोकेशाय । मेर्वीशाय । मेरुशिखरराजाय । अवनिपतये । त्रियंबकाय । अष्टकुलपर्व तेशाय । मानसोत्तर गिरये । विश्वेशाय । स्वर्णलोकाय । चक्रवाल गिरिवासविरामकाय नमः । ६६०

धर्माय नमः । विविध धाम्ने । शंखपालाय । कनकरोम्णे । पर्जन्याय । केतुमते । विरोचनाय । हरिच्छायाय । रक्तच्छायाय ।

महान्धकारनाथाय । अण्डभित्तीश्वराय । प्राचीवज्रीश्वराय । दक्षिणप्राचीशाय । अग्नीश्वराय ।दक्षिणाय दिगीशाय । धर्मराजे । दक्षिणाशापतये । निरृऋतीशाय । पश्चिमाशापतये नमः । ६८०

वरुणेशाय नमः । उदक्पश्चिमेशाय । वाय्वीशाय । उत्तरदिङ्नाथाय । कुबेरेशाय । उत्तरपूर्वेशाय । ईशानेशाय । कैलासशिखरीनाथाय । श्रीकण्ठपरमेश्वराय । महाकैलासनाथाय । महासदाशिवाय । भुवर्लोकेशाय । शंभवे । उग्राय । सूर्यमण्डलनायकाय । प्रकाशरुद्राय । चन्द्रमण्डलेशाय । चन्द्रमहादेवाय । नक्षत्राणामधीश्वराय । ग्रहलोकेशाय नमः । ७००

गन्धर्वेशाय नमः । गान्धर्वेशाय । सिद्धविद्याधरेशाय । किन्नरेशाय । यक्षचारणनाथाय । स्वर्लोकेशाय । भीमाय । महर्लोकनाथाय । महाभवाय । जनलोकेश्वराय । ज्ञानपादाय । जननवर्जिताय । अतिपिङ्गलाय । आश्चर्याय । भौतिकाय । श्रुताय । तपोलोकेश्वराय । तप्ताय । महादेवाय । सत्यलोकेश्वराय नमः । ७२०

ब्रह्मणे नमः । ईशानाय । विष्णुलोकेशाय । विष्ण्वीशाय । शिवलोकाय । पराय । शिवाय । अण्डान्तेशाय । दण्डपाणये । अण्डपृष्ठेश्वराय । श्वेताय । वायुवेगाय । सुपात्राय । विद्याह्वयात्मकाय । कालाग्नये । महासंहारकाय । महाकालाय । महानिरृऋतये । महावरुणाय । वीरभद्राय नमः । ७४०

महते नमः । शतरुद्राय । भद्रकालाय । वीरभद्राय । कमण्डलुधराय । अम्भुवनेशाय । लक्ष्मीनाथाय । सरस्वतीशाय । देवेशाय । प्रभावेशाय । डिण्डीनाथाय । वल्मीकनाथाय । पुष्करनायकाय । मण्डीशाय । भारभूतेशाय । बिलालकाय ।

महेश्वराय। तेजोमण्डलनाथाय । तेजोमण्डलमूर्तिपाय । तेजोमण्डलविश्वेशाय नमः। ७६०

शिवाय नमः । अग्नये । वायुमण्डलमूर्तये । वायुमण्डलधारकाय। वायुमण्डलनाथाय। वायुमण्डलरक्षकाय। महावायुसुवेगाय। आकाशमण्ड लेश्वराय। आकाशमण्डलधराय। आकाशमण्डलमूर्तये। आकाशमण्डलातीताय। आकाशमण्डल भुवनपाय । महारुद्राय । तन्मात्र मण्डलेशाय । तत्मात्र मण्डलपतये। महा शर्वाय । महाभवाय । महापशुपतये । महाभीमाय। महाहराय नमः। ७८०

कर्मेन्द्रिय मण्डलेशाय नमः। कर्मेन्द्रिय मण्डल भुवः पतये। क्रियासरस्वतीनाथाय। क्रिया(श्रिया)लक्ष्मीपतये। क्रियेन्द्रियाय। क्रियामित्राय। क्रियाब्रह्मपतये। पतये। ज्ञानेन्द्रियमण्डलेशाय। ज्ञानेन्द्रियमण्डलभुवनपाय। भूमिदेवाय। शिवेशाय । वरुणाय। वह्निपाय। वातेशाय। विविधमण्डलेशाय। आविष्ट मण्डलेशाय। विषयमण्डल भुवनेशाय। गन्धर्वेशाय। शिवेश्वराय नमः। ८००

प्रासादबलभद्राय नमः। सूक्ष्मेशाय। मानवेश्वराय। अन्तः करणमण्डलेशाय । बुद्धिपतये । चित्तपतये । मनःपतये । अहंकारेश्वराय । गुणमण्डलनायकाय । संवर्ताय नमः । तामसगुणपतये नमः । तामस भुवनाधिपाय । एकवीराय । कृतान्ताय। संन्यासिने । सर्वशंकराय । पुरुषमृगानुग्रहदाय । ससाक्षीकाय। गुणाधिपाय। काक्षीकाय नमः। ८२०

भुवनेशाय नमः । कृताय । कृतभैरवाय । ब्रह्मणे । श्रीकण्ठदेवाय। सराजसगुणेश्वराय । राजसगुणभुवनेशाय । बलाध्यक्षाय। गुणाध्यक्षाय। महाशान्त्ताय। महात्रिपुरघातकाय। सर्वरूपिणे । निमेषाय । उन्मेषाय । प्रकृतिमण्डलेशाय ।

प्रकृतिमण्डल भुवनपाय। शुभरामाय। शुभभीमाय। शुद्धोग्राय। शुद्धभवाय नमः। ८४०

शुद्धशर्वाय नमः। शुद्धैकवीराय। प्रचण्डाय। पुरुषाय। शुभगन्धाय। जनिरहिताय। हरीशनागमण्डलेशाय। नागमण्डलभुवनेशाय। अप्रतिष्ठाय। प्रतिष्ठकाय। रूपाङ्गाय। मनोन्मनाय। महावीरस्व रूपकाय। कल्माषबहुवीराय। बलमेधादि चेतनाय। दक्षाय। नियतिमण्डले शाय। नियतिमण्डल भुवनपाय। वासुदेवाय। वज्रिणे। विधात्रे नमः। ८६०

अभ्रमणये नमः। कलविकरणाय। बलविकरणाय। बलप्रमथनाय। सर्वभूतदमाय। विद्यामण्डलेशाय। विद्यामण्डलभुवनपाय। महादेवाय। महाज्योतिषे। महादेवेशाय। कलामण्डलेशाय। कलामण्डलभुवनपाय। विशुद्धाय। प्रबुद्धाय। शुद्धाय। शुचिवर्णप्रकाशाय। महोक्षाय। उक्ष्णे। मायातन्वीश्वराय। मायाभुवनेशाय नमः ८८०

सुशक्तिमते नमः। विद्योतनाय। विश्वबीजाय। ज्योतीरूपाय। गोपतये। त्रिकालब्रह्मकर्त्रे। अनन्तेशाय। शुद्धविद्येशाय। शुद्धाय। विद्याभुवननायकाय। वामेशाय। सर्वज्येष्ठेशाय। रौद्रीश्वराय। कालेश्वराय। कलविकरणीकाय। बलविकरणीश्वराय। बलप्रमथनीशाय। सर्वभूत दमेश्वराय। मनोन्मनेशाय। तत्वेशाय। भुवनेश्वराय नमः। ९००

महामहेश्वराय नमः। सदाशिवाय। तत्वेश्वराय। सदाशिव भुवनेशाय। ज्ञानवैराग्यनायकाय। ऐश्वर्येशाय। धर्मेशाय। सदाशिवाय। अणुसदाशिवाय। अष्टविद्येश्वराय। शक्तितत्वेश्वराय। शक्तिभुवनेशाय। बिन्दुमूर्तये। सप्तकोटिमहामन्त्रेश्वराय। निवृत्ती शाय। प्रतिष्ठेशाय। विद्येशाय। शान्तिनायकाय। शान्त्यतीतेश्वराय। अर्धचन्द्रेश्वराय नमः ९२०

सुशान्तीशाय नमः । शिवाश्रयसमाह्वयाय । योजनीयाय । योज्याय । योजनातीत नायकाय । सुप्रभेदाय । निरोधीशाय । इन्धनीरेचकेश्वराय । रौद्रीशाय । ज्ञानबोधेशाय । तमोऽपहाय । नादतत्त्वेश्वराय । नादाख्य भुवनेश्वराय । इन्धिकेशाय । दीपिकेशाय । मोचिकेशाय । ऊर्ध्वगामिनीशाय । इडानाथाय । सुषुम्नेशाय । पिङ्गलेशाय नमः । ९४०

ब्रह्मरन्ध्रेश्वराय नमः । ब्रह्मरन्ध्रस्वरू पीशाय । पञ्चबीजेश्वराय । अमृतेशाय । शक्तीशाय । सूक्ष्मेशाय । सुसूक्ष्मपाय । मृतेशाय । अमृतेशाय । व्यापिनीशाय । परनादेश्वराय । व्योम्ने । व्योमरूपिणे । अनाश्रिताय । अनन्ताय । अनादाय । मुनीश्वराय । उन्मनीशाय । मन्त्रमूर्तये । मन्त्रेशाय नमः ९६०

मन्त्रधारकाय नमः। मन्त्रातीताय । पदामूर्तये । पदेशाय । पदधारकाय । पदातीताय । अक्षरात्मने । अक्षरेशाय । अक्षराश्रयाय । कलातीताय । ओंकारात्मने । ओंकारेशाय । ओंकारासनाय । पराशक्तिपतये । आदिशक्तिपतये । इच्छाशक्तिपतये । ज्ञानशक्तिपतये । क्रियाशक्तिपतये । शिवसादाख्याय । अमूर्ति सादाख्याय नमः। ९८०

मूर्तिसादाख्याय नमः । कर्तृसादाख्याय । कर्म सादाख्याय । सर्वस्रष्ट्रे । सर्वरक्षाकारकाय । सर्वहारकाय । तिरोभावकृते । सर्वानुग्राहकाय । निरञ्जनाय । चञ्चलाय । विमलाय । अनलाय । सच्चिदानन्दरूपिणे । विष्णुचक्रप्रसादकृते । सर्वव्यापिने । द्वैताय । विशिष्टा द्वैतकाय । परिपूर्णाय । लिङ्गरूपाय । महालिङ्गस्व रूपवते । १०००

श्री सांबपरमेश्वराय नमः

# श्री शिवसहस्रनामस्तोत्रम् - ६

सूतउवाच-

श्रूयतामृषयः श्रेष्ठाः कथयामि यथाश्रुतम्।
विष्णुना प्रार्थितो येन संतुष्टःपरमेश्वरः।
तदहं कथयाम्यद्य पुण्यं नामसहस्रकम्॥ १

श्रीविष्णुरुवाच-

शिवो हरो मृडो रुद्रः पुष्करः पुष्पलोचनः।
अर्थिगम्यः सदाचारः शर्वः शंभुर्महेश्वरः॥ २

चंद्रापीडश्चन्द्रमौलिर्विश्वं विश्वामरेश्वरः।
वेदांतसारसंदोहः कपाली नीललोहितः॥ ३

ध्यानाधारोऽपरिच्छेद्यो गौरीभर्ता गणेश्वरः।
अष्टमूर्तिर्विश्वमूर्तिस्त्रिवर्गस्वर्गसाधनः॥ ४

ज्ञानगम्यो दृढप्रज्ञो देवदेवस्त्रिलोचनः।
वामदेवो महादेवःपटुः परिबृढो दृढः॥५

विश्वरूपो विरूपाक्षो वागीशः शुचिसत्तमः।
सर्वप्रमाणसंवादी वृषाङ्को वृषवाहनः॥ ६

ईशः पिनाकी खट्वांगी चित्रवेषश्चिरन्तनः।
तमोहारी महायोगी गोप्ता ब्रह्मा च धूर्जटिः॥ ७

कालकालः कृत्तिवासाः सुभगः प्रणवात्मकः।
उन्मध्रः पुरुषो जुष्यो दुर्वासाः पुरशासनः॥ ८

दिव्यायुधः स्कन्दगुरुः परमेष्ठी परात्परः।
अनादिमध्यनिधनो गिरीशो गिरिजाधवः॥ ९

कुबेरबंधुः श्रीकण्ठो लोकवर्णोत्तमो मृदुः ।
समाधिवेद्यः कोदण्डी नीलकण्ठः परश्वधी ।। १०

विशालाक्षो मृगव्याधः सुरेशः सूर्यतापनः ।
धर्मधाम क्षमाक्षेत्रं भगवान्भगनेत्रभित् ।। ११

उग्रः पशुपतिस्तार्क्ष्यः प्रियभक्तः परंतपः ।
दाता दयाकरो दक्षः कपर्दी कामशासनः ।। १२

श्मशाननिलयः सूक्ष्मः श्मशानस्थो महेश्वरः ।
लोककर्त्ता मृगपतिर्महाकर्त्ता महौषधिः ।। १३

उत्तरो गोपतिर्गोप्ता ज्ञानगम्यः पुरातनः ।
नीतिः सुनीतिः शुद्धात्मा सोमः सोमरतः सुखी ।। १४

सोमपोऽमृतपः सौम्यो महातेजा महाद्युतिः ।
तेजोमयोऽमृतमयोऽन्नमयश्च सुधापतिः ।। १५

अजातशत्रुरालोकः संभाव्यो हव्यवाहनः ।
लोककारो वेदकरः सूत्रकारः सनातनः ।। १६

महर्षि कपिलाचार्यो विश्वदीप्तिस्त्रिलोचनः ।
पिनाकपाणिर्भूदेवः स्वस्तिदः स्वस्तिकृत्सुधीः ।। १७

धातृधामा धामकरः सर्वगः सर्वगोचरः ।
ब्रह्मसृग्विश्वसृक्सर्गः कर्णिकारः प्रियः कविः ।। १८

शाखो विशाखो गोशाखः शिवो भिषगनुत्तमः ।
गङ्गाप्लवोदको भव्यः पुष्कलः स्थपतिः स्थिरः ।।१९

विजितात्मा विधेयात्मा भूतवाहनसारथिः ।
सगणो गणकायश्च सुकीर्तिश्छिन्नसंशयः ।।२०

कामदेवः कामपालो भस्मोद्धूलितविग्रहः ।
भस्मप्रियो भस्मशायी उमाकान्तः कृतागमः ।।२१

समावर्तो निवृत्तात्मा धर्मपुंजः सदाशिवः ।
अकल्मषश्चतुर्बाहुर्दुर्धर्षोऽथ दुरासदः ।। २२

दुर्लभो दुर्गमो दुर्गः सर्वायुधविशारदः ।
अध्यात्मयोगनिलयः सुतंतुस्तन्तुवर्धनः ।। २३

शुभांगो लोकसारंगो जगदीशो जनार्दनः ।
भस्मशुद्धिकरो मेरुरोजस्वी शुद्धविग्रहः ।। २४

असाध्यः साधुसाध्यश्च भृत्यमर्कटरूपधृक् ।
हिरण्यरेताः पौराणो रिपुजीवहरो बलः ।। २५

महाह्रदो महागर्तः सिद्धबृन्दारवंदितः ।
व्याघ्रचर्माम्बरो व्याली महाभूतो महानिधिः ।। २६

अमृताशोऽमृतवपुः पांचजन्यः प्रभंजनः ।
पंचविंशतितत्त्वस्थः पारिजातः परावरः ।। २७

सुलभः सुव्रतः शूरो ब्रह्मवेदनिधिर्निधिः ।
वर्णाश्रमगुरुर्वर्णी शत्रुजिच्छत्रुतापनः ।। २८

आश्रमः क्षपणः क्षामो ज्ञानवानचलेश्वरः ।
प्रमाणभूतो दुर्ज्ञेयः सुपर्णो वायुवाहनः ।। २९

धनुर्धरो धनुर्वेदो गुणराशिर्गुणाकरः ।
सत्यः सत्यपरो दीनो धर्मो गोधर्मसाधनः ।। ३०

अनन्तदृष्टिरानन्दो दंडो दमयिता दमः ।
अभिवाद्यो महामायो विश्वकर्मा विशारदः ।। ३१

वीतरागो विनीतात्मा तपस्वी भूतभावनः ।
उन्मत्तवेषः प्रच्छन्नो जितकामोऽजितप्रियः ।। ३२

कल्याणप्रकृतिः कल्पः सर्वलोकप्रजापतिः ।
तपस्वी तारको धीमान्प्रधानः प्रभुरव्ययः ।। ३३

लोकपालोऽन्तर्हितात्मा कल्पादिः कमलेक्षणः ।
वेदशास्त्रार्थतत्वज्ञोऽनियमो नियताश्रयः ।। ३४

चंद्रः सूर्यः शनिः केतुर्वरांगो विद्रुमच्छविः ।
भक्तिवश्यः परब्रह्म मृगबाणार्पणोऽनघः ।। ३५

अद्रिरद्र्यालयः कांतः परमात्मा जगद्गुरुः ।
सर्वकर्मालयस्तुष्टो मंगल्यो मङ्गलावृतः ।। ३६

महातपा दीर्घतपाः स्थविष्ठः स्थविरो ध्रुवः ।
अहः संवत्सरो व्याप्तिः प्रमाणं परमं तपः ।। ३७

संवत्सरकरो मंत्रप्रत्ययः सर्वदर्शनः ।
अजः सर्वेश्वरः सिद्धो महारेता महाबलः ।। ३८

योगी योग्यो महातेजाः सिद्धिः सर्वादिरग्रहः ।
वसुर्वसुमनाः सत्यः सर्वपापहरो हरः ।। ३९

सुकीर्तिः शोभनः श्रीमान् अवाङ्मनसगोचरः ।
अमृतः शाश्वतः शान्तो बाणहस्तः प्रतापवान् ।। ४०

कमंडलुधरो धन्वी वेदांगो वेदविन्मुनिः ।
भ्राजिष्णुर्भोजनं भोक्ता लोकनाथो दुराधरः ।। ४१

अतीन्द्रियो महामायः सर्ववासश्चतुष्पथः ।
कालयोगी महानादो महोत्साहो महाबलः ।। ४२

महाबुद्धिर्महावीर्यो भूतचारी पुरन्दरः ।
निशाचरः प्रेतचारी महाशक्तिर्महाद्युतिः ।। ४३

अनिर्देश्यवपुः श्रीमान्सर्वाचार्यमनोगतिः ।
बहुश्रुतो महामायो नियतात्मा ध्रुवोऽध्रुवः ।। ४४

ओजस्तेजोद्युतिधरो नर्तकः सर्वशासकः ।
नृत्यप्रियो नृत्यनित्यः प्रकाशात्मा प्रकाशकः ।। ४५

स्पष्टाक्षरो बुधो मंत्रः समानः सारसंप्लवः ।
युगादिकृद्युगावर्तो गंभीरो वृषवाहनः ।। ४६

इष्टो विशिष्टः शिष्टेष्टः शलभः शरभो धनुः ।
तीर्थरूपस्तीर्थनामा तीर्थदृश्यः स्तुतोऽर्थदः ।। ४७

अपां निधिरधिष्ठानं विजयो जयकालवित् ।
प्रतिष्ठितः प्रमाणज्ञो हिरण्यकवचो हरिः ।। ४८

विमोचनः सुरगणो विद्येशो बिंदुसंश्रयः ।
बालरूपो बलोन्मत्तो विकर्ता गहनो गुहः ।। ४९

करणं कारणं कर्त्ता सर्वबन्धविमोचनः ।
व्यवसायो व्यवस्थानः स्थानदो जगदादिजः ।। ५०

गुणदो ललितोऽभेदो भवात्माऽऽत्मनि संस्थितः ।
वीरेश्वरो वीरभद्रो वीरासनविधिर्विराट् ।। ५१

वीरचूडामणिर्वेत्ता तीव्रानन्दो नदीधरः ।
आज्ञाधारस्त्रिशूली च शिपिविष्टः शिवालयः ।। ५२

वालखिल्यो महाचापस्तिग्मांशुर्बधिरः खगः ।
अभिरामः सुशरणः सुब्रह्मण्यः सुधापतिः ।। ५३

मघवान्कौशिको गोमान्विरामः सर्वसाधनः ।
ललाटाक्षो विश्वदेहः सारः संसारचक्रभृत् ।। ५४

अमोघदंडो मध्यस्थो हिरण्यो ब्रह्मवर्चसी ।
परमार्थः परो मायी शंबरो व्याघ्रलोचनः ।। ५५

रुचिर्विरिंचिः स्वर्बन्धुर्वाचस्पतिरहर्पतिः ।
रविर्विरोचनः स्कंदः शास्ता वैवस्वतो यमः ।। ५६

युक्तिरुन्नतकीर्तिश्च सानुरागः परंजयः ।
कैलासाधिपतिः कान्तः सविता रविलोचनः ।। ५७

विद्वत्तमो वीतभयो विश्वभर्त्ताऽनिवारितः ।
नित्यो नियतकल्याणः पुण्यश्रवणकीर्तनः ।। ५८

दूरश्रवा विश्वसहो ध्येयो दुःस्वप्ननाशनः ।
उत्तारणो दुष्कृतिहा विज्ञेयो दुःसहोऽभवः ।। ५९

अनादि र्भूर्भुवो लक्ष्मीः किरीटी त्रिदशाधिपः ।
विश्वगोप्ता विश्वकर्त्ता सुवीरो रुचिरांगदः ।। ६०

जननो जनजन्मादिः प्रीतिमान्नीतिमान्धवः ।
वसिष्ठः कश्यपो भानुर्भीमो भीमपराक्रमः ।। ६१

प्रणवः सत्पथाचारो महाकोशो महाधनः ।
जन्माधिपो महादेवः सकलागमपारगः ।। ६२

तत्त्वं तत्त्वविदेकात्मा विभुर्विश्वविभूषणः ।
ऋषिर्ब्राह्मण ऐश्वर्यं जन्ममृत्युजरातिगः ।। ६३

पंचयज्ञसमुत्पत्तिर्विश्वेशो विमलोदयः ।
आत्मयोनिरनाद्यन्तो वत्सलो भक्तलोकधृक् ।। ६४

गायत्रीवल्लभः प्रांशुर्विश्ववासः प्रभाकरः ।
शिशिरगिरिरतः सम्राट् सुषेणः सुरशत्रुहा ॥ ६५

अमोघोऽरिष्टनेमिश्च कुमुदो विगतज्वरः ।
स्वयंज्योतिस्तनुज्योतिरात्मज्योतिरचंचलः ॥ ६६

पिंगलः कपिलश्मश्रुर्भालनेत्रस्त्रयीतनुः ।
ज्ञानस्कन्दो महानीतिर्विश्वोत्पत्तिरुपप्लवः ॥ ६७

भगो विवस्वानादित्यो योगपारो दिवस्पतिः ।
कल्याणगुणनामा च पापहा पुण्यदर्शनः ॥ ६८

उदारकीर्तिरुद्योगी सद्योगी सदसन्मयः ।
नक्षत्रमाली नाकेशः स्वाधिष्ठानपदाश्रयः ॥ ६९

पवित्रः पापहारी च मणिपूरो नभोगतिः ।
हृत्पुंडरीक आसीनः शक्रशांतो वृषाकपिः ॥ ७०

उष्णो गृहपतिः कृष्णः समर्थोऽनर्थनाशनः ।
अधर्मशत्रुरक्षय्यः पुरुहूतः पुरुश्रुतः ॥ ७१

ब्रह्मगर्भो बृहद्गर्भो धर्मधेनुर्धनागमः ।
जगद्धितैषी सुगतः कुमारः कुशलागमः ॥ ७२

हिरण्यवर्णो ज्योतिष्मान्नानाभूतरतो ध्वनिः ।
अरागो नयनाध्यक्षो विश्वामित्रो धनेश्वरः ॥ ७३

ब्रह्मज्योतिर्वसुधामा महाज्योतिरनुत्तमः ।
मातामहो मातरिश्वा नभस्वान्नागहारधृक् ॥ ७४

पुलस्त्यः पुलहोऽगस्त्यो जातूकर्ण्यः पराशरः ।
निरावरणनिर्वारो वैरिञ्च्यो विष्टरश्रवाः ॥ ७५

आत्मभूरनिरुद्धोऽत्रिर्ज्ञानमूर्तिर्महायशाः ।
लोकवीराग्रणीर्वीरश्चण्डः सत्यपराक्रमः ।। ७६

व्यालाकल्पो महाकल्पः कल्पवृक्षः कलाधरः ।
अलंकरिष्णुरचलो रोचिष्णुर्विक्रमोन्नतः ।। ७७

आयुः शब्दपतिर्वेगीप्लवनः शिखिसारथिः ।
असंसृष्टोऽतिथिः शक्रप्रमाथी पादपासनः ।। ७८

वसुश्रवा हव्यवाहः प्रतप्ता विश्वभोजनः ।
जप्यो जरादिशमनो लोहितात्मा तनूनपात् ।। ७९

बृहदश्वो नभोयोनिः सुप्रतीकस्तमिस्रहा ।
निदाघस्तपनो मेघः स्वक्षः परपुरंजयः ।। ८०

सुखानिलः सुनिष्पन्नः सुरभिः शिशिरात्मकः ।
वसन्तो माधवो ग्रीष्मो नभस्यो बीजवाहनः ।। ८१

अंगिरा गुरुरात्रेयो विमलो विश्वपावनः ।
पावनः सुमतिर्विद्वांस्त्रैविद्यो नरवाहनः ।। ८२

मनो बुद्धिरहंकारः क्षेत्रज्ञः क्षेत्रपालकः ।
जमदग्निर्बलनिधिर्विगालो विश्वगालवः ।। ८३

अघोरोऽनुत्तरो यज्ञः श्रेयो निःश्रेयसां पथः ।
शैलो गगनकुन्दाभो दानवारिररिंदमः ।। ८४

रजनीजनकश्चारुविशल्यो लोककल्पधृक् ।
चतुर्वेदश्चतुर्भावश्चतुरश्चतुरप्रियः ।। ८५

आम्नायोऽथ समाम्नायस्तीर्थदेवशिवालयः ।
बहुरूपो महारूपः सर्वरूपश्चराचरः ।। ८६

न्यायनिर्मायको न्यायी न्यायगम्यो निरंतरः ।
सहस्रमूर्धा देवेन्द्रः सर्वशास्त्रप्रभंजनः ॥ ८७

मुण्डो विरूपो विक्रान्तो दण्डी दान्तो गुणोत्तमः ।
पिंगलाक्षो जनाध्यक्षो नीलग्रीवो निरामयः ॥ ८८

सहस्रबाहुः सर्वेशः शरण्यः सर्वलोकधृक् ।
पद्मासनः परंज्योतिः परःपारः परं फलम् ॥ ८९

पद्मगर्भो महागर्भो विश्वगर्भो विचक्षणः ।
चराचरज्ञो वरदो वरेशस्तु महाबलः ॥ ९०

देवासुरगुरुर्देवो देवासुरमहाश्रयः ।
देवादिदेवो देवाग्निर्देवाग्निः सुखदः प्रभुः ॥ ९१

देवासुरेश्वरो दिव्यो देवासुरमहेश्वरः ।
देवदेवमयोऽचिन्त्यो देवदेवात्मसम्भवः ॥ ९२

सद्योनिरसुरव्याघ्रो देवसिंहो दिवाकरः ।
विबुधाग्रवरः श्रेष्ठः सर्वदेवोत्तमोत्तमः ॥ ९३

शिवज्ञानरतः श्रीमाञ्छिखी श्रीपर्वतप्रियः ।
वज्रहस्तः सिद्धिखड्गनरसिंहनिपातनः ॥ ९४

लिंगाध्यक्षः सुराध्यक्षो योगाध्यक्षो युगावहः ।
स्वधर्मा स्वर्गतः स्वर्गस्वरः स्वरमयस्वनः ॥ ९५

बाणाध्यक्षो बीजकर्ता धर्मकृद्धर्मसंभवः ।
दंभो लोभोऽर्थविच्छंभुः सर्वभूतमहेश्वरः ॥ ९६

श्मशाननिलयस्त्र्यक्षः सेतुरप्रतिमाकृतिः ।
लोकोत्तरस्फुटालोकस्त्र्यंबको नागभूषणः ॥ ९७

अंधकारिर्मखद्वेषी विष्णुकंधरपातनः ।
हीनदोषोऽक्षयगुणो दक्षारिः पूषदंतभित् ।। ९८

धूर्जटिः खण्डपरशुः सकलो निष्कलोऽनघः ।
अकालः सकलाधारः पांडुराभो मृडो नटः ।। ९९

पूर्णः पूरयिता पुण्यः सुकुमारः सुलोचनः ।
सामगेयप्रियोऽक्रूरः पुण्यकीर्तिरनामयः ।। १००

मनोजवस्तीर्थकरो जटिलो जीवितेश्वरः ।
जीवितान्तकरो नित्यो वसुरेता वसुप्रदः ।। १०१

सद्गतिः सत्कृतिः सिद्धिः सज्जातिः कालकण्टकः ।
कलाधरो महाकालो भूतसत्यपरायणः ।। १०२

लोकलावण्यकर्ता च लोकोत्तरसुखालयः ।
चन्द्रसंजीवनः शास्ता लोकगूढो महाधिपः ।। १०३

लोकबन्धुर्लोकनाथः कृतज्ञः कीर्तिभूषणः ।
अनपायोऽक्षरः कान्तः सर्वशस्त्रभृतां वरः ।। १०४

तेजोमयो द्युतिधरो लोकानामग्रणीरणुः ।
शुचिस्मितः प्रसन्नात्मा दुर्जयो दुरतिक्रमः ।। १०५

ज्योतिर्मयो जगन्नाथो निराकारो जलेश्वरः ।
तुम्बवीणो महाकोपो विशोकः शोकनाशनः ।। १०६

त्रिलोकपस्त्रिलोकेशः सर्वशुद्धि रधोक्षजः ।
अव्यक्तलक्षणो देवो व्यक्ताव्यक्तो विशांपतिः ।। १०७

वरशीलो वरगुणः सारो मानधनो मयः ।
ब्रह्मा विष्णुः प्रजापालो हंसो हंसगतिर्वयः ।। १०८

वेधा विधाता धाता च स्रष्टा हर्त्ता चतुर्मुखः ।
कैलासशिखरावासी सर्वावासी सदागतिः ।। १०९

हिरण्यगर्भो द्रुहिणो भूतपालोऽथ भूपतिः ।
सद्योगी योगविद्योगी वरदो ब्राह्मणप्रियः ।। ११०

देवप्रियो देवनाथो देवज्ञो देवचिन्तकः ।
विषमाक्षो विशालाक्षो वृषदो वृषवर्धनः ।। १११

निर्ममो निरहंकारो निर्मोहो निरुपद्रवः ।
दर्पहा दर्पदो दृप्तः सर्वर्तुपरिवर्त्तकः ।। ११२

सहस्रजित्सहस्राक्षः स्निग्धप्रकृतिदक्षिणः ।
भूतभव्यभवन्नाथः प्रभवो भूतिनाशनः ।। ११३

अर्थोऽनर्थो महाकोशः परकार्यैकपंडितः ।
निष्कण्टकः कृतानन्दो निर्व्याजो व्याजमर्दनः ।। ११४

सत्त्ववान् सात्त्विकः सत्यकीर्तिः स्नेहकृतागमः ।
अकम्पितो गुणग्राही नैकात्मा नैककर्मकृत् ।। ११५

सुप्रीतः सुमुखः सूक्ष्मः सुकरो दक्षिणानिलः ।
नन्दिस्कन्धधरो धुर्यः प्रकटः प्रीतिवर्द्धनः ।। ११६

अपराजितः सर्वसत्त्वो गोविन्दः सत्त्ववाहनः ।
अधृतः स्वधृतः सिद्धः पूतमूर्तिर्यशोधनः ।। ११७

वाराहशृङ्गधृत् शृङ्गी बलवानेकनायकः ।
श्रुतिप्रकाशः श्रुतिमानेकबंधुरनेककृत् ।। ११८

श्रीवत्सलःशिवारंभः शांतभद्रः समीरणः ।
भूशयो भूषणो भूतिर्भूतकृद्भूतभावनः ।। ११९

अकम्पो भक्तिकायस्तु कालहा नीललोहितः ।
सत्यव्रतो महात्यागी नित्यं शांतिपरायणः ।। १२०

परार्थवृत्तिर्वरदो विविक्षुस्तु विशारदः ।
शुभदःशुभकर्ता च शुभनामा शुभः स्वयम् ।। १२१

अनर्थितोऽगुणः साक्षी ह्यकर्ता कनकप्रभः ।
स्वभावभद्रो मध्यस्थः शीघ्रगः शीघ्रनाशनः ।। १२२

शिखण्डी कवची शूली जटी मुण्डी च कुण्डली ।
अमृत्युः सर्वदृक्सिंहस्तेजोराशिर्महामणिः ।। १२३

असंख्येयोऽप्रमेयात्मा वीर्यवान्वीर्यकोविदः ।
वेद्यश्चैव वियोगात्मा परावरमुनीश्वरः ।। १२४

अनुत्तमो दुराधर्षो मधुरप्रियदर्शनः ।
सुरेशः शरणं सर्वः शब्दब्रह्म सतां गतिः ।। १२५

कालपक्षः कालकारी कंकणीकृतवासुकिः ।
महेष्वासो महीभर्ता निष्कलंको विशृङ्खलः ।। १२६

द्युमणिस्तरणिर्धन्यः सिद्धिदः सिद्धिसाधनः ।
विश्वतः संवृतः स्तुत्यो व्यूढोरस्को महाभुजः ।। १२७

सर्वयोनिर्निरातंको नरनारायणप्रियः ।
निर्लेपो निष्प्रपंचात्मा निर्व्यङ्गो व्यङ्गनाशनः ।। १२८

स्तव्यः स्तवप्रियः स्तोता व्यासमूर्तिर्निरंकुशः ।
निरवद्यमयोपायो विद्याराशी रसप्रियः ।। १२९

प्रशान्तबुद्धिरक्षुण्णः संग्रही नित्यसुंदरः ।
वैयाघ्रधुर्यो दात्रीशः शाकल्यः शर्वरीपतिः ।। १३०

परमार्थगुरुर्दृष्टिः शरीराश्रितवत्सलः ।
सोमो रसज्ञो रसदः सर्वसत्त्वावलंबनः ।। १३१

एवं नाम्नां सहस्रेण तुष्टाव वृषभध्वजम्।
प्रार्थयामास शंभुं च पूजयामास पंकजैः ॥ १३२

परीक्षार्थं हरेस्त्वीशः कमलेषु महेश्वरः।
गोपयामास कमलं तदैकं भुवनेश्वरः ॥ १३३

हृदा विचारितं तेन कुतो वै कमलं गतम्।
यातु यातु सुखेनैव नेत्रं किं कमलं न हि ॥ १३४

ज्ञात्वा तु नेत्रमुद्धृत्य सर्वसत्त्वावलंबनम्।
पूजयामास भावेन स्तवेनाऽनेन सर्वथा ॥ १३५

मा मेति व्याहरन्नेव प्रादुरासीज्जगद्गुरुः।
ततस्तु तमथो दृष्ट्वा तथाभूतं हरो हरिम् ॥ १३६

तस्मादवतताराशु मण्डलात्पार्थिवस्य सः।
यथोक्तरूपिणं शंभुं तेजोराशिं समुत्थितम् ॥ १३७

नमस्कृत्य पुरः स्थित्वा स्तुतिं कृत्वा विशेषतः।
पूजयामास देवेशः पार्वत्या सहितं शिवम् ॥ १३८

प्रसन्नवदनो भूत्वा शंभोश्च सम्मुखे स्थितः।
इत्थंभूतं हरो दृष्ट्वा कोटिभास्करभूषितः ॥ १३९

प्राणिनामीश्वरः शंभुर्देवदेवो जनार्दनम्।
तदा प्राह महादेवः प्रहसन्निव शंकरः।
समीक्षमाणं तं विष्णुं कृतांजलिपुटं स्थितम् ॥ १४०

शंकर उवाच-

ज्ञातं ममेदं सकलं देवकार्यं जनार्दन।
सुदर्शनाख्यं चक्रं च ददामि तव शोभनम् ॥ १४१

यद्रूपं भवता दृष्टं सर्वलोकसुखावहम्।
हिताय तव देवेश कृतं भावय सुव्रतम् ॥ १४२

रणाजिरेपि संस्मृत्य देवानां दुःखनाशनम्।
इदं चक्रमिदं रूपमिदं नामसहस्रकम्॥ १४३

ये शृण्वन्ति सदा भक्त्या सिद्धिः स्यादनपायिनी।
एवमुक्त्वा ददौ चक्रं सूर्यायुतसमप्रभम्॥ १४४

विष्णुरपि च संज्ञात्वा जग्राहोदङ्मुखस्तदा।
नमस्कृत्य तदा देवः पुनर्वचनमब्रवीत्॥ १४५

शृणु देव मया ध्येयं पठनीयं च मे प्रभो।
दुःखानां नाशनार्थं हि वद त्वं लोकशंकर॥ १४६

इति पृष्टस्तदा तेन संतुष्टस्तु शिवोऽब्रवीत्।
रूपं ध्येयं मदीयं वै सर्वानर्थप्रशान्तये॥ १४७

अनेकदुःखनाशार्थं पाठ्यं नामसहस्रकम्।
धार्यं चक्रं सदा मेऽद्य सर्वानर्थप्रशांतये॥ १४८

अन्ये च ये पठिष्यंति पाठयिष्यंति नित्यशः।
तेषां दुःखं न स्वप्नेऽपि जायते नात्र संशयः॥ १४९

राज्ञां च संकटे प्राप्ते शतावर्तं चरेद्यदा।
सांगं च विधियुक्तो हि कल्याणं लभते नरः॥ १५०

रोगनाशकरं ह्येतद्विद्यादायकमुत्तमम्।
समुद्दिश्य फलं श्रेष्ठं पठंति फलमुत्तमम्॥ १५१

लभन्ते नात्र संदेहः सत्यमेतद्व्रतं मम।
प्रातः समुत्थाय सदा पूजां कृत्वा मदीयिकाम्॥ १५२

पठतो मत्समक्षं वै नित्यं सिद्धिर्न दूरतः।
ऐहिकीं सिद्धिमासाद्य परलोक समुद्भवाम्॥ १५३

प्राप्नोति पाठको नित्यमष्टमासान् सुरेश्वर।
सायुज्यमुक्तिमायाति नाऽत्र कार्या विचारणा॥ १५४

एवमुक्त्वा तदा विष्णुं शंकरः प्रीतमानसः।
उपस्पृश्य कराभ्यां च उवाच शंकरः पुनः॥ १५५

वरदोऽस्मि सुरश्रेष्ठ वरान्वरय चेप्सितान्।
भक्त्या वशीकृतो नूनं स्तवेनानेन वै पुनः॥ १५६

इत्युक्तो देवदेवेन देवदेवं प्रणम्य तम्।
यथेदानीं कृपा देव क्रियते चाऽप्यतः परम्॥ १५७

कार्या चैव विशेषेण कृपालुत्वात्त्वया प्रभो।
त्वयि भक्तिं महादेव प्रयच्छ वरमुत्तमम्॥ १५८

नाऽन्यमिच्छामि भगवन्पूर्णोऽहं ते प्रसादतः।
तच्छ्रुत्वा वचनं तस्य दयावान्सुतरां भवः॥ १५९

प्राह त्वेनं महादेवः परमात्मानमच्युतम्।
मयि भक्तिश्च वंद्यस्त्वं पूज्यश्चैव सुरैरपि॥ १६०

विश्वंभरस्त्वदीयं वै नाम पापहरं परम्।
भविष्यति न संदेहो मत्प्रसादात्सुरोत्तम॥ १६१

इत्युक्त्वाऽन्तर्दधे रुद्रो भगवान्नीललोहितः।
जनार्दनोऽपि भगवान्वचनाच्छंकरस्य च॥ १६२

प्राप्य चक्रं शुभं ध्यानं स्तोत्रमेतन्निरन्तरम्।
पपाठाध्यापयामास भक्तेभ्यस्तदुपादिशत्॥ १६३

अन्येऽपि ये पठिष्यन्ति विन्दन्तु च तथा फलम्।
इति पृष्टं समाख्यातं शृण्वतां पापहारकम्॥ १६४

—*—

# श्रीशिवसहस्रनामावलिः-६

शिवाय नमः । हराय । मृडाय । रुद्राय । पुष्कराय । पुष्पलोचनाय । अर्थिगम्याय । सदाचाराय । शर्वाय । शंभवे । महेश्वराय । चन्द्रापीडाय । चन्द्रमौलये । विश्वस्मै । विश्वामरेश्वराय । वेदान्तसारसन्दोहाय । कपालिने । नीललोहिताय । ध्यानाधाराय । अपरिच्छेद्याय नमः । (२०)

गौरीभर्त्रे नमः । गणेश्वराय । अष्टमूर्तये । विश्वमूर्तये । त्रिवर्गस्वर्ग साधनाय । ज्ञानगम्याय । दृढप्रज्ञाय । देवदेवाय । त्रिलोचनाय । वामदेवाय । महादेवाय । पटवे । परिबृढाय । दृढाय । विश्वरूपाय । विरूपाक्षाय । वागीशाय । शुचिसत्तमाय । सर्वप्रमाण संवादिने । वृषा ङ्काय नमः । (४०)

वृषवाहनाय नमः । ईशाय । पिनाकिने । खट्वाङ्गिने । चित्रवेषाय । चिरन्तनाय । तमोहारिणे । महायोगिने । गोप्त्रे । ब्रह्मणे । धूर्जटये । कालकालाय । कृत्तिवाससे । सुभगाय । प्रणवात्मकाय । उन्नध्राय । पुरुषाय । जुष्याय । दुर्वाससे । पुर शासनाय नमः । ६०

दिव्यायुधाय । स्कन्दगुरवे । परमेष्ठिने । परात्पराय । अनादिमध्यनिधनाय । गिरीशाय । गिरिजाधवाय । कुबेरबन्धवे । श्रीकण्ठाय । लोकवर्णोत्तमाय । मृदवे । समाधिवेद्याय । कोदण्डिने । नीलकण्ठाय । परश्वधिने । विशालाक्षाय । मृगव्याधाय । सुरेशाय । सूर्यतापनाय । धर्मधाम्ने नमः । ८०

क्षमाक्षेत्राय नमः । भगवते । भगनेत्रभिदे । उग्राय । पशुपतये । तार्क्ष्याय । प्रियभक्ताय । परंतपाय । दात्रे । दया कराय । दक्षाय । कपर्दिने । कामशासनाय । श्मशाननिलयाय । सूक्ष्माय ।

श्मशानस्थाय। महेश्वराय। लोककर्त्रे। मृगपतये। महाकर्त्रे नमः। १००

महौषधये नमः। उत्तराय। गोपतये। गोप्त्रे। ज्ञानगम्याय। पुरातनाय। नीतये। सुनीतये। शुद्धात्मने। सोमाय। सोमरताय। सुखिने। सोमपाय। अमृतपाय। सौम्याय। महातेजसे। महाद्युतये। तेजोमयाय। अमृतमयाय। अन्नमयाय नमः। १२०

सुधापतये नमः। अजातशत्रवे। आलोकाय। संभाव्याय। हव्यवाहनाय। लोककाराय। वेदकराय। सूत्रकाराय। सनातनाय। महर्षिकपिलाचार्याय। विश्वदीप्तये। त्रिलोचनाय। पिनाकपाणये। भूदेवाय। स्वस्तिदाय। स्वस्तिकृते। सुधिये। धातृधाम्ने। धामकराय। सर्वगाय नमः। १४०

सर्वगोचराय नमः। ब्रह्मसृजे। विश्वसृजे। सर्गाय। कर्णिकाराय। प्रियाय। कवये। शाखाय। विशाखाय। गोशाखाय। शिवाय। भिषजे। अनुत्तमाय। गङ्गाप्लवोदकाय। भव्याय। पुष्कलाय। स्थपतये। स्थिराय। विजितात्मने। विधेयात्मने नमः॥ १६०

भूतवाहनसारथये नमः। सगणाय। गणकायाय। सुकीर्तये। छिन्नसंशयाय। कामदेवाय। कामपालाय। भस्मोद्धूलित विग्रहाय। भस्मप्रियाय। भस्मशायिने। उमाकान्ताय। कृतागमाय। समावर्ताय। निवृत्तात्मने। धर्मपुञ्जाय। सदाशिवाय। अकल्मषाय। चतुर्बाहवे। दुर्धर्षाय। दुरासदाय नमः। १८०

दुर्लभाय नमः। दुर्गमाय। दुर्गाय। सर्वायुधविशारदाय। अध्यात्मयोगनिलयाय। सुतन्तवे। तन्तुवर्धनाय। शुभाङ्गाय।

लोकसारङ्गाय । जगदीशाय । जनार्दनाय । भस्मशुद्धिकराय । मेरवे । ओजस्विने । शुद्धविग्रहाय । असाध्याय । साधुसाध्याय । भृत्यमर्कटरूप धृशे । हिरण्यरेतसे । पौराणाय नमः २००

रिपुजीवहराय नमः । बलाय । महाह्रदाय । महागर्ताय । सिद्धबृन्दारवन्दिताय । व्याघ्रचर्माम्बराय । व्यालिने । महाभूताय । महानिधये । अमृताशाय । अमृतवपुषे । पाञ्चजन्याय । प्रभञ्जनाय । पञ्चविंशतितत्त्वस्थाय । पारिजाताय । परावराय । सुलभाय । सुव्रताय । शूराय । ब्रह्मवेदनिधये नमः । २२०

निधये नमः । वर्णाश्रमगुरवे । वर्णिने । शत्रुजिते । शत्रुतापनाय । आश्रमाय । क्षपणाय । क्षामाय । ज्ञानवते । अचलेश्वराय । प्रमाणभूताय । दुर्ज्ञेयाय । सुपर्णाय । वायुवाहनाय । धनुर्धराय । धनुर्वेदाय । गुणराशये । गुणाकराय । सत्याय । सत्यपराय नमः । २४०

दीनाय नमः । धर्माय । गोधर्मसाधनाय । अनन्तदृष्टये । आनन्दाय । दण्डाय । दमयित्रे । दमाय । अभिवाद्याय । महामायाय । विश्वकर्मणे । विशारदाय । वीतरागाय । विनीतात्मने । तपस्विने । भूतभावनाय । उन्मत्तवेषाय । प्रच्छन्नाय । जितकामाय । अजितप्रियाय नमः । २६०

कल्याण प्रकृतये नमः । कल्पाय । सर्वलोकप्रजापतये । तपस्विने । तारकाय । धीमते । प्रधानाय । प्रभवे । अव्ययाय । लोकपालाय । अन्तर्हितात्मने । कल्पादये । कमलेक्षणाय । वेदशास्त्रार्थतत्त्वज्ञाय । अनियमाय । नियताश्रयाय । चन्द्राय । सूर्याय । शनये । केतवे नमः । २८०

वराङ्गाय नमः । विद्रुमच्छवये । भक्तिवश्याय । परब्रह्मणे । मृगबाणार्पणाय । अनघाय । अद्रये । अद्र्यालयाय । कान्ताय ।

परमात्मने । जगद्गुरवे । सर्वकर्मालयाय । तुष्टाय । मंगल्याय । मंगलावृताय । महातपसे । दीर्घतपसे । स्थविष्ठाय । स्थविराय । ध्रुवाय नमः । ३००

अह्ने । संवत्सराय । व्याप्तये । प्रमाणाय । परमाय तपसे । संवत्सरकराय । मन्त्रप्रत्ययाय । सर्वदर्शनाय । अजाय । सर्वेश्वराय । सिद्धाय । महारेतसे । महाबलाय । योगिने । योग्याय । महातेजसे । सिद्धये । सर्वादये । अग्रहाय नमः । ३२०

वसवे नमः । वसुमनसे । सत्याय । सर्वपाप हराय । हराय । सुकीर्तये । शोभनाय । श्रीमते । अवाङ्मनसगोचराय । अमृताय । शाश्वताय । शान्ताय । बाणहस्ताय । प्रतापवते । कमण्डलुधराय । धन्विने । वेदाङ्गाय । वेदविदे । मुनये । भ्राजिष्णवे नमः । ३४०

भोजनाय नमः । भोक्त्रे । लोकनाथाय । दुराधराय । अतीन्द्रियाय । महामायाय । सर्ववासाय । चतुष्पथाय । कालयोगिने । महानादाय । महोत्साहाय । महाबलाय । महा बुद्धये । महावीर्याय । भूतचारिणे । पुरन्दराय । निशाचराय । प्रेतचारिणे । महाशक्तये । महाद्युतये नमः । ३६०

अनिर्देश्यवपुषे नमः । श्रीमते । सर्वाचार्यमनो गतये । बहुश्रुताय । महामायाय । नियतात्मने । ध्रुवाय । अध्रुवाय । ओजस्तेजोद्युतिधराय । नर्तकाय । सर्वशासकाय । नृत्यप्रियाय । नृत्यनित्याय । प्रकाशात्मने । प्रकाशकाय । स्पष्टाक्षराय । बुधाय । मन्त्राय । समानाय । सारसंप्लवाय नमः । ३८०

युगादिकृते नमः । युगावर्ताय । गंभीराय । वृषवाहनाय । इष्टाय । विशिष्टाय । शिष्टेष्टाय । शलभाय । शरभाय । धनुषे । तीर्थरूपाय । तीर्थनाम्ने । तीर्थ दृश्याय । स्तुताय । अर्थदाय । अपां

निधये । अधिष्ठानाय । विजयाय । जयकालविदे । प्रतिष्ठिताय नमः । ४००

प्रमाणज्ञाय नमः । हिरण्यकवचाय । हरये । विमोचनाय । सुरगणाय । विद्येशाय । बिन्दुसंश्रयाय । बालरूपाय । बलोन्मत्ताय । विकर्त्रे । गहनाय । गुहाय । करणाय । कारणाय । कर्त्रे । सर्वबन्ध विमोचनाय । व्यवसायाय । व्यवस्थानाय । स्थानदाय । जगदादिजाय नमः । ४२०

गुणदाय नमः । ललिताय । अभेदाय । भवात्मने । आत्मनि संस्थिताय । वीरेश्वराय । वीरभद्राय । वीरासनविधये । विराजे । वीरचूडामणये । वेत्त्रे । तीव्रानन्दाय । नदीधराय । आज्ञाधाराय । त्रिशूलिने । शिपिविष्टाय । शिवालयाय । वालखिल्याय । महा चापाय । तिग्मांशवे नमः । ४४०

बधिराय नमः । खगाय । अभिरामाय । सुशरणाय । सुब्रह्मण्याय । सुधापतये । मघवते । कौशिकाय । गोमते । विरामाय । सर्वसाधनाय । ललाटाक्षाय । विश्वदेहाय । साराय । संसारचक्रभृते । अमोघदण्डाय । मध्यस्थाय । हिरण्याय । ब्रह्मवर्चसिने । परमार्थाय नमः । ४६०

पराय नमः । मायिने । शंबराय । व्याघ्रलोचनाय । रुचये । विरिञ्चये । स्वर्बन्धवे । वाचस्पतये । अहर्पतये । रवये । विरोचनाय । स्कन्दाय । शास्त्रे । वैवस्वताय । यमाय । युक्तये । उन्नतकीर्तये । सानुरागाय । परञ्जयाय । कैलासाधिपतये नमः ४८०

कान्ताय नमः । सवित्रे । रविलोचनाय । विद्वत्तमाय । वीतभयाय । विश्वभर्त्रे । अनिवारिताय । नित्याय । नियत कल्याणाय । पुण्यश्रवणकीर्तनाय । दूरश्रवसे । विश्वसहाय ।

ध्येयाय। दुःस्वप्ननाशनाय। उत्तारणाय। दुष्कृतिघ्ने। विज्ञेयाय। दुःसहाय। अभवाय। अनादये नमः। ५००

भूर्भुवो लक्ष्म्यै नमः । किरीटिने । त्रिदशाधिपाय । विश्वगोप्त्रे । विश्वकर्त्रे । सुवीराय । रुचिराङ्गदाय । जननाय। जनजन्मादये । प्रीतिमते । नीतिमते । धवाय । वसिष्ठाय । कश्यपाय । भानवे । भीमाय । भीमपराक्रमाय । प्रणवाय । सत्पथाचाराय। महाकोशाय नमः। ५२०

महाधनाय नमः । जन्माधिपाय । महादेवाय । सकलागमपारगाय। तत्त्वाय। तत्त्वविदे। एकात्मने। विभवे। विश्वविभूषणाय । ऋषये । ब्राह्मणाय । ऐश्वर्याय । जन्ममृत्युजरातिगाय । पञ्च यज्ञसमुत्पत्तये । विश्वेशाय । विमलोदयाय । आत्म योनये । अनाद्यन्ताय । वत्सलाय । भक्तलोकधृशे नमः। ५४०

गायत्रीवल्लभाय नमः। प्रांशवे। विश्ववासाय। प्रभाकराय। शिशिरगिरिरताय। सम्राजे। सुषेणाय। सुरशत्रुघ्ने। अमोघाय। अरिष्टनेमये । कुमुदाय । विगतज्वराय। स्वयंज्योतिषे । तनुज्योतिषे । आत्मज्योतिषे। अचञ्चलाय । पिङ्गलाय । कपिलश्मश्रवे। भालनेत्राय। त्रयीतनवे नमः। ५६०

ज्ञानस्कन्दाय नमः। महानीतये। विश्वोत्पत्तये। उपप्लवाय। भगाय । विवस्वते । आदित्याय । योगपाराय । दिवस्पतये । कल्याण गुणनाम्ने । पापघ्ने । पुण्यदर्शनाय । उदारकीर्तये । उद्योगिने। सद्योगिने। सदसन्मयाय। नक्षत्रमालिने। नाकेशाय। स्वाधिष्ठानपदाश्रयाय। पवित्राय नमः। ५८०

पापहारिणे नमः। मणिपूराय। नभोगतये। हृत्पुण्डरीक आसीनाय । शक्रशान्ताय । वृषाकपये । उष्णाय। गृहपतये ।

कृष्णाय। समर्थाय। अनर्थनाशनाय। अधर्मशत्रवे। अक्षय्याय। पुरुहूताय। पुरुश्रुताय। ब्रह्मगर्भाय। बृहद्गर्भाय। धर्मधेनवे। धनागमाय। जगद्धितैषिणे नमः। ६००

सुगताय नमः। कुमाराय। कुशलागमाय। हिरण्यवर्णाय। ज्योतिष्मते। नानाभूतरताय। ध्वनये। अरागाय। नयनाध्यक्षाय। विश्वामित्राय। धनेश्वराय। ब्रह्मज्योतिषे। वसुधाम्ने। महाज्योतिषे। अनुत्तमाय। मातामहाय। मातरिश्वने। नभस्वते। नागहारधृशे। पुलस्त्याय नमः। ६२०

पुलहाय नमः। अगस्त्याय। जातूकर्ण्याय। पराशराय। निरावरणनिर्वाराय। वैरिञ्च्याय। विष्टरश्रवसे। आत्मभुवे। अनिरुद्धाय। अत्रये। ज्ञानमूर्तये। महायशसे। लोकवीराग्रण्यै। वीराय। चण्डाय। सत्यपराक्रमाय। व्यालाकल्पाय। महाकल्पाय। कल्पवृक्षाय। कलाधराय नमः। ६४०

अलङ्करिष्णवे नमः। अचलाय। रोचिष्णवे। विक्रमोन्नताय। आयुषे। शब्दपतये। वेणीप्लवनाय। शिखिसारथये। असंसृष्टाय। अतिथये। शक्रप्रमाथिने। पादपासनाय। वसुश्रवसे। हव्यवाहाय। प्रतप्त्रे। विश्वभोजनाय। जप्याय। जरादिशमनाय। लोहितात्मने। तनूनपाते नमः। ६६०

बृहदश्वाय नमः। नभोयोनये। सुप्रतीकाय। तमिस्रघ्ने। निदाघाय। तपनाय। मेघाय। स्वक्षाय। परपुरञ्जयाय। सुखानिलाय। सुनिष्पन्नाय। सुरभये। शिशिरात्मकाय। वसन्ताय। माधवाय। ग्रीष्माय। नभस्याय। बीजवाहनाय। अंगिरसे। गुरवे नमः। ६८०

आत्रेयाय। विमलाय। विश्वपावनाय। पावनाय। सुमतये। विदुषे। त्रैविद्याय। नरवाहनाय। मनसे। बुद्ध्यै। अहङ्काराय।

क्षेत्रज्ञाय। क्षेत्रपालकाय। जमदग्नये। बलनिधये। विगालाय। विश्वगालवाय। अघोराय। अनुत्तराय। यज्ञाय नमः। ७००

श्रेयसे नमः। निःश्रेयसां पथाय। शैलाय। गगनकुन्दाभाय। दानवारये। अरिन्दमाय। रजनीजनकाय। चारुविशल्याय। लोककल्पधृशे। चतुर्वेदाय। चतुर्भावाय। चतुराय। चतुरप्रियाय। आम्नायाय। समाम्नायाय। तीर्थदेव शिवालयाय। बहुरूपाय। महारूपाय। सर्वरूपाय। चराचराय नमः। ७२०

न्यायनिर्मायिकाय नमः। न्यायिने। न्यायगम्याय। निरन्तराय। सहस्रमूर्ध्ने। देवेन्द्राय। सर्वशास्त्रप्रभञ्जनाय। मुण्डाय। विरूपाय। विक्रान्ताय। दण्डिने। दान्ताय। गुणोत्तमाय। पिङ्गलाक्षाय। जनाध्यक्षाय। नीलग्रीवाय। निरामयाय। सहस्रबाहवे। सर्वेशाय। शरण्याय नमः। ७४०

सर्वलोकधृशे नमः। पद्मासनाय। परस्मै ज्योतिषे। परस्मै पाराय। परस्मै फलाय। पद्मगर्भाय। महागर्भाय। विश्वगर्भाय। विचक्षणाय। चराचरज्ञाय। वरदाय। वरेशाय। महाबलाय। देवासुरगुरवे। देवाय। देवासुरमहाश्रयाय। देवादिदेवाय। देवाग्नये। दवाग्नये। सुखदाय नमः। ७६०

प्रभवे नमः। देवासुरेश्वराय। दिव्याय। देवासुरमहेश्वराय। देवदेवमयाय। अचिन्त्याय। देवदेवात्मसंभवाय। सद्योन्नये। असुरव्याघ्राय। देवसिंहाय। दिवाकराय। विबुधाग्रवराय। श्रेष्ठाय। सर्वदेवोत्तमोत्तमाय। शिवज्ञानरताय। श्रीमते। शिखिने। श्रीपर्वतप्रियाय। वज्रहस्ताय। सिद्धिखड्गनरसिंह-निपातनाय नमः। ७८०

लिंगाध्यक्षाय नमः। सुराध्यक्षाय। योगाध्यक्षाय। युगावहाय। स्वधर्मणे। स्वर्गताय। स्वर्गस्वराय।

स्वरमयस्वनाय। बाणाध्यक्षाय । बीजकर्त्रे । धर्मकृते । धर्मसंभवाय । दंभाय । लोभाय । अर्थविदे । शंभवे । सर्वभूत महेश्वराय। श्मशाननिलयाय। त्र्यक्षाय। सेतवे नमः । ८००

अप्रतिमाकृतये नमः । लोकोत्तर स्फुटालोकाय। त्र्यंबकाय। नाग भूषणाय। अन्धकारये। मखद्वेषिणे। विष्णुकन्धरपातनाय। हीनदोषाय । अक्षयगुणाय । दक्षारये। पूषदन्तभिदे । धूर्जटये । खण्डपरशवे । सकलाय । निष्कलाय। अनघाय । अकालाय । सकलाधाराय। पाण्डुराभाय। मृडाय नमः । ८२०

नटाय नमः । पूर्णाय । पूरयित्रे । पुण्याय । सुकुमाराय। सुलोचनाय । सामगेयप्रियाय । अक्रूराय । पुण्यकीर्तये । अनामयाय। मनोजवसे। तीर्थकराय। जटिलाय। जीवितेश्वराय। जीवितान्तकराय । नित्याय । वसुरेतसे । वसुप्रदाय । सद्गतये । सत्कृतये नमः । ८४०

सिद्धये नमः । सज्जातये । कालकण्टकाय । कलाधराय। महाकालाय। भूतसत्यपरायणाय। लोकलावण्यकर्त्रे। लोकोत्तर सुखालयाय । चन्द्रसञ्जीवनाय । शास्त्रे । लोकगूढाय । महाधिपाय। लोकबन्धवे । लोकनाथाय । कृतज्ञाय । कीर्ति भूषणाय। अनपायाय। अक्षराय। कान्ताय। सर्वशस्त्रभृतां वराय नमः । ८६०

तेजोमयाय नमः । द्युतिधराय। लोकानामग्रण्ये। अणवे। शुचिस्मिताय । प्रसन्नात्मने । दुर्जयाय । दुरतिक्रमाय। ज्योतिर्मयाय । जगन्नाथाय । निराकाराय । जलेश्वराय । तुम्बवीणाय । महाकोपाय । विशोकाय । शोकनाशनाय । त्रिलोकपाय । त्रिलोकेशाय । सर्वशुद्धये । अधोक्षजाय नमः । ८८०

अव्यक्तलक्षणाय नमः । देवाय । व्यक्ताव्यक्ताय । विशांपतये । वरशीलाय । वरगुणाय । साराय । मानधनाय । मयाय । ब्रह्मणे । विष्णवे । प्रजापालाय । हंसाय । हंसगतये । वयसे । वेधसे । विधात्रे । धात्रे । स्रष्ट्रे । हर्त्रे नमः । ९००

चतुर्मुखाय नमः । कैलासशिखरावासिने । सर्वावासिने । सदागतये । हिरण्यगर्भाय । द्रुहिणाय । भूतपालाय । भूपतये । सद्योगिने । योगविदे । योगिने । वरदाय । ब्राह्मणप्रियाय । देवप्रियाय । देवनाथाय । देवज्ञाय । देवचिन्तकाय । विषमाक्षाय । विशालाक्षाय । वृषदाय नमः । ९२०

वृषवर्धनाय नमः । निर्ममाय । निरहंकाराय । निर्मोहाय । निरुपद्रवाय । दर्पघ्ने । दर्पदाय । दृप्ताय । सर्वर्तुपरिवर्तकाय । सहस्रजिते । सहस्राक्षाय । स्निग्धप्रकृति दक्षिणाय । भूतभव्य भवन्नाथाय । प्रभवाय । भूतिनाशनाय । अर्थाय । अनर्थाय । महाकोशाय । परकार्यैकपण्डिताय । निष्कण्टकाय नमः । ९४०

कृतानन्दाय नमः । निर्व्याजाय । व्याजमर्दनाय । सत्ववते । सात्विकाय । सत्यकीर्तये । स्नेहकृतागमाय । अकम्पिताय । गुणग्राहिणे । नैकात्मने । नैककर्मकृते । सुप्रीताय । सुमुखाय । सूक्ष्माय । सुकराय । दक्षिणानिलाय । नन्दिस्कन्धधराय । धुर्याय । प्रकटाय । प्रीतिवर्धनाय नमः । ९६०

अपराजिताय नमः । सर्वसत्वाय । गोविन्दाय । सत्ववाहनाय । अधृताय । स्वधृताय । सिद्धाय । पूतमूर्तये । यशोधनाय । वाराहशृङ्ग धृते । शृङ्गिणे । बलवते । एकनायकाय । श्रुतिप्रकाशाय । श्रुतिमते । एकबन्धवे । अनेककृते । श्रीवत्सलाय । शिवारंभाय । शान्तभद्राय नमः । ९८०

समीरणाय नमः । भूशयाय । भूषणाय । भूतये । भूतकृते । भूत भावनाय । अकम्पाय । भक्तिकायाय । कालघ्ने । नीललोहिताय । सत्यव्रताय । महात्यागिने । नित्यं शान्तिपरायणाय । परार्थवृत्तये । वरदाय । विविक्षवे । विशारदाय । शुभदाय । शुभकर्त्रे । शुभनाम्ने नमः । १०००

स्वयं शुभाय नमः । अनर्थिताय । अगुणाय । साक्षिणे । अकर्त्रे । कनकप्रभाय । स्वभाव भद्राय । मध्यस्थाय । शीघ्रगाय । शीघ्रनाशनाय । शिखण्डिने । कवचिने । शूलिने । जटिने । मुण्डिने । कुण्डलिने । अमृत्यवे । सर्वदृशे । सिंहाय । तेजोराशये नमः । १०२०

महामणये नमः । असंख्येयाय । अप्रमेयात्मने । वीर्यवते । वीर्यकोविदाय । वेद्याय । वियोगात्मने । परावरमुनीश्वराय । अनुत्तमाय । दुराधर्षाय । मधुरप्रियदर्शनाय । सुरेशाय । शरणाय । सर्वाय । शब्दब्रह्मणे । सतां गतये । कालपक्षाय । कालकारिणे । कङ्कणीकृतवासुकये । महेष्वासाय नमः । १०४०

महीभर्त्रे नमः । निष्कलङ्काय । विशृङ्खलाय । द्युमणये । तरणये । धन्याय । सिद्धिदाय । सिद्धिसाधनाय । विश्वतः संवृताय । स्तुत्याय । व्यूढोरस्काय । महाभुजाय । सर्वयोनये । निरातङ्काय । नरनारायणप्रियाय । निर्लेपाय । निष्प्रपञ्चात्मने । निर्व्यङ्गाय । व्यङ्गनाशनाय । स्तव्याय नमः । १०६०

स्तवप्रियाय । स्तोत्रे । व्यासमूर्तये । निरङ्कुशाय । निरवद्यमयोपायाय । विद्याराशये । रसप्रियाय । प्रशान्त बुद्धये । अक्षुण्णाय । संग्रहिणे । नित्यसुन्दराय । वैयाघ्रधुर्याय । दात्रीशाय । शाकल्याय । शर्वरीपतये । परमार्थगुरवे । दृष्टये । शरीराश्रितवत्सलाय । सोमाय । रसज्ञाय । रसदाय । सर्वसत्त्वावलंबनाय नमः । १०८२

श्री सांबपरमेश्वराय नमः ।

# श्रीमहामृत्युञ्जय सहस्रनामस्तोत्रम्

श्रीभैरव उवाच ।

अधुना शृणु देवेशि सहस्राख्यस्तवोत्तमम् ।
महामृत्युञ्जयस्यास्य सारात् सारोत्तमोत्तमम् ॥ १ ॥

अस्य श्रीमहामृत्युञ्जयसहस्रनामस्तोत्रमन्त्रस्य, भैरव ऋषिः उष्णिक् छन्दः, श्रीमहामृत्युञ्जयो देवता, ओं बीजं, जुं शक्तिः, सः कीलकं, पुरुषार्थसिद्धये सहस्रनामपाठे विनियोगः । ध्यानम्

उद्यच्चन्द्रसमानदीप्तिममृतानन्दैकहेतुं शिवं
ओंजुंसः भुवनैकसृष्टिप्र(वि)लयोद्भूत्येकरक्षाकरम् ।
श्रीमत्तारदशार्णमण्डिततनुं त्र्यक्षं द्विबाहुं परं
श्रीमृत्युञ्जयमीड्यविक्रमगुणैः पूर्णं हृदब्जे भजे ॥

ओंजुंसःहौं महादेवो मन्त्रज्ञो मानदायकः ।
मानी मनोरमाङ्गश्च मनस्वी मानवर्धनः ॥ १ ॥

मायाकर्ता मल्लरूपो मल्लो मारान्तको मुनिः ।
महेश्वरो महामान्यो मन्त्री मन्त्रिजनप्रियः ॥ २ ॥

मारुतो मरुतां श्रेष्ठो मासिकः पक्षिकोऽमृतः ।
मातङ्गको मत्तचित्तो मत्तचिन्मत्तभावनः ॥ ३ ॥

मानवेष्टप्रदो मेषो मेनकापतिवल्लभः ।
मानकायो मानस्तेयी मारयुक्तो जितेन्द्रियः ॥ ४ ॥

जयो विजयदो जेता जयेशो जयवल्लभः ।
डामरेशो विरूपाक्षो विश्वभोक्ता विभावसुः ॥ ५ ॥

विश्वेशो विश्वनाथश्च विश्वसूर्विश्वनायकः ।
विनेता विनयी वादी वाक्प्रदो वाग्भवो वटुः ॥ ६ ॥

स्थूलः सूक्ष्मोऽचलो लोलो लोलजिह्वः करालकः ।
विराधेयो विरागीनो विलासी लास्यलालसः ॥ ७ ॥

लोलाक्षो लोलधीर्धर्मी धनदो धनदार्चितः ।
धनी ध्येयोऽप्यध्येयश्च धर्म्यो धर्ममयोदयः ॥ ८ ॥

दयावान् देवजनको देवसेव्यो दयापतिः ।
डुलिचक्षुर्दरीवासो दम्भी देवमयात्मकः ॥ ९ ॥

कुरूपः कीर्तिदः कान्तः क्लीबोऽक्लीबात्मकः कुजः ।
बुधो विद्यामयः कामी कामकालान्धकान्तकः ॥ १०॥

जीवो जीवप्रदः शुक्रः शुद्धः शर्मप्रदोऽनघः ।
शनैश्चरो वेगगति र्वाचालो राहुरव्ययः ॥ ११ ॥

केतुः कारापतिः कालः सूर्योऽमितपराक्रमः ।
चन्द्रो भद्रप्रदो भास्वान् भाग्यदो भर्गरूपभृत् ॥ १२ ॥

क्रूरो धूर्तो वियोगी च सङ्गी गङ्गाधरो गजः ।
गजाननप्रियो गीतो गानी स्नानार्चनप्रियः ॥ १३ ॥

परमः पीवराङ्गश्च पार्वतीवल्लभो महान् ।
परात्मको विराड्वासो वानरोऽमितकर्मकृत् ॥ १४ ॥

चिदानन्दी चारुरूपो गारुडो गरुडप्रियः ।
नन्दीश्वरो नयो नागो नागालङ्कारमण्डितः ॥ १५ ॥

नागहारो महानागो गोधरो गोपतिस्तपः ।
त्रिलोचनस्त्रिलोकेशस्त्रिमूर्तिस्त्रिपुरान्तकः ॥ १६ ॥

त्रिधामयो लोकमयो लोकैकव्यसनापहः ।
व्यसनी तोषितः शम्भुस्त्रिधारूपस्त्रिवर्णभाक् ॥ १७ ॥

त्रिज्योतिस्त्रिपुरीनाथस्त्रिधाशान्तस्त्रिधागतिः ।
त्रिधागुणी विश्वकर्ता विश्वभर्ताऽधिपूरुषः ॥ १८ ॥

उमेशो वासुकिर्वीरो वैनतेयो विचारकृत् ।
विवेकाक्षो विशालाक्षोऽविधिर्विधिरनुत्तमः ॥ १९ ॥

विद्यानिधिः सरोजाक्षो निःस्मरः स्मरनाशनः ।
स्मृतिमान् स्मृतिदः स्मार्तो ब्रह्मा ब्रह्मविदां वरः ॥ २० ॥

ब्राह्मव्रती ब्रह्मचारी चतुरश्चतुराननः ।
चलाचलोऽचलगतिर्वेगी वीराधिपो वरः ॥ २१ ॥

सर्ववासः सर्वगतिः सर्वमान्यः सनातनः ।
सर्वव्यापी सर्वरूपः सागरश्च समेश्वरः ॥ २२ ॥

समनेत्रः समद्युतिः समकायः सरोवरः ।
सरस्वान् सत्यवाक् सत्यः सत्यरूपः सुधीः सुखी ॥ २३॥

सुराट् सत्यः सत्यमती रुद्रो रौद्रवपुर्वसुः ।
वसुमान् वसुधानाथो वसुरूपो वसुप्रदः ॥ २४ ॥

ईशानः सर्वदेवानामीशानः सर्वबोधिनाम् ।
ईशोऽवशेषोऽवयवी शेषशायी श्रियः पतिः ॥ २५ ॥

इन्द्रश्चन्द्रावतंसी च चराचरजगत्स्थितिः ।
स्थिरः स्थाणुरणुः पीनः पीनवक्षाः परात्परः ॥ २६ ॥

पीनरूपो जटाधारी जटाजूटसमाकुलः ।
पशुरूपः पशुपतिः पशुज्ञानी पयोनिधिः ॥ २७ ॥

वेद्यो वैद्यो वेदमयो विधिज्ञो विधिमान् मृडः ।
शूली शुभङ्करः शोभ्यः शुभकर्ता शचीपतिः ॥ २८ ॥

शशाङ्कधवलः स्वामी वज्री शङ्खी गदाधरः ।
चतुर्भुजश्चाष्टभुजः सहस्रभुजमण्डितः ॥ २९ ॥

स्रुवहस्तो दीर्घकेशो दीर्घो दम्भविवर्जितः ।
देवो महोदधिर्दिव्यो दिव्यकीर्तिर्दिवाकरः ॥ ३० ॥

उग्ररूप उग्रपतिरुग्रवक्षास्तपोमयः ।
तपस्वी जटिलस्तापी तापहा तापवर्जितः ॥ ३१ ॥

हविर्हरो हयपतिर्हयदो हरिमण्डितः ।
हरिवाही महौजस्को नित्यो नित्यात्मकोऽनलः ॥ ३२ ॥

संमानी संसृतिर्हारी सर्गी संनिधिरन्वयः ।
विद्याधरो विमानी च वैमानिकवरप्रदः ॥ ३३ ॥

वाचस्पतिर्वसासारो वामाचारी बलन्धरः ।
वाग्भवो वासवो वायुर्वासनाबीजमण्डितः ॥ ३४ ॥

वासी कोलश्रुतिर्दक्षो दक्षयज्ञविनाशनः ।
दाक्षो दौर्भाग्यहा दैत्यमर्दनो भोगवर्धनः ॥ ३५ ॥

भोगी रोगहरो हेयो हारी हरिविभूषणः ।
बहुरूपो बहुमतिर्बहुवित्तो विचक्षणः ॥ ३६ ॥

नृत्तकृच्चित्तसंतोषो नृत्तगीतविशारदः ।
शरद्वर्णविभूषाढ्यो गलदग्धोऽघनाशनः ॥ ३७ ॥

नागी नागमयोऽनन्तोऽनन्तरूपः पिनाकभृत् ।
नटनो हाटकेशो वरीयांश्च विवर्णभृत् ॥ ३८ ॥

झाङ्कारी टङ्कहस्तश्च पाशी शार्ङ्गी शशिप्रभः ।
सहस्ररूपो समगुः साधूनामभयप्रदः ॥ ३९ ॥

साधुसेव्यः साधुगतिः सेवाफलप्रदो विभुः ।
सुमहा मद्यपो मत्तो मत्तमूर्तिः सुमन्त(न्त्र)कः ॥ ४० ॥

कीली लीलाकरो लूतो भवबन्धैकमोचनः ।
रोचिष्णुर्विष्णुरच्युतश्चूतनो नूतनो नवः ॥ ४१ ॥

न्यग्रोधरूपो भयदो भयहाऽभीतिधारणः ।
धरणीधरसेव्यश्च धराधरसुतापतिः ॥ ४२ ॥

धराधरोऽन्धकरिपुर्विज्ञानी मोहवर्जितः ।
स्थाणुकेशो जटी ग्राम्यो ग्रामारामो रमाप्रियः ॥ ४३ ॥

प्रियकृत् प्रियरूपश्च विप्रयोगी प्रतापनः ।
प्रभाकरः प्रभादीप्तो मन्युमान् मानवेष्टदः ॥ ४४ ॥

तीक्ष्णबाहुस्तीक्ष्णकरस्तीक्ष्णांशुस्तीक्ष्णलोचनः ।
तीक्ष्णचित्तस्त्रयीरूपस्त्रयीमूर्तिस्त्रयीतनुः ॥ ४५ ॥

हविर्भुग् हविषां ज्योतिर्हालाहलो हलीपतिः ।
हविष्मल्लोचनो हालामयो हरितरूपभृत् ॥ ४६ ॥

म्रदिमाऽऽम्रमयो वृक्षो हुताशो हुतभुग् गुणी ।
गुणज्ञो गरुडो गानतत्परो विक्रमी क्रमी ॥ ४७ ॥

क्रमेश्वरः क्रमपरः क्रमिकृत् क्लान्तमानसः ।
महातेजा महामारो मोहितो मोहवल्लभः ॥ ४८ ॥

महस्वी त्रिदशो बालो बालापतिरघापहः ।
बाल्यो रिपुहरो हाही गोविर्गविमतोऽगुणः ॥ ४९ ॥

सगुणो वित्तराड् वीर्यो विरोचनो विभावसुः ।
मालामयो माधवश्च विकर्तनो विकत्थनः ॥ ५० ॥

मानकृन्मुक्तिदोऽतुल्यो मुख्यः शत्रुभयङ्करः ।
हिरण्यरेताः सुभगः सतीनाथः सिरापतिः ॥ ५१ ॥

मेढ्री मैनाकभगिनीपतिरुत्तमरूपभृत् ।
आदित्यो दितिजेशानो दितिपुत्रक्षयङ्करः ॥ ५२ ॥

वसुदेवो महाभाग्यो विश्वावसुर्वसुप्रियः ।
समुद्रोऽमिततेजाश्च खगेन्द्रो विशिखी शिखी ॥ ५३ ॥

गरुत्मान् वज्रहस्तश्च पौलोमीनाथ ईश्वरः ।
यज्ञपेयो वाजपेयः शतक्रतुः शताननः ॥ ५४ ॥

प्रतिष्ठस्तीव्रविस्रम्भी गम्भीरो भाववर्धनः ।
गायिष्ठो मधुरालापो मधुमत्तश्च माधवः ॥ ५५ ॥

मायात्मा भोगिनां त्राता नाकिनामिष्टदायकः ।
नाकीन्द्रो जनको जन्यः स्तम्भनो रम्भनाशनः ॥ ५६ ॥

शङ्कर ईश्वर ईशः शर्वरीपतिशेखरः ।
लिङ्गाध्यक्षः सुराध्यक्षो वेदाध्यक्षो विचारकः ॥ ५७ ॥

भर्गोऽनर्घ्यो नरेशानो नरवाहनसेवितः ।
चतुरो भविता भावी भावदो भवभीतिहा ॥ ५८ ॥

भूतेशो महितो रामो विरामो रात्रिवल्लभः ।
मङ्गलो धरणीपुत्रो धन्यो बुद्धिविवर्धनः ॥ ५९ ॥

जयी जीवेश्वरो जारो जाठरो जह्नुतापनः ।
जह्नुकन्याधरः कल्पो वत्सरो मासरूपधृत् ॥ ६० ॥

ऋतुर्ऋभुसुताध्यक्षो विहारी विहगाधिपः ।
शुक्लाम्बरो नीलकण्ठः शुक्लो भृगुसुतो भगः ॥ ६१ ॥

शान्तः शिवप्रदोऽभेद्योऽभेदकृच्छान्तकृत् पतिः ।
नाथो दान्तो भिक्षुरूपी दातृश्रेष्ठो विशांपतिः ॥ ६२ ॥

कुमारः क्रोधनः क्रोधी विरोधी विग्रही रसः ।
नीरसः सरसः सिद्धो वृषणी वृषघातनः ॥ ६३ ।

पञ्चास्यः षण्मुखश्चैव विमुखः सुमुखीप्रियः ।
दुर्मुखो दुर्जयो दुःखी सुखी सुखविलासदः ॥ ६४ ॥

पात्री पौत्री पवित्रश्च भूतात्मा पूतनान्तकः ।
अक्षरं परमं तत्त्वं बलवान् बलघातनः ॥ ६५ ॥

भल्ली भौलिर्भवाभावो भावाभावविमोचनः ।
नारायणो मुक्तकेशो दिग्देवो धर्मनायकः ॥ ६६ ॥

कारामोक्षप्रदोऽजेयो महाङ्गः सामगायनः ।
तत्सङ्गमो नामकारी चारी स्मरनिसूदनः ॥ ६७ ॥

कृष्णः कृष्णाम्बरः स्तुत्यस्तारावर्णस्त्रपाकुलः ।
त्रपावान् दुर्गतित्राता दुर्गमो दुर्गघातनः ॥६८॥

महापादो विपादश्च विपदां नाशको नरः ।
महाबाहुर्महोरस्को महानन्दप्रदायकः ॥ ६९ ॥

महानेत्रो महादाता नानाशास्त्रविचक्षणः ।
महामूर्धा महादन्तो महाकर्णो महोरगः ॥ ७० ॥

महाचक्षुर्महानासो महाग्रीवो दिगालयः ।
दिग्वासा दितिजेशानो मुण्डी मुण्डाक्षसूत्रभृत् ॥ ७१ ॥

श्मशाननिलयोऽरागी महाकटिरनूतनः ।
पुराणपुरुषोऽपारः परमात्मा महाकरः ॥ ७२ ॥

महालस्यो महाकेशो महोष्ठो मोहनो विराट् ।
महामुखो महाजङ्घो मण्डली कुण्डली नटः ॥ ७३ ॥

असपत्नः पत्रकरः पात्रहस्तश्च पाटवः ।
लालसः सालसः सालः कल्पवृक्षश्च कम्पितः ॥ ७४ ॥

कम्पहा कल्पनाहारी महाकेतुः कठोरकः ।
अनलः पवनः पाठः पीठस्थः पीठरूपकः ॥ ७५ ॥

पाठीनः कुलिशी पीनो मेरुधामा महागुणी ।
महातूणीरसंयुक्तो देवदानवदर्पहा ॥ ७६ ॥

अथर्वशीर्षः सोम्यास्यः ऋक्सहस्रामितेक्षणः ।
यजुःसाममुखो गुह्यो यजुर्वेदविचक्षणः ॥ ७७ ॥

याज्ञिको यज्ञरूपश्च यज्ञज्ञो धरणीपतिः ।
जङ्गमी भङ्गदो भाषादक्षोऽभिगमदर्शनः ॥ ७८ ॥

अगम्यः सुगमः खर्वः खेटी खेटाननो नयः ।
अमोघार्थः सिन्धुपतिः सैन्धवः सानुमध्यगः ॥ ७९ ॥

प्रतापी प्रजयी प्रातर्मध्याह्नसायमध्वरः ।
त्रिकालज्ञः सुगणकः पुष्करस्थः परोपकृत् ॥ ८० ॥

उपकर्तापहर्ता च घृणी रणजयप्रदः
धर्मी चर्माम्बरश्चारुरूपश्चारुविभूषणाः ॥ ८१ ॥

नक्तञ्चरः कालवशी वशी वशिवरोऽवशः ।
वश्यो वश्यकरो भस्मशायी भस्मविलेपनः ॥ ८२ ॥

भस्माङ्गी मलिनाङ्गश्च मालामण्डितमूर्धजः ।
गणकार्यः कुलाचारः सर्वाचारः सखा समः ॥ ८३ ॥

साकारो गोत्रभिद्गोप्ता भीमरूपो भयानकः ।
अरुणश्चैकचिन्त्यश्च त्रिशङ्कुः शङ्कुधारणः ॥ ८४ ॥

आश्रमी ब्राह्मणो वज्री क्षत्रियः कार्यहेतुकः ।
वैश्यः शूद्रः कपोतस्थः त्वष्टा तुष्टो रुषाकुलः ॥ ८५ ॥

रोगी रोगापहः शूरः कपिलः कपिनायकः ।
पिनाकी चाष्टमूर्तिश्च क्षितिमान् धृतिमांस्तथा ॥ ८६ ॥

जलमूर्तिर्वायुमूर्तिर्हुताशः सोममूर्तिमान् ।
सूर्यदेवो यजमान आकाशः परमेश्वरः ॥ ८७ ॥

भवहा भवमूर्तिश्च भूतात्मा भूतभावनः ।
भवः शर्वस्तथा रुद्रः पशुनाथश्च शङ्करः ॥ ८८ ॥

गिरिजो गिरिजानाथो गिरीन्द्रश्च महेश्वरः ।
गिरीशः खण्डहस्तश्च महानुग्रो गणेश्वरः ॥ ८९ ॥

भीमः कपर्दी भीतिज्ञः खण्डपश्चण्डविक्रमः ।
खण्डभृत् खण्डपरशुः कृत्तिवासा विषापहः ॥ ९० ॥

कङ्कालः कलनाकारः श्रीकण्ठो नीललोहितः ।
गणेश्वरो गुणी नन्दी धर्मराजो दुरन्तकः ॥ ९१ ॥

भृङ्गिरीटी रसासारो दयालू रूपमण्डितः ।
अमृतः कालरुद्रश्च कालाग्निः शशिशेखरः॥ ९२

सद्योजातस्वर्णमुञ्जमेखली दुर्निमित्तहृत् ।
दुःस्वप्नहृत् प्रसहनो गुणी नादप्रतिष्ठितः ॥ ९३ ॥

शुक्लस्त्रिशुक्लः संपन्नः शुचिर्भूतनिषेवितः ।
यज्ञरूपो यज्ञमुखो यजमानेष्टदः शुचिः ॥ ९४ ॥

धृतिमान् मतिमान् दक्षो दक्षयज्ञविघातकः ।
नागहारी भस्मधारी भूतिभूषितविग्रहः ॥ ९५ ॥

कपाली कुण्डली भर्गः भक्तार्तिभञ्जनो विभुः ।
वृषध्वजो वृषारूढो धर्मवृषविवर्धकः ॥ ९६ ॥

महाबलः सर्वतीर्थः सर्वलक्षणलक्षितः ।
सहस्रबाहुः सर्वाङ्गः शरण्यः सर्वलोककृत् ॥ ९७ ॥

पवित्रस्त्रिककुन्मन्त्रः कनिष्ठः कृष्णपिङ्गलः ।
ब्रह्मदण्डविनिर्माता शतघ्नीपाशशक्तिमान् ॥ ९८ ॥

पद्मगर्भो महागर्भो ब्रह्मगर्भो जलोद्भवः ।
देवासुरविनिर्माता देवासुरपरायणः ॥ ९९ ॥

देवासुरगुरुर्देवो देवासुरनमस्कृतः ।
गुहप्रियो गणसेव्यः पवित्रः सर्वपावनः ॥ १०० ॥

ललाटाक्षो विश्वदेवो दमनः श्वेतपिङ्गलः ।
विमुक्तिर्मुक्तितेजस्को भक्तानां परमा गतिः ॥ १०१ ॥

देवादिदेवो देवर्षिर्देवासुरवरप्रदः ।
कैलासगिरिवासी च हिमवद्गिरिसंश्रयः ॥ १०२ ॥

नाथपूज्यः सिद्धनुत्यो नवनाथसमर्चितः ।
कपर्दी कल्पकृद् रुद्रः सुमना धर्मवत्सलः ॥ १०३ ॥

वृषाकपिः कल्पकर्ता नियतात्मा निराकुलः ।
नीलकण्ठो धनाध्यक्ष नाथः प्रमथनायकः ॥ १०४ ॥

अनादिरन्तरहितो भूतिदो भूतिविग्रहः ।
सेनाकल्पो महाकल्पो योगो युगकरो हरिः ॥ १०५ ॥

युगरूपो महारूपो महागीतो महागुणः ।
विसर्गो लिङ्गरूपश्च पवित्रः पापनाशनः ॥१०६ ॥

ईड्यो महेश्वरः शम्भुर्देवसिंहो नरर्षभः ।
विबुधोऽग्रवरः सूक्ष्मः सर्वदेवस्तपोमयः ॥ १०७ ॥

सुयुक्तः शोभनो वज्री देवानां प्रभवोऽव्ययः ।
गुहः कान्तो निजसर्गः पवित्रः सर्वपावनः ॥ १०८ ॥

शृङ्गी शृङ्गप्रियो बभ्रू राजराजो निरामयः ।
देवासुरगणाध्यक्षो नियमेन्द्रियवर्धनः ॥ १०९ ॥

त्रिपुरान्तकः श्रीकण्ठस्त्रिनेत्रः पञ्चवक्त्रकः ।
कालहृत् केवलात्मा च ऋग्यजुःसामवेदवान् ॥ ११० ॥

ईशानः सर्वभूतानामीश्वरः सर्वरक्षसाम् ।
ब्रह्माधिपतिर्ब्रह्मपतिर्ब्रह्मणोऽधिपतिस्तथा ॥ १११ ॥

ब्रह्मा शिवः सदानन्दी सदानन्तः सदाशिवः ।
मे-अस्तुरूपश्चार्वङ्गो गायत्रीरूपधारणः ॥ ११२ ॥

अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यश्च ।
सर्वतः शर्वसर्वेभ्यो नमस्ते रुद्ररूपेभ्यः ॥ ११३ ॥

वामदेवस्तथा ज्येष्ठः श्रेष्ठः कालः करालकः ।
महाकालो भैरवेशो वेशी कलविकरणः ॥ ११४ ॥

बलविकरणो ब(बा)लो बलप्रमथनस्तथा ।
सर्वभूतादिदमनो देवदेवो मनोन्मनः ॥ ११५ ॥

सद्योजातं प्रपद्यामि सद्योजाताय वै नमः ।
भवे भवे नातिभवे भवस्व मां भवोद्भवः ।। ११६ ।।

भावनो भवनो भाव्यो बलकारी परं पदम् ।
परः शिवः परो ध्येयः परं ज्ञानं परात्परः ।। ११७ ।।

पारावारः पलाशी च मांसाशी वैष्णवोत्तमः ।
ओंऐंह्रींश्रींह्सौः देवो ओंश्रींह्रीं भैरवोत्तमः ।। ११८ ।।

ओंह्रां नमः शिवायेति मन्त्रो वटुर्वरायुधः ।
ओंह्रीं सदाशिवः ओंह्रीं आपदुद्धारणो मनुः ।। ११९ ।।

ओंह्रीं महाकरालास्यः ओंह्रीं वटुकभैरवः ।
भगवांस्त्र्यम्बक ओंह्रीं ओंह्रीं चन्द्रार्धशेखरः ।। १२० ।।

ओंह्रीं सञ्जटिलो धूम्र ओंह्रीं त्रिपुरघातनः ।
ह्रांह्रींहुं हरिवामाङ्ग ओंह्रींहूंह्रीं त्रिलोचनः ।। १२१ ।।

ओं वेदरूपो वेदज्ञ ऋग्यजुःसाममूर्तिमान् ।
रुद्रो घोररवोऽघोरो ओं क्ष्म्यूं अघोरभैरवः ।। १२२ ।।

ओंजुंसः पीयूषसक्तोऽमृताध्यक्षोऽमृतालसः ।
ओं त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् ।। १२३ ।।

उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ।
ओंह्रौंजुंसः ओंभूर्भुवः स्वः ओंजुंसः मृत्युञ्जयः (१०००) ।।
१२४ ।।

इदं नाम्नां सहस्रं तु रहस्यं परमाद्भुतम् ।
सर्वस्वं नाकिनां देवि जन्तूनां भुवि का कथा ।। १२५ ।।

तव भक्त्या मयाख्यातं त्रिषु लोकेषु दुर्लभम् ।
गोप्यं सहस्रनामेदं साक्षादमृतरूपकम् ।। १२६ ।।

यः पठेत् पाठयेद्वापि श्रावयेच्छृणुयात् तथा।
मृत्युञ्जयस्य देवस्य फलं तस्य शिवे शृणु ॥ १२७ ॥

लक्ष्म्या कृष्णो धिया जीवः प्रतापेन दिवाकरः।
तेजसा वह्निदेवस्तु कवित्वे चैव भार्गवः ॥ १२८ ॥

शौर्येण हरिसङ्काशो नीत्या द्रुहिणसन्निभः।
ईश्वरत्वेन देवेशि मत्समः किमतः परम् ॥ १२९ ॥

यः पठेदर्धरात्रे च साधको धैर्यसंयुतः।
पठेत् सहस्रनामेदं सिद्धिमाप्नोति साधकः ॥ १३० ॥

चतुष्पथे चैकलिङ्गे मरुदेशे वनेऽजने।
श्मशाने प्रान्तरे दुर्गे पाठात् सिद्धिर्न संशयः ॥ १३१ ॥

नौकायां चौरसङ्घे च सङ्कटे प्राणसंक्षये।
यत्र यत्र भये प्राप्ते विषवह्निभयादिषु ॥ १३२ ॥

पठेत् सहस्रनामाशु मुच्यते नात्र संशयः।
भौमावस्यां निशीथे च गत्वा प्रेतालयं सुधीः ॥ १३३ ॥

पठित्वा स भवेद् देवि साक्षादिन्द्रोऽर्चितः सुरैः।
शनौ दर्शदिने देवि निशायां सरितस्तटे ॥ १३४ ॥

पठेन्नामसहस्रं वै जपेदष्टोत्तरं शतम्।
सुदर्शनो भवेदाशु मृत्युञ्जयप्रसादतः ॥ १३५ ॥

दिगम्बरो मुक्तकेशः साधको दशधा पठेत्।
इह लोके भवेद्राजा परे मुक्तिर्भविष्यति ॥ १३६ ॥

इदं रहस्यं परमं भक्त्या तव मयोदितम्।
मन्त्रगर्भं मनुमयं न चाख्येयं दुरात्मने ॥ १३७ ॥

नो दद्यात् परशिष्येभ्यः पुत्रेभ्योऽपि विशेषतः।
रहस्यं मम सर्वस्वं गोप्यं गुप्ततरं कलौ॥ १३८॥

षण्मुखस्यापि नो वाच्यं गोपनीयं तथात्मनः।
दुर्जनाद् रक्षणीयं च पठनीयमहर्निशम्॥ १३९॥

श्रोतव्यं साधकमुखाद्रक्षणीयं स्वपुत्रवत्।

इति श्रीरुद्रयामले तन्त्रे श्रीदेवीरहस्ये
मृत्युञ्जयसहस्रनामनिरूपणं चतुश्चत्वारिंशः पटलः।

*___*___*

# महामृत्युञ्जय सहस्रनामावलिः

ओं

ओं जुं सः हौं नमः। महादेवाय। मन्त्रज्ञाय। मानदायकाय। मानिने। मनोरमाङ्गाय। मनस्विने। मानवर्धनाय। मायाकर्त्रे। मल्लरूपाय। मल्लाय। मारान्तकाय। मुनये। महेश्वराय। महामान्याय। मन्त्रिणे। मन्त्रिजनप्रियाय। मारुताय। मरुतां श्रेष्ठाय। मासिकाय नमः। २०

पक्षिकाय नमः। अमृताय। मातङ्गकाय। मत्तचित्ताय। मत्तचिदे। मत्तभावनाय। मानवेष्टप्रदाय। मेषाय। मेनकापतिवल्लभाय। मानकायाय। मानस्तेयिने। मारयुक्ताय। जितेन्द्रियाय। जयाय। विजयदाय। जेत्रे। जयेशाय। जयवल्लभाय। डामरेशाय। विरूपाक्षाय नमः। ४०

विश्वभोक्त्रे। विभावसवे। विश्वेशाय। विश्वनाथाय। विश्वसुवे। विश्वनायकाय। विनेत्रे। विनयिने। वादिने। वाक्प्रदाय। वाग्भवाय। वटवे। स्थूलाय। सूक्ष्माय। अचलाय।

लोलाय। लोलजिह्वाय। करालकाय। विराधेयाय। विरागीनाय नमः। ६०

विलासिने नमः। लास्यलालसाय। लोलाक्षाय। लोलधिये। धर्मिणे। धनदाय। धनदार्चिताय। धनिने। ध्येयाय। अध्येयाय। धर्म्याय। धर्म्यमयोदयाय। दयावते। देवजनकाय। देवसेव्याय। दयापतये। ढुलिचक्षुषे। दरीवासाय। दंभिने। देवमयात्मकाय नमः। ८०

कुरूपाय नमः। कीर्तिदाय। कान्ताय। क्लीबाय। अक्लीबात्मकाय। कुजाय। बुधाय। विद्यामयाय। कामिने। कामान्तकाय। कालान्तकाय। अन्धकान्तकाय। जीवाय। जीवप्रदाय। शुक्राय। शुद्धाय। शर्मप्रदाय। अनघाय। शनैश्चराय। वेगगतये नमः। १००

वाचालाय नमः। राहवे। अव्ययाय। केतवे। कारापतये। कालाय। सूर्याय। अमितपराक्रमाय। चन्द्राय। भद्रप्रदाय। भास्वते। भाग्यदाय। भर्गरूपभृते। क्रूराय। धूर्ताय। वियोगिने। सङ्गिने। गङ्गाधराय। गजाय। गजाननप्रियाय नमः। १२०

गीताय नमः। गानिने। स्नानार्चन प्रियाय। परमाय। पीवराङ्गाय। पार्वतीवल्लभाय। महते। परात्मकाय। विराड्वाससे। वानराय। अमितकर्मकृते। चिदानन्दिने। चारुरूपाय। गारुडाय। गरुडप्रियाय। नन्दीश्वराय। नयाय। नागाय। नागालङ्कार-मण्डिताय। नागहाराय नमः। १४०

महानागाय नमः। गोधराय। गोपतये। तपसे। त्रिलोचनाय। त्रिलोकेशाय। त्रिमूर्तये। त्रिपुरान्तकाय। त्रिधामयाय। लोकमयाय। लोकैकव्यसनापहाय। व्यसनिने।

तोषिताय। शंभवे। त्रिधारूपाय। त्रिवर्णभाजे। त्रिज्योतिषे। त्रिपुरीनाथाय। त्रिधाशान्ताय। त्रिधागतये नमः। १६०

त्रिधागुणिने नमः। विश्वकर्त्रे। विश्वभर्त्रे। अधिपूरुषाय। उमेशाय। वासुकये। वीराय। वैनतेयाय। विचारकृते। विवेकाक्षाय। विशालाक्षाय। अविधये। विधये। अनुत्तमाय। विद्यानिधये। सरोजाक्षाय। निःस्मराय। स्मरनाशनाय। स्मृतिमते। स्मृतिदाय नमः। १८०

स्मार्ताय नमः। ब्रह्मणे। ब्रह्मविदां वराय। ब्राह्मव्रतिने। ब्रह्म चारिणे। चतुराय। चतुराननाय। चलाचलाय। अचलगतये। वेगिने। वीराधिपाय। वराय। सर्ववासाय। सर्वगतये। सर्वमान्याय। सनातनाय। सर्वव्यापिने। सर्वरूपाय। सागराय। समेश्वराय नमः। २००

समनेत्राय नमः। समद्युतये। समकायाय। सरोवराय। सरस्वते। सत्यवाचे। सत्याय। सत्यरूपाय। सुधिये। सुखिने। सुराजे। सत्याय। सत्यमतये। रुद्राय। रौद्रवपुषे। वसवे। वसुमते। वसुधानाथाय। वसुरूपाय। वसुप्रदाय नमः। २२०

सर्वदेवानामीशानाय नमः। सर्वबोधिनामीशानाय। ईशाय। अवशेषाय। अवयविने। शेषशायिने। श्रियः पतये। इन्द्राय। चन्द्रावतंसिने। चराचरजगत्स्थितये। स्थिराय। स्थाणवे। अणवे। पीनाय। पीनवक्षसे। परात्पराय। पीनरूपाय। जटाधारिणे। जटाजूटसमाकुलाय। पशुरूपाय नमः। २४०

पशुपतये नमः। पशुज्ञानिने। पयोनिधये। वेद्याय। वैद्याय। वेदमयाय। विधिज्ञाय। विधिमते। मृडाय। शूलिने। शुभङ्कराय। शोभ्याय। शुभकर्त्रे। शचीपतये। शशाङ्कधवलाय। स्वामिने। वज्रिणे। शंखिने। गदाधराय। चतुर्भुजाय नमः। २६०

अष्टभुजाय नमः । सहस्रभुजमण्डिताय । स्रुवहस्ताय । दीर्घकेशाय । दीर्घाय । दंभविवर्जिताय । देवाय । महोदधये । दिव्याय । दिव्यकीर्तये । दिवाकराय । उग्ररूपाय । उग्रपतये । उग्रवक्षसे । तपोमयाय । तपस्विने । जटिलाय । तापिने । तापघ्ने । तापवर्जिताय नमः । २८०

हविषे नमः । हराय । हयपतये । हयदाय । हरिमण्डिताय । हरिवाहिने । महौजस्काय । नित्याय । नित्यात्मकाय । अनलाय । संमानिने । संसृतये । हारिणे । सर्गिणे । सन्निधये । अन्वयाय । विद्याधराय । विमानिने । वैमानिकवरप्रदाय । वाचस्पतये नमः । ३००

वसासाराय । वामाचारिणे । बलन्धराय । वाग्भवाय । वासवाय । वायवे । वासनाबीजमण्डिताय । वासिने । कोलश्रुतये । दक्षाय । दक्षयज्ञविनाशनाय । दाक्षाय । दौर्भाग्यघ्ने । दैत्यमर्दनाय । भोगवर्धनाय । भोगिने । रोगहराय । हेयाय । हारिणे । हरिविभूषणाय नमः । ३२०

बहुरूपाय नमः । बहुमतये । बहुवित्ताय । विचक्षणाय । नृत्यकृते । चित्तसन्तोषाय । नृत्तगीतविशारदाय । शरद्वर्णविभूषाढ्याय । गलदग्धाय । अघनाशनाय । नागिने । नागमयाय । अनन्ताय । अनन्तरूपाय । पिनाकभृते । नटनाय । हाटकेशानाय । वरीयसे । विवर्णभृते । झाङ्कारिणे नमः । ३४०

टङ्कहस्ताय नमः । पाशिने । शार्ङ्गिणे । शशिप्रभाय । सहस्ररूपाय । समगवे । साधूनामभयप्रदाय । साधुसेव्याय । साधुगतये । सेवाफलप्रदाय । विभवे । सुमघ्ने । मद्यपाय । मत्ताय । मत्तमूर्तये । सुमन्त(न्त्र)काय । कीलिने । लीलाकराय । लूताय । भवबन्धैकमोचनाय नमः । ३६०

रोचिष्णवे नमः । विष्णवे । अच्युताय । चूतनाय । नूतनाय । नवाय । न्यग्रोधरूपाय । भयदाय । भयघ्ने । अभीतिधारणाय । धरणीधरसेव्याय । धराधरसुतापतये । धराधराय । अन्धकरिपवे । विज्ञानिने । मोहवर्जिताय । स्थाणुकेशाय । जटिने । ग्राम्याय । ग्रामारामाय नमः । ३८०

रमाप्रियाय नमः । प्रियकृते । प्रियरूपाय । विप्रयोगिने । प्रतापनाय । प्रभाकराय । प्रभादीप्ताय । मन्युमते । मानवेष्टदाय । तीक्ष्णबाहवे । तीक्ष्णकराय । तीक्ष्णांशवे । तीक्ष्णलोचनाय । तीक्ष्णचित्ताय । त्रयीरूपाय । त्रयीमूर्तये । त्रयीतनवे । हविर्भुजे । हविषां ज्योतिषे । हालाहलाय नमः । ४००

हलीपतये नमः । हविष्मल्लोचनाय । हालामयाय । हरितरूपभृते । म्रदिम्ने । आम्रमयाय । वृक्षाय । हुताशाय । हुतभुजे । गुणिने । गुणज्ञाय । गरुडाय । गानतत्पराय । विक्रमिणे । क्रमिणे । क्रमेश्वराय । क्रमपराय । क्रमिकृते । क्लान्तमानसाय । महातेजसे नमः । ४२०

महामाराय । मोहिताय । मोहवल्लभाय । महस्विने । त्रिदशाय । बालाय । बालापतये । अघापहाय । बाल्याय । रिपुहराय । (अ)हाहिने । गोवये । गविमताय । अगुणाय । सगुणाय । वित्तराजे । वीर्याय । विरोचनाय । विभावसवे । मालामयाय नमः । ४४०

माधवाय नमः । विकर्तनाय । विकत्थनाय । मानकृते । मुक्तिदाय । अतुल्याय । मुख्याय । शत्रुभयङ्कराय । हिरण्यरेतसे । सुभगाय । सतीनाथाय । सिरापतये । मेढ्रिणे । मैनाकभगिनीपतये । उत्तमरूपभृते । आदित्याय । दितिजेशानाय । दितिपुत्रक्षयङ्कराय । वसुदेवाय । महाभाग्याय नमः । ४६०

विश्वावसवे नमः । वसुप्रियाय । समुद्राय । अमिततेजसे । खगेन्द्राय । विशिखिने । शिखिने । गरुत्मते। वज्रहस्ताय । पौलोमीनाथाय । ईश्वराय । यज्ञपेयाय । वाजपेयाय । शतक्रतवे । शताननाय । प्रतिष्ठाय । तीव्रविस्रंभिणे । गंभीराय । भाववर्धनाय । गायिष्ठाय नमः। ४८०

मधुरालापाय नमः । मधुमत्ताय । माधवाय । मायात्मने । भोगिनां त्रात्रे । नाकिनामिष्टदायकाय । नाकीन्द्राय । जनकाय । जन्याय । स्तंभनाय । रंभनाशनाय । शङ्कराय । ईश्वराय । ईशाय । शर्वरीपतिशेखराय । लिङ्गाध्यक्षाय । सुराध्यक्षाय । वेदाध्यक्षाय । विचारकाय । भर्गाय नमः । ५००

अनर्घ्याय नमः । नरेशानाय । नरवाहनसेविताय । चतुराय । भवित्रे । भाविने । भावदाय । भवभीतिघ्ने । भूतेशाय । महिताय । रामाय । विरामाय । रात्रिवल्लभाय । मङ्गलाय । धरणीपुत्राय । धन्याय । बुद्धिविवर्धनाय । जयिने । जीवेश्वराय । जाराय नमः । (५२०)

जाठराय नमः । जह्नुतापनाय । जह्नुकन्याधराय । कल्पाय । वत्सराय । मासरूपधृते । ऋतवे । ऋभुसुताध्यक्षाय । विहारिणे । विहगाधिपाय । शुक्लांबराय । नीलकण्ठाय । शुक्लाय । भृगुसुताय । भगाय । शान्ताय । शिवप्रदाय । अभेद्याय । अभेदकृते । शान्तकृते नमः । ५४०

पतये नमः । नाथाय । दान्ताय । भिक्षुरूपिणे । दातृश्रेष्ठाय । विशांपतये । कुमाराय । क्रोधनाय । क्रोधिने । विरोधिने । विग्रहिणे । रसाय । नीरसाय । सरसाय । सिद्धाय । वृषणिने । वृषघातनाय । पञ्चास्याय । षण्मुखाय । विमुखाय नमः । ५६०

सुमुखीप्रियाय नमः । दुर्मुखाय । दुर्जयाय । दुःखिने । सुखिने । सुखविलासदाय । पात्रिणे । पौत्रिणे । पवित्राय । भूतात्मने । पूतनान्तकाय । अक्षराय । परमाय तत्वाय । बलवते । बलघातनाय । भल्लिने । भौलये । भवाभावाय । भावाभावविमोचनाय । नारायणाय नमः । ५८०

मुक्तकेशाय नमः । दिग्देवाय । धर्मनायकाय । कारामोक्षप्रदाय । अजेयाय । महाङ्गाय । सामगायनाय । तत्सङ्गमाय । नामकारिणे । चारिणे । स्मरनिसूदनाय । कृष्णाय । कृष्णांबराय । स्तुत्याय । तारावर्णाय । त्रपाकुलाय । त्रपावते । दुर्गतित्रात्रे । दुर्गमाय । दुर्गघातनाय नमः । ६००

महापादाय । विपादाय । विपदां नाशकाय । नराय । महाबाहवे । महोरस्काय । महानन्दप्रदायकाय । महानेत्राय । महादात्रे । नानाशास्त्रविचक्षणाय । महामूर्ध्ने । महादन्ताय । महाकर्णाय । महोरगाय । महाचक्षुषे । महानासाय । महाग्रीवाय । दिगालयाय । दिग्वाससे । दितिजेशानाय नमः । ६२०

मुण्डिने नमः । मुण्डाक्षसूत्रभृते । श्मशाननिलयाय । अरागिणे । महाकटये । अनूतनाय । पुराणपुरुषाय । अपाराय । परमात्मने । महाकराय । महालस्याय । महाकेशाय । महोष्ठाय । मोहनाय । विराजे । महामुखाय । महाजंघाय । मण्डलिने । कुण्डलिने । नटाय नमः । ६४०

असपत्नाय नमः । पत्रकराय । पात्रहस्ताय । पाटवाय । लालसाय । सालसाय । सालाय । कल्पवृक्षाय । कंपिताय । कंपघ्ने । कल्पनाहारिणे । महाकेतवे । कठोरकाय । अनलाय । पवनाय । पाठाय । पीठस्थाय । पीठरूपकाय । पाठीनाय । कुलिशिने नमः । ६६०

पीनाय नमः। मेरुधाम्ने। महागुणिने। महातूणीरसंयुक्ताय। देवदानवदर्पघ्ने । अथर्वशीर्षाय । सोम्यास्याय । ऋक्सहस्रामितेक्षणाय । यजुःसाममुखाय । गुह्याय । यजुर्वेदविचक्षणाय । याज्ञिकाय । यज्ञरूपाय । यज्ञज्ञाय । धरणीपतये । जङ्गमिने । भङ्गदाय । भाषादक्षाय । अभिगमदर्शनाय। अगम्याय नमः। ६८०

सुगमाय नमः। खर्वाय। खेटिने। खेटाननाय। नयाय। अमोघार्थाय। सिन्धुपतये। सैन्धवाय। सानुमध्यगाय। प्रतापिने। प्रजयिने। प्रातर्मध्याह्न सायमध्वराय। त्रिकालज्ञाय। सुगणकाय। पुष्करस्थाय । परोपकृते । उपकर्त्रे। अपहर्त्रे । घृणिने । रणजयप्रदाय नमः। ७००

धर्मिणे । चर्माम्बराय । चारुरूपाय । चारुविभूषणाय। नक्तञ्चराय । कालवशिने । वशिने । वशिवराय । अवशाय । वश्याय । वश्यकराय । भस्मशायिने । भस्मविलेपनाय । भस्माङ्गिने। मलिनाङ्गाय। मालामण्डितमूर्धजाय। गणकार्याय। कुलाचाराय। सर्वाचाराय। सख्यै नमः। ७२०

समाय नमः। साकाराय। गोत्रभिदे। गोप्त्रे। भीमरूपाय। भयानकाय। अरुणाय। एकचिन्त्याय। त्रिशङ्कवे। शङ्कुधारणाय। आश्रमिणे । ब्राह्मणाय । वज्रिणे। क्षत्रियाय । कार्यहेतुकाय । वैश्याय। शूद्राय। कपोतस्थाय। त्वष्ट्रे। तुष्टाय नमः। ७४०

रुषाकुलाय नमः । रोगिणे । रोगापहाय । शूराय । कपिलाय। कपिनायकाय। पिनाकिने। अष्टमूर्तये। क्षितिमते। धृतिमते । जलमूर्तये । वायुमूर्तये । हुताशाय । सोममूर्तिमते । सूर्यदेवाय । यजमानाय । आकाशाय । परमेश्वराय । भवघ्ने । भवमूर्तये नमः। ७६०

भूतात्मने नमः । भूतभावनाय । भवाय । शर्वाय । रुद्राय । पशुनाथाय । शङ्कराय । गिरिजाय । गिरिजानाथाय । गिरीन्द्राय । महेश्वराय । गिरीशाय । खण्डहस्ताय । महते । उग्राय । गणेश्वराय । भीमाय । कपर्दिने । भीतिज्ञाय । खण्डपाय नमः । ७८०

चण्डविक्रमाय नमः । खण्डभृते । खण्डपरशवे । कृत्तिवाससे । विषापहाय । कंकालाय । कलनाकाराय । श्रीकण्ठाय । नीललोहिताय । गणेश्वराय । गुणिने । नन्दिने । धर्मराजाय । दुरन्तकाय । भृङ्गिरीटिने । रसासाराय । दयालवे । रूपमण्डिताय । अमृताय । कालरुद्राय नमः । ८००

कालाग्नये नमः । शशिशेखराय । सद्योजातस्वर्णमुञ्जमेखलिने । दुर्निमित्तहृते । दुःस्वप्नहृते । प्रसहनाय । गुणिने । नादप्रतिष्ठिताय । शुक्लाय । त्रिशुक्लाय । संपन्नाय । शुचये । भूतनिषेविताय । यज्ञरूपाय । यज्ञमुखाय । यजमानेष्टदाय । शुचये । धृतिमते । मतिमते । दक्षाय नमः । ८२०

दक्षयज्ञविघातकाय नमः । नागहारिणे । भस्मधारिणे । भूतिभूषितविग्रहाय । कपालिने । कुण्डलिने । भर्गाय । भक्तार्तिभञ्जनाय । विभवे । वृषध्वजाय । वृषारूढाय । धर्मवृषविवर्धकाय । महाबलाय । सर्वतीर्थाय । सर्वलक्षणलक्षिताय । सहस्रबाहवे । सर्वाङ्गाय । शरण्याय । सर्वलोककृते । पवित्राय नमः । ८४०

त्रिककुन्मन्त्राय नमः । कनिष्ठाय । कृष्णपिङ्गलाय । ब्रह्मदण्डविनिर्मात्रे । शतघ्नीपाशशक्तिमते । पद्मगर्भाय । महागर्भाय । ब्रह्मगर्भाय । जलोद्भवाय । देवासुरविनिर्मात्रे । देवासुरपरायणाय । देवासुरगुरवे । देवाय । देवासुरनमस्कृताय । गुहप्रियाय । गणसेव्याय । पवित्राय । सर्वपावनाय । ललाटाक्षाय । विश्वदेवाय नमः । ८६०

दमनाय नमः। श्वेतपिङ्गलाय। विमुक्तये। मुक्तितेजस्काय। भक्तानां परमायै गतये । देवादि देवाय । देवर्षये । देवासुरवरप्रदाय। कैलासगिरिवासिने । हिमवद्गिरिसंश्रयाय । नाथपूज्याय । सिद्धनुत्याय । नवनाथसमर्चिताय । कपर्दिने । कल्पकृते। रुद्राय। सुमनसे। धर्मवत्सलाय। वृषाकपये। कल्पकर्त्रे नमः। ८८०

नियतात्मने नमः । निराकुलाय । नीलकण्ठाय । धनाध्यक्षनाथाय । प्रमथनायकाय । अनादये । अन्तरहिताय। भूतिदाय। भूतिविग्रहाय। सेनाकल्पाय। महाकल्पाय। योगाय। युगकराय । हरये । युगरूपाय । महारूपाय । महागीताय । महागुणाय। विसर्गाय। लिङ्गरूपाय नमः। ९००

पवित्राय नमः । पापनाशनाय । ईड्याय । महेश्वराय । शंभवे। देवसिंहाय। नरर्षभाय। विबुधाय। अग्रवराय। सूक्ष्माय। सर्वदेवाय। तपोमयाय। सुयुक्ताय। शोभनाय। वज्रिणे। देवानां प्रभवाय। अव्ययाय। गुहाय। कान्ताय। निजसर्गाय नमः। ९२०

पवित्राय नमः । सर्वपावनाय । शृङ्गिणे । शृङ्गप्रियाय । बभ्रवे। राजराजाय । निरामयाय । देवासुरगणाध्यक्षाय । नियमेन्द्रियवर्धनाय । त्रिपुरान्तकाय । श्रीकण्ठाय । त्रिनेत्राय। पञ्चवक्त्रकाय । कालहृते । केवलात्मने । ऋग्यजुः सामवेदवते । सर्वभूतानामीशानाय । सर्वरक्षसां ईश्वराय । ब्रह्माधिपतये । ब्रह्मपतये नमः। ९४०

ब्रह्मणोऽधिपतये नमः । ब्रह्मणे । शिवाय । सदानन्दिने । सदानन्ताय। सदाशिवाय। मे अस्तु रूपाय। चार्वङ्गाय। गायत्री रूपधारणाय । अघोरेभ्यः । घोरेभ्यः । घोरघोरतरेभ्यः । सर्वतः शर्वसर्वेभ्यः । रुद्ररूपेभ्यः । वामदेवाय । ज्येष्ठाय । श्रेष्ठाय । कालाय। करालकाय। महाकालाय नमः। ९६०

भैरवेशाय नमः । वेशिने । कलविकरणाय । बलविकरणाय । ब(बा)लाय । बलप्रमथनाय । सर्वभूतादिदमनाय । देवदेवाय । मनोन्मनाय । सद्योजाताय । भवोद्भवाय । भावनाय । भवनाय । भाव्याय । बलकारिणे । परस्मै पदाय । परस्मै शिवाय । परस्मै ध्येयाय । परस्मै ज्ञानाय । परात्पराय नमः । ९८०

पारावराय नमः । पलाशिने । मांसाशिने । वैष्णवोत्तमाय । ओं ऐं ह्रीं श्रीं ह्सौः देवाय । ओं श्रीं ह्रौं भैरवोत्तमाय । ओं ह्रां नमः शिवायेति मन्त्राय । वटवे । वरायुधाय । ओं ह्रीं सदाशिवाय । ओं ह्रीं आपदुद्धारणाय मनवे । ओं ह्रीं महाकरालास्याय । ओं ह्रीं वटुकभैरवाय । ओं ह्रीं भगवते त्र्यंबकाय । ओं ह्रीं चन्द्रार्धशेखराय । ओं ह्रीं सञ्जटिलाय धूम्राय । ओं ह्रीं त्रिपुरघातनाय । ह्रां ह्रीं ह्रुं हरिवामाङ्गाय । ओं ह्रीं ह्रूं ह्रीं त्रिलोचनाय । ओं वेदरूपाय १०००

वेदज्ञाय । ऋग्यजुः साममूर्तिमते । रुद्राय । घोररवाय । अघोराय । ओंक्ष्म्यूं अघोरभैरवाय । ओं जुं सः पीयूषसक्ताय । अमृताध्यक्षाय । अमृतालसाय । ओं त्र्यंबकं+मामृतात् ओं ह्रौं जुं सः ओं भूर्भुवः स्वः, ओं जुं सः मृत्युञ्जयाय १०१०

## श्रीमृत्युञ्जयध्यानम्

वन्दे मृत्युञ्जयं साम्बं नीलकण्ठं चतुर्भुजम् ।
चन्द्रकोटिप्रतीकाशं पूर्णचन्द्रनिभाननम् ॥

बिम्बाधरं विशालाक्षं चन्द्रालङ्कृतमस्तकम् ।
अक्षमालाम्बरधरं वरदं चाभयप्रदम् ॥

महार्हकुण्डलाभूषं हारालङ्कृतवक्षसम् ।
भस्मोद्धूलितसर्वाङ्गं फालनेत्रविराजितम् ॥

व्याघ्रचर्मपरीधानं व्यालयज्ञोपवीतिनम् ।
पार्वत्या सहितं वन्दे सर्वाभीष्टवरप्रदम् ॥

* * *

# महामृत्युञ्जयमालामन्त्रः

## ध्यानम्

ध्यायेन्मृत्युञ्जयं साम्बं नीलकण्ठं चतुर्भुजम्।
चन्द्रकोटिप्रतीकाशं पूर्णचन्द्र निभाननम्॥ १

बिम्बाधरं विशालाक्षं चन्द्रालङ्कृतमस्तकम्।
अक्षमालाम्बरधरं वरदं चाभयप्रदम्॥ २

महार्हकुण्डलाभूषं हारालङ्कृतवक्षसम्।
भस्मोद्धूलितसर्वाङ्गं फालनेत्रविराजितम्॥ ३

व्याघ्रचर्मपरीधानं व्यालयज्ञोपवीतिनम्।
पार्वत्या सहितं देवं सर्वाभीष्टवरप्रदम्॥ ४

१. ओं ह्रां ह्रौं नं मं शिं वं यं ह्रौं ह्रां। ओं श्लीं पं शुं हुं जुं सः जुं सः ह्रौं ह्रैं ह्रां। ओं मृत्युञ्जयाय नमश्शिवाय हुं फट् स्वाहा।

२. ओं नमो भगवते महामृत्युञ्जयेश्वराय चन्द्रशेखराय जटामकुटधारणाय, अमृतकलशहस्ताय अमृतेश्वराय सर्वात्मरक्षकाय। ओं ह्रां ह्रौं नं मं शिं वं यं ह्रौं ह्रां। ओं श्लीं पं शुं हुं जुं सः जुं सः जुं पालय पालय, महामृत्युञ्जयाय सर्वरोगारिष्टं निवारय निवारय, आयुरभिवृद्धिं कुरु कुरु आत्मानं रक्ष रक्ष, महामृत्युञ्जयेश्वराय हुं फट् स्वाहा।

३. ओं नमो भगवते महामृत्युञ्जयेश्वराय पार्वतीमनोहराय अमृतस्वरूपाय कालान्तकाय करुणाकराय गङ्गाधराय। ओं ह्रां ह्रौं नं मं शिं वं यं ह्रौं ह्रां। ओं श्लीं पं शुं हुं जुं सः जुं सः, जुं पालय पालय। महामृत्युञ्जयाय सर्वरोगारिष्टं निवारय निवारय सर्वदुष्टग्रहोपद्रवं निवारय निवारय, आत्मानं रक्ष रक्ष, आयुरभिवृद्धिं कुरु कुरु महामृत्युञ्जयेश्वराय हुं फट् स्वाहा।

४. ओं नमो भगवते महामृत्युञ्जयेश्वराय जटामकुटधारणाय चन्द्रशेखराय श्रीमहाविष्णुवल्लभाय, पार्वतीमनोहराय, पञ्चाक्षर परिपूर्णाय, परमेश्वराय, भक्तात्मपरिपालनाय, परमानन्दाय परब्रह्मपरापराय। ओं हां हौं नं मं शिं वं यं हौं हां। ओं श्लीं पं शुं हुं जुं सः जुं सः जुं पालय पालय। महामृत्युञ्जयाय लं लं लौं इन्द्रद्वारं बन्धय बन्धय । आत्मानं रक्ष रक्ष, सर्वग्रहान् बन्धय बन्धय स्तम्भय स्तम्भय सर्वरोगारिष्टं निवारय निवारय, दीर्घायुष्यं कुरु कुरु। ओं नमो भगवते महामृत्युञ्जयेश्वराय हुं फट् स्वाहा ।।

५. ओं नमो भगवते महामृत्युञ्जयेश्वराय, कालकाल-संहाररुद्राय, व्याघ्रचर्माम्बरधराय, कृष्णसर्पयज्ञोपवीताय, अनेककोटिब्रह्मकपालालङ्कृताय, । ओं हां हौं नं मं शिं वं यं हौं हां। ओं श्लीं पं शुं हुं जुं सः जुं सः जुं पालय पालय। महामृत्युञ्जयाय रं रं रौं अग्निद्वारं बन्धय बन्धय, आत्मानं रक्ष रक्ष। सर्वग्रहान्बन्धय बन्धय । स्तम्भय स्तम्भय, सर्वरोगारिष्टं निवारय निवारय । अरोगदृढगात्र दीर्घायुष्यं कुरु कुरु । ओं नमो भगवते मृत्युञ्जयेश्वराय हुं फट् स्वाहा।

६. ओं नमो भगवते महामृत्युञ्जयेश्वराय त्रिनेत्राय कालकालान्तकाय आत्मरक्षाकराय लोकेश्वराय अमृतस्वरूपाय। ओं हां हौं नं मं शिं वं यं हौं हां। ओं श्लीं पं शुं हुं जुं सः जुं सः जुं पालय पालय महामृत्युञ्जयाय हं हं हौं यमद्वारं बन्धय बन्धय आत्मानं रक्ष रक्ष, सर्वग्रहान् बन्धय बन्धय स्तम्भय स्तम्भय सर्वरोगारिष्टं निवारय निवारय महामृत्युभयं निवारय निवारय अरोगदृढगात्र दीर्घायुष्यं कुरु कुरु । ओं नमो भगवते मृत्युञ्जयेश्वराय हुं फट् स्वाहा।

७. ओ नमो भगवते मृत्युञ्जयेश्वराय त्रिशूल डमरुकपाल मालिकाव्याघ्रचर्माम्बरधराय, परशुहस्ताय, श्रीनीलकण्ठाय निरञ्जनाय, कालकालान्तकाय, भक्तात्मपरिपालकाय, अमृतेश्वराय। ओं ह्रां ह्रौं नं मं शिं वं यं ह्रौं ह्रां। ओं श्लीं पं शुं हुं जुं सः जुं सः जुं पालय पालय महामृत्युञ्जयाय षं षं षौं निरृतिद्वारं बन्धय बन्धय । आत्मानं रक्ष रक्ष । सर्वग्रहान्बन्धय बन्धय । स्तम्भय स्तम्भय । महामृत्युञ्जयेश्वराय अरोगदृढ गात्रदीर्घायुष्यं कुरु कुरु। ओं नमो भगवते महामृत्युञ्जयेश्वराय हुं फट् स्वाहा।

८. ओं नमो भगवते महामृत्युञ्जयेश्वराय महारुद्राय सर्वलोकरक्षाकराय चन्द्रशेखराय कालकण्ठाय आनन्द भुवनाय अमृतेश्वराय कालकालान्तकाय करुणाकराय कल्याणगुणाय भक्तात्मपरिपालकाय। ओं ह्रां ह्रौं नं मं शिं वं यं ह्रौं ह्रां। ओं श्लीं पं शुं हुं। जुं सः जुं सः जुं। पालय पालय महामृत्युञ्जयेश्वराय पं पं पौं वरुणद्वारं बन्धय बन्धय। आत्मानं रक्ष रक्ष। सर्वग्रहान् स्तम्भय स्तम्भय । महामृत्युञ्जयमूर्तये रक्ष रक्ष । सर्वरोगारिष्टं निवारय निवारय। महामृत्युभयं निवारय निवारय। महामृत्युञ्जयेश्वराय। अरोगदृढगात्रदीर्घायुष्यं कुरु करु। ओं नमो भगवते मृत्युञ्जयेश्वराय हुं फट् स्वाहा।

९. ओं नमो भगवते महामृत्युञ्जयेश्वाराय गङ्गाधराय परशुहस्ताय पार्वतीमनोहराय भक्तपरिपालनाय परमेश्वराय परमानन्दाय। ओं ह्रां ह्रौं नं मं शिं वं यं ह्रौं ह्रां। ओं श्लीं पं शुं हुं जुं सः जुं सः जुं पालय पालय, महामृत्युञ्जयाय यं यं यौं वायुद्वारं बन्धय बन्धय, आत्मानं रक्ष रक्ष। सर्वग्रहान् बन्धय बन्धय, स्तम्भय स्तम्भय, महामृत्युञ्जयमूर्तये रक्ष रक्ष सर्वरोगारिष्टं निवारय निवारय, महामृत्युञ्जयेश्वराय अरोगदृढगात्रदीर्घायुष्यं कुरु कुरु

ओं नमो भगवते महामृत्युञ्जयेश्वराय हुं फट् स्वाहा।

१०. ओं नमो भगवते महामृत्युञ्जयेश्वराय चन्द्रशेखराय उरगमणिभूषिताय शार्दूलचर्माम्बरधराय, सर्वमृत्युहराय पापध्वंसनाय आत्मरक्षकाय ओं ह्रां ह्रौं नं मं शिं वं यं ह्रौं ह्रां ओं श्लीं पं शुं हुं जुं सः जुं सः जुं पालय पालय। महामृत्युञ्जयाय सं सं सौं कुबेरद्वारं बन्धय बन्धय। आत्मानं रक्ष रक्ष। सर्वग्रहान् बन्धय बन्धय। स्तम्भय स्तम्भय। महामृत्युञ्जयमूर्तये रक्ष रक्ष। सर्वरोगारिष्टं निवारय निवारय। महामृत्युञ्जयेश्वराय अरोगदृढगात्र दीर्घायुष्यं कुरु कुरु। ओं नमो भगवते महामृत्युञ्जयेश्वराय हुं फट् स्वाहा।

११. ओं नमो भगवते महामृत्युञ्जयेश्वराय सर्वात्मरक्षाकराय करुणामृतसागराय पार्वतीमनोहराय अघोर-वीरभद्राट्टहासाय कालरक्षाकराय अचञ्चलस्वरूपाय प्रलय-कालाग्निरुद्राय आत्मानन्दाय सर्वपापहराय भक्तपरिपालनाय पञ्चाक्षरस्वरूपाय भक्तवत्सलाय परमानन्दाय। ओं ह्रां ह्रौं नं मं शिं वं यं ह्रौं ह्रां। ओं श्लीं पं शुं हुं जुं सः जुं सः जुं, पालय पालय महामृत्युञ्जयाय। शं शं शौं ईशानद्वारं बन्धय बन्धय, स्तम्भय स्तम्भय, शं शं शौं ईशानमृत्युञ्जय मूर्तये आत्मानं रक्ष रक्ष, सर्वग्रहान् बन्धय बन्धय स्तम्भय स्तम्भय। शं शं शौं ईशान मृत्युञ्जय मूर्तये रक्ष रक्ष, सर्वरोगारिष्टं निवारय, निवारय, महामृत्युभयं निवारय निवारय। महामृत्युञ्जयेश्वराय अरोगदृढगात्रदीर्घायुष्यं कुरु करु। ओं नमो भगवते महामृत्युञ्जयेश्वराय हुं फट् स्वाहा।

१२. ओं नमो भगवते महामृत्युञ्जयेश्वराय आकाश-तत्वभुवनेश्वराय अमृतोद्भवाय नन्दिवाहनाय

आकाशगमनप्रियाय गजचर्मधारणाय कालकालाय भूतात्मकाय महादेवाय भूतगणसेविताय (आकाशतत्त्वभुवनेश्वराय) ओं हां हौं नं मं शिं वं यं हौं हां। ओं श्लीं पं शुं हुं जुं सः जुं सः जुं पालय पालय महामृत्युञ्जयाय टं टं टौं आकाशद्वारं बन्धय बन्धय आत्मानं रक्ष रक्ष सर्वग्रहान्बन्धय बन्धय। स्तम्भय स्तम्भय। टं टं टौं परमाकाशमूर्तये मृत्युञ्जयेश्वराय रक्ष रक्ष। सर्वरोगारिष्टं निवारय निवारय, महामृत्युभयं निवारय निवारय। महामृत्युञ्जयेश्वराय अरोगदृढ़गात्र दीर्घायुष्यं कुरु कुरु। ओं नमो भगवते महामृत्युञ्जयेश्वराय हुं फट् स्वाहा।

१३. ओं नमो भगवते महामृत्युञ्जयेश्वराय महारुद्राय कालाग्नि रुद्रभुवनाय महाप्रलयताण्डवेश्वराय अपमृत्युविनाशनाय कालकालेश्वराय कालमृत्यु संहारणाय अनेककोटिभूतप्रेतपिशाच ब्रह्मराक्षसयक्षराक्षसगणध्वंसनाय आत्मरक्षाकराय सर्वात्मपापहराय। ओं हां हौं नं मं शिं वं यं हौं हां। ओं श्लीं पं शुं हुं जुं सः जुं सः जुं पालय पालय महामृत्युञ्जयाय क्षं क्षं क्षौं अन्तरिक्षद्वारं बन्धय बन्धय आत्मानं रक्ष रक्ष, सर्वग्रहान्बन्धय, बन्धय, स्तम्भय स्तम्भय। क्षं क्षं क्षौं चिदाकाशमूर्तये महामृत्युञ्जयेश्वराय रक्ष रक्ष। सर्वरोगारिष्टं निवारय निवारय। महामृत्युभयं निवारय निवारय। महामृत्युञ्जयेश्वराय अरोगदृढगात्र दीर्घायुष्यं कुरु कुरु। ओं नमो भगवते महामृत्युञ्जयेश्वराय हुं फट् स्वाहा॥

१४. ओं नमो भगवते महामृत्युञ्जयेश्वराय सदाशिवाय पार्वतीपरमेश्वराय महादेवाय सकलतत्वात्मरूपाय शशाङ्कशेखराय तेजोमयाय सर्वसाक्षिभूताय पञ्चाक्षराय पञ्चभूतेश्वराय परमानन्दाय परमाय परापराय परंज्योतिः स्वरूपाय। ओं हां हौं नं मं शिं वं यं हौं हां। ओं श्लीं पं शुं हुं जुं सः जुं सः जुं पालय पालय,

महामृत्युञ्जयाय हं हां हिं हीं हैं हौं अष्टमूर्तये महामृत्युञ्जय मूर्तये आत्मानं रक्ष रक्ष सर्वग्रहान्बन्धय बन्धय स्तम्भय स्तम्भय महामृत्युञ्जयमूर्तये रक्ष रक्ष सर्वरोगारिष्टं निवारय निवारय, सर्वमृत्युभयं निवारय निवारय, महामृत्युञ्जयेश्वराय अरोग दृढगात्रदीर्घायुष्यं कुरु कुरु। ओं नमो भगवते महामृत्युञ्जयेश्वराय हुं फट् स्वाहा।

१५. ओं नमो भगवते महामृत्युञ्जयेश्वराय लोकेश्वराय सर्वरक्षाकराय चन्द्रशेखराय गङ्गाधराय नन्दिवाहनाय अमृतस्वरूपाय अनेककोटिभूतगणसेविताय कालभैरव-कपालभैरव - कल्पान्तभैरव - महाभैरवादि अष्टत्रिंशत्कोटि-भैरवमूर्तये कपालमालाधर खट्वाङ्गचर्मखड्गधर परशुपाशाङ्कुशडमरुक त्रिशूल चाप बाण गदा शक्ति भिण्डि मुद्गरप्रास परिघा शतघ्नी चक्रायुधभीषणाकार सहस्रमुख दंष्ट्राकरालवदन विकटाट्टहास विस्फाटित ब्रह्माण्डमण्डल नागेन्द्रकुण्डल नागेन्द्रवलय नागेन्द्रहार नागेन्द्र कङ्कणालङ्कृत महारुद्राय मृत्युञ्जय त्र्यम्बक त्रिपुरान्तक विरूपाक्ष विश्वेश्वर वृषभवाहन विश्वरूप विश्वतोमुख सर्वतोमुख महामृत्युञ्जयमूर्तये आत्मानं रक्ष रक्ष, महामृत्युभयं निवारय निवारय, रोगभयं उत्सादय उत्सादय, विषादिसर्पभयं शमय शमय, चोरान् मारय मारय, सर्वभूतप्रेतपिशाच ब्रह्मराक्षसादि सर्वारिष्टग्रहगणान् उच्चाटय उच्चाटय। मम अभयं कुरु कुरु। मां सञ्जीवय सञ्जीवय। मृत्युभयात् मां उद्धारय उद्धारय। शिवकवचेन मां रक्ष रक्ष। ओं हां हौं नं मं शिं वं यं हौं हां। ओं श्लीं पं शुं हुं जुं सः जुं सः जुं। पालय पालय महामृत्युञ्जयमूर्तये आत्मानं रक्ष रक्ष । सर्वग्रहान् निवारय निवारय। महामृत्युभयं निवारय निवारय । महामृत्युभयं

निवारय। सर्वरोगारिष्टं निवारय निवारय। महामृत्युञ्जयेश्वराय अरोगदृढगात्र दीर्घायुष्यं कुरु कुरु। ओं नमो भगवते महामृत्युञ्जयेश्वराय हुं फट् स्वाहा।

१६. ओं नमो भगवते महामृत्युञ्जयेश्वराय अमृतेश्वराय अखिललोकपालकाय आत्मनाथाय सर्वसङ्कट निवारणाय पार्वतीपरमेश्वराय। ओं हां हौं नं मं शिं वं यं हौं हां। ओं श्लीं पं शुं हुं जुं सः जुं सः जुं पालय पालय। महामृत्युञ्जयेश्वराय हं हां हौं जुं सः जुं सः जुं मृत्युञ्जयमूर्तये आत्मानं रक्ष रक्ष सर्वग्रहान् निवारय निवारय। महामृत्युञ्जयमूर्तये सर्वसङ्कटं निवारय निवारय सर्वरोगारिष्टं निवारय निवारय। महामृत्युभयं निवारय निवारय। महामृत्युञ्जयमूर्तये सर्वसङ्कटं निवारय निवारय सकलदुष्टग्रह गणोपद्रवं निवारय निवारय। अष्ट महारोगं निवारय निवारय। सर्वरोगोपद्रवं निवारय निवारय। हैं हां हं जुं सः जुं सः जुं महामृत्युञ्जय मूर्तये अरोगदृढगात्र दीर्घायुष्यं कुरु कुरु। दारपुत्रपौत्र सबान्धव जनान् रक्ष रक्ष, धन धान्य कनक भूषण वस्तु वाहन कृषि गृह ग्रामरामादीन् रक्ष रक्ष। सर्वत्र क्रियानुकूलजयकरं कुरु कुरु आयुरभिवृद्धिं कुरु कुरु। जुं सः जुं सः जुं सः महामृत्युञ्जयेश्वराय हुं फट् स्वाहा। ओं।

मृत्युञ्जयाय विद्महे भीमरुद्राय धीमहि।
तन्नो रुद्रः प्रचोदयात्।

* * *

# याजुषी मृत्युलाङ्गूलविद्योपनिषत्

ओं सह नाववत्विति शान्तिः

ओं एकदा महाकैलासे सुखासीनं महादेवमुपगम्य प्रणिपत्य भो भगवन् मृत्युलाङ्गूलविद्यामनुब्रूहीत्युवाच वसिष्ठः। अथाह भगवान्महादेवो मृत्युलाङ्गूलविद्यां वक्ष्यामीति। मृत्योस्समयावबोधनात् मृत्युलाङ्गूलमित्युच्यते।

अस्याः श्रीमृत्युलाङ्गूलविद्यायाः- उलूकनाङ्गनो भगवानृषिः- अनुष्टुप्छन्दः- मृत्युलाङ्गूलो देवता। क्लामित्यादिन्यासाः। (ध्यानम्)

नीलपर्वतसङ्काश रुद्रकोपसमुद्भव।
कालदण्डधर श्रीमन्वैवस्वत नमोऽस्तु ते॥

अथातो योगविन्यासो मधुवादिनी अहङ्कारो नाहङ्कारस्य॥

ऋतँ सत्यं परं ब्रह्म पुरुषं कृष्ण पिङ्गलम्।
ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमो नमः॥

लमित्यादिपञ्चपूजा। मूलमन्त्रः (१)

*ओं नमो भगवते (उमापतये) वरवृषभ फेनकपोलाय

पशुपतये नमो नमः।

इति स्मृते मृत्युलाङ्गूले ब्रह्महाऽब्रह्महा भवति। स्वर्णस्तेयी अस्तेयी भवति। सुरापायी अपायी भवति। गुरुतल्पगामी

---

*इयं विद्या सायप्रातः सन्ध्ययोरुपस्थानात्पूर्वं विस्तृताङ्गुष्ठतर्जनीमुद्रया सव्यं पाणिं भूमौ विन्यस्य दक्षिणाभिमुखं शिष्टैर्जप्यते। स्वान्त्यकाल ज्ञानमपि सुकरमस्या जपानुष्ठानेन इत्यप्याहुश्च मान्त्रिकाः॥

अगामी भवति । अब्रह्मचारी सुब्रह्मचारी भवति । एकवारेण जपित्वा अष्टोत्तर शतसहस्रलक्ष गायत्री जप फलानि भवन्ति । अष्टौ ब्राह्मणान् सम्यक्ग्राहयित्वा-ब्रह्म लोकमवाप्नोति । यदि कश्चिन्न ब्रूयात् - कुष्ठी कुनखी भवति । दीयमानो न गृह्णीयात् - अन्धो भवति । षड्भिर्मासैः प्रमुच्यते । स्त्रीणां योनौ - अहरहः प्रयुञ्जानः सर्वात्पापात्पूतो भवति । मृत्युः प्रीयताम् । मृत्युर्नीलकण्ठः । अपरिमितमायुर्भवति । शतवर्षाणि जीवन्ति । नश्यति मन्त्रो नश्यति तन्त्रो नश्यति यन्त्रः । न च पुनरावृत्या । यदि पुनरावृत्या ऋषीणां कुले महामेधावी भवति । इत्याह भगवान्महादेवो वसिष्ठायेत्युपनिषत् ॥

ओं सहनाववत्विति शान्तिः ॥

# श्रीमृत्युञ्जयकवचम्
## मार्कण्डेयकृतम्

ओं अस्य श्रीमृत्युञ्जयकवचमहामन्त्रस्य, मार्कण्डेयः ऋषिः, अनुष्टुप् छन्दः श्रीमृत्युञ्जयमहारुद्रो देवता । ओं बीजं, जुं शक्तिः, सः कीलकम् । मृत्युभयनिवारणार्थे मृत्युञ्जय रुद्रप्रसादसिद्ध्यर्थे जपेन विनियोगः (मूलेन पूर्ववत् करन्यासं अंगन्यासं विधाय) ओं (ध्यानम्)

कोपेन स्फुरिताननं कुटिलताभ्रूभङ्ग मुद्रादिभिः
भीमैः संस्कृतमंबुजाक्षमतुलं कारुण्य पाथोनिधिम् ।
दोर्दण्डै र्विधृतं कपालमनघं शूलं वराभीतिके
पादाघात विदारितान्तकतनुं मृत्युञ्जयं भावये ॥

पूर्वे पातु महारुद्रः पश्चात्पातु कृपानिधिः ।
दक्षिणे पातु भीमश्च अनन्तः पातु चोत्तरे ॥ १ ॥

सर्वदा पातु रुद्रश्च ऊर्ध्वं पातु पिनाकधृत्।
अधस्तात्पातु भर्गश्च पादौ पातु त्रिलोचनः ॥ २ ॥

जंघे पातु वरेण्यश्च जानुनी पातु निर्मलः ।
ऊरू पातु शूलपाणिः गुह्यं पातु कपर्द्यपि ॥ ३ ॥

पृष्ठं पशुपतिः पातु नाभिं मे वृषभध्वजः ।
नीलकण्ठोऽव्यात् कुक्षिं मे हृदयं पातु निर्गुणः ॥ ४ ॥

वक्षः पातु कठोरश्च कक्षौ पातु च मे मृडः ।
वामदेवो भुजौ पातु कण्ठं पातु स्मरान्तकः ॥ ५ ॥

स्कन्धं रक्षेत्कालकालः करौ पातु जगत्पतिः ।
नासां रक्षेत्कृत्ति वासः कर्णौ पात्वंबिकापतिः ॥ ६ ॥

कपोलं पातु सर्वज्ञो जिह्वां पातु धनुर्धरः ।
आस्यं पातु सुवेषाढ्यः कठोरः पातु लोचने ॥ ७ ॥

जगद्गुरुः भ्रुवौ पातु अनघोऽव्याल्ललाटकम्।
मृत्युञ्जयो मुखं पातु शिरः पातु शिवाप्रियः ॥ ८ ॥

गिरीशः पातु सर्वेभ्यो व्याधिभ्यः सर्वदा च माम्।
पिशाचाग्निजलेभ्यो मां पापेभ्यः पातु शङ्करः ॥ ९ ॥

यशः कीर्तिं चलक्ष्मीं च सदा रक्षतु सात्विकः ।
गोत्रं च तारको रक्षेत् मार्गं रक्षेद्गणाधिपः ॥ १० ॥

पुत्रान् पौत्रान् वीरभद्रो भार्यां रक्षेदुमापतिः ।
धनं सामप्रियो रक्षेत् पशून् रक्षेद्विष्णुवल्लभः ॥ ११ ॥

इदं तु कवचं दिव्यं देवानामपि दुर्लभम्।
जी वेद्वर्षशतं विद्वान् अपमृत्युविवर्जितः ॥ १२ ॥

निर्भयो जायते मर्त्यः संग्रामेष्वपराजितः ।
त्रैलोक्ये विभवेत्पूज्यः कवचेनावृतः पुमान् ॥ १३ ॥

ब्रह्मराक्षसवेतालाः कूष्माण्डा भैरवादयः ।
नश्यन्ति दर्शनात्तस्य कवचे हृदि संस्थिते ।। १४ ।।

मानोन्नतिर्भवेद्राज्ञां तेजोवृद्धिकरं परम् ।
मृत्युञ्जयस्य कवचं सर्वमङ्गलदायकम् ।। १५ ।।

सर्वरोगप्रशमनं सर्वमृत्युनिवारणम् ।
आपत्कालेषु पठतां आत्मरक्षाकरं परम् ।। १६ ।।

त्रिसन्ध्यायां पठेत् शुद्धः सर्वत्र विजयी भवेत् ।
तमोराशीव गाढा च मार्ताण्डस्योदये यथा ।। १७ ।।

—*—

चन्द्रार्काग्निविलोचनं स्मितमुखं पद्मासने संस्थितं
मुद्रापाशमृगाक्षसूत्रविलसत्पाणिं हिमांशुप्रभम् ।
कोटीरेन्दुगलत्सुधाप्लुततनुं हारादिभूषोज्ज्वलं
कान्त्या विश्वविमोहनं शुभकरं मृत्युञ्जयं भावये ।।

* * *

# अरुणाचलेश्वर सहस्रनामावलिः

दृष्टो हरति पापानि सेवितो वाञ्छितप्रदः ।
कीर्तितो विजनैर्दूरे शोणाद्रिरिति मुक्तिदः ॥ १ ॥

ललाटे पुण्ड्राङ्गी निटिलकृतकस्तूरितिलकः
स्फुरन्मालाधारस्फुरितकटि कौपीनवसनः ।
दधानो धुत्तूरं शिरसि फणिराजं शशिकलां
अधीशः सर्वेषां अरुणगिरियोगी विजयते ॥

शौरिं सत्यगिरं वराहवपुषं पादाम्बुजादर्शने
चक्रे यो दयया समस्तजगतां नाथं, शिरोदर्शने ।
मिथ्यावाचमपूज्यमेव सततं हंसस्वरूपं विधिं
तस्मिन्मे हृदयं सुखेन रमतां शम्भौ (साम्बे)
परब्रह्मणि ॥ ३ ॥

अनर्घ मणिभूषणां अखिललोकरक्षाकरीं
अरालशशिशेखरां असितकुन्तलालङ्कृताम् ।
अशेषफल दायिनीं अरुणमूलशैलालयां
अपीतकुचनायिकां अहरहर्नमस्कुर्महे ॥ ४ ॥

आनन्दसिन्धुलहरीं अमृतांशुमौलेः
आसेविनाममृतनिर्मितवर्तिमक्ष्णोः ।
आनन्दवल्लिवितते: अमृताद्रिगुच्छां
अम्ब स्मराम्यहं अपीतकुचे वपुस्ते ॥ ५ ॥

ओं शोणाद्रीशाय नमः । अरुणाद्रीशाय । सुलभाय । सोमशेखराय । जगद्गुरवे । जगत्कर्त्रे । जगदीशाय । जगत्पतये । कामहन्त्रे । काममूर्तये । कल्याणाय ।वृषभध्वजाय । गङ्गाधराय । महादेवाय । चरितार्थाय । अक्षराकृतये । देवाय । अपीतस्तनीभागाय । विरूपाक्षाय । निरञ्जनाय नमः । २०

विद्याधराय नमः । वियत्केशाय । वीथीविहृतिसुन्दराय । नटेशाय । नायकाय । नन्दिने । स्वामिने । मृगमदेश्वराय । भैरवाय । भैरवीनाथाय । कामदाय । कामशासनाय । रङ्गनाथाय । जगन्नाथाय । कपिलाय । कालकन्धराय । विमलाय । विस्मयाय । वीराय । योगीशाय नमः । ४०

भोगनायकाय नमः । रम्याय । रमापतये । श्रीमते । लसज्ज्योतिषे । प्रभाकराय । नारायणाय । जगन्मूर्तये । चण्डेशाय । चण्डिनायकाय । वेदवेद्याय । सुरानन्दाय । गिरीशाय । हल्लकप्रियाय । चूडामणये । सुराधीशाय । यक्षकेशाय । हरिप्रियाय । निर्लेपाय । नीतिमते नमः । ६०

सूत्रिणे नमः । रसेशाय । रसनायकाय । सत्यवते । एकचूतेशाय । श्रीहालाहलसुन्दराय । पद्मनाभाय । पशुपतये । परेशाय । परमेश्वराय । दिगम्बराय । महासेनाय । त्रिवेदिने । वृद्धवैदिकाय । धर्मरक्षकाय । महाराजाय । किरीटिने । वन्दिताय । गुहाय । माधवाय नमः । ८०

यामिनीनाथाय नमः । शबराय । (शम्बराय) । शबरप्रियाय (शम्बरप्रियाय) । सङ्गीतवेत्त्रे । नृत्तज्ञाय । शान्ताय । कलशसम्भवाय । धूर्जटये । मेरुकोदण्डाय । बाहुलेयाय । बृहस्पतये । ब्रह्मण्याय । वरदाय । नित्याय । दीनबन्धविमोचनाय । शत्रुघ्ने (शत्रुघ्नाय) । वैनतेयाय । शूलिने । गुरुवराय । हराय नमः । १००

कन्दलीन्द्राय नमः । विरिञ्चेशाय । शोणक्षोणीधराय । रवये । वैवस्वताय । भुजङ्गेन्द्राय । गुणज्ञाय । रसभैरवाय । आदिनाथाय । अनङ्गनाथाय । जवन्ती (जयन्ती) कुसुमप्रियाय । अव्ययाय । भूतसेनेशाय । निर्गुणाय । गिरिजासखाय । मार्ताण्डाय । पुण्डरीकाक्षाय । क्रमज्ञाय । लोकनायकाय । विश्वेशाय नमः । १२०

रोहिणीनाथाय नमः । दाडिमीकुसुमप्रियाय । भट्टारकाय । अवधूतेशाय । पापघ्नाय । पुण्यदायकाय । विश्वामरेश्वराय । भोगिने । दारुकाय । वेदवादिकाय । मदनाय । मानसोत्पन्नाय । कङ्कालाय । गरुडध्वजाय । रक्ताय । रक्तांशुकाय । भव्याय । तेजोराशये । गुणान्विताय । अनन्ताय नमः । १४०

वामनाय नमः । वामाय । विशालाक्षाय । रतिप्रियाय । प्रजापतये । पशुपतये । सौभद्राय । नरवाहनाय । ऋतुकर्त्रे । सहस्रार्चिषे । तिमिरोन्मथनाय । शुभाय । त्रिविक्रमाय । मुकुन्दार्च्याय । वैद्यनाथाय । पुरन्दराय । भाषाविहीनाय । भाषाज्ञाय । कामिने । पुलकलेपनाय नमः । १६०

निषादाय नमः । कालहस्तीशाय । द्वात्रिंशद्धर्मपालकाय । द्राविडाय । विद्रुमाकाराय । दूत(यूथ)नाथाय । रुषापहाय । शूरसेनाय । भयत्रात्रे । विघ्नेशाय । विघ्ननायकाय । रञ्जकी(रजनी)सेविताय । योगिने । जंबुनाथाय । विडम्बकाय । तेजोमूर्तये । बृहद्भानवे । सर्वज्ञाय । पूषदन्तभिदे । उपद्रष्ट्रे नमः । १८०

दृढप्रज्ञाय नमः । विजयाय । मल्लिकार्जुनाय । सुप्ताय (शुद्धाय) । त्र्यक्षाय । किन्नेरशाय । शुभदक्षाय । कपालभृते । श्रीनिवासाय । बृहद्योनये । तत्वज्ञाय । शमनक्षमाय । कन्दर्पाय । भूतभावज्ञाय । भीमसेनाय । दिवाकराय । बिल्वप्रियाय । वसिष्ठेशाय । वरारोहाय । रतिप्रियाय नमः । २००

नम्राय नमः । तत्वविदे । तत्वाय । तत्वमार्गप्रवर्तकाय । साम्बिकाय । वामदेवाय । प्रद्युम्नाय । मधुवन्दिताय । परमेष्ठिने । सुराध्यक्षाय । गोविन्दाय । नीललोहिताय । नित्यानन्दाय । निराधाराय । हराय । देवशिखामणये । साधकाय । साधकाध्यक्षाय । क्षेत्रपालाय । धनञ्जयाय नमः । २४०

ओषधीशाय नमः । वामदेवाय । भक्ततुष्टाय । निधिप्रदाय । प्रहर्त्रे । पार्वतीनाथाय । रुद्राय । रोगविनाशनाय । सद्गुणाय । सच्चिदानन्दाय । वेणुवादिने । महोदराय (भगन्दराय) । प्रणतार्तिहराय । सोमाय । क्रतुभुजे । मन्त्रवित्तमाय । अव्याजकरुणामूर्तये । त्यागराजाय । क्षपाकराय । नारसिंहाय नमः । २४०

स्वयं ज्योतिषे नमः । नन्दनाय । विजितेन्द्रियाय । अद्वयाय । हरितस्वार्चिषे । चित्तेशाय । स्वर्णभैरवाय । देवकीनायकाय । नेत्रे । सान्द्रानन्दाय । महामतये । आश्चर्यवैभवाय । सूक्ष्माय । सर्वकर्त्रे । युधिष्ठिराय । सत्यानन्दाय । विटानन्दाय (विद्यानन्दाय) । पुत्रघ्नाय (पुत्रज्ञाय) । पुत्रदायकाय । देवराजाय नमः । २६०

कृपासिन्धवे नमः । कपर्दिने । विष्टरेश्वराय । सोमास्कन्दाय । सुशीलाय । भगघ्नाय । द्युतिनन्दनाय । मुक्तिदाय । मुदिताय । कुब्जाय । गिरिजापादसेवकाय । हेमगर्भाय । सुरानन्दाय । काश्यपाय । करुणानिधये । धर्मज्ञाय । धर्मराजाय । कार्तवीर्याय । षडाननाय । क्षमाधाराय नमः । २६०

तपोराशये नमः । त्वष्ट्रे । सर्वभवोद्भवाय । पीताम्बराय । अनिरुद्धाय । वासवाय । धनवित्तमाय । शेषहाराय । हविष्याशिने । धार्मिकाय । भक्तवत्सलाय । श्वेताङ्गाय । नीलकण्ठाय । गिरिरूपाय । गिरीश्वराय । संभाविताय । सहस्राक्षाय । चन्द्रमौलये । कलाधराय । अभ्यासातिशयज्ञात्रे नमः ३००

वेङ्कटेशाय नमः । गुहप्रियाय । वीरभद्राय । विशेषज्ञाय । शर्वाय । अनन्ताय । नगाधिपाय । श्रीमते । महाबलाय । ज्ञात्रे । विभवे । कनक(कलभ) प्रियाय । सिद्धाय । पुराणपुरुषाय ।

बलभद्राय । सुधर्मकृते । सिद्धनागार्चिताय । धर्माय । फलत्यागिने । क्षपाकराय नमः । ३२०

क्षेत्रज्ञाय नमः । तुङ्गशैलेशाय । रणमण्डलभैरवाय । हरिकेशाय । अवरोधिने । नर्मदाय । पापनाशनाय । सद्योजाताय । वटारण्यवासिने । पुरुषवल्लभाय । अर्चिताय । अरुणशैलेशाय । सर्वाय । गुरु(कुरु)कुलेश्वराय । सनकादि समाराध्याय । अनासाद्याचलेश्वराय । दामोदराय । वलारातये । कामेशाय । सोमविक्रमाय नमः । ३४०

गोरक्षाय नमः । फल्गुनाय । भूपाय । पौलस्त्याय । विष्टरश्रवसे । शान्तचिन्ताय । मखत्रात्रे । चक्रिणे । मुग्धेन्दुशेखराय । बहुवाद्याय । महादेवाय । नीलग्रीवाय । सुमङ्गलाय । हिरण्यबाहवे । तिग्मांशवे । कौलिने (कालिने) । पुण्यजनेश्वराय । सर्वात्मने । सर्वसत्कर्त्रे । लिङ्गप्राणाय नमः । ३६०

गुणाधिपाय नमः । सवित्रे । रत्नसङ्काशाय । भूतेशाय । भुजगप्रियाय । अग्रगण्याय । सुगंभीराय । ताण्डवाय । मुण्डमालिकाय । अचुम्बितकुचेशाय । संसारार्णवतारकाय । मृडाय । विष्णवे । जगत्स्वामिने । चैतन्याय । पाकशासनाय । शरजन्मने । तपोनन्दिने । देशिकाय । वैदिकोत्तमाय नमः । ३८०

कनकाचलकोदण्डाय नमः । स्वाराध्याय । हरिसायकाय । प्रवालाद्रिपतये । श्रीमते । विशांपतये । उमासखाय । वटुकाय । निष्कलाय । देहिने । सुन्दराय । चम्पकप्रियाय । मायामूर्तये । विश्वमूर्तये । शोणपर्वतनायकाय । प्रसन्नदेवाय । वागीशाय । शतयागाय । महायशसे । हंसादष्टाय नमः । ४००

बलिध्वंसिने नमः । चिन्तातिमिरभास्कराय । यज्ञेशाय । राजराजेशाय । केशवाय । चन्द्रशेखराय । विश्वकर्त्रे । विश्वस्रष्ट्रे ।

भूतात्मने । भूतवन्दिताय । श्रीधराय । दिव्यचित्तेशाय । प्रभवे । श्रीबलिनायकाय । गौरीपतये । तुङ्गमौलये । मधुराजाय । महाकपये (महागवाय) । सामज्ञाय । सामवेदेड्याय नमः । ४२०

विश्वनाथाय नमः । दयानिधये । शिवानन्दाय । विचित्राङ्गाय । कञ्चुकिने । कमलेक्षणाय । भवाय । दिव्यरताय । अघोराय । सालोक्यप्रमुखप्रदाय । समुद्राय । करुणामूर्तये । विश्वकर्मणे । तपोनिधये । सत्कृत्याय । राघवाय । बुद्धाय । ब्रह्मण्याय । कौलकेश्वराय । समवर्तिने नमः । ४४०

भयत्रात्रे नमः । मन्त्रसिद्धाय । मतिप्रदाय । आदित्याय । विश्वसंहर्त्रे । जगत्साक्षिणे । सदाशिवाय । जवन्तिनाथाय । दिग्वाससे । वाञ्छितार्थफलप्रदाय । पञ्चकृत्यविधानज्ञाय । सुरासुरनमस्कृताय । उपेन्द्राय । अरुणशैलेशाय । कल्याणाचलकार्मुकाय । अयुग्मलोचनाय । विश्वस्मै । विश्वैश्वर्यप्रदायकाय । गुह्यकेशाय । अन्धकरिपवे नमः । ४६०

सिद्धवेषाय नमः । मनोहराय । अन्तर्मुखाय । बहिर्द्रष्ट्रे । सर्वजीवदयापराय । कृत्तिवाससे । कृपासिन्धवे । द्वादशात्मने । अरुणेश्वराय । महोत्साहाय । पुण्यकराय । स्तम्भनाय । स्तंभविग्रहाय । पुण्डरीकाय । सर्वमयाय । दैवज्ञाय । दैववन्दिताय । महाक्रतवे । महायज्वने । कोङ्कणेशाय नमः । ४८०

गुरूत्तमाय नमः । छन्दोमयाय । महाज्ञानिने । वाचकाय । अमरेश्वराय । सार्वभौमाय । सदानन्दाय । करुणामृतवारिधये । पिङ्गलाक्षाय । पिङ्गरूपाय । पुरुहूताय । पुरान्तकाय । मृत्यवे । वैद्याय । दिनाधीशाय । श्रीदाय । कमलसम्भवाय । गङ्गाधराय । तोयरूपिणे । शीलवते नमः । ५००

शीलदायकाय नमः । जयभद्राय । अग्निहोत्राय । नरनारायणप्रियाय । अमृतेशाय । कृपासिन्धवे । श्रीवत्सशरण-प्रियाय । चण्डेशाय । सुखसंवेद्याय । सुग्रीवाय । सर्पभूषणाय । शतानन्दाय । महायोगिने । सुगन्धिने (न्धये) । शरभेश्वराय । शूलपाणये । सुरज्येष्ठाय । चन्द्रचूडाय । नदप्रियाय । सर्वविद्येश्वराय नमः । ५२०

स्थाणवे नमः । तारकाय । अनन्ताय । ईश्वराय । कालकालाय । वामदेवाय । ज्ञानसम्बन्धनायकाय । भक्तापराधसोढ्रे । जरामरणवर्जिताय । शितिकण्ठाय । चिदानन्दाय । योगिनीकोटिसेविताय । पञ्चवक्त्राय । पञ्चकृत्याय । पञ्चेषुरिपवे । ईश्वराय । प्रतिश्रवसे । शिवतराय । पुण्यश्लोकाय । दिवस्पतये शिवतराय नमः । ५४०

यक्षराजसखाय नमः । सिद्धाय । सदासेवकवर्धकाय (नाय) । स्थायिने । सकलतत्त्वात्मने । जयज्ञाय । नन्दिकेश्वराय । अपांपतये । सुरपतये । तप्तचामीकरप्रभाय । रोहिताश्वाय । क्षमारूपिणे । दत्तात्रेयाय । वनस्पतये । त्रियम्बकाय । वररुचये । देवदेवाय । चतुर्भुजाय । नकुलाय । वारुणीनाथाय नमः । ५६०

मृगिणे नमः । राजीवलोचनाय । विश्वंभराय । विचित्राङ्गाय । विधात्रे । पुरशासनाय । सुब्रह्मण्याय । जगत्स्वामिने । नित्यनाथाय । निरामयाय । असङ्कल्पाय । वृषारूढाय । चन्द्राय । सौगन्धिकेश्वराय । कात्यायनाय । विष्णुरथाय । सत्सङ्गाय । स्वामिकार्तिकाय । वल्मीकनाथाय । देवात्मने नमः । ५८०

उन्मत्तकुसुमप्रियाय नमः । वैकुण्ठाय । सुशान्ताय । गदनायकाय । उमाकान्ताय । अनुग्रहेशाय । लोहिताक्षाय । शिवोत्तमाय । महाकायाय । भुजङ्गेशाय । शैवविद्याविशारदाय ।

शिवयोगिने । शिवानन्दाय । शिवभक्तसमुद्धराय । वेदान्तसारसन्दोहाय । सर्वतत्वाव-लम्बनाय । नवनाथाग्रण्ये । मानिने । नवनाथान्तरस्थिताय नमः । ६००

नवावरणसंयुक्ताय नमः । नवतीर्थप्रदायकाय । अनाथनाथाय । दिङ्नाथाय । शङ्खनादिने (दिव्यनाथाय) । अयनद्वयाय । अतिथये (अदितये) । अनेकवक्त्रसंयुक्ताय । पूर्णभैरवाय । वटमूलाश्रयाय । वाग्मिने । मान्याय । मलयजप्रियाय । नक्षत्रमालाभरणाय । पक्षमासर्तुवत्सराय । सर्वाधाराय । लिङ्गनाथाय । नवग्रहमखाश्रयाय । सुहृदे । सुखाय (सख्ये) नमः । ६२०

सदानन्दाय नमः । सदायोगिने (भोगिने) । सदाऽरुणाय । सुशीलाय । वाञ्छितार्थज्ञाय । प्रसन्नवदनेक्षणाय । नृत्तगीतकलाभिज्ञाय । प्रमोहाय । विश्वभोजनाय । ज्ञानदात्रे । सदाचाराय । सर्वशापविमोचकाय(नाय) । उच्छेत्रे (शमनाय) । गोपतये । गोप्त्रे । शमनाय (उच्छेत्रे) । वेदसंस्तुताय । राजेन्द्राय । राजराजेशाय । तुलसीदामभूषणाय नमः । ६४०

कामिकागमसाराय नमः । मृगधारिणे । शिवङ्कराय । तत्पुरुषाय । लोकनाथाय । मघवते । तमसस्पतये । विधिकर्त्रे । विधानज्ञाय । प्रधानपुरुषेश्वराय । विप्रप्रियाय । परस्मै ज्योतिषे । पुष्कलाय । रत्नकञ्चुकाय । सर्वेश्वराय । सर्वमयाय । भास्कराय । सर्वरक्षकाय । सुगोप्त्रे । करुणासिन्धवे नमः । ६६०

कर्मविदे नमः । कर्ममोचकाय । विद्यानिधये । भूतिकेशाय । त्रिमूर्तये । अमरेश्वराय । कर्मसाक्षिणे । कर्ममयाय । सर्वकर्मफलप्रदाय । सत्यात्मने । सुमतये । सिद्धाय । सुखदाय । सिद्धिदायकाय । अक्षिपेयामृतेशाय । स्त्रीपुंभावप्रदाय ।

सुलक्षणाय। सिंहराजाय। आश्रितामरपादपाय। चिन्तामणये नमः। ६८०

सुरगुरवे नमः। यातुधानाय। क्षपाकराय। ईशानाय। तस्करेशाय। विधिवैकुण्ठनायकाय। पञ्चावरणसंयुक्ताय। सुत्राम्णे। सुन्दरेश्वराय। विष्वक्सेनाय। अग्निसंभूताय। गणाधिपतये। अंशुमते। गोविन्दराजाय। राजेशाय। बहुपूज्याय। शतक्रतवे। नीराजनप्रियाय। बभ्रवे। आधारज्ञाय नमः। ७००

अर्चकप्रियाय नमः। आदिकर्त्रे। लोककर्त्रे। ब्रह्मचारिणे। दृढव्रताय। भक्तप्रेरणकृते। साक्षिणे। चित्रभानवे। ग्रहक्षमाय। महेश्वराय। मानशीलाय। सर्वभूतहिते रताय। चिन्ता(त्ता)नुवर्तिने। कान्तिज्ञाय। तैजसात्मने। अरुणाचलाय। गुणनाथाय। सर्वदृष्टये। शैलराजमनोहराय। वरप्रदाय नमः। ७२०

प्रकाशात्मने नमः। विमलात्मावलोकिताय। व्योमातीताय। शीतगुणाय। हेतुसाधनवर्जिताय। कृतज्ञाय। पुलकस्नेहशालिने। कामिने। स्वयं प्रभवे। सामप्रियाय। कलिध्वंसिने। शतधन्विने(न्वने)। मरीचिमते। अमलाय। चर्मवसनाय। मृडाय। संसारनाशकाय। सत्पतये। जीवितेशाय। वाणीशाय नमः। ७४०

मध्यमश्रुतये नमः। शिपिविष्टाय। वेदशान्ताय। सङ्गासङ्गविवर्जिताय। सैनिकाय। कुशलाय। प्राणाय। सर्वलोकमहेश्वराय। सदानुताय। दयारूपिणे। विशिष्टजनवत्सलाय। सुविक्रमाय। सर्वगताय। यादवेशाय। रघूद्वहाय (यदूद्वहाय)। व्याघ्रचर्मासनासीनाय। संविदात्मने। सुहृत्सुखाय। निस्सङ्कल्पाय। विकल्पाय नमः। ७६०

षट्त्रिंशत्तत्वसंग्रहाय नमः। हिरण्यकुण्डलाय। भीमाय। भस्मदिग्धकलेबराय। प्रभञ्जनाय। लसद्बाहवे। वल्लभाय।

पुष्टिवर्धनाय। माल्यसङ्गाय। वृषारूढाय। जगदानन्दकारकाय। ओषधीशाय। अरुणाद्रीशाय। विश्वरूपाय। वराननाय। संवर्तरूपाय। अष्टरूपाय। पूतात्मने। सर्पवाहनाय (सर्ववाहनाय)। चिन्ताशोकप्रशमनाय नमः। ७८०

श्रीचिह्ननिनदप्रियाय नमः। रश्मिमते। भुवनेशाय (नेशानाय)। देवासुरनमस्कृताय। वृषाङ्काय। रमणीयाङ्गाय। चीर(वी)रपाणये। जयावहाय। शचीपतये। कलि(क्रतु)ध्वंसिने। सर्वशत्रुविनाशनाय। अक्षशौण्डाय। अप्रमेयाय। अर्काय। ऋग्वेदाय। त्रिपुरान्तकाय। मृत्युञ्जयाय। व्योमनाथाय। श्रीकण्ठाय। अनन्तभूषणाय नमः। ८००

यजुर्वेदाय नमः। सामपराय। सत्कर्त्रे। दुन्दुभीश्वराय। अब्जयोनये। क्षमारूपिणे। मुखराङ्घ्रिपतये। क्षमिणे। कृपानिधये। जागरूकाय। सोमवते। अमरेश्वराय। मीढुष्टमाय। यतीन्द्राय। स्मर्तृकल्मषनाशनाय। एकवीराय। क्ष्वेल कण्ठाय। सर्वविद्याविशारदाय। वैश्वानराय। वषट्काराय नमः। ८२०

रत्नसानुसभापतये नमः। सुरोत्तमाय (सर्वोत्तमाय।) चित्रभानवे। सदावैभवतत्पराय। विश्वदाय। जगतां नाथाय। मङ्गलाय। निगमालयाय। अज्ञातसम्भवाय। भिक्षवे। अद्वितीयाय। मदाधिकाय। महाकीर्तये। (महत्कीर्तये) चित्रगुप्ताय। वरदाय। वामनप्रियाय। शान्तप्रियाय। निरुद्योगाय। भक्तध्येयाय। अनिवर्तकाय (निवर्तकाय) नमः। ८४०

भक्तविज्ञप्तिसंज्ञात्रे नमः। वक्त्रे। गिरिवराकृतये। ज्ञानमुद्राय (ज्ञानप्रदाय)। मनोवासाय। क्षेम्याय। मोहविनाशकाय। शिवकामाय। देवाधीशाय (देवधीराय)। कपालिने। कुशलप्रभवे (कलशप्रभवे)। अहिर्बुध्न्याय। उर्वरीशाय।

सिन्धुराजाय। स्मरान्तकाय। नृत्तप्रियाय। सर्वबन्धवे। मनोभुवे। भक्तिदायकाय। प्रतिसूर्याय नमः। ८६०

विनिर्मुक्ताय नमः। प्रहिताय। द्विफलप्रदाय। जगद्विभवे। सुसन्दात्रे। शंभवे। नित्योत्सवाय। हराय। वरेण्याय। शम्बराय। अनन्ताय। सदाचाराय। विचक्षणाय। असाध्यसाधकाय। स्वच्छाय। साधवे। सर्वोपकारकाय। निरवद्याय। अप्रतिहताय। शिवाय नमः। ८८०

भक्तपरायणाय नमः। अरूपाय। बहुरूपाय। दक्षयज्ञ-विनाशनाय। कैलासवासिने। कामारये। आहूयैश्वर्यदायकाय। आदिकारणाय। अव्यक्ताय। त्र्यक्षाय। विषमलोचनाय। आत्मेशाय। बहुपुत्राय। बृहते। संसारनाशनाय। आशाविहीनाय। सन्धिष्णवे। सूरये। ऐश्वर्यकारकाय (दायकाय)। भक्तार्तिहृते नमः। ९००

विश्वरूपाय नमः। सोमसूर्याग्निलोचनाय नमः। अमरेड्याय। महाकालाय। निराभासाय। निराकृतये। समस्तदेवतामूर्तये। सकलागमकारणाय। सर्वसाम्राज्यनिपुणाय। कर्ममार्गप्रवर्तकाय। अगोचराय। वज्रधराय। सर्वात्मने। अनलनायकाय। सुहृदग्रचराय। सिद्धाय। ज्ञानमुद्राय। गणाधिपाय। चक्षुःपुष्पार्चिताय। अर्थज्ञाय नमः। ९२०

वाञ्छितार्थफलप्रदाय नमः। निर्विग्रहाय। असमानाय। स्वतन्त्राय। जीवतारकाय। स्वेच्छापराय। सदैकान्तिने (स्कान्दये-एकान्तये)। देवसिंहासनाधिपाय। निस्सङ्गाय। अनादये। अकुलाय। कुलकर्त्रे। कुलेश्वराय। दिगम्बराय। अर्धनारीशाय। गजचर्माम्बरावृताय। अनर्घ्यरत्न संपूर्णभूषणाय। सिद्धविग्रहाय। अन्तर्हिताय। सर्वेशाय नमः। ९४०

मल्लिका कुसुमप्रियाय नमः । निराकुलाय । वेदमूर्तये । सर्वत्रसुखदर्शनाय । विवादहर्त्रे । सर्वात्मने । कालाय । कालविवर्जिताय । अनेकाडम्बराय । शौरये । कर्पूराकृतिविग्रहाय । सहस्रबाहवे । सर्वेशाय । सहस्रावयवान्विताय । सहस्रमूर्ध्ने । सर्वात्मने । सहस्राक्षाय । सहस्रपदे । विश्वाधिकाय । पशुपतये नमः । ९६०

पशुपाशविमोचकाय नमः । सर्वरक्षाकृतये । साक्षिणे । सच्चिदात्मने । कृपानिधये । ज्वालाकोटिसहस्राढ्याय । ब्रह्मविष्णुगुरवे । हराय । मन्दस्मिताननाय । वाग्मिने । कालानलसमप्रभाय । प्रदक्षिणप्रियाय (प्रियप्रदक्षिणाय) । ब्रह्मविष्ण्वदृष्टशिरःपदाय । अष्टमूर्तये । दीप्तमूर्तये । नामोच्चारण-मुक्तिदाय । अपीतकुचदेवीशाय । सकलागमविग्रहाय । विश्वातीताय । विश्वकर्त्रे नमः । ९८०

विश्वरक्षामणये नमः । विभवे । विश्वरूपाय । विश्वनेत्राय । विश्वेशाय । विश्वकारणाय । योगिध्येयाय । योगिनिष्ठाय । योगात्मने । योगवित्तमाय । ओंकाररूपाय । भगवते । सिन्धुनादमयाय । शिवाय । धीराय । विधात्रे । सत्कर्त्रे । विधिविष्णुरणापहाय । सर्वाक्षराकृतये । चतुर्मुखादि संस्तुताय । (भिःस्तुत्याय) १०००

सदाषोडशवार्षिकाय । दिव्यकेलीसमायुक्ताय । चतुर्वर्गफलप्रदाय । निरञ्जनाय । दिव्यमाल्याम्बरावृताय । देवतासार्वभौमाय । जलन्धरहराय । नटिने । तप्तचामीकरप्रभाय । सहस्रादित्यसङ्काशाय । कृतदावानलाकृतये । निर्विकाराय । निर्विकल्पाय । सुकान्तये । श्रीमच्छोणाचलाधीशाय । अजाय । अभयाय । अमराय । अमृताय । १०१९

—*—*—

# श्रीशरभसहस्रनामस्तोत्रम्

श्रीशिव उवाच ॥

अस्य श्री शरभ सहस्रनाम-स्तोत्र-मंत्रस्य, कालाग्निरुद्रो वामदेव ऋषिः, अनुष्टुप्छन्दः, शरभ-सालुवो देवता, ह्स्रां बीजं, स्वाहा शक्तिः, फट्-कीलकं, शरभ-सालुव प्रसादसिद्ध्यर्थे जपे विनियोगः ॥

ओं ह्स्रां अंगुष्ठाभ्यां नमः ——— हृदयाय नमः
ओं ह्स्रीं तर्जनीभ्यां नमः ——— शिरसे स्वाहा
ओं ह्स्रूं मध्यमाभ्यां नमः ——— शिखायै वषट्
ओं ह्स्रैं अनामिकाभ्यां नमः ——— कवचाय हुम्
ओं ह्स्रौं कनिष्ठिकाभ्यां नमः ——— नेत्रत्रयाय वौषट्
ओं ह्स्रः करतल-करपृष्ठाभ्यां नमः ——— अस्त्राय फट्
ओं भूर्भु वःस्वरोम् इति दिग्बन्धः ।

ध्यानम् ॥

क्वाकाशः क समीरणः क दहनः कापः क विश्वंभरः
क ब्रह्मा क जनार्दनः क तरणिः केन्दुः क देवासुराः ।
कल्पान्ते शरभेश्वरः प्रमुदितः श्रीसिद्धयोगीश्वरः
क्रीडा-नाटक-नायको विजयते देवो महासालुवः ॥१॥

लं पृथिव्यादि पंचोपचारैः संपूजयेत् ।

श्री भैरव उवाच ॥

श्रीनाथो रेणुकानाथो जगन्नाथो जनाश्रयः ।
श्रीगुरुर्गु रुगम्यश्च गुरुरूमः कृपानिधिः ॥ १ ॥

हिरण्यबाहुः सेनानी र्दिक्पतिस्तरुराट्हरः ।
हरिकेशः पशुपतिर्महान्सस्पिञ्जरो मृडः ॥ २ ॥

गणेशो गणनाथश्च गणपूज्यो गणाश्रयः ।
विव्याधी बभ्लुशः श्रेष्ठः परमात्मा सनातनः ॥ ३ ॥

पीठेशः पीठरूपश्च पीठपूज्यः सुखावहः ।
सर्वाधिको जगत्कर्ता पुष्टेशो नंदिकेश्वरः ॥ ४ ॥

भैरवो भैरव-श्रेष्ठो भैरवायुधधारकः ।
आततावी महारुद्रः संसारार्कसुरेश्वरः ॥ ५ ॥

सिद्धः सिद्धिप्रदः साध्यः सिद्धमण्डलपूजितः ।
उपवीती महानात्मा क्षेत्रेशो वननायकः ॥ ६ ॥

बहुरूपो बहुस्वामी बहुपालनकारणः ।
रोहितः स्थपतिः सूतो वाणिजो मंत्रिरुन्नतः ॥ ७ ॥

पदरूपः पदप्राप्तः पदेशः पदनायकः ।
कक्षेशो हुतभुग् देवो भुवंतिर्वारिवस्कृतः ॥ ८ ॥

दूतिक्रमो दूतिनाथः शांभवः शंकरः प्रभुः ।
उच्चैर्घोषो घोषरूपः पत्तीशः पाशमोचकः ॥ ९ ॥

वीरो वीर्यप्रदः शूरो वीरेशवरदायकः ।
ओषधीशः पञ्चवक्त्रः कृत्स्नवीतो भयानकः ॥ १० ॥

वीरनाथो वीररूपो वीरहाऽऽयुधधारकः ।
सहमानः स्वर्णरेता निव्याधी निरुपप्लवः ॥ ११ ॥

चतुराश्रमनिष्ठश्च चतुर्मूर्तिश्चतुर्भुजः ।
आव्याधिनीशः ककुभो निषंगी स्तेनरक्षकः ॥ १२ ॥

षष्टीशो घटिकारूपः फलसंकेतवर्धकः ।
मंत्रात्मा तस्कराध्यक्षो वंचकः परिवंचकः ॥ १३ ॥

नवनाथो नवांकस्थो नवचक्रेश्वरो विभुः ।
अरण्येशः परिचरो निचेरुःस्तायुरक्षकः ॥ १४ ॥

वीरावलीप्रियः शांतो युद्ध-विक्रम-दर्शकः ।
प्रकृतेशो गिरिचरः कुलुंचेशो गुहेष्टदः ॥ १५ ॥

पञ्चपञ्चकतत्वस्थस्तत्वातीतस्वरूपकः ।
भवः शर्वो नीलकंठः कपर्दी त्रिपुरांतकः ॥ १६ ॥

श्रीमन्त्रः श्रीकलानाथः श्रेयोदः श्रेयो वारिधिः ।
मुक्तकेशो गिरिशयः सहस्राक्षः सहस्रपात् ॥ १७ ॥

मालाधरो मनःश्रेष्ठो मुनिमानसहंसकः ।
शिपिविष्टश्चन्द्रमौलिर्हंसो मीढुष्टमोऽनघः ॥ १८ ॥

मन्त्रराजो मन्त्ररूपो मन्त्रपुण्यफलप्रदः ।
ऊर्व्यः सूर्म्यैध्रियः शीभ्यः प्रथमः पावकाकृतिः ॥ १९ ॥

गुरुमण्डलरूपस्थो गुरुमण्डलकारणः ।
अचरस्तारकस्तारोऽवस्वन्योऽनंतविग्रहः ॥ २० ॥

तिथि-मण्डल-रूपश्च वृद्धि-क्षयविवर्जितः ।
द्वीप्यः स्रोतस्य ईशानो धुर्यो गव्यगतोदय[1]: ॥ २१ ॥

प्रथमः प्रथमाकारो द्वितीयः शक्तिसंयुतः ।
गुणत्रय तृतीयोऽसौ युगरूपचतुर्थकः ॥ २२ ॥

1. भव्यकथोदयः

पूर्वजोऽ वरजो ज्येष्ठः कनिष्ठो विश्वलोचनः ।
पञ्चभूतात्मसाक्षीशो ऋतुःषड्गुणभावनः ॥ २३ ॥

अप्रगल्भो मध्यमोर्म्यो जघन्योऽजघन्यः शुभः ।
सप्तधातुस्वरूपश्चाष्टमहासिद्धिसिद्धिदः ॥ २४ ॥

प्रतिस[1]र्पोऽनन्तरूपः सोभ्यो याम्यः सुराश्रयः ।
नवनाथ-नवमीस्थो[2] दशदिग्रूपधारकः ॥ २५ ॥

रुद्र एकादशाकारो द्वादशादित्यरूपकः ।
वन्योऽवसान्यः पूतात्मा श्रवः कक्षः प्रतिश्रवाः ॥ २६ ॥

व्यंजनो व्यंजनातीतो[3] विसर्गः स्वरभूषणः ।
आशुषेणो महासेनो महावीरो महारथः ॥ २७ ॥

अनंत अव्यय आद्य आदिशक्ति-वरप्रदः ।
श्रुतसेनः श्रुतसाक्षी कवची वशकृद्वशः ॥ २८ ॥

आनंदश्चाद्यसंस्थान आद्यकारणलक्षणः ।
आहनन्योऽनन्यनाथो दुं दुभ्यो दुष्टनाशनः ॥ २९ ॥

कर्ता कारयिता कार्यः कार्यकारणभावगः ।
धृष्णुः प्रमृश ईड्यात्मा वदान्यो वेदसम्मत[4]: ॥ ३० ॥

कलानाथः कलातीतः काव्य-नाटक-बोधकः ।
तीक्ष्णेषुपाणिः[5] प्रहितः स्वायुधः शस्त्रविक्रमः ॥ ३१ ॥

कालहन्ता कालसाध्यः कालचक्रप्रवर्तकः ।
सुधन्वा सुप्रसन्नात्मा प्रविविक्तः सदागतिः ॥ ३२ ॥

1. प्रतिसूर्यो 2. नवनाथो नवार्थस्थः । 3. वञ्जनो वञ्जनातीतः 4. वेदवित्तमः । 5. तीक्ष्णेषुर्वाणीविधृतः

कालाग्निरुद्र-संदीप्तः कालांतकभयंकरः ।
खड्गीशः खड्गनाथश्च खड्गशक्ति परायणः ।। ३३ ।।

गर्वघ्नः शत्रुसंहर्ता गमागमविवर्जितः ।
यज्ञकर्मफलाध्यक्षो यज्ञमूर्तिरनातुरः ।। ३४ ।।

घनश्यामो घनानंदी घनाधारप्रवर्तकः ।
घनकर्ता घनत्राता घनबीजसमुत्थितः ।। ३५ ।।

लोप्यो लप्यः पर्णशद्यः पर्ण्यः पूर्णः पुरातनः ।
डकारसंधि-साध्यान्तो वेदवर्णनसांगकः ।। ३६ ।।

भूतो भूतपतिर्भूपो भूधरो भूधरायुधः ।
छंदः सारः छंदकर्ता छंद अन्वयधारकः ।। ३७ ।।

भूतसंगो भूतमूर्तिर्भू तिहा भूतिभूषणः ।
छत्रसिंहासनाधीशो भक्तच्छत्रसमृद्धिमान् ।। ३८ ।।

मदनो मादको माद्यो मधुहा मधुरप्रियः ।
जपो जपप्रियो जप्यो जपसिद्धिप्रदायकः ।। ३९ ।।

जपसंख्यो जपाकारः सर्वमन्त्रजपप्रियः ।
मधुर्मधुकरः शूरो मधुरो मदनांतकः ।। ४० ।।

झषरूपधरो देवो झषवृद्धिविवर्धकः ।
यमशासनकर्ता च यमपूज्यो यमाधिपः ।। ४१ ।।

निरंजनो निराधारो निर्लिप्तो निरुपाधिकः ।
टंकायुधः शिवप्रीतष्टंकारो लाङ्गलाश्रयः ।। ४२ ।।

निष्प्रपञ्चो निराकारो निरीहो निरुपद्रवः ।
सपर्याप्रतिडामर्यो मन्त्रडामरस्थापकः ।। ४३ ।।

सत्त्वं सत्त्वगुणोपेतः सत्त्ववित्सत्त्ववित्प्रियः ।
सदाशिवो ह्यु ग्ररूपः पक्षविक्षिप्तभूधरः ।। ४४ ।।

धनदो धननाथश्च धनधान्यप्रदायकः ।
''नमो रुद्राय रौद्राय महोग्राय च मीढुषे'' ।। ४५ ।।

नाद-ज्ञानरतो नित्यो नादांत-पद-दायकः ।
फलरूपः फलातीतः फलं अक्षर-लक्षणः ।। ४६ ।।

(ओं) श्रीं ह्रीं क्लीं सर्वभूताद्यो भूतिहा भूतिभूषणः ।
रुद्राक्षमालाभरणो रुद्राक्षप्रियवत्सलः ।। ४७ ।।

रुद्राक्षवक्षा रुद्राक्षरूपो रुद्राक्षभूषणः ।
फलदः फलदाता च फलकर्ता फलप्रियः ।। ४८ ।।

फलाश्रयः फलातीतः फलमूर्तिर्निरंजनः ।

बलानंदो बलग्रामो बलीशो बलनायकः ।। ४९ ।।

(ओं)खें खां घ्रां ह्रां वीरभद्रः सम्राट्-दक्ष-मखांतकः ।
भविष्यज्ञो भयत्राता भयकर्ता भयारिहा ।। ५० ।।

विघ्नेश्वरो विघ्नहर्ता गुरुर्देवशिखामणिः ।
भावनारूपध्यानस्थो भावार्थफलदायकः ।। ५१ ।।

(ओं) श्रीं ह्रीं कल्पित-कल्पस्थः कल्पना-पूरणालयः ।
भुजंग-विलसत्कंठो भुजंगाभरणप्रियः ।। ५२ ।।

(ओं) ह्रीं ह्रूं मोहनकृत्कर्ता छन्दमानसतोषकः ।
मानातीतः स्वयं मान्यो भक्तमानससंश्रयः ।। ५३ ।।

नागेन्द्र-चर्म-वसनो नारसिंह-निपातनः ।
रकारः अग्निबीजस्थः अपमृत्युविनाशनः ।। ५४ ।।

(ओं) [1] प्रें प्रें प्रें प्रें ह्रां दुष्टेष्टो मृत्युहा मृत्युपूजितः ।
व्यक्तो व्यक्ततमोऽव्यक्तो रतिलावण्य-सुंदरः ॥ ५५ ॥

रतिनाथो रतिप्रीतो निधनेशो धनाधिपः ।
रमाप्रियकरो रम्यो लिंगो लिंगात्मविग्रहः ॥ ५६ ॥

(ओं)क्ष्रों क्ष्रों क्ष्रों क्ष्रों ग्रहाकारो रत्नविक्रयविग्रहः ।
ग्रहकृद् ग्रहभृद् ग्राही गृहाद् गृहविलक्षणः ॥ ५७ ॥

''ओं नमः पक्षिराजाय दावाग्निरूपरूपकाय ।
घोरपातकनाशाय [2] सूर्यमण्डलसुप्रभः ॥ ५८ ॥

पवनः पावको वामो महाकालो महापहः ।
वर्धमानो वृद्धिरूपो विश्वभक्तिप्रियोत्तमः ॥ ५९ ॥

ओं हूं हूं सर्वगः सर्वः सर्वजित्सर्वनायकः ।
जगदेकप्रभुः स्वामी जगद्वंद्यो जगन्मयः ॥ ६० ॥

सर्वान्तरः सर्वव्यापी सर्वकर्मप्रवर्तकः ।
जगदानंददो जन्म-जरा-मरण-वर्जितः ॥ ६१ ॥

सर्वार्थसाधकः साध्य-सिद्धिः साधक-साधकः ।
खट्वांगी नीतिमान्सत्यो देवतात्मात्मसंभवः ॥ ६२ ॥

हविर्भोक्ता हविःप्रीतो हव्यवाहनहव्यकृत् ।
कपालमालाभरणः कपाली विष्णुवल्लभः ॥ ६३ ॥

ओं ह्रीं [3]प्रवेश रोगघ्नः स्थूलास्थूलविशारदः ।
कलाधीशस्त्रिकालज्ञो दुष्टावग्रहकारकः ॥ ६४ ॥

---

1. प्रें प्रैं प्रों प्रहृष्टेष्टदः 2. ''शरभ-शाल्वाय हुं फट् ।'' 3. प्रों वं शं शरण्यः

(ओं)हुं हुं हुं हुं नटवरो महानाट्यविशारदः ।
क्षमाकरः क्षमानाथः क्षमापूरितलोचनः ॥ ६५ ॥

वृषांको वृषभाधीशः क्षमासाधनसाधकः ।
क्षमाचिंतनसुप्रीतो वृषात्मा वृषभध्वजः ॥ ६६ ॥

(ओं) क्रों क्रों क्रों क्रों महाकायो महावक्षा महाभुजः ।
मूलाधारनिवासश्च गणेशः सिद्धिदायकः ॥ ६७ ॥

महास्कंधो महाग्रीवो महद्वक्त्रो महच्छिरः ।
महदोष्ठो महौदर्यो महादंष्ट्रो महाहनुः ॥ ६८ ॥

सुंदरभ्रूः सुनयनः षट्चक्रो [1]वर्णलक्षणः ।
मणिपूरे महाविष्णुः सुललाटः सुकंधरः ॥ ६९ ॥

सत्यवाक्यो धर्मवेत्ता प्रजासर्जन-कारणः ।
स्वाधिष्ठाने रुद्ररूपः सत्यज्ञः सत्यविक्रमः ॥ ७० ॥

ग्लों ग्लों ग्लों ग्लों महादेव द्रव्य-शक्ति-समाहितः ।
कृतज्ञः कृतकृत्यात्मा कृतकृत्यः कृतागमः ॥ ७१ ॥

(ओं)हं हं हं हं गुरुरूपो हंस-मन्त्रार्थमंत्रकः ।
व्रतकृद् व्रतविच्छ्रेष्ठो व्रतविद्वान्महाव्रती ॥ ७२ ॥

सहस्रारे सहस्राक्षः व्रताधारो व्रतेश्वरः ।
व्रतप्रीतो व्रताकारो व्रतनिर्वाणदर्शकः ॥ ७३ ॥

''ओं ह्रीं हूं क्लीं श्रीं क्लीं ह्रीं फट् स्वाहा'' ।
अतिरागी वीतरागः कैलासेऽनाहतध्वनिः ।
मायापूरकयंत्रस्थो रागहेतुर्विरागवित् ॥ ७४ ॥

1. सर्वलक्षणः

रागघ्नो रागशमनो लंबकाश्यभिषिश्वनः[1] ।
सहस्रदलगर्भस्थः चन्द्रिकाद्रवसंयुतः ।। ७५ ।।

अंतनिष्ठो महाबुद्धि प्रदाता नीतिवित्प्रियः[2] ।
नीतिकृन्नीतिविन्नीतिरंतर्याग-स्वयंसुखी ।। ७६ ।।

विनीतवत्सलो नीतिस्वरूपो नीतिसंश्रयः ।
स्वभावो यन्त्रसंचारस्तन्तुरूपोऽमलच्छविः ।। ७७ ।।

क्षेत्रकर्मप्रवीणश्च क्षेत्रकीर्त[3]नवर्धनः ।
क्रोधजित्क्रोधनः क्रोधिजनवित् क्रोधरूपधृत् ।। ७८ ।।

विश्वरूपो विश्वकर्ता चैतन्यो यन्त्रमालिकः ।
मुनिध्येयो मुनित्राता शिवधर्मधुरंधरः ।। ७९ ।।

धर्मज्ञो धर्मसंबंधि ध्वांतघ्नो ध्वांतसंशयः ।
इच्छा-ज्ञान-क्रियातीत-प्रभावः पार्वतीपतिः ।। ८० ।।

हं हं हं हं लतारूपः कल्पनावांछितप्रदः ।
कल्पवृक्षः कल्पनस्थः पुण्यश्लोकप्रयोजकः ।। ८१ ।।

प्रदीप-निर्मल प्रौढः परमः परमागमः ।
(ओं)ज्रं ज्रं ज्रं सर्वसंक्षोभ सर्वसंहारकारकः ।। ८२ ।।

क्रोधदः क्रोधहा क्रोधि जनहा क्रोधकारणः ।
गुणवान् गुणविच्छ्रेष्ठो वीर्यविद्वीर्यसंश्रयः ।। ८३ ।।

गुणाधारो गुणाकारः सत्त्व-कल्याणदेशिकः ।
सत्वरः सत्त्वविद्भावः सत्य-विज्ञान-लोचनः ।। ८४ ।।

---

1. रञ्जको रागवर्जितः । 2. नीतिसंश्रयः 3. क्षेत्रकर्तन

''ओं ह्रां ह्रीं ह्रूं क्लीं श्रीं ब्लूं प्रों ओं ह्रीं क्रों हुं फट् स्वाहा''

वीर्याकारो वीर्यकरच्छिन्नमूलो महाजयः ।
अविच्छिन्न-प्रभावश्रीः वीर्यहा वीर्यवर्धकः ।। ८५ ।।

कालवित्कालकृत्कालो बलप्रमथनो बली ।
छिन्नपापश्छिन्नपाशो विच्छिन्नभययातनः ।। ८६ ।।

मनोन्मनो मनोरूपो विच्छिन्नभयनाशनः ।
विच्छिन्नसंगसंकल्पो बलप्रमथनो बलः ।। ८७ ।।

विद्याप्रदाता विद्येशः शुद्धबोधसदोदितः[1] ।
शुद्धबोधविशुद्धात्मा विद्यामन्त्रैकसंश्रयः ।। ८८ ।।

शुद्धसत्त्वो विशुद्धांतविद्यावेद्यो विशारदः ।
वीर्यवान्वीर्यविच्छ्रेष्ठः सत्त्वविद्यावबोधकः[2] ।। ८९ ।।

अविनाशो निराभासो विशुद्धज्ञानगोचरः ।
ओं ह्रीं श्रीं ऐं सौः शिवं कुरु कुरु स्वाहा ।
संसार-यन्त्र-वाहाय महायन्त्रप्रवर्तिने ।। ९० ।।

''नमः श्री-व्योम-सूर्याय मूर्ति वैचित्र्यहेतवे'' ।
जगज्जीवो जगत्प्राणो जगदात्मा जगद्गुरुः ।। ९१ ।।

आनंदरूप-नित्यस्थः प्रकाशानंदरूपकः ।
योग-ज्ञान-महाराजो योगज्ञान-महाशिवः ।। ९२ ।।

अखण्डानंददाता च पूर्णानंद-स्वरूपवान् ।
''वरदायाविकाराय सर्वकारणहेतवे ।। ९३ ।।

कपालिने करालाय पतये पुण्यकीर्तये ।

1. शुद्धबोधसुबोधितः । 2. वीर्यविद्वीर्य संश्रयः ।

अघोरायाग्निनेत्राय दण्डिने घोररूपिणे ॥ ९४ ॥

भिषग्गण्याय चण्डाय नकुलीशाय शंभवे।
हुं क्षुं रूं क्लीं सिद्धाय नमः'' ।
घंटारवः सिद्धगण्डो गजघंटा-ध्वनिप्रियः ॥ ९५ ॥

गगनाख्यो गजावासो गरलांशो गणेश्वरः ।
सर्वपक्षि-मृगाकारः सर्वपक्षिमृगाधिपः ॥ ९६ ॥

चित्रो विचित्रसंकल्पो विचित्रो विशदोदयः ।
निर्भवो भवनाशश्च निर्विकल्पो विकल्पकृत् ॥ ९७ ॥

कक्षाविसलकः[1] कर्त्ता कोविदः कामशासनः ।
निन्दाद्वेषादिकर्ता च निन्दाद्वेषापहारकः ॥ ९८ ॥

कालाग्निरुद्रः सर्वेशः शमरूपः शमेश्वरः ।
प्रलयानलकृद्धव्यः प्रलयानलशासनः ॥ ९९ ॥

त्रियंबकोऽरिषड्वर्गनाशको धनदप्रियः ।
अक्षोभ्यः क्षोभरहितः क्षोभदः क्षोभनाशकः ॥ १०० ॥

(ओं) ''प्रां प्रीं प्रूं प्रैं प्रौं प्रः मणिमंत्रौषधादीनां शक्तिरूपाय शंभवे।
अप्रमेयाय देवाय वषट् स्वाहा स्वधात्मने'' ॥

द्युमूर्धा दशदिग्बाहुश्चन्द्रसूर्याग्निलोचनः ।
पातालांघ्रिरिलाकुक्षिः खंमुखो गगनोदरः ॥ १०१ ॥

कलानादः कलाबिंदुः कलाज्योतिः सनातनः ।
अलौकिककलोदारः कैवल्यपददायकः ॥ १०२ ॥

---

1. अक्षवित्पुलकः

कौल्यः कुलेशः कुलजः कविः कर्पूरभास्वरः ।
कामेश्वरः कृपासिंधुः कुशलः कुलभूषणः ॥ १०३ ॥

कौपीनवसनः कांतः केवलः कल्पपादपः ।
कुन्देन्दु-शंखधवलो भस्मोद्धूलितविग्रहः ॥ १०४ ॥

भस्माभरणहृष्टात्मा दुष्टपुष्टारिसूदनः[1] ।
स्थाणुर्दिगंबरो भर्गो भगनेत्रभिदुज्ज्वलः ॥ १०५ ॥

त्रिकाग्निकालः कालाग्निरद्वितीयो महायशाः ।
सामप्रियः सामकर्ता सामगः सामगप्रियः ॥ १०६ ॥

धीरोदात्तो महाधीरो धैर्यदो धैर्यवर्धकः ।
लावण्यराशिः सर्वज्ञः सुबुद्धिर्बुद्धिमद्वरः ॥ १०७ ॥

तारणाश्रयरूपस्थस्तारणाश्रयदायकः ।
तारकस्तारकस्वामी तारणस्तारणप्रियः ॥ १०८ ॥

एकतारो द्वितारश्च तृतीयो मातृकाश्रयः ।
एकरूपश्चैकनाथो बहुरूपस्वरूपवान् ॥ १०९ ॥

लोकसाक्षी त्रिलोकेशस्त्रिगुणातीतमूर्तिमान् ।
बालस्तारुण्यरूपस्थो वृद्धरूपप्रदर्शकः ॥ ११० ॥

अवस्थात्रय-भूतस्थो अवस्था-त्रयवर्जितः ।
वाच्य-वाचक-भावार्थो वाक्यार्थप्रियमानसः ॥ १११ ॥

सोहं वाक्यप्रमाणस्थो महावाक्यार्थबोधकः ।
परमाणु प्रमाणस्थः कोटिब्रह्माण्डनायकः ॥ ११२ ॥

---

1. षड्भिरावृतः

"ओं हं हं हं हं ह्रीं वामदेवाय नमः" ।
कपर्दी केसरी कालः कल्पनारहिताकृतिः ॥ ११३ ॥

खखेलः खेचरः ख्यातः खन्यवादी खमुद्गतः ।
खांबरः खंडपरशुः खचक्षुः खगलोचनः ॥ ११४ ॥

अखंडब्रह्मखंडश्रीरखंडज्योतिरव्ययः ।
षट्चक्रखेलनः स्रष्टा षट्ज्योतिः षट्गिरार्चितः[1] ॥

गरिष्ठो गोपतिर्गोप्ता गंभीरो ब्रह्मगोलकः ।
गोवर्धनगतिर्गोविद् गवातीतो गुणाकरः ॥ ११६ ॥

गंगाधरोऽङ्गसंगम्यो गैंकारो गट्करागमः[2] ।
कर्पूरगौरो गौरीशो गौरी-गुरु-गुहाशयः ॥ ११७ ॥

धूर्जटिः पिंगलजटो जटामण्डलमण्डितः ।
मनोजवो जीवहेतुरंधकासुरसूदनः ॥ ११८ ॥

लोकबन्धुः कलाधार[3]ः पाण्डुरः प्रमथाधिपः ।
अव्यक्तलक्षणो योगी योगीशो योगिपुंगवः ॥ ११९ ॥

भूतावासो जनावासः सुरावासः सुमङ्गलः ।
भववैद्यो योगिवैद्यो योगिसिंहहृदासनः ॥ १२० ॥

युगावासो युगाधीशो युगकृद्युगवन्दितः ।
किरीटालीढबालेन्दुः मणिकङ्कणभूषितः ॥ १२१ ॥

रत्नाङ्गरागो रत्नेशो रत्नरंजितपादुकः ।
नवरत्नगणोपेतकिरीटो रत्नकञ्चुकः ॥ १२२ ॥

1. षड्भिरावृताय 2. गह्वरागमः 3. लोकधरः

नानाविधानेकरत्नलसत्कुण्डलमण्डितः ।
दिव्यरत्नगणोत्कीर्णकंठाभरणभूषितः ॥ १२३ ॥

नवफालमणिर्नासापुटभ्राजित-मौक्तिकः ।
रत्नाङ्गुलीयविलसत्करशाखा-नखप्रभः ॥ १२४ ॥

रत्नभ्राजद्धेमसूत्र-लसत्कटितटः पटुः ।
वामाङ्गभागविलसत्पार्वती-वीक्षणप्रियः ॥ १२५ ॥

लीलाविडंबितवपुर्भक्तमानसमन्दिरः ।
मन्द-मंदार-पुष्पौघ-लसद्वायुनिषेवितः ॥ १२६ ॥

कस्तूरीविलसत्फालो दिव्यवेषविराजितः ।
दिव्यदेहप्रभाकूट-संदीपित-दिगंतरः ॥ १२७ ॥

देवासुरगुरुस्तव्यो देवासुरनमस्कृतः ।
हंसराजः प्रभाकूट-पुण्डरीकनिभेक्षणः ॥ १२८ ॥

सर्वशास्त्रगणोपेतः सर्व-लोकेष्ट-भूषणः ।
सर्वेष्टदाता सर्वेष्टस्फुरन्मङ्गलविग्रहः ॥ १२९ ॥

अविद्यालेशरहितो नानाविद्यैकसंश्रयः ।
मूर्तीभवत्कृपापूरो भक्तेष्टफलपूरकः ॥ १३० ॥

संपूर्णकामः सौभाग्यनिधिः सौभाग्यदायकः ।
हितैषी हितकृत्सौम्यः परार्थैकप्रयोजकः ॥ १३१ ॥

शरणागतदीनार्तपरित्राणपरायणः ।
विष्वंचिता वषट्कारो भ्राजिष्णुर्भोजनं हविः ॥ १३२ ॥

भोक्ता भोजयिता जेता जितारिर्जितमानसः ।
अक्षरः कारणो रुद्धः शमदः शारदाप्लवः ॥ १३३ ॥

आज्ञापकश्च गंभीरः कविर्दु स्वप्ननाश[1]नः ।
पंचब्रह्मसमुत्पत्तिः क्षेत्रज्ञः क्षेत्रपालकः ॥ १३४ ॥

व्योमकेशो भीमवेषो गौरीपतिरनामयः ।
भवाब्धितरणोपायो भगवान्भक्तवत्सलः ॥ १३५ ॥

वरो वरिष्ठस्तेजिष्ठः प्रियाप्रियवधः सुधीः ।
यन्ताऽयविष्ठः क्षोदिष्ठो यविष्ठो यमशासन[2]ः ॥ १३६ ॥

हिरण्यगर्भो हेमाङ्गो हेमरूपो हिरण्यदः ।
ब्रह्मज्योतिरनावेक्ष्यश्चामुण्डाजनको रविः ॥ १३७ ॥

मोक्षार्थिजनसंसेव्यो मोक्षदो मोक्षनायकः ।
महाश्मशान-निलयो वेदाश्वो भूरथस्थिरः ॥ १३८ ॥

मृगव्याधो धर्मधाम प्रभिन्नस्फटिक प्रभः ।
सर्वज्ञः परमात्मा च ब्रह्मानंदाश्रयो विभुः ॥ १३९ ॥

शरभेशो महादेवः परब्रह्म सदाशिवः ।
स्वराविष्कृतिकर्ता च स्वरातीतः स्वयंविभुः ॥ १४० ॥

स्वर्गतः स्वर्गतेर्दाता नियंता नियताश्रयः ।
भूमिरूपो भूमिकर्ता भूधरो भूधराश्रयः ॥ १४१ ॥

भूतनाथो भूतकर्ता भूतसंहारकारकः ।
भविष्यज्ञो भवत्राता भवदो भवहारकः ॥ १४२ ॥

वरदो वरदाता च वरप्रीतो वरप्रदः ।
कूटस्थः कूटरूपश्च त्रिकूटो मन्त्रविग्रहः ॥ १४३ ॥

---

1. कलिदुः स्वप्न 2. रविक्रोधतिरस्कृतः ।

मन्त्रार्थो मन्त्रगम्यश्च मन्त्रेशो मन्त्रभागकः ।
सिद्धमन्त्रः सिद्धिंदाता जपसिद्धिस्वभावकः ।। १४३ ।।

नामातिगो नामरूपो नामरूपगुणाश्रयः ।
गुणकर्ता गुणत्राता गुणातीतो गुणारिहा ।। १४५ ।।

गुणग्रामो गुणाधीशः गुणनिर्गुणकारकः ।
अकार-मातृकारूपः अकारातीतभावनः ।। १४६ ।।

परमैश्वर्यदाता च परमप्रीतिदायकः ।
परमः परमानंदः परानंदः परात्परः ।। १४७ ।।

वैकुण्ठपीठमध्यस्थो वैकुण्ठो विष्णुविग्रहः ।
कैलासवासी कैलासे शिवरूपः शिवप्रदः ।। १४८ ।।

जटाजूटोद्भूषितांगो भस्म-धूसरभूषणः ।
दिग्वासाः दिग्विभागश्च दिगंतरनिवासकः ।। १४९ ।।

ध्यानकर्ता ध्यानमूर्तिर्धारणाधारणप्रियः ।
जीवन्मुक्तिपुरीनाथो द्वादशांतस्थितप्रभुः ।। १५० ।।

तत्त्वस्थस्तत्त्वरूपस्थस्तत्त्वातीतोऽति-तत्वगः ।
तत्त्वसाम्यस्तत्त्वगम्यस्तत्त्वार्थसर्वदर्शकः ।। १५१ ।।

तत्त्वासनस्तत्त्वमार्गस्तत्त्वांतस्तत्वविग्रहः ।
दर्शनादतिगो दृश्यो दृश्यातीतातिदर्शकः ।। १५२ ।।

दर्शनो दर्शनातीतो भावनाकाररूपधृत् ।
मणिपर्वतसंस्थानो मणिभूषणभूषितः ।। १५३ ।।

मणिप्रीतो मणिश्रेष्ठो मणिस्थो मणिरूपकः ।
चिंतामणिगृहांतस्थः सर्वचिंताविवर्जितः ।। १५४ ।।

चिंताक्रातभक्तचिंत्यो चिंतनाकार-चिंतकः ।
अचिंत्यश्चिन्त्यरूपश्च निश्चिन्त्यो निश्चयात्मकः ॥

निश्चयो निश्चयाधीशो निश्चयात्मकदर्शकः ।
त्रिविक्रमस्त्रिकालज्ञस्त्रिमूर्तिस्त्रिपुरान्तकः ॥ १५६ ॥

ब्रह्मचारि व्रतप्रीतो गृहस्थो गृहवासकः ।
परंधाम परंब्रह्म परमात्मा परात्परः ॥ १५७ ॥

सर्वेश्वरः सर्वमयः सर्वसाक्षी विलक्षणः ।
मणिद्वीप द्वीपनाथो द्वीपांतो द्वीपलक्षणः ॥ १५८ ॥

सप्तसागरकर्ता च सप्तसागरनायकः ।
महीधरो महीभर्ता महीपालो महास्वनः ॥ १५९ ॥

महीव्याप्तोऽव्यक्तरूपः सुव्यक्तो व्यक्तभावनः ।
सुवेषाढ्यः सुखप्रीतः सुगमः सुगमाश्रयः ॥ १६० ॥

तापत्रयाग्निसन्तप्त समाह्लादन-चन्द्रमाः ।
तारणस्तापसाराध्यस्तनुमध्यस्तमोपहः ॥ १६१ ॥

पररूपः परध्येयः परदैवतदैवतः ।
ब्रह्मपूज्यो जगत्पूज्यो भक्तपूज्यो वरप्रदः ॥ १६२ ॥

अद्वैतो द्वैतचित्तश्च द्वैताद्वैतविवर्जितः ।
अभेद्यः सर्वभेद्यश्च भेद्यभेदकवेधकः ॥ १६३ ॥

लाक्षारससवर्णाभः प्लवंगमप्रियोत्तमः ।
शत्रुसंहारकर्ता च अवतारपरो हरः ॥ १६४ ॥

संविदीशः संविदात्मा संविज्ज्ञानप्रदायकः ।
संवित्कर्ता च भक्तश्च संविदानंदरूपवान् ॥ १६५ ॥

संशयातीतसंहार्यः सर्वसंशयहारकः ।
निःसंशयमनोध्येयः संशयात्मातिदूरगः ॥ १६६ ॥

शैवमंत्र शिवप्रीतदीक्षाशैवस्वभावकः ।
भूपतिः क्ष्माकृतो भूपो भूप-भूपत्वदायकः ॥ १६७ ॥

सर्वधर्मसमायुक्तः सर्वधर्मविवर्धकः ।
सर्वशास्ता सर्ववेदः सर्ववेत्ता सुतृप्तिमान् ॥ १६८ ॥

भक्तभावावतारश्च भुक्ति-मुक्ति-फलप्रदः ।
भक्त-सिद्धार्थ-सिद्धिश्च सिद्धि-बुद्धि-प्रदायकः ॥

वाराणसी-वासदाता वाराणसीवरप्रदः ।
वाराणसीनाथरूपो गंगामस्तकधारकः ॥ १७० ॥

पर्वताश्रयकर्ता च लिंग त्र्यंबकपर्वतः ।
लिंग-देहो लिंगपतिर्लिङ्गपूज्योऽतिदुर्लभः ॥ १७१ ॥

रुद्रप्रियो रुद्रसेव्य उग्ररूपो विराट्स्तुतः ।
मालारुद्राक्षभूषांगो जपरुद्राक्षतोषितः ॥ १७२ ॥

सत्यसत्यः सत्यदाता सत्यकर्ता सदाश्रयः ।
सत्यसाक्षी सत्यलक्ष्यो लक्ष्यातीतमनोहरः ॥ १७३ ॥

जनको जगतामीशो जनिता जननिश्चयः ।
सृष्टिस्थितः सृष्टिरूपी सृष्टिरूपस्थितिप्रदः ॥ १७४ ॥

संहाररूपः कालाग्निः कालसंहाररूपकः ।
सप्तपाताल-पादस्थो महदाकाश-शीर्षवान् ॥ १७५ ॥

अमृतश्चामृताकारः अमृतामृतरूपकः ।
अमृताकारचित्तस्थः अमृतोद्भवकारणः ॥ १७६ ॥

अमृताहारनित्यस्थस्त्वमृतोद्भवरूपवान् ।
अमृतांशोऽमृताधीशोऽमृतप्रीतिविवर्धनः ॥ १७७ ॥

अनिर्देश्यो अनिर्वाच्यो अनंगोऽनंगसंश्रयः ।
श्रेयोदः श्रेयो रूपश्च श्रेयोऽतीतफलोत्तमः ॥ १७८ ॥

सारः संसारसाक्षी च सारासारविचक्षणः ।
धारणातीतभावस्थो धारणान्वयगोचरः ॥ १७९ ॥

गोचरो गोचरातीतः अतीव प्रियगोचरः ।
प्रिय-प्रियः तथा स्वार्थी स्वार्थः स्वार्थफलप्रदः ॥१८०॥

अर्थार्थसाक्षी लक्षांशो लक्ष्यलक्षणविग्रहः ।
जगदीशो जगत्त्राता जगन्मयो जगद्गुरुः ॥ १८१ ॥

गुरुमूर्तिः स्वयंवेद्यो वेद्यवेदकरूपकः ।
रूपातीतो रूपकर्ता सर्वरूपार्थदायकः ॥ १८२ ॥

अर्थदस्त्वर्थमान्यश्च अर्थार्थी अर्थदायकः ।
विभवो वैभवः श्रेष्ठः सर्ववैभवदायकः ॥ १८३ ॥

चतुःषष्टि-कला-सूत्रः चतुःषष्टिकलामयः ।
पुराणश्रवणाकारः पुराणपुरुषोत्तमः ॥ १८४ ॥

पुरातन-पुराख्यातः पूर्वजः पूर्वपूर्वकः ।
मन्त्रतंत्रार्थसर्वज्ञः सर्वतंत्रप्रकाशकः ॥ १८५ ॥

तन्त्रवेत्ता तंत्रकर्ता तंत्रांतरनिवासकः ।
तंत्रगम्यस्तंत्रमान्यस्तंत्रयंत्रफलप्रदः ॥ १८६ ॥

सर्वतंत्रार्थतत्त्वज्ञस्तंत्रराजः स्वतंत्रकः ।
ब्रह्मांडकोटिकर्ता च ब्रह्मांडोदरपूरकः ॥ १८७ ॥

ब्रह्मांडदेशदाता च ब्रह्मज्ञानपरायणः ।
स्वयंभूः शम्भुरूपश्च हंसविग्रहनिस्पृहः ॥ १८८ ॥

श्वासनिःश्वासउच्छ्वासः सर्वसंशयहारकः ।
सोऽहंरूपस्वभावश्च सोऽहंरूपप्रदर्शकः ॥ १८९ ॥

सोऽहमस्मीति नित्यस्थः सोऽहं हंसः स्वरूपवान् ।
हंसोहंसः-स्वरूपश्च पक्षिराजो निरंजनः ॥ १९० ॥

अष्टाधिकसहस्रंतु नाम साहस्रमुत्तमम् ।
नित्यं संकीर्तनासक्तः कीर्तयेत्पुण्यवासरे ॥ १९१ ॥

संक्रातौ विषुवे चैव पौर्णमास्यां विशेषतः ।
अमावास्यां रविवारे त्रिःसप्तवारपाठकः ॥ १९२ ॥

स्वप्ने दर्शनमाप्नोति कार्याकार्येऽपि दृश्यते ।
रविवारे दशावृत्त्या रोगनाशो भविष्यति ॥ १९३ ॥

सर्वदा सर्वकामार्थी जपेदेतत्तु सर्वदा ।
यस्य स्मरण मात्रेण वैरिणां कुलनाशनम् ॥ १९४ ॥

भोगमोक्षप्रदं श्रेष्ठं भुक्ति मुक्ति- फलप्रदम् ।
सर्वपापप्रशमनं सर्वापस्मारनाशनम् ॥ १९५ ॥

राजचौरारि मृत्यूनां नाशनं जयवर्धनम् ।
मारणे सप्तरात्रं तु दक्षिणाभिमुखो जपेत् ॥ १९६ ॥

उदङ्मुखः सहस्रं तु रक्षणाय जपेन्निशि ।
पठतां शृण्वतां चैव सर्वदुःखविनाशकृत् ॥ १९७ ॥

धन्यं यशस्यमायुष्यमारोग्यं पुत्रवर्धनम् ।
योगसिद्धिप्रदं सम्यक् शिवं ज्ञानप्रकाशितम् ॥ १९८ ॥

शिवलोकैकसोपानं वांछितार्थैकसाधनम्।
विष-ग्रह्-क्षयकरं पुत्रपौत्राभिवर्धनम्॥ १९९॥

सदा दुःस्वप्नशमनं सर्वोत्पातनिवारणम्।
यावन्न दृश्यते देवि शरभो भयनाशकः॥ २००॥

तावन्न दृश्यते जाप्यं वृहदारण्यको भवेत्।
सहस्रनाम नाम्न्यस्मिन्नेकैकोच्चारणात्पृथक्॥ २०१॥

स्नातो भवति जाह्नव्यां दिव्या दृष्टिः स्थिरो भुवि।
सहस्रनाम सद्विद्यां शिवस्य परमात्मनः॥ २०२॥

योऽनुष्ठास्यति कल्पान्ते शिवकल्पो भविष्यति।
हिताय सर्वलोकानां शरभेश्वर भाषितम्॥ २०३॥

स ब्रह्मा स हरिः सोऽर्कः स शक्रो वरुणो यमः।
धनाध्यक्षः स भगवान् स चैकः सकलं जगत्॥ २०४॥

सुखाराध्यो महादेवस्तपसा येन तोषितः।
सर्वदा सर्वकामार्थं जपेत्सिध्यति सर्वदा॥ २०५॥

धनार्थी धनमाप्नोति यशोर्थी यश आप्नुयात्।
निष्कामः कीर्तयेन्नित्यं ब्रह्मज्ञानमयो भवेत्॥ २०६॥

बिल्वैर्वा तुलसीपुष्पैश्चंपकैर्वकुलादिभिः।
कल्हारैर्जातिकुसुमैरंबुजैर्वा तिलाक्षतैः॥ २०७॥

एभिर्नाम सहस्रैस्तु पूजयेद् भक्तिमान्नरः।
कुलं तारयते तेषां कल्पे कोटिशतैरपि॥ २०८॥

इति श्रीआकाशभैरवकल्पे श्री मच्छरभ-सहस्रनाम-स्तोत्रं नाम
अशीतितमोऽध्यायः

# श्रीशरभसहस्रनामावलिः ॥

श्रीनाथाय नमः । रेणुकानाथाय । जगन्नाथाय । जनाश्रयाय । श्रीगुरवे । गुरुगम्याय । गुरु रूपाय । कृपानिधये । हिरण्यबाह्वे । सेनान्ये । दिक्पतये । तरुराजे । हराय । हरिकेशाय । पशुपतये । महते । सस्पिञ्जराय । मृडाय । गणेशाय । गणनाथाय नमः । २०

गणपूज्याय नमः । गणाश्रयाय । विव्याधिने । बभ्लुशाय । श्रेष्ठाय । परमात्मने । सनातनाय । पीठेशाय । पीठरूपाय । पीठपूज्याय । सुखावहाय । सर्वाधिकाय । जगत्कर्त्रे । पुष्टेशाय । नन्दिकेश्वराय । भैरवाय । भैरवश्रेष्ठाय । भैरवायुधधारकाय । आततायिने । महारुद्राय नमः । ४०

संसारार्काय नमः । सुरेश्वराय । सिद्धाय । सिद्धिप्रदाय । साध्याय । सिद्धमण्डलपूजिताय । उपवीतिने । महते । आत्मने । क्षेत्रेशाय । वननायकाय । बहुरूपाय । बहुस्वामिने । बहुपालनकारणाय । रोहिताय । स्थपतये । सूताय । वाणिजाय । मन्त्रिणे । उन्नताय नमः । ६०

पदरूपाय नमः । पदप्राप्ताय । पदेशाय । पदनायकाय । कक्षेशाय । हुतभुजे । देवाय । भुवन्तये । वारिवस्कृताय । दूतिक्रमाय । दूतिनाथाय । शांभवाय । शंकराय । प्रभवे । उच्चैर्घोषाय । घोषरूपाय । पत्तीशाय । पाश(प) मोचकाय । वीराय । वीर्यप्रदाय नमः । ८०

शूराय नमः । वीरेशवरदायकाय । ओषधीशाय । पञ्चवक्त्राय । कृत्स्नवीताय । भयानकाय । वीरनाथाय ।

वीररूपाय। वीरघ्ने। आयुधधारकाय। सहमानाय। स्वर्णरेतसे। निर्व्याधिने। निरुपप्लवाय। चतुराश्रमनिष्ठाय। चतुर्मूर्तये। चतुर्भुजाय। आव्याधिनीशाय। ककुभाय। निषंगिणे नमः। १००

स्तेनरक्षकाय नमः। षष्टीशाय। घटिकारूपाय। फलसंकेतवर्धकाय। मन्त्रात्मने। तस्कराध्यक्षाय। वञ्चकाय। परिवञ्चकाय। नवनाथाय। नवांकस्थाय। नवचक्रेश्वराय। विभवे। अरण्येशाय। परिचराय। निचेरवे। स्तायुरक्षकाय। वीरावलीप्रियाय। शान्ताय। युद्धविक्रमदर्शकाय। प्रकृतेशाय नमः। १२०

गिरिचराय नमः। कुलुञ्चेशाय। गुहेष्टदाय। पञ्चपञ्चकतत्त्वस्थाय। तत्वातीतस्वरूपकाय। भवाय। शर्वाय। नीलकण्ठाय। कपर्दिने। त्रिपुरान्तकाय। श्रीमन्त्राय। श्रीकलानाथाय। श्रेयोदाय। श्रेयोवारिधये। मुक्तकेशाय। गिरिशयाय। सहस्राक्षाय। सहस्रपदे। मालाधराय। मनः श्रेष्ठाय नमः। १४०

मुनिमानसहंसकाय नमः। शिपिविष्टाय। चन्द्रमौलये। हंसिने। मीढुष्टमाय। अनघाय। मन्त्रराजाय। मन्त्ररूपाय। मन्त्रपुण्यफलप्रदाय। ऊर्व्याय। सूर्म्याय। ईध्रियाय। शीभ्याय। प्रथमाय। पावकाकृतये। गुरुमण्डल रूपस्थाय। गुरुमण्डलकारणाय। अचराय। तारकाय। ताराय नमः। १६०

अवस्वन्याय नमः। अनन्तविग्रहाय। तिथिमण्डलरूपाय। वृद्धिक्षयविवर्जिताय। द्वीप्याय। स्रोतस्याय। ईशानाय। धुर्याय। गव्यगतोदयाय[1]। प्रथमाय। प्रथमाकाराय। द्वितीयाय।

1. भव्यकथोदयाय

शक्तिसंयुताय। गुणत्रयतृतीयाय। युगरूपचतुर्थकाय। पूर्वजाय। अवरजाय। ज्येष्ठाय। कनिष्ठाय। विश्वलोचनाय नमः। १८०

पञ्चभूतात्मसाक्षिणे नमः। ईशाय। ऋतवे। षड्गुणभावनाय। अप्रगल्भाय। मध्यमोर्म्याय। जघन्याय। अजघन्याय। शुभाय। सप्तधातुस्वरूपाय। अष्टमहासिद्धि-सिद्धिदाय। प्रतिसर्पाय[1]। अनन्तरूपाय। सौम्याय। याम्याय। सुराश्रयाय। नवनाथ नवमीस्थाय[2]। दशदिग्रूपधारकाय। रुद्राय एकादशाकाराय। द्वादशादित्यरूपकाय नमः। २००

वन्याय नमः। अवसान्याय। पूतात्मने। श्रवाय। कक्षाय। प्रतिश्रवसे। व्यञ्जनाय[3]। व्यञ्ज[4]नातीताय। विसर्गाय। स्वरभूषणाय। आशुषेणाय। महासेनाय। महावीराय। महारथाय। अनन्ताय। अव्ययाय। आद्याय। आदिशक्तिवरप्रदाय। श्रुतसेनाय। श्रुतसाक्षिणे नमः। २२०

कवचिने नमः। वशाकृद्वशाय। आनन्दाय। आद्यसंस्थानाय। आद्यकारणलक्षणाय। आहनन्याय। अनन्यनाथाय। दुन्दुभ्याय। दुष्टनाशनाय। कर्त्रे। कारयित्रे। कार्याय। कार्यकारणभावगाय। धृष्णवे। प्रशमाय। ईड्यात्मने। वदान्याय। वेदसंमताय[5]। कलानाथाय। कलातीताय नमः। २४०

काव्यनाटकबोधकाय नमः। तीक्ष्णेषुपाणये[6]। प्रहिताय। स्वायुधाय। शस्त्रविक्रमाय। कालहन्त्रे। कालसाध्याय। कालचक्रप्रवर्तकाय। सुधन्वने। सुप्रसन्नात्मने। प्रविविक्ताय। सदागतये। कालाग्निरुद्रसन्दीप्ताय। कालान्तकभयंकराय।

---

1. प्रतिसूर्याय 2. नवनाथाय नवार्थस्थाय 3. वञ्चनाय। 4. वञ्चनातीताय। 5. वेदवित्तमाय 6. तीक्ष्णेपव

खड्गीशाय। खड्गनाथाय। खड्गशक्तिपरायणाय। गर्वघ्नाय। शत्रुसंहर्त्रे। गमागमविवर्जिताय नमः। २६०

यज्ञकर्मफलाध्यक्षाय नमः। यज्ञमूर्तये। अनातुराय। घनश्यामाय। घनानन्दिने। घनाधारप्रवर्तकाय। घनकर्त्रे। घनत्रात्रे। घनबीजसमुत्थिताय। लोप्याय। उलप्याय। पर्णशद्याय। पर्ण्याय। पूर्णाय। पुरातनाय। डकारसन्धिसाध्यान्ताय। वेदवर्णन सांगकाय। भूताय। भूतपतये। भूपाय नमः। २८०

भूधराय नमः। भूधरायुधाय। छन्दस्साराय। छन्दकर्त्रे। छन्दान्वय धारकाय। भूतसङ्गाय। भूतमूर्तये। भूतिघ्ने। भूतिभूषणाय। छत्रसिंहासनाधीशाय। भक्तच्छत्र समृद्धिमते। मदनाय। मादकाय। माद्याय। मधुघ्ने। मधुरप्रियाय। जपाय। जपप्रियाय। जप्याय। जपसिद्धिप्रदायकाय नमः। ३००

जपसंख्याय नमः। जपाकाराय। सर्वमन्त्रजपप्रियाय। मधवे। मधुकराय। शूराय। मधुराय। मदनान्तकाय। झषरूपधराय। देवाय। झषवृद्धि विवर्धकाय। यमशासनकर्त्रे। यमपूज्याय। यमाधिपाय। निरञ्जनाय। निराधाराय। निर्लिप्ताय। निरुपाधिकाय। टंकायुधाय। शिवप्रीताय नमः। ३२०

टंकाराय नमः। लाङ्गलाश्रयाय। निष्प्रपञ्चाय। निराकाराय। निरीहाय। निरुपद्रवाय। सपर्याप्रतिडामर्याय। मन्त्रडामर-स्थापकाय। सत्वाय। सत्वगुणोपेताय। सत्वविदे। सत्ववित्प्रियाय। सदाशिवाय। उग्ररूपाय। पक्षविक्षिप्तभूधराय। धनदाय। धननाथाय। धनधान्यप्रदायकाय। नमो रुद्राय। रौद्राय नमः। ३४०

महोग्राय नमः । मीढुषे । नादज्ञानरताय । नित्याय । नादान्तपददायकाय । फलरूपाय । फलातीताय । फलाय । अक्षरलक्षणाय। श्रींह्रींक्लीं सर्वभूताद्याय। भूतिघ्ने। भूतिभूषणाय। रुद्राक्षमालाभरणाय । रुद्राक्षप्रियवत्सलाय । रुद्राक्षवक्षसे । रुद्राक्षरूपाय । रुद्राक्षभूषणाय । फलदाय । फलदात्रे । फलकर्त्रे नमः । ३६०

फलप्रियाय । फलाश्रयाय । फलातीताय । फलमूर्तये । निरञ्जनाय । बलानन्दाय । बलग्रामाय । बलीशाय । बलनायकाय। खें खां घ्रां ह्रां वीरभद्राय । सम्राजे । दक्षमखान्तकाय। भविष्यज्ञाय। भयत्रात्रे। भयकर्त्रे। भयारिघ्ने। विघ्नेश्वराय। विघ्नहर्त्रे। गुरवे। देवशिखामणये नमः। ३८०

भावनारूपध्यानस्थाय नमः । भावार्थफलदायकाय । श्रीं ह्रीं कल्पितकल्पस्थाय। कल्पनापूरणालयाय। भुजङ्गविलसत्-कण्ठाय। भुजंगाभरणप्रियाय । ह्रीं ह्रूं मोहनकृते । कर्त्रे । छन्दमानसतोषकाय । मानातीताय । स्वयं मान्याय । भक्तमानससंश्रयाय । नागेन्द्रचर्मवसनाय। नारसिंहनिपातनाय । रकाराय। अग्निबीजस्थाय। अपमृत्युनिनाशनाय। प्रें प्रें प्रें प्रें ह्रां दुष्टाष्टमृत्युघ्ने[1]। मृत्युपूजिताय। व्यक्ताय नमः। ४००

व्यक्ततमाय नमः । अव्यक्ताय । रतिलावण्यसुन्दराय । रतिनाथाय । रतिप्रीताय । निधनेशाय । धनाधिपाय । रमाप्रियकराय। रम्याय। लिङ्गालिङ्गात्मविग्रहाय। क्ष्रौं क्ष्रौं क्ष्रौं क्ष्रौं ग्रहाकाराय। रत्नविक्रयविग्रहाय। ग्रहकृते। ग्रहभृते। ग्राहिणे। गृहाद्गृहविलक्षणाय। ओं नमः पक्षिराजाय । दावाग्नि रूपरूपकाय। घोरपातकनाशाय।[2] सूर्यमण्डलसुप्रभाय नमः। ४२०

1. प्रें प्रें प्रों प्रहष्टेष्टदाय 2. शरभसाल्वाय हुं फट्।

पवनाय नमः । पावकाय । वामाय । महाकालाय । महापह्राय । वर्धमानाय । वृद्धिरूपाय । विश्वभक्तिप्रियोत्तमाय । ओं हूं हूं सर्वगाय । सर्वाय । सर्वजिते । सर्वनायकाय । जगदेकप्रभवे । स्वामिने । जगद्वन्द्याय । जगन्मयाय । सर्वान्तराय । सर्वव्यापिने । सर्वकर्मप्रवर्तकाय । जगदानन्ददाय नमः । ४४०

जन्मजरामरणवर्जिताय नमः । सर्वार्थसाधकाय । साध्यसिद्धये । साधकसाधकाय । खड्गाङ्गिने । नीतिमते । सत्याय । देवतात्मने । आत्मसंभवाय । हविर्भोक्त्रे । हविःप्रीताय । हव्यवाहनहव्यकृते । कपालमालाभरणाय । कपालिने । विष्णुवल्लभाय । ओं ह्रीं प्रवेशरोगघ्नाय । स्थूलास्थूलविशारदाय । कलाधीशाय । त्रिकालज्ञाय । दुष्टावग्रहकारकाय नमः । ४६०

हुं हुं हुं हुं नटवराय नमः । महानाट्यविशारदाय । क्षमाकराय । क्षमानाथाय । क्षमापूरितलोचनाय । वृषाङ्काय । वृषभाधीशाय । क्षमासाधन साधकाय । क्षमाचिन्तनसुप्रीताय । वृषात्मने । वृषभध्वजाय । क्रों क्रों क्रों क्रों महाकायाय । महावक्षसे । महाभुजाय । मूलाधारनिवासाय गणेशाय । सिद्धिदायकाय । महास्कन्धाय । महाग्रीवाय । महद्वक्त्राय । महच्छिरसे नमः । ४८०

महदोष्ठाय नमः । महौदर्याय । महादंष्ट्राय । महाहनवे । सुन्दरभ्रुवे । सुनयनाय । षट्चक्राय वर्णलक्षणाय[1] । मणिपूरे महाविष्णवे । सुललाटाय । सुकन्धराय । सत्यवाक्याय । धर्मवेत्त्रे । प्रजासर्जनकारणाय । स्वाधिष्ठाने रुद्ररूपाय । सत्यज्ञाय । सत्यविक्रमाय । ग्लों ग्लों ग्लों ग्लों महादेवद्रव्य

1. सर्वलक्षणाय ।

शक्तिसमाहिताय। कृतज्ञाय। कृतकृत्यात्मने। कृतकृत्याय नमः। ५००

कृतागमाय नमः। हं हं हं हं गुरुरूपाय। हंसमन्त्रार्थमन्त्रकाय। व्रतकृते। व्रतविच्छ्रेष्ठाय। व्रतविदुषे। महाव्रतिने। सहस्रारे सहस्राक्षाय। व्रताधाराय। व्रतेश्वराय। व्रतप्रीताय। व्रताकाराय। व्रतनिर्वाण दर्शकाय। ओं ह्रीं हूं क्लीं श्रीं क्लीं ह्रीं फट् स्वाहा अतिरागिणे। वीतरागाय। केलासेऽनाहतध्वनये। मायापूरकयन्त्रस्थाय। रागहेतवे। विरागविदे। रागघ्नाय नमः। ५२०

रागशमनाय नमः। लंबकाश्यभिषिश्चनाय[1]। सहस्रदलगर्भस्थाय। चन्द्रिकाद्रवसंयुताय। अन्तनिष्ठाय। महाबुद्धिप्रदात्रे। नीतिवित्प्रियाय[2]। नीतिकृते। नीतिविदे। नीतये। अन्तर्यागस्वयं सुखिने। विनीतवत्सलाय। नीतिस्वरूपाय। नीतिसंश्रयाय। स्वभावाय। यन्त्रसञ्चाराय। तन्तुरूपाय। अमलच्छवये। क्षेत्रकर्मप्रवीणाय। क्षेत्रकीर्तन[3]वर्धनाय नमः। ५४०

क्रोधजिते। क्रोधनाय। क्रोधिजनविदे। क्रोधरूपधृते। विश्वरूपाय। विश्वकर्त्रे। चैतन्याय। यन्त्रमालिकाय। मुनिध्येयाय। मुनित्रात्रे। शिवधर्मधुरन्धराय। धर्मज्ञाय। धर्मसंबन्धिध्वान्तघ्नाय। ध्वान्तसंशयाय। इच्छाज्ञानक्रियातीतप्रभावाय। पार्वतीपतये। हं हं हं हं लतारूपाय। कल्पनावाञ्छितप्रदाय। कल्पवृक्षाय। कल्पनस्थाय नमः। ५६०

1. रञ्जकाय रागवर्जिताय 2. नीतिसंश्रयाय 3. क्षेत्रकर्तनवर्धनाय

पुण्यश्लोक प्रयोजकाय । प्रदीपनिर्मलप्रौढाय । परमाय परमागमाय । ज्रं ज्रं ज्रं सर्वसंक्षोभसर्वसंहार कारकाय। क्रोधदाय। क्रोधघ्ने। क्रोधिजनघ्ने। क्रोधकारणाय। गुणवते। गुणवच्छ्रेष्ठाय। वीर्यविद्वीर्यसंश्रयाय। गुणाधाराय। गुणाकाराय। सत्वकल्याण देशिकाय। सत्वराय। सत्वविद्भावाय। सत्यविज्ञानलोचनाय। ओं ह्रां ह्रीं ह्रूं क्लीं श्रीं ब्लूं प्रों ओं ह्रीं क्रों हुं फट् स्वाहा वीर्याकाराय। वीर्यकरच्छन्नमूलाय। महाजयाय नमः। ५८०

अविच्छिन्नप्रभावश्रिये नमः । वीर्यघ्ने । वीर्यवर्धकाय । कालविदे। कालकृते । कालाय । बलप्रमथनाय । बलिने । छिन्नपापाय। छिन्नपाशाय । विच्छिन्नभययातनाय । मनोन्मनाय। मनोरूपाय । विच्छिन्नभयनाशनाय । विच्छिन्नसङ्गसङ्कल्पाय। बलप्रमथनाय। बलाय। विद्याप्रदात्रे। विद्येशाय। शुद्धबोधसदोदिताय[1] नमः। ६००

शुद्धबोधविशुद्धात्मने नमः । विद्यामन्त्रैकसंश्रयाय । शुद्धसत्वाय । विशुद्धान्तविद्यावेद्याय । विशारदाय । वीर्यवते । वीर्यविच्छ्रेष्ठाय । सत्वविद्यावबोधकाय[2] । अविनाशाय । निराभासाय। विशुद्धज्ञानगोचराय। ओं ह्रीं श्रीं ऐं सौः शिवं कुरु कुरु स्वाहा संसार यन्त्रवाहाय । महायन्त्रप्रवर्तिने । श्रीव्योमसूर्याय। मूर्तिवैचित्र्यहेतवे। जगज्जीवाय। जगत्प्राणाय। जगदात्मने। जगद्गुरवे। आनन्दरूपनित्यस्थाय नमः। ६२०

प्रकाशानन्दरूपकाय नमः । योगज्ञानमहाराजाय । योगज्ञानमहाशिवाय। अखण्डानन्ददात्रे। पूर्णानन्दस्वरूपवते। वरदाय। अविकाराय। सर्वकारणहेतवे। कपालिने। करालाय पतये। पुण्यकीर्तये । अघोराय । अग्निनेत्राय । दण्डिने ।

1. शुद्धबोधसुबोधिताय। 2. वीर्यविद्वीर्यसंश्रयाय।

घोररूपिणे। भिषग्गण्याय। चण्डाय। नकुलीशाय। शंभवे। हुं क्षुं रूं क्लीं सिद्धाय नमः। ६४०

घण्टारवाय। सिद्धगण्डाय। गजघण्टा ध्वनिप्रियाय। गगनाख्याय। गजावासाय। गरलांशाय। गणेश्वराय। सर्वपक्षिमृगाकाराय। सर्वपक्षिमृगाधिपाय। चित्राय। विचित्रसंकल्पाय। विचित्राय। विशदोदयाय। निर्भ[illegible]। भवनाशाय। निर्विकल्पाय। विकल्पकृते। कक्षाविलसकाय[1]। कर्त्रे। कोविदाय नमः। ६६०

कामशासनाय नमः। निन्दाद्वेषादिकर्त्रे। निन्दाद्वेषापहारकाय। कालाग्निरुद्राय। सर्वेशाय। शमरूपाय। शमेश्वराय। प्रलयानलकृद्धव्याय। प्रलयानलशासनाय। त्रियंबकाय। अरिषड्वर्गनाशकाय। धनदप्रियाय। अक्षोभ्याय। क्षोभरहिताय। क्षोभदाय। क्षोभनाशकाय। प्रां प्रीं प्रूं प्रैं प्रौं प्रः मणिमन्त्रौषधादीनां शक्तिरूपाय शंभवे अप्रमेयाय देवाय वषट्स्वाहास्वधात्मने। द्युमूर्ध्ने। दशदिग्बाहवे नमः। ६८०

चन्द्रसूर्याग्निलोचनाय नमः। पातालांघ्रये। इलाकुक्षये। खंमुखाय। गगनोदराय। कलानादाय। क[illegible]। कलाज्योतिषे। सनातनाय। अलौकिककलोद्भवाय। कैवल्यपददायकाय। कौल्याय। कुलेशाय। कुलजाय। कवये। कर्पूरभास्वराय। कामेश्वराय। कृपासिन्धवे। कुशलाय। कुलभूषणाय नमः। ७००

कौपीनवसनाय। कान्ताय। केवलाय। कल्पपादपाय। कुन्देन्दुशंखधवलाय। भस्मोद्धूलित विग्रहाय। भस्माभरणहृष्टात्मने। दुष्टपुष्टारिसूदनाय। स्थाणवे। दिगंबराय। भर्गाय।

1. अक्षवित्पुलकाय

भगनेत्र भिदुज्ज्वलाय । त्रिकाग्निकालाय । कालाग्नये । अद्वितीयाय । महायशसे । सामप्रियाय । सामकर्त्रे । सामगाय । सामगप्रियाय नमः । ७२०

धीरोदात्ताय नमः । महाधीराय । धैर्यदाय । धैर्यवर्धकाय । लावण्यराशये । सर्वज्ञाय । सुबुद्धये । बुद्धिमद्वराय । तारणाश्रयरूपस्थाय । तारणाश्रयदायकाय । तारकाय । तारकस्वामिने । तारणाय । तारणप्रियाय । एकताराय । द्विताराय । तृतीयाय मातृकाश्रयाय । एकरूपाय । एकनाथाय । बहुरूपस्वरूपवते नमः । ७४०

लोकसाक्षिणे नमः । त्रिलोकेशाय । त्रिगुणातीतमूर्तिमते । बालाय । तारुण्यरूपस्थाय । वृद्धरूपप्रदर्शकाय । अवस्थात्रय भूतस्थाय । अवस्थात्रयवर्जिताय । वाच्यवाचकभावार्थाय । वाक्यार्थप्रियमानसाय । सोहंवाक्यप्रमाणस्थाय । महावाक्यार्थ-बोधकाय । परमाणु प्रमाणस्थाय । कोटिब्रह्माण्डनायकाय । ओं हं हं हं हं ह्रीं वामदेवाय । कपर्दिने । केसरिणे । कालाय । कल्पनारहिताकृतये । खखेलाय नमः । ७६०

खेचराय ख्याताय नमः । खन्यवादिने । खमुद्गताय । खांबराय । खण्डपरशवे । खचक्षुषे । खड्गलोचनाय । अखण्डब्रह्मणे । अखण्डश्रिये । अखण्डज्योतिषे । अव्ययाय । षट्चक्रखेलनाय । स्रष्ट्रे । षड्ज्योतिषे । षड्गिरार्चिताय[1] । गरिष्ठाय । गोपतये । गोप्त्रे । गंभीराय । ब्रह्मगोलकाय नमः । ७८०

गोवर्धनगतये नमः । गोविदे । गवातीताय । गुणाकराय । गंगाधराय । अङ्गसंगम्याय । गैंकाराय । गट्कराशमाय[2] ।

1. षड्भिरावृताय 2. गह्वरागमाय

कर्पूरगौराय। गौरीशाय । गौरीगुरु गुहाशयाय । धूर्जटये । पिङ्गलजटाय। जटामण्डलमण्डिताय। मनोजवाय। जीवहेतवे। अन्धकासुरसूदनाय। लोकबन्धवे । कला[1]धाराय । पाण्डुराय नमः । ८००

प्रमथाधिपाय । अव्यक्तलक्षणाय योगिने । योगीशाय । योगिपुङ्गवाय । भूतावासाय । जनावासाय । सुरावासाय । सुमङ्गलाय। भववैद्याय। योगिवैद्याय। योगिसिंहहृदासनाय। युगावासाय। युगाधीशाय। युगकृते। युगवन्दिताय। किरीटालीढ बालेन्दवे । मणिकंकणभूषिताय । रत्नाङ्गरागाय । रत्नेशाय । रत्नरञ्जित पादुकाय नमः । ८२०

नवरत्नगणोपेत किरीटाय नमः । रत्नकञ्चुकाय । नानाविधानेकरत्नलसत्कुण्डलमण्डिताय। दिव्यरत्नगणोत्कीर्ण-कण्ठाभरणभूषिताय । नवफालमणये । नासापुटभ्राजित-मौक्तिकाय। रत्नाङ्गुलीयविलसत्करशाखानखप्रभाय। रत्न-भ्राजद्धेमसूत्र लसत्कटितटाय । पटवे । वामाङ्गभाग-विलसत्पार्वतीवीक्षणप्रियाय । लीलाविडंबित वपुषे । भक्तमानसमन्दिराय । मन्दमन्दारपुष्पौघलसद्वायुनिषेविताय । कस्तूरीविलसत्फालाय । दिव्यवेषविराजिताय । दिव्यदेहप्रभाकूट-सन्दीपितदिगन्तराय । देवासुरगुरुस्तव्याय । देवासुरनमस्कृताय । हंसराजाय । प्रभाकूटपुण्डरीकनिभेक्षणाय नमः । ८४०

सर्वशास्त्रगुणोपेताय नमः । सर्वलोकेष्टभूषणाय । सर्वेष्टदात्रे । सर्वेष्ट स्फुरन्मङ्गलविग्रहाय । अविद्यालेशरहिताय । नानाविधैक संश्रयाय। मूर्तीभवत्कृपापूराय। भक्तेष्टफलपूरकाय।

[1]. लोकधराय

संपूर्णकामाय। सौभाग्यनिधये। सौभाग्यदायकाय। हितैषिणे। हितकृते। सौम्याय। परार्थैकप्रयोजकाय। शरणागतदीनार्त परित्राणपरायणाय। विष्वंचित्रे। वषट्काराय। भ्राजिष्णवे। भोजनाय हविषे नमः। ८६०

भोक्त्रे नमः। भोजयित्रे। जेत्रे। जितारये। जितमानसाय। अक्षराय। कारणाय। रुद्धाय। शमदाय। शारदाप्लवाय। आज्ञापकाय। गंभीराय। कवये[1]। दुःस्वप्ननाशनाय। पञ्च ब्रह्मसमुत्पत्तये। क्षेत्रज्ञाय। क्षेत्रपालकाय। व्योमकेशाय। भीमवेषाय। गौरीपतये नमः। ८८०

अनामयाय नमः। भवाब्धितरणोपायाय। भगवते। भक्तवत्सलाय। वराय। वरिष्ठाय। तेजिष्ठाय। प्रियाप्रिय वधाय। सुधिये। यन्त्रे। अयविष्ठाय। क्षोदिष्ठाय। यविष्ठाय[2]। यमशासनाय। हिरण्यगर्भाय। हेमाङ्गाय। हेमरूपाय। हिरण्यदाय। ब्रह्मज्योतिषे। अनावेक्ष्याय नमः। ९००

चामुण्डाजनकाय नमः। रवये। मोक्षार्थिजन-संसेव्याय। मोक्षदाय। मोक्षनायकाय। महाश्मशाननिलयाय। वेदाश्वाय। भूरथस्थिराय। मृगव्याधाय। धर्मधाम्ने। प्रच्छन्नस्फटिकप्रभाय। सर्वज्ञाय। परमात्मने। ब्रह्मानन्दाश्रयाय। विभवे। शरभेशाय। महादेवाय। परब्रह्मणे। सदाशिवाय। स्वराविष्कृतिकर्त्रे नमः। ९२०

स्वरातीताय नमः। स्वयं विभवे। स्वर्गताय। स्वर्गतेर्दात्रे। नियन्त्रे। नियताश्रयाय।। भूमिरूपाय। भूमिकर्त्रे। भूधराय। भूधराश्रयाय। भूतनाथाय। भूतकर्त्रे। भूतसंहारकारकाय।

1. कलिदुःस्वप्ननाशनाय। 1. रविक्रोधतिरस्कृताय

भविष्यज्ज्ञाय । भवत्रात्रे । भवदाय । भवहारकाय । वरदाय । वरदात्रे । वरप्रीताय नमः । ९४०

वरप्रदाय नमः । कूटस्थाय । कूटरूपाय । त्रिकूटाय । मन्त्रविग्रहाय । मन्त्रार्थाय । मन्त्रगम्याय । मन्त्रेशाय । मन्त्रभागकाय । सिद्धमन्त्राय । सिद्धिदात्रे । जपसिद्धि स्वभावकाय । नामातिगाय । नामरूपाय । नामरूपगुणाश्रयाय । गुणकर्त्रे । गुणत्रात्रे । गुणातीताय । गुणारिघ्ने । गुणग्रामाय नमः । ९६०

गुणाधीशाय नमः । गुणनिर्गुणकारकाय । अकारमातृका-रूपाय । अकारातीतभावनाय । परमैश्वर्यदात्रे । परा-प्रीतिदायकाय । परमाय । परमानन्दाय । परानन्दाय । परात्पराय । वैकुण्ठपीठमध्यस्थाय वैकुण्ठाय । विष्णुविग्रहाय । कैलासवासिने । कैलासे शिवरूपाय । शिवप्रदाय । जटाजूटोद्भूषिताङ्गाय । भस्मधूसरभूषणाय । दिग्वाससे । दिग्विभागाय । दिगन्तर-निवासकाय नमः । ९८०

ध्यानकर्त्रे । ध्यानमूर्तये । धारणाधारणप्रियाय । जीवन्मुक्तिपुरीनाथाय । द्वादशान्तस्थितप्रभवे । तत्त्वस्थाय । तत्वरूपस्थाय । तत्वातीताय । अतितत्वगाय । तत्वसाम्याय । तत्वगम्याय । तत्वार्थसर्वदर्शकाय । तत्वासनाय । तत्वमार्गाय । तत्त्वान्तस्तत्वविग्रहाय । दर्शनादतिगाय । दृश्याय । दृश्यातीता तिदर्शकाय । दर्शनाय । दर्शनातीताय नमः । १०००

भावनाकाररूपधृते नमः । मणिपर्वतसंस्थानाय । मणिभूषणभूषिताय । मणिप्रीताय । मणिश्रेष्ठाय । मणिस्थाय । मणिरूपकाय । चिन्तामणि गृहान्तःस्थाय । सर्वचिन्ता-

विवर्जिताय। चिन्ताक्रान्तभक्तचिन्त्याय । चिन्तनाकार-चिन्तकाय। अचिन्त्याय। चिन्त्यरूपाय । निश्चिन्त्याय । निश्चयात्मकाय । निश्चयाय । निश्चयाधीशाय । निश्चयात्मक-दर्शकाय। त्रिविक्रमाय। त्रिकालज्ञाय नमः। १०२०

त्रिमूर्तये नमः । त्रिपुरान्तकाय । ब्रह्मचारिव्रतप्रीताय । गृहस्थाय। गृहवासकाय । परस्मै धाम्ने । परस्मै ब्रह्मणे । परमात्मने। परात्पराय। सर्वेश्वराय। सर्वमयाय। सर्वसाक्षिणे। विलक्षणाय। मणिद्वीपद्वीपनाथाय। द्वीपान्ताय। द्वीपलक्षणाय। सप्तसागरकर्त्रे। सप्तसागरनायकाय। महीधराय। महीभर्त्रे नमः। १०४०

महीपालाय । महास्वनाय । महीव्याप्ताय । अव्यक्त-रूपाय।सुव्यक्ताय। व्यक्तभावनाय। सुवेषाढ्याय। सुखप्रीताय। सुगमाय। सुगमाश्रयाय। तापत्रयाग्निसन्तप्तसमाह्लादनचन्द्रमसे। तारणाय । तापसाराध्याय। तनुमध्याय । तमोऽपहाय । पररूपाय। परध्येयाय। परदैवतदैवताय। ब्रह्मपूज्याय । जगत्पूज्याय नमः। १०६०

भक्तपूज्याय नमः। वरप्रदाय। अद्वैताय। द्वैतचित्ताय। द्वैताद्वैतविवर्जिताय । अभेद्याय । सर्वभेद्याय । भेद्याभेद्यकवेधकाय। लाक्षारससवर्णाभाय। प्लवंगमप्रियोत्तमाय। शत्रुसंहारकर्त्रे। अवतारपराय हराय। संविदीशाय। संविदात्मने। संविज्ज्ञानप्रदायकाय। संवित्कर्त्रे भक्ताय। संविदानन्दरूपवते। संशयातीतसंहार्याय। सर्वसंशयहारकाय। निः संशय मनोध्येयाय नमः। १०८०

संशयात्मातिदूरगाय नमः । शैवमन्त्रशिवप्रीतदीक्षाशैव-स्वभावकाय। भूपतये। क्ष्माकृताय भूपाय। भूपभूपत्वदायकाय। सर्वधर्म

समायुक्ताय । सर्वधर्मविवर्धकाय । सर्वशास्त्राय । सर्ववेदाय । सर्ववेत्त्रे । सुतृप्तिमते । भक्तभावावताराय । भुक्तिमुक्तिफलप्रदाय । भक्तसिद्धार्थसिद्धये । सिद्धिबुद्धिप्रदायकाय । वाराणसीवासदात्रे । वाराणसीवरप्रदाय । वाराणसीनाथरूपाय । गंगामस्तकधारकाय । पर्वताश्रयकर्त्रे नमः । ११००

लिंगत्र्यंबकपर्वताय नमः । लिंगदेहाय । लिंगपतये । लिंगपूज्याय । अतिदुर्लभाय । रुद्रप्रियाय । रुद्रसेव्याय । उग्ररूपाय । विराट्स्तुताय । मालारुद्राक्षभूषाङ्गाय । जपरुद्राक्षतोषिताय । सत्यसत्याय । सत्यदात्रे । सत्यकर्त्रे । सदाश्रयाय । सत्यसाक्षिणे । सत्यलक्ष्याय । लक्ष्यातीतमनोहराय । जनकाय । जगतामीशाय नमः । ११२०

जनित्रे नमः । जननिश्चयाय । सृष्टिस्थिताय । सृष्टिरूपिणे । सृष्टिरूपस्थितिप्रदाय । संहाररूपाय । कालाग्नये । कालसंहाररूपकाय । सप्तपातालपादस्थाय । महदाकाशशीर्षवते । अमृताय । अमृताकाराय । अमृतामृतरूपकाय । अमृताकार-चित्तस्थाय । अमृतोद्भवकारणाय । अमृताहार नित्यस्थाय । अमृतोद्भवरूपवते । अमृतांशाय । अमृताधीशाय । अमृतप्रीतिविवर्धनाय नमः । ११४०

अनिर्देश्याय नमः । अनिर्वाच्याय । अनङ्गाय । अनङ्गसंश्रयाय । श्रेयोदाय । श्रेयोरूपाय । श्रेयोऽतीत फलोत्तमाय । साराय । संसारसाक्षिणे । सारासारविचक्षणाय । धारणातीतभावस्थाय । धारणान्वयगोचराय । गोचराय । गोचरातीताय । अतीव प्रियगोचराय । प्रियप्रियाय । स्वार्थिने । स्वार्थाय । स्वार्थफलप्रदाय । अर्थार्थिसाक्षिणे नमः । ११६०

लक्षांशाय नमः । लक्ष्यलक्षणविग्रहाय । जगदीशाय । जगत्त्रात्रे । जगन्मयाय । जगद्गुरवे । गुरुमूर्तये । स्वयंवेद्याय । वेद्यवेदकरूपकाय । रूपातीताय । रूपकर्त्रे । सर्वरूपार्थदायकाय । अर्थदाय । अर्थमान्याय । अर्थार्थिने । अर्थदायकाय । विभवाय । वैभवाय । श्रेष्ठाय । सर्ववैभवदायकाय नमः । ११८०

चतुःषष्टिकलासूत्राय नमः । चतुः षष्टिकलामयाय । पुराणश्रवणाकाराय । पुराणपुरुषोत्तमाय । पुरातनपुराख्याताय । पूर्वजाय । पूर्वपूर्वकाय । मन्त्रतन्त्रार्थसर्वज्ञाय । सर्वतन्त्रप्रकाशकाय । तन्त्रवेत्त्रे । तन्त्रकर्त्रे । तन्त्रान्तरनिवासकाय । तन्त्रगम्याय । तन्त्रमान्याय । तन्त्रयन्त्रफलप्रदाय । सर्वतन्त्रार्थतत्वज्ञाय । तन्त्रराजाय स्वतन्त्रकाय । ब्रह्माण्डकोटिकर्त्रे । ब्रह्माण्डोदरपूरकाय । ब्रह्माण्डदेशदात्रे नमः । १२००

ब्रह्मज्ञानपरायणाय नमः । स्वंभुवे । शंभुरूपाय । हंसविग्रहनिःस्पृहाय । श्वासनिश्वासाय । उच्छ्वासाय । सर्वसंशयहारकाय । सोऽहंरूपस्वभावाय । सोहंरूपप्रदर्शकाय । सोहमस्मीति नित्यस्थाय । सोहंहंसः स्वरूपवते । हंसोहंसः स्वरूपाय । पक्षिराजाय । निरञ्जनाय । १२१४

# श्रीशरभाष्टोत्तरशतनामस्तोत्रम्

श्रीशिव उवाच ॥

अस्य श्रीशरभाष्टोत्तरशतनाम-महामन्त्रस्य योगानंद ऋषिः अनुष्टुप्छंदः श्रीमदघोर-वीर-शरभेश्वरो देवता। खं बीजं, स्वाहा शक्तिः, फट् कीलकम्, श्रीमच्छरभ-सालुव प्रसादसिद्ध्यर्थे अष्टोत्तरशतनाम जपे विनियोगः।

ध्यानम् ॥

अष्टांघ्रिश्च सहस्रबाहुरनलच्छाया शिरोयुग्मधृग्
यस्त्र्यक्षो द्विखुरः प्रपुच्छ उदितः साक्षान्नृसिंहासनः।
अर्धेनापि मृगाकृतिः पुनरथाप्यर्धेन पक्ष्याकृतिः
श्रीवीरः शरभः स पातु शरभश्चिन्त्यः सदा मां हृदि॥ १ ॥

सदाशिवोग्ररूपाय पक्षविक्षिप्तभूभृते।
नमो रुद्राय रौद्राय महाग्रासाय[1] जिष्णवे[2] ॥ २ ॥

नम उग्राय भीमाय नमः क्रुद्धाय[3] मन्यवे।
नमो भवाय शर्वाय शंकराय शिवाय च॥ ३ ॥

कालाय कालकालाय महाकालाय मृत्यवे।
वीराय वीरभद्राय क्षयद्वीराय शूलिने॥ ४ ॥

महादेवाय महते पशूनां पतये नमः।
एकाय नीलकंठाय श्रीकंठाय पिनाकिने॥ ५ ॥

नमोऽनंताय सूक्ष्माय नमस्ते मृत्यु-मृत्यवे[4]।
पराय परमेशाय तत्पराय[5] परात्मने॥ ६ ॥

---

1. महोग्रास्याय 2. विष्णवे 3. क्रोधाय 4. मृत्युमन्यवे 5. परात्परतराय च

परात्पराय विश्वाय नमस्ते विश्वमूर्तये।
नमो विष्णुकलत्राय विष्णुक्षेत्राय भानवे ॥ ७ ॥

वैकर्ताय किराताय महाव्याधाय शाश्वते।
भैरवाय शरण्याय महाभैरवरूपिणे ॥ ८ ॥

नमो नृसिंह-संहर्त्रे काम-[1]काल-पुरारये।
[2]कर्मपाशौघसंहर्त्रे विष्णुमायांतकारिणे ॥ ९ ॥

त्र्यंबकाय च[3] त्र्यक्षाय शिपिविष्टाय मीढुषे।
मृत्युञ्जयाय रुद्राय[4] सर्वज्ञाय मखारये ॥ १० ॥

खखोल्काय [5]वरेण्याय नमस्ते वाग्भिरेतसे[6]।
महाप्राणाय [7]देवाय प्राणापानप्रवर्तिने ॥ ११ ॥

त्रिगुणाय त्रिशूलाय गुणातीताय योगिने।
संसारचक्रवाहाय महायन्त्रप्रवर्तिने ॥ १२ ॥

तमस्विद्व्योमसूर्याय[8] मुक्तिवैचित्र्यहेतवे।
वरदायाविकाराय सर्वकारणहेतवे ॥ १३ ॥

कपालिने करालाय पतये पुण्यकीर्तये।
अमोघायाग्निनेत्राय नकुलीशाय शंभवे ॥ १४ ॥

भीषांबाराय चंडाय[9] दंडिने घोररूपिणे[10]।
मेघवाहाय देवाय पार्वतीपतये नमः ॥ १५ ॥

अव्यक्तायाप्यशोकाय स्थिराय स्थिरधन्विने।
स्थाणवे कृत्तिवासाय[11] नमश्चंद्रार्द्धमौलये ॥ १६ ॥

---

*1*. नमः कालपुरारये *2*. महापाशौघसंहर्त्रे *3*. त्र्यक्षराय *4*. शर्वाय *5*. मखेशाय *6*. वह्निरूपिणे *7*. महाघ्राणाय *8*. नमश्चन्द्राग्निसूर्याय *9*. भिषक्तमाय *10*. मुण्डाय *11*. योगरूपिणे। इत परं नमः पञ्चार्थहेतवे। वरदाय कपर्दाय इत्यधिकम्

नमस्तेऽध्वरराजाय वच[1]सां पतये नमः ।
योगीश्वराय नित्याय सत्याय परमात्मने ॥ १७ ॥

सर्वात्मने नमस्तुभ्यं नमः सर्वेश्वराय च ।
एक-द्वित्रि-चतुः-पंच-सृष्टिकृत्यस्तुते नमः ॥ १८ ॥

दशकृत्वः शतकृत्वः सहस्रकृत्वो नमो नमः ।
नमोऽ परिमित कृत्वो नमः कृत्वो नमो नमः ॥ १९ ॥

नमो भूयो नमो भूयः पुनर्भूयो नमो नमः ।

सूत उवाच ॥

नाम्नामष्टशतेनैव स्तुत्वामृतमयेन च ॥ २० ॥

तथा तथा विनेतव्यस्त्वयैव परमेश्वर ।
एवं विज्ञाप्य सव्रीडं शंकरं नरकेसरी ॥ २१ ॥

ततःस्तुत्वा च भगवान् जीवितं सापराधतः ।
तद्वक्त्रशेषं तद्गात्रं कृत्वा शरभ-विग्रहः ।
अतीन्द्रियत्वमगमद्वीरभद्रेक्षणात्ततः ॥ २२ ॥

लिंगपुराणे आकाशभैरवकल्पे च ।

# श्रीशरभाष्टोत्तरशतनामावलिः

सदाशिवोग्ररूपाय नमः । पक्षविक्षिप्तभूभृते । रुद्राय । रौद्राय । महाग्रासाय[1] । जिष्णवे[2] । उग्राय । भीमाय । क्रुद्धाय[3] । मन्यवे । भवाय । शर्वाय । शंकराय । शिवाय । कालाय । कालकालाय । महाकालाय । मृत्यवे । वीराय । वीरभद्राय नमः । २०

क्षयद्वीराय नमः । शूलिने । महादेवाय । महते । पशूनां पतये । एकाय । नीलकण्ठाय । श्रीकण्ठाय । पिनाकिने । अनन्ताय । सूक्ष्माय ।

1. वयसां 2. महोग्रास्याय 3. विष्णवे 4. क्रोधाय

मृत्युमृत्यवे[1]। पराय। परमेशाय। तत्पराय[2]। परात्मने। परात्पराय। विश्वाय। विश्वमूर्तये। विष्णुकलत्राय नमः। ४०

विष्णुक्षेत्राय नमः। भानवे। वैकर्ताय। किराताय। महाव्याधाय। शाश्वते। भैरवाय। शरण्याय। महाभैरवरूपिणे। नृसिंहसंहर्त्रे। कामकालपुरारये[3]। कर्मपाशौघ संहर्त्रे[4]। विष्णु मायान्तकारिणे। त्र्यंबकाय। त्र्यक्षा[5]य। शिपिविष्टाय। मीढुषे। मृत्युञ्जयाय। रुद्राय[6]। सर्वज्ञाय नमः। ६०

मखारये नमः। खखोल्काय[7]। वरेण्याय। वाग्भिरेतसे[8]। महाप्राणाय[9]। देवाय। प्राणापान प्रवर्तिने। त्रिगुणाय। त्रिशूलाय। गुणातीताय। योगिने। संसारचक्रवाहाय। महायन्त्रप्रवर्तिने। तमस्विद्व्योमसूर्याय[10]। मुक्तिवैचित्र्यहेतवे। वरदाय। अविकाराय। सर्वकारणहेतवे। कपालिने। करालाय नमः। ८०

पतये नमः। पुण्यकीर्तये। अमोघाय। अग्निनेत्राय। नकुलीशाय। शंभवे। भीषांब[11]राय। चण्डा[12]य। दण्डिने। घोररू[13]पिणे। मेघवाहाय। देवाय। पार्वतीपतये। अव्यक्ताय। अशोकाय। स्थिराय। स्थिरधन्विने। स्थाणवे। कृत्तिवासाय[14]। चन्द्रार्धमौलये नमः। १००

अवरराजाय नमः। वच[15]सां पतये। योगीश्वराय। नित्याय। सत्याय। परमात्मने। सर्वात्मने। सर्वेश्वराय नमः। १०८

---

1. मृत्युमन्यवे 2. परात्परातराय 3. कालपुरारये 4. महापाशौघसंहर्त्रे 5. त्र्यक्षाय 6. शर्वाय 7. मखेशाय 8. वह्निरूपिणे 9. महाघ्राणाय 10. चन्द्राग्निसूर्याय 11. भिपक्तमाय। 12. मुण्डाय 13. योगरूपिणे 14. इत:परं पञ्चार्थहेतवे। वरदाय। कपर्दाय इत्यधिकम्। 15. वयसां

# शरभहृदयम्

श्रीदेव्युवाच ॥

भगवन्देवदेवेश सर्वशास्त्रार्थवादक।
ब्रूहि मे सर्वपापघ्नं किं मन्त्रमिष्टकामदम्॥ १ ॥

केन पुण्यप्रभावेन शत्रूणां प्राणनाशनम्।
सर्वपापप्रशमनं धन्यमायुष्यवर्धनम्॥ २ ॥
ब्रूहि मे कृपया शंभो त्वत्पादकमलं नुमः।

ईश्वर उवाच ॥

शृणु वक्ष्यामि देवेशि सर्वपापहरं परम्॥ ३ ॥

सर्वशत्रुहरं दिव्यं हृदयं शरभस्य च।
सालुवं सर्वरोगघ्नं हृदयं परमाद्भुतम्॥ ४ ॥

गुह्याद्गुह्यतरं गुह्यं गोपनीयं प्रयत्नतः।
पुरा नारायणः श्रीमान् क्षीराब्धौ मथनं ततः॥ ५ ॥

तस्य प्रारंभसमये हृदयं शरभस्य च।
प्रातः कालेऽजपन्नित्यं विंशदावर्त्तिकं मुदा॥ ६ ॥

एवं मासत्रयं कृत्वा प्रादुर्बभूव सालुवः।
तस्य स दंडवद्भूमौ प्रणम्य च पुनः पुनः॥ ७ ॥

तमुत्थाप्य महातेजा मूर्ध्न्युपाघ्राय सालुवः।
संतुष्टः प्रत्युवाचेदं निर्विघ्नेनामृतं भवेत्॥ ८ ॥

इत्युक्त्वा प्रददौ तस्मै रक्षणं सर्वविश्वकम्।
ततो नारायणो देवः प्रणमानोऽब्रवीद्वचः॥ ९ ॥

नारायण उवाच ॥

देव देव महादेव पक्षिराज महाप्रभो।
हृदयं तव देवेश तस्य को वा ऋषिर्वद॥ १० ॥

छंदः किं बीजशक्ती च किं फलं वद मे प्रभो।

श्री शरभेश्वर उवाच ॥

शृणु वक्ष्याम्यहं विष्णो हृदयं मम सालुवम्॥ ११ ॥

सर्वपापक्षयं पुण्यं सर्वशत्रुविनाशनम्।
सर्वक्लेशविनाशं च सर्वसंतोषकारणम्॥ १२ ॥

सर्वसौभाग्यदं शांतं सर्वमंगलवर्धनम्।
ऋषिः कालाग्निरुद्रस्तु जगती छंद ईरितम्॥ १३ ॥

खं बीजं च महा देवः शक्तिः स्वाहेत्युदीरितम्।
कीलकं नम इत्याहुरिष्टार्थे विनियोगकम्॥ १४ ॥

मूल-न्यासादिकं कृत्वा ध्यायेच्छरभ सालुवम्।
प्रथमं पक्षिराजं च द्वितीयं शरभं तथा॥ १५ ॥

तृतीयं सालुवं प्रोक्तं चतुर्थं लोकनायकम्।
पंचमं रेणुकानाथं षष्ठं कालाग्निरुद्रकम्॥ १६ ॥

सप्तमं नारसिंहारिमष्टमं विश्वमोहनम्।
श्रीं ह्रीं क्लीं नवमं चैव हुं हुं हुं दशमं तथा॥ १७ ॥

क्रीं ह्रीं क्षामेकादशं च द्वादशं सर्वमंत्रवित्।
त्रयोदशं तु यंत्रेशं चतुर्दशं महाबलः॥ १८ ॥

पंचदशं पापनाशं षोडशं च करालकम्।
सप्तदशं महारौद्रं भीममष्टादशं तथा॥ १९ ॥

एकोनविंशं सांबं च विंशं च शंकरं तथा।
विंशोत्तरैकं सर्वेशं द्वाविंशं पार्वतीपतिम्॥ २० ॥

त्रयोविंशं च हूं हूं हूं चतुर्विंशमनन्तकम्।
पञ्चविंशं वृषारूढं षड्विंशं विश्वलोचनम्॥ २१ ॥

त्रिलोचनं सप्तविंशमष्टाविंशं खगेन्द्रकम्।
पं पं पं नवविंशं च त्रिंशं भुजगभूषणम्॥ २२ ॥

एकत्रिंशं च लं लं लं द्वात्रिंशं पंचवक्त्रकम्।
त्रयस्त्रिंशं च आनंदं चतुस्त्रिंशं परात्परम्॥ २३॥

पंचत्रिंशं च भं भं भं षट्त्रिंशं शत्रुनाशनम्।
सप्तत्रिंशं स्वयंभूजं विभमष्टत्रिगुंठितम्॥ २४॥

शूलपाणिं नवत्रिंशं चत्वारिंशं कलाधरम्।
एकचत्वारिंशं सं सं (सं) द्विचत्वारिंश हंसकम्॥ २५॥

एतद् हृदयमायुष्यं मंत्रं सर्वार्थसाधकम्।
अनेकरत्नलंवानी जटा-मुकुटधारिणम्॥ २६॥

अनेकरत्नसंयुक्तं सुवर्णांचितमौलिनम्।
तक्षकादि-महानाग-कुंडलद्वय-शोभितम्॥ २७॥

त्रि पंचनयनं पंचवक्त्र-तुंडधरं प्रभुम्।
करालं भृकुटीभीमं शंखतुल्य-कपोलकम्॥ २८॥

कालीकलित-दुर्गा च पक्षद्वय-विराजितम्।
दशायुधधरं दीप्तं दशबाहुं त्रिलोचनम्॥ २९॥

नीलकण्ठधरं भोग-सर्पहारोपशोभितम्।
विशालवक्षो विश्वेशं विश्वमोहनमव्ययम्॥ ३०॥

त्रिपुरारिं त्रिशूलादिधारिणं मृगधारणम्।
व्याघ्रचर्माम्बरधरं वाडवाग्निस्थितोदरम्॥ ३१॥

मृत्यु-व्याधिस्थितोरुं च वज्र-जानुप्रदेशकम्।
पादपंकजयुग्मं च तीक्ष्णवज्र-नखाग्रकम्॥ ३२॥

मणि-नूपुर-मंजीरझणत्किंकिणि-जंघकम्।
वज्रतुण्ड-महादीप्तं कालकालं कृपानिधिम्॥ ३३॥

एवं ध्यात्वा च हृदयं त्रिंशदावृतिकं क्रमात्।
नित्यं जप्त्वा सालुवेशं हृदयं सर्वकामदम्॥ ३४॥

सर्वपुण्यफलश्रेष्ठं सर्वशत्रुविनाशनम्।
सर्वरोगहरं दिव्यं भजतां पापनाशनम्॥ ३५॥

इहैव सकलान्भोगानंते शिवपदं व्रजेत्।
इत्युक्त्वान्तर्दधे देवः शरभः पक्षिराजकः ॥ ३६ ॥

ततो नारायणो ध्यात्वा श्रुत्वा रूपं च विस्मितः।
एतत्ते कथितं देवि हृदयं शरभस्य च।
पठतां शृण्वतां चैव सर्वमंत्रार्थसिद्धिदम्॥ ३७॥

इति श्रीआकाशभैरवकल्पे शरभहृदयं नामाष्टसप्ततितमोऽध्यायः

# निग्रह-दारुण-सप्तकम्

अस्य श्री निग्रह-दारुण-सप्तक स्तोत्रस्य वासुदेवः ऋषिः, स्रग्धरा छंदः, श्री शरभेश्वरो देवता, तत्प्रसादसिद्ध्यर्थे सर्वशत्रुनाशने विनियोगः। हरिः ओम्—

कोपोद्रेकातितिर्यक् पटल चरिचरत्तारवर्णप्रभूत-
ज्वालामालाग्रदग्धस्मरतनुशकलं त्वामहं सालुवेश।
याचे त्वत्पादपद्मप्रणतिभिरनिशं वेष्टि मां यः क्रियाभिः
तस्य प्राणप्रयाणं परशिव भवतः शूलभिन्नस्य तूर्णम् ॥१॥

शम्भो त्वद्धस्तकुंत-क्षत-रिपुहृदयान्निःस्रवल्लोहितौघं
पीत्वा पीत्वाऽतिदर्पाद्दिशि दिशि विचरास्त्वद्गणाश्चण्डमुख्याः।
गर्जन्तु क्षिप्रवेगं निखिलजयकराः खेललीलाः सलीलाः
संत्रस्ता ब्रह्मदेवाः शरभखगपते त्राहि नः सालुवेश॥ २ ॥

सर्वाद्यं सर्वनिष्ठं सकलभयकरं तत्वरूपं शरण्यम्
याचेऽहं त्वाममोघं परिकरमिह ते द्वेष्टये तस्य यो मान्।
श्रीशंभो त्वत्कराब्जस्थित हल-कठिनाघातवक्षःस्थलस्य
प्राणाः प्रेतेशदूत ग्रहण-परिभव क्रोधपूर्वं प्रयान्तु॥ ३ ॥

द्विष्मः क्षोण्यां वयं यं तव पदयुगलध्याननिर्दग्धपापाः
कृत्याकृत्यैर्विमुक्ता विहगकुलपते खेलया बद्धमूर्ते।
तूर्णं त्वत्पाणिपद्मप्रधृतपरशुना तुंडखंडीकृतांगः
स द्वेषी यातु याम्यं पुरमतिकलुषः कालपाशाग्रबद्धः॥ ४ ॥

भीम श्रीसालुवेश प्रणतभयहर प्राणिजिद्दुर्मदानां
या ते पंचास्य गर्वप्रशमनविहितः स्वेच्छया बद्धमूर्ते।
त्वामेवाशु त्वदङ्घ्रचष्टक-नखविलुठद्ग्रीवजिह्वोदरस्य
प्राणोत्क्राम-प्रमाद-प्रफुटितहृदयस्यायुरव्याहतेश ॥ ५ ॥

श्रीशूलिन् ते भुजाग्रस्थितदृढमुसलावर्तवाताभिघातैः
यातायातारियूथत्वरितविघटनो भूतरक्तच्छटार्द्राम्।
तां दृष्ट्वाऽऽयोधनेज्यामखिलसुरगणाश्चाशु नंदंतु भूता
नाना वेतालपूगः पिबतु तदखिलं प्रीतचित्तः प्रमत्तः ॥ ६ ॥

त्वद् दोर्दण्डाग्रमुण्ड प्रकटित विनमच्चंडकोदंडमुक्तैः
बाणैर्दिव्यैरनेकैः शिथिलितवपुषः क्षीणकोलाहलस्य।
तस्य प्राणावसानं शरभरिपुरिपोऽहं त्वदाज्ञाप्रभावैः
तूर्णं पश्यामि यो मां परिहसति सभास्वादिमध्यांतहेतो ॥ ७ ॥

इति निशि प्रयतस्तु निराशनो यममुखः शिवभावमनुस्मरन्।
दशदिनं प्रतिवार-शतद्वयं जपतु निग्रह-दारुण-सप्तकम्॥ ८ ॥

इति गुह्यं महावीर्यं परमं रिपुनाशनम्।
भानुवासरमारभ्य मंगलांतं जपेत्सुधीः ॥ ९ ॥

आदावंते च मूलांते पल्लवेन सुसंपुटम्।
प्रतिश्लोकं पठेद्भक्त्या मण्डलाच्छत्रुनाशनम्॥ १० ॥

शरभानुष्टुभारोग्यं संपुटेन जपाच्छिवे।
सर्वरोगा विनश्यंति गौरीवल्लभसम्पुटात्॥ ११ ॥

सालुवेश-पुटाच्चोरनाशनं च स्वरक्षणम्।
स्वधान्यरक्षणार्थाय कालभैरव-संपुटम्॥ १२ ॥

पदार्थरक्षणार्थाय पक्षिराजेति-संपुटम्।
सर्वज्ञ संपुटाद्देवि हृतवस्तुधनागमम्॥ १३ ॥

आकृष्टं रक्तचामुंड्या मोहिन्या मोहनं भवेत्।
शास्तार संपुटाद्देवि पुत्रलाभो भवेद् ध्रुवम्॥ १४ ॥

नारसिंह्या ततोच्चाटे वीरभद्रेण वा शिवे।
वडवानलमंत्रेण संपुटाद्वैरिनाशनम्।। १५।।

चामुण्डी संपुटाद्देवि सर्वशत्रुविनाशनम्।
निशायां बिल्वमूले च स्थित्वा तत्र दिशामुखः ।। १६।।

ऋग्विधाने ।।

विश्वेत्ताते ऋचं मंत्रं देवकोष्ठे विलिख्य तु।
चिंतामणिं सर्वसंधौ साध्यं शूलान्तरालके।। १७

मायावृतमिदं यंत्रं मरणावर्तभंजनम्।
बद्धयो रोगमुक्तस्य सर्वरक्षाकराय वै।। १८।।

कुषुं भकमृचातोयं दशवाराभिमंत्रितम्।
पाययेदागलं सद्यो वृश्चिकाखुविषापहम्।। १९।।

शं न इन्द्राग्नी-सूक्तेन पचेत्तैलं स्पृशेत्तथा।
तत्तत्तैलविधानोक्त फलं सद्यो लभेद् ध्रुवम्।। २०।।

लेह-पानक-खानानि रसपिष्टवटानि च।
सूक्तेनानेन संस्पृष्ट्वा कुर्यात्तत्तत्फलाप्तये।। २१।।

भेषजे व्यवहारे च मंत्रवादेऽर्थवादके।
संसृष्टमित्यृचं मंत्री विजयाय शतं जपेत्।। २२।।

स्वप्नः स्वप्नाधिकरण इत्याथर्वणसूक्तकम्।
त्रिवारं यो जपेन्नित्यं तस्य नास्त्यहिजं भयम्।। २३।।

स्वकृत्यगोपनार्थं च परवर्त्मसुशांतये।
कारयेच्छतमेकेन ''य आस्त'' इति ऋक् जपम्।। २४।।

आवहंतीति सूक्तेन शतवाराभिमंत्रितम्।
अन्नं प्रसादयेन्मंत्री भवेदर्धाधिकं गुणम्।। २५।।

द्रव्यं स्पृशन्नन्नभांडं पचेन्मंत्री सदा जपन्।
तस्मादादाय च कस्मै दत्वा शेषं पुनर्न्यसेत्।। २६।।

एवं चरेत्क्रमेणैव पृथिव्युद्धृत्य मंत्रवित्।
तत्काल वर्तमानानामन्नं पूर्णतरं भवेत्।। २७।।

जपेद्वर्णशतं सिद्धिर्योषायास्तस्य शोभने।
सिद्धिस्तु नित्यभोक्तॄणां तादृशी भांडदर्शनात्।। २८।।

चतुर्भिः पंचभिः षड्भिः स्वाहा पंचभिरेव च।
द्वाभ्यां चतुर्भिः सर्वैश्चावहंती होममुच्यते।। २९।।

जपेदक्षरसाहस्रं नित्यहोमसमन्वितम्।
स्मरणादन्नवृद्धिः स्यात्तस्य तद्राज्य-वंशयोः।। ३०।।

इति गुह्यं महाशास्त्रमभीष्टफलदायकम्।
सतामनुग्रहतरमसतां निग्रहं परम्।। ३१।।

अमोघं परमं गुह्यं परमाकाशभैरवम्।
तादृशं सिद्धिदं श्रेष्ठं कल्पं सत्समयोचितम्।। ३२।।

योगिनां योगदं तत्त्वं कर्मिणां कर्मसिद्धिदम्।
तत्त्वसिद्धिप्रदं तत्त्ववादिनां लक्षधारिणाम्।। ३३।।

सत्यं सर्वमयानां वै सर्वसिद्धिप्रदायकम्।
यः स्मरेत्परया भक्त्या प्रजपेच्छृणुयात्पठेत्।। ३४।।

लिखेद्वा निवहेत्कल्पं सकृन्मासाच्छिवो भवेत्।
शुश्रूषा वर्तते यस्य कल्पे त्वाकाशभैरवे।। ३५।।

तस्मै च धर्मसायुज्यं दत्तमेव सनातनम्।
पुस्तकं वा स्मरेत्पश्येन्नित्यं यद्यज्जनोऽम्बिके।
भुक्त्वा यथेप्सितान् भोगान् भूयः शैवपदं व्रजेत्।। ३६।।

आदि-क्षांतार्ण-मंत्र-प्रभव बहुकुलाकार शास्त्रोक्तमार्गम्
शर्वाग्र्यादित्यतत्त्व प्रसवलयकरं भैरवं ब्रह्मकल्पम्।
रम्यं मंत्री समीक्ष्य स्वमतिविभवतो निर्णयं स्वात्मबोधम्
कर्णे शिष्यस्य कस्यापि च दृढमनसोऽनल्पबुद्धे रहस्यम्।। ३७

इति श्रीआकाशभैरवकल्पे शरभसालुव-पक्षिराजकल्पाख्यं निग्रह-
दारुणसप्तकं-नाम एकाशीतितमोऽध्यायः

# शरभमन्त्र प्रयोगाः

शरभ मंत्रः - (मेरुतन्त्रोक्तः)

अथातः सम्प्रवक्ष्यामि नृसिंहाद्‌बलिनो मम।
मंत्रं शरभ-संज्ञस्य द्रुतसिद्धिप्रदायकम्॥ १॥

''ओं खं खां खं फडुच्चार्य्य द्विःशत्रून्-ग्रससीति च।
तथा हुं फट् सर्वास्त्र संहरणाय शरभेति (शरभाय) च॥ २॥

[1]शान्ताय पक्षिराजाय हुं फट् स्वाहा नमो मनुः।
मंत्रोद्धारो यथाः— ओं खं खां खं फट् शत्रून् ग्रससि ग्रससि हुं फट् सर्वास्त्र संहरणाय शरभाय शान्ताय पक्षिराजाय हुं फट् स्वाहा नमः॥
एकचत्वारिंशदर्णो वासुदेवो मुनिर्मतः॥ ३॥

कालाग्निरुद्रः शरभो देवता परिकीर्तितः।
छन्दस्तु जगती स्वाहा शक्तिर्बीजं स्वमुच्यते॥ ४॥

वेदाङ्क दश सप्ताग सागरैरंगकल्पनम्।
पुनः समस्त मन्त्रेण दिग्बन्धं तु समाचरेत्॥ ५॥

ध्यानम्-

चन्द्रार्काग्नि त्रिनयनं काली दुर्गा द्विपक्षकम्।
विद्युज्जिह्वं वज्रनखं बडवाग्न्युदरं तथा॥ ६॥

व्याधि-मृत्यु-रिपुघ्नं च चण्डवातातिवेगिनम्।
हृद्भैरव-स्वरूपं च वैरिवृन्दनिषूदनम्॥ ७॥

1. शाल्वाय।

मृगेन्द्रत्वकृशरीरोऽस्य पक्षाभ्यां चञ्चुना रवः ।
अधोवक्त्रश्चतुश्पाद ऊर्ध्वदृष्टिश्चतुर्भुजः ॥ ८ ॥

कालान्तदहनप्रख्यो नीलजीमूतनिःस्वनः ।
अरिर्यद्दर्शनादेव विनष्टबलविक्रमः ॥ ९ ॥

शटाख्य ग्रहरूपाय पक्ष-विक्षिप्त-भूभृते ।
अष्टपादाय रुद्राय नमः शरभमूर्त्तये ॥ १० ॥

एवं ध्यायेत् सहस्रं तु प्रजपेत् पायसं हुनेत् ।
प्रत्यहं मासषट्केन मन्त्रसिद्धिः प्रजायते ॥ ११ ॥

तदाऽजेयस्तु सङ्ग्रामे भूत-प्रेत-पिशाचकाः ।
नश्यन्ति दर्शनादेव चाधयो व्याधयस्तथा ॥ १२ ॥

# शरभ-मन्त्रराजः

अमृतानन्दनाथाय कृष्णानन्द योगिने ।
विमलानन्दनाथाय शिवाय गुरवे नमः ॥

ओं आं ह्रीं क्रों एहि शरभ-शाल्वाय स्फुर स्फुर पक्षिराजाय प्रस्फुर प्रस्फुर शत्रूणां शोणितं पिब पिब ओं ऐं ग्लौं ग्लौं ग्लौं ओं ह्रीं ह्रीं ह्रीं ओं ऐं ग्लौं ग्लौं ग्लौं ग्लौं ग्लौं आवेशय आवेशय आगच्छ आगच्छ स्थिरो भव स्थिरो भव रोगान्नाशय नाशय कृत्रिमान् खाहि खाहि चटकान् खादय खादय ओं ह्रीं क्षीं क्रौं (अमुकस्य) रोगान् सुशीघ्रेण छेदय छेदय खेदय खेदय खड्गेन छेदय छेदय आं पाशेन बन्धय बन्धय ह्रीं वं आरोग्यं कुरु कुरु रं खें शत्रूणां रक्तं पिब पिब शीघ्रं शीघ्रं कृत्रिमान् खादय खादय ओं ह्रीं क्रौं खें खां खं फट् प्राणग्रहासि प्राणग्रहासि हुं फट् सर्वशत्रुसंहारणाय शरभ-शाल्वाय पक्षिराजाय हुं फट् स्वाहा

ओं नमो भगवते अष्टपादाय सहस्रबाहवे द्विशीर्षाय द्विनेत्राय द्विपक्षाय रुद्ररूपाय रौद्रमृगविहङ्गवेषधारिणे योगनृसिंह-वेष-संहारणाय उद्दण्डखण्डनाय ज्वाला-नृसिंह (हताय)शमनाय लक्ष्मी-नृसिंह-मथनकराय जगन्नृसिंह सुदर्शनाय अनेक विघ्नरूपच्छेदनाय अखिल-देवता-वन्दनाय निखिलदेवता परिपालनाय क्षयरोगादि सकल-रोग-निवारणाय ह्रीं ह्रीं महाचित्ररथादि गन्धर्व प्रतिष्ठिताय अन्तरिक्षग्रह आकाशग्रह वसुन्धराग्रह क्षिप्रप्रग्रह मंत्रग्रह यक्षग्रह कामिनीग्रह मोहिनीग्रहोच्चाटनाय सकल-ब्रह्मराक्षस-वेताल कूष्माण्डादि महाप्रबलग्रहोच्चाटनाय सकलदुष्टग्रहनिवारणाय महावीरभद्राय परमंत्र-परयंत्र-परतंत्रादिकानां मूलच्छेदनाय शिष्यपरिपालनाय महापशुरूपिणे शरभ-शाल्वाय पक्षिराजाय हुं फट् स्वाहा ॥

इति श्री कालभैरवकृत शरभमंत्रराजः ।

## श्रीशरभदिग्बंधनम्

श्रीगणेशाय नमः ॥ अस्य श्री शरभ दिग्बंधन महामंत्रस्य वामदेव ऋषिः अति जगती छंदः शरभसालुव पक्षिराजो देवता, खं बीजं, स्वाहा शक्तिः, क्रों कीलकं, शरभ सालुवप्रसादसिद्ध्यर्थे जपे विनियोगः ॥ ऊँ खें खां वीर शरभाय अङ्गुष्ठाभ्यां नमः । खं फट् उग्र शरभाय तर्जनीभ्यां नमः, प्राणग्रहासि प्राणग्रहासि हुं फट् क्रूर शरभाय मध्यमाभ्यां नमः, । सर्व शत्रु संहारणाय त्रिशूल शरभाय अनामिकाभ्यां नमः, शरभ सालुवेशाय आनंद शरभाय कनिष्ठिकाभ्यां नमः । पक्षिराजाय हुं फट् स्वाहा वज्र नख वज्र दंष्ट्र शरभाय करतल कर पृष्ठाभ्यां नमः ॥ ऊँ खें खां वीर शरभाय हृदयाय नमः ॥ खं फट् उग्र शरभाय

शिरसे स्वाहा। प्राणग्रहासि प्राणग्रहासि हुं फट् क्रूर शरभाय शिखायै वषट्। सर्व शत्रु संहारणाय त्रिशूल शरभाय कवचाय हुं। शरभ सालुवेशाय आनंद शरभाय नेत्रत्रयाय वौषट्। पक्षिराजाय हुं फट् स्वाहा वज्र नख वज्र दंष्ट्र शरभाय अस्त्राय फट्॥ ॐ लें वीर शरभाय पूर्वद्वारं बन्धय२ मां रक्ष २ महायोगीश्वराय हुं फट् स्वाहा। ॐ रं अग्नि शरभाय आग्नेय द्वारं बन्धय २ मां रक्ष २ महा योगीश्वराय हुं फट् स्वाहा। ॐ हुं प्रलय काल शरभाय दक्षिण द्वारं बन्धय २ मां रक्ष २ महायोगीश्वराय हुं फट् स्वाहा॥ ॐ शं आनंद शरभाय नैरृऋत द्वारं बन्धय २ माँ रक्ष २ महायोगीश्वराय हुं फट् स्वाहा॥ ॐ वं प्रचण्ड शरभाय पश्चिम द्वारं बंधय २ माँ रक्ष २ महायोगीश्वराय हुं फट् स्वाहा॥ ॐ यं कपाल चामुण्ड शरभाय वायव्य द्वारं बंधय २ माँ रक्ष २ महायोगीश्वराय हुं फट् स्वाहा। ॐ शं आनंद शरभाय उत्तर द्वारं बंधय २ माँ रक्ष २ महायोगीश्वराय हुं फट् स्वाहा॥ ॐ शं उग्र शरभाय ईशान द्वारं बंधय २ माँ रक्ष २ महायोगीश्वराय हुं फट् स्वाहा। ॐ लं कल्याण शरभाय अंतरिक्ष द्वारं बंधय २ माँ रक्ष २ महायोगीश्वराय हुं फट् स्वाहा॥ ॐ क्षं प्रलय काल महा तांडव शरभाय भूमि द्वारं बंधय २ माँ रक्ष २ महायोगीश्वराय हुं फट् स्वाहा। ॐ फं दक्षाध्वरध्वंसन शरभाय सर्वदिग्द्वारं बंधय २ माँ रक्ष २ महायोगीश्वराय भूतप्रेत पिशाचोच्चाटनाय महाशरभाय सालुव पक्षिराजाय हुं फट् स्वाहा॥

## ॥ श्री शरभशान्ति स्तोत्रम् ॥

रुद्रः शंकर ईश्वरः पुर हरः स्थाणुः कपर्दी शिवो
वागीशो वृषभध्वजः स्मरहरो भक्तप्रियस्त्र्यम्बकः।
भूतेशो जगदीश्वरश्च शरभो मृत्युंजयः श्रीपतिः
अस्मान्कालगलोऽवता त्पशुपतिः शंभुः पिनाकी हरः॥ १

यतो नृसिंहं हरसे हर इत्युच्यसे बुधैः ।
यतो बिभर्षि सकलं विभज्य तनुमष्टधा ॥ २ ॥

अतोऽस्मान् पाहि भगवन् नः प्रसीद पुनः पुनः ।
इति स्तुतो महादेवः प्रसन्नो भक्तवत्सलः ॥ ३ ॥

सुरानाह्लादयामास वरदानैरभीप्सितैः ।
प्रसन्नोऽ स्मि स्तवेनाहमनेन विबुधेश्वराः ॥ ४ ॥

मयि रुद्रे महादेवे भजध्वं भक्ति पूरिताः ।
ममांशोयं नृसिंहोऽपि मयि भक्ततमोऽ स्त्विह ॥ ५ ॥

इमं स्तवं पठेद्यस्तु शरभेशाष्टकं नरः ।
तस्य नश्यंति पापानि रिपवश्च सुरोत्तमाः ॥ ६ ॥

नश्यंति सर्वरोगाणि क्षय रोगादिकानि च ।
अशेष ग्रह भूतानि कृत्रिमाणि ज्वराणि च ॥ ७ ॥

सर्पचौरादिशार्दूल गज पोत्रि मुखानि च ।
अन्यानि च वनस्थानि नास्ति भीतिर्न संशयः ॥ ८ ॥

इत्युक्त्वाऽन्तर्दधे देवि देवान् शरभ सालुवः ।
ततस्ते स्वस्वधामानि गताश्चाह्लाद् पूर्वकम् ॥ ९ ॥

एतच्छारभकं स्तोत्रं मंत्रभूतं जपेन्नरः ।
सर्वान्कामानवाप्नोति शिव लोकं न गच्छति ॥ १० ॥

(श्री आकाश भैरव तन्त्रे)

## ॥ श्रीशरभमन्त्रराजः ॥

ॐ खें खां खं फट् प्राणग्रहासि प्राणग्रहासि
हुं फट् सर्वशत्रुसंहारणाय शरभसालुवाय पक्षिराजाय
हुं फट् स्वाहा । (द्विचत्वारिं शदर्णः)

अस्य श्रीशरभमन्त्रस्य, कालाग्निरुद्र ऋषिः, जगती छन्दः ।

श्रीशरभेश्वरो देवता। ॐबीजं, स्वाहा शक्तिः,
फट्कीलकम्, श्रीशरभेश्वरप्रीत्यर्थे जपे विनियोगः ॥

शिरसि कालाग्नि रुद्राय ऋषये नमः । मुखे जगती छंदसे नमः । हृदि शरभेश्वराय देवतायै नमः । गुह्ये ॐ बीजाय नमः । पादयोः स्वाहा शक्तये नमः ॥ सर्वांगें हुं फट् कीलकाय नमः ॥ ॐ खें खां अङ्गुष्ठाभ्यां नमः ॥ खं फट् तर्जनीभ्यां स्वाहा ॥ प्राण ग्रहासि प्राणग्रहासि हुं फट् मध्यमाभ्यां वषट्। सर्वशत्रु संहारणाय अनामिकाभ्यां हुं ॥ शरभ-सालुवाय कनिष्ठिकाभ्यां वौषट् ॥ पक्षिराजाय हुं फट् स्वाहा करतलकर पृष्ठाभ्यां फट्॥ अथ हृदयादि न्यासः ॥ ॐ खें खां हृदयाय नमः । ॐ खं फट् शिरसे स्वाहा ॥ प्राणग्रहासि प्राणग्रहासि हुं फट् शिखायै वषट्॥ सर्वशत्रु संहारणाय कवचाय हुं ॥ शरभ सालुवाय नेत्र त्रयाय वौषट्॥ पक्षिराजाय हुं फट् स्वाहा अस्त्राय फट् ॥

चंद्रार्कौ वह्नि दृष्टिः कुलिशवर नखश्चंचंलोऽत्युग्र जिह्वः
काली दुर्गा च पक्षौ हृदय जठरगौ भैरवो वाडवाग्निः ।
ऊरुस्थौ व्याधि मृत्यू शरभवर खगश्चण्ड वातातिवेगः
संहर्त्ता सर्वशत्रून् स जयति शरभः शालुवः पक्षिराजः ॥

वर्ण सहस्रं जपः ॥ पायसेन घृताक्तेन होमः ॥
गौरीवल्लभ कामारे कालकूटविषादन ।
मामुद्धरापदंभोधेः त्रिपुरघ्नान्तकांतक ।

# श्रीत्यागराज मुचुकुन्द सहस्रनामावलिः

ओं श्रीमत्त्यागमहाराजाय नमः । श्रीमत्सिंहासनेश्वराय । श्रीराजराजाय । श्रीनाथहृदयाम्बुजमध्यगाय । श्रिया सह निवासाय। श्रीनाथपरिपूजिताय । श्रीपुरैकनिवासिने । श्रीहंसनटनेश्वराय। श्रीविद्यात्मकरूपाय। श्रीपीठान्तर्निवासिने। श्रीविद्याच्छादित(च्छाद्य) हृदयाय । श्रीविद्याहंससंपुटाय । श्रीविद्यापरिधानाख्याय । श्रीपूजितपदाम्बुजाय । श्रीमत्त्याग-विनोदाख्यवासनैकबहुप्रियाय । श्रीशिवाय । श्रीशिवतराय । श्रीशिवायाः प्रियंकराय । श्रीविद्यायाख्रिखण्डात्मसोमास्कन्द-स्वरूपवते। श्रीमूलाधारनिलयाय नमः । २०

श्रीभारतीशिवाप्रियाय नमः । सच्चिदानन्दरूपाय । श्रीविद्यामोघवैभवाय । सदाशिवमहाकारसर्वागमविवेचिताय । सत्पूज्याय। सकलाय। सर्वातीतस्वरूपिणे। सर्वभूतान्तरात्मने। सर्वभूतलयंकर्त्रे । सर्वसान्निध्यकारकाय । सर्वमन्त्रमयाकृतये । सर्वमन्त्रेश्वराय । सर्वयन्त्रेश्वराधिपाय । महाकल्पमहाघोर-महाताण्डवनायकाय । अजपाताण्डवप्रियाय । हंसताण्डव-सुप्रीताय । हादिविद्यास्वरूपिणे । अम्बिकागुहसंयुताय। अरिष्टमथनाय। सर्वारिष्टविनाशनाय नमः । ४०

सर्वभूतस्वरूपिणे नमः । सर्वभूताधिपेश्वराय । सर्वसंक्षोभहारिणे । सदाराध्याय । समाकृतिने(तये) । सर्वशक्तिमयाय। सर्वसमानाधिकवर्जिताय। सर्वमङ्गलरूपाय। नमतां सद्गतिप्रदाय। मूलमन्त्रस्वरूपिणे। मूलविद्याजपप्रियाय। मूलशृङ्गाटनिलयाय । मुक्तिमार्गप्रकाशकाय । रथप्रियाय । भूमिरथाय। चन्द्रभास्वच्चक्ररथाय[1] । क्षोणीरथवरासीनाय[2] ।

*1. 'चन्द्रभास्करचक्ररथाय'. 2. 'वरासनाय'.

महारथवरस्थिताय[1] । चतुःषष्टिकलास्तम्भरथारूढमहारथाय । शतारचक्रसंयुक्तरथारोहणशोभनाय नमः । ६०

त्रितत्त्वरथसंस्थायिने नमः । शिवतत्त्वविमानगाय । (श्री) गणाधीश्वरस्कन्दद्वारपद्रथभासुराय[2] । अश्वायितचतुर्वेदाय । रथावनिपरायणाय । शरायितरमाकान्ताय । सारथीभूतविश्वसृजे । चापायितमहामेरवे । तूणीकृतमहार्णवाय । गुणीकृतफणीशानाय । शास्त्ररज्जुसमाकृताय[3] । मार्ताण्डप्रतिमद्युतये । सोमसुन्दरविग्रहाय । मेरुतुल्यत्रिचक्रात्मरथेन त्रिदिवागताय । सौधसान्निध्य-संपूर्णवीथीसंचारसुन्दराय । महाफणिमहारज्जुसमाकृष्टमहारथाय । मन्दस्मितमुखाम्भोजस्मितदग्धपुरासुराय[4] । ललाटनयनज्वालाजालदग्धाङ्गमन्मथाय । पादप्रहारसंक्षुब्धवक्षःस्थलकृतान्तकाय । पादाग्रकल्पितात्युग्रचक्रच्छिन्नजलंधराय नमः । ८०

पादान्तर्दर्शनार्थाय गजसंहारकर्मकृते नमः । दक्षयज्ञसमुत्पन्नशिवनिन्दानिवारकाय । विधिगर्वशिरोहारिकपालमालया युताय । अन्धकासुरविच्छेदजगद्ध्वान्तनिवारकाय । दशास्यभुजदर्पघ्नपादाङ्गुष्ठबलोज्ज्वलाय । कुण्डलिन्यधिदेवाय । कुल-कुण्डालयस्थिताय । आधारकुण्डलिन्यस्तदक्षपादसरोरुहाय । पराशक्तिपराधीशपराख्याकुण्डलीश्वराय । कुटिलारूपकुण्डल्यारोपितस्वपदाम्बुजाय । श्रीमत्सहस्रपत्राख्यकुलकुण्डालयस्थिताय । कटकीकृतभोगीन्द्रकुण्डलीकृतपन्नगाय । पिङ्गलेडारज्जुबद्धकुण्डलीवृषभध्वजाय । कुण्डल्युपरिविन्यस्तकिङ्किणीपदशोभिताय । शब्दोपादानसर्वात्मशक्तिकुण्डलि-

1. कोशान्तरे इदं नाम नास्ति. 2. 'गणाधीश्वरसंयुक्त (-सस्कन्द-) द्वारोद्यद्रथ भासुराय'. 3. कोशान्तरे इदं नाम नास्ति. 4. कोशान्तरे-पुरत्रयाय-

भूषणाय । चलन्नूपुरपादाब्जाय । अज्ञानतिमिरारुणाय । पादपङ्कजविन्यस्तपञ्चशीर्षफणीश्वराय । प्राणायामपरप्राणाय । प्राज्ञप्राणप्रकाशकाय नमः । १००

सुषुम्नान्तरवासिने नमः । शिष्टेष्टसिद्धिदायकाय[1] । शरभाश्लिष्टदेहाय । शरभाय । साल्वपक्षिराजे । नृसिंहगर्वसर्व-स्वनिर्वापणधुरंधराय । प्रलयानलसज्वालहालाहलविषाशनाय । सपिङ्गलसुशोभाभसूक्ष्माय[2] । स्थूलगोपुराय । चतुर्वेदमय-स्तम्भरङ्गमध्यस्थलस्थिताय । सहस्रदलपद्मस्थसुधासाराभि-वर्षणाय । चतुर्योगयुगद्वारसदानन्दरसस्थिताय । चतुःषष्टिकला (जाल)शोभिनिजालययुताय । कलाषोडशकस्तम्भसहस्र-स्थानमध्यगाय । सहस्रपादमाणिक्यमण्डपस्थाननायकाय । देवाश्रयमहारत्नमण्डपासीनदैवताय । पताकापटलै राजद-ग्रमण्डपशोभिताय । ताराकारसमाकारस्तूपीपञ्चकमध्यगाय । अष्टादशपुराणार्थवाङ्गनान्युतमन्दिराय । अष्टाविंशतिमन्त्रात्म फलकाकीलितासनाय नमः । १२०

रत्नस्तम्भसहस्राढ्यकलासंपूर्णमन्दिराय नमः । कला-पञ्चकसंसिद्धभित्ति[3] युक्तसभान्तराय । वीथीविटङ्करूपाय । स्वयंभूतस्वरूपवते । विटङ्कविष्णुहृदयनिवासोत्सुकमानसाय । विटङ्क-वीथीसंभूतश्वासनिःश्वासरूपवते । विटङ्कवीथीसंभूत-व्यष्टिद्वारविनिर्गताय । विटङ्कविविधाकारवीथीसञ्चारमञ्जु-लाय । विधिविष्णुविराड्विश्ववीथीविटङ्करूपवते । विटङ्कावय-वाय । वीरखड्गद्वयान्विताय । अज्ञानतिमिरत्यागविज्ञानमय-वेदनाय । कारणेशपरित्यागनित्यानन्दनिजासनाय । सर्वोपाधि-परित्यागसर्वत्यागरमान्विताय । त्यागवैभवसंयुक्तत्यागध्वज-

1. 'शिष्टदायकाय'. 2. 'अवसूक्ष्मणाय'. 3. 'भक्ति'.

विराजिताय । विद्वज्जनधनत्यागिने । त्यागित्यागपरायणाय । सर्वबन्ध-परित्यागिसर्वसंशुद्धिकारकाय । ब्रह्मादिकारणत्याग-राजराजशिखामणये । कलिदोषपरित्यागकल्मषादिविवर्जिताय नमः । १४०

अध्वषट्कपरित्यागराजमानपदाम्बुजाय नमः । षडाधार-परित्यागपरमानन्दविग्रहाय । दुष्टदूरपरित्यागशिष्टमार्गप्रवर्त-काय । अशेषदुरितत्यागप्रभामण्डलमध्यगाय । प्रभामण्डल-सत्यागराजमानमहेश्वराय । प्रपञ्चकालसत्यागराजमान-तटित्प्रभाय । प्रमाणरीतिसत्यागप्रमाणैकशिरोमणये । कारणे-शपरित्यागकल्पितात्ममहाकृतये । कलाषोडशसत्यागनादान्त-लिखिताकृतये । पञ्चमन्त्रषडङ्गादिपरित्यागपदाम्बुजाय । मेधादिगोन्मनान्तादिपरित्यागविराजिताय । अशेषसार-त्यागिने । अमृताम्भोधिमध्यगाय । परात्परतराय । परापरविवर्जिताय । सायाह्नज्वलनोद्भूतनीराजनविराजिताय । पुरत्रयजयोद्भूतनीराजनविराजिताय । इन्द्राणीहस्तविन्यस्त-नीराजनविराजिताय । त्रितत्त्ववृत्तिनीराज्यनीराजनविराजि-ताय । कालभञ्जन-विश्रान्तिनीराजनविधिप्रियाय नमः । १६०

कालभञ्जनकालाग्निज्वालानीराजनप्रियाय नमः । काल-भञ्जनविश्रान्तिगौरीनीराजनप्रियाय । महाप्रलयकालान्त-गौरीनीराजनप्रियाय । रमावाणीशचीमुख्यनीराजनबहुप्रियाय । त्रितत्ववृत्तिनीराज्यनीराजनसुरक्षिताय । उपसंहारसायाह्न-नीराजनसुरक्षिताय । सायाह्नज्वलनोद्भूतरक्षारक्षितविष्टपाय । संसारार्णवसंमग्नसमुद्धरणपण्डिताय । देवलोकागताभौम-पारिजातसुमार्चिताय । जवन्तीकुसुमाबद्धकृष्णागरुसुकर्णि-काय । मल्लिकामालतीजातीमृदुलाङ्गमनोहराय । रम्भा-

पुष्पाञ्जलिप्रीताय। पञ्चाष्टकुसुमार्चिताय । कह्लारकुसुम-प्रीताय। जवन्तीकुसुमोज्ज्वलाय। परशम्भूहृदुद्भूतजवन्ती-कुसुमप्रियाय । पञ्चभूतात्मकोत्फुल्लमल्लिकादाममण्डिताय । जवन्तीमल्लिकाजातीकह्लारस्रङ्मनोहराय । चम्पकाशोक-पुन्नागसौगन्धिकसुगन्धिताय । देववापीसमुद्भूतकह्लारकुसुम-प्रियाय नमः। १८०

देवलोकागताभौमपुष्पमण्डपमण्डिताय नमः । सदा-शिवमुखोद्भूतसौगन्धिकुसुमप्रियाय । मन्दारतरुसन्तानमहा-राधनतत्पराय । गङ्गालंकृतमूर्ध्ने । ज्ञानचन्द्रकलाधराय । पूर्वाङ्गरम्यदेहाय । अपराङ्गमनोहराय । अत्यन्तसुन्दरतरर-सापाङ्गविरजिताय । अतिसुन्दरसर्वाङ्गाय । अम्बिकास्कन्द-सुन्दराय । अशेषदुरितध्वंसिने । विशेषसुखदायकाय। अरिष्टमथनाय । सर्वारिष्टविनाशनाय । परित्यक्तदुराचाराय । शिष्टमार्गप्रकाशकाय । दुःखसागरनिर्मग्नसमुद्धरणपण्डिताय । अनन्तकालसत्यात्मने। स्थिरविद्युत्समप्रभाय। प्रमाणवेद्यरूपाय नमः। २००

त्यागविद्याविनोदाय नमः । कवितारसिककवये[1] । स्वहृदावेद्यचिद्घनाय । तेजोगर्भितमार्ताण्डचिदानन्दनिजार्चि-ताय। निष्कलाकारसदनसकलीकृतविग्रहाय। दिव्यचक्रगणा-धीशाय । बीजचक्रपितामहाय । बिन्दुचक्रस्थविष्णवे । नादचक्रमहेश्वराय। शक्तिचक्रस्थजीवात्मने। शान्तिचक्रपरात्म-काय । शान्त्यतीतेन्दुबिम्बस्थगुरवे । परमचिन्मयाय । निष्कम्पाय । अचलमूर्तये । श्वासनिःश्वासकम्पिताय । अन्तर्यामिने। जगद्धात्रे। कर्त्रे। कारयित्रे नमः। २२०

वामरूपजगद्धात्रे नमः । ज्येष्ठरूपजनार्दनाय । रौद्ररूपहराकाराय । महाबिन्द्वासनस्थिताय । अम्बिकारूपविलसच्छान्त्या समरसं गताय[2] । तुर्यातीतसमागम्यस्वानुभूतिप्रमाणगाय । आत्मतत्त्वाधिपब्रह्मणे । विद्यातत्त्वाधिपहरये । शिवतत्त्वाधिपरुद्राय । सर्वतत्त्वाधिपशिवाय। सर्वार्थसवशब्दात्मसर्वशब्दैककारणय । सर्वभूतानुकम्पिने । सर्वपाशविमोचकाय । सर्वयोनिक्षोभकाय । सर्वबीजस्वरूपवते । सर्वभूतदयालवे । सर्वभूताभयप्रदाय । महाप्रकाशदिव्यात्मने । महानन्दमहानटाय । महामन्त्राय । २४०

महायन्त्राय नमः । महावाच्याय । महावपुषे । महामन्त्रस्वरूपाय । महासौन्दर्यवारिधये । महाभैरववेषाय । महाविज्ञानविग्रहाय । महाबलसमायुक्ताय । महामातङ्गमर्दनाय । हरिमोहनभिक्षाटसंभवस्वात्मकैङ्कराय[3] । सुवर्णवर्णरुचिराय । सुन्दराय । सुन्दरप्रियाय । सुन्दरेशस्य वैवाह्यस्थगय्यशासनीकृताय[4] । सुन्दरप्रोक्तपद्यौघश्रवणोत्सुकमानसाय । सुन्दरप्रार्थनाक्लृप्तदौत्यकर्मविहारवते । देवाश्रयसमायातभक्तपद्याद्यवाक्प्रदाय । भक्तसुन्दरसंगीतद्राविडस्तोत्रतोषिताय । वृद्धिक्षयविहीनेन्दुसुन्दरप्रियदर्शनाय । परवासुन्दरद्वन्द्वसन्धानक्षमपेशलाय नमः । २६०

परवागीतसंतुष्टाय नमः । परवादौत्यकोविदाय । कृतवातपुरेशज्ञानदीक्षोपदेशाय । ज्ञानसंबन्धपद्यौघश्रवणोत्सुकमान-

1. कोशान्तरे नामद्वयमत्र 2. कोशान्तरे समरसागताय 3. अत्र मोहिन्यवतारभृतो विष्णोः भिक्षाटावसरभृतश्च शिवस्य पुत्रभूतस्य हरिहरपुत्रस्य द्राविड्यां 'अय्यनार्' इति ख्यातस्य निर्देशः 4. अत्र 'तडुत्तु आट्कोण्डातर्' (*தடுத்து ஆட்கொண்டார்*) इति द्राविड्युक्तेरनुवादः कृतः

साय । माणिक्यवाचकप्रोक्तश्रीवाचकबहुप्रियाय । एकविंशतिसंख्यातपद्यद्राविडतोषिताय । वीरमुण्डमहाभक्तसंवादाद्भित्तिलीनकाय । प्रतिज्ञाभेदसंक्रुद्धस्वागमात्पदखण्डिाय । स्वभक्तवीरमुण्डस्य पाददर्शनमोक्षदाय । भक्तानां चित्तशुद्ध्यर्थं देवतीर्थजलाप्लुताय । वृद्धरूपौ समालोक्य सुन्दरस्नानतोत्थिताय[1] बिन्दुनादकलाक्लृप्तसाङ्गोपाङ्गमनोहराय । चिद्गन्धदिव्यप्रसवमालावृतभुजान्तराय । महानुभावाय । महिताय । महातेजसे । महायशसे । महाबुद्धये । महासिद्धये । महामायापरिच्छदाय नमः । २८०

नानासिद्धान्तकर्त्रे नमः । नानागमविधायकाय । नानागममहामोहव्यपनोदनपण्डिताय । दिव्यवेषाय । दिव्यतनवे । देवसिद्धौघवन्दिताय । भक्तहृत्पद्ममार्ताण्डाय । भक्तेन्दीवरचन्द्रमसे । उमास्कन्दमुखालोकिने । उमास्कन्दातिवत्सलाय उमास्कन्दोल्लसत्पार्श्वाय । स्कन्दोमाप्रेमवर्धनाय । स्कन्दोमानयनानन्दविधानैकधुरंधराय । स्कन्दोमावन्दिताय । देवाय । स्कन्दोमानन्दविग्रहाय । मुकुन्दमुचुकुन्देन्द्रविधिमुख्यैः समागताय । श्रीविद्यार्णाम्बरच्छन्नदिव्यावयवकान्तिमते । भक्तकल्पद्रुमसमाय । भक्तसर्वार्थसाधकाय नमः । ३००

राहुग्रस्तात्मबालार्कमण्डलाकृतिभासुराय नमः । मन्दस्मितमुखाय । मन्दवातवातायनोत्सुकाय । दक्षवातायनायात नारीगीतश्रवणकौतुकाय । पञ्चाशद्वर्णज्योतिः प्रभामण्डल-मध्यगाय । शुद्धपञ्चाक्षरज्योतिःसंस्थितानन्दविग्रहाय । प्रभाराशिमध्यगताय । ज्योतिषां ज्योतिषे अव्ययाय ।

1. प्रसिद्धां कामपि त्यागेशसुन्दरमूर्तिकथां परामृशति

अखण्डानन्दचिन्मूर्तये । अपारकरुणानिधये । वरप्रासादचक्रस्थकलाकल्पितविग्रहाय । सप्तकोटिमहामन्त्रजनकाय । मन्त्ररूपवते । व्योमव्यापिमहामन्त्रवर्णितानेकशक्तिकाय । परापरमहामन्त्रनायकस्तुतवैभवाय । मन्त्राभिमानिमन्त्रज्ञाय । मन्त्रप्रकृत्यूर्जिताय । मन्त्राधिष्ठानरूपाय । मन्त्रमन्त्रेश्वराय । अथर्वणमहामन्त्रप्रोक्तमङ्गलविग्रहाय नमः । ३२०

हंसमन्त्रषडङ्गाभहंसव्यत्यासनर्तनाय नमः । ब्रह्माङ्गमन्त्रसंपन्नगुप्तलास्यैकतत्पराय । सप्तकोटिमहामन्त्रनिषेवितपदाम्बुजाय । देवतागणपस्तुत्यध्वनिमन्त्रविशारदाय । मायामन्त्रमहामूलविद्यासंभूततत्पराय । निगमागममन्त्रादिनिर्मितात्मस्वरूपवते । निरिन्धनमहासंविदग्निस्त्रिभुवनोज्ज्वलाय । यज्ञाय । यजमानाय । हविषे । होत्रे । यज्ञभृते । मृकण्डुसूनुरक्षार्थव्यसूकृतकृतान्तकाय । जनितात्मभुवश्रीमते । गोरूपिणे । गोसवप्रियाय । वत्सीकृतकृतान्तस्य रथचक्रमृतीकृताय । अनपायमहीपाल भक्तिप्रकटनोद्यताय । अनपायपुरेशानाय नमः । निरपायबलान्विताय नमः । ३४०

महात्मने नमः । महैश्वर्याय । महाबलपराक्रमाय । मुमुक्षुभिर्ज्ञेयरूपायाज्ञानामतिदुर्लभाय । श्रीमते आदिभिक्षवे[1] । ईश्वराय अनीश्वराय । वाच्यवाचकरूपाय । अवाच्याय । वाञ्छितार्थदाय । नवग्रहमयज्योतिषे । संसारभ्रमकारकाय । संसारभ्रमविच्छित्तिकारणज्ञानदायकाय । परब्रह्मस्वरूपिणे । पराशक्तिपरिग्रहाय । पाटलीमूलनिलयाय । शृङ्गारवनमध्यगाय । दूर्वासोमुचुकुन्दादिनिर्मितालयसंस्थिताय । दूर्वासोमुनिना क्लृप्तस्वागमार्चनपूजिताय । दूर्वासोमुनिना क्लृप्तस्वतन्त्रविषयाद्भुताय । देवेन्द्रपूजिताय नमः । ३६०

1. आदिभिक्षेश्वराय

दिव्यदेवसंघप्रपूजिताय नमः । पुलोमजार्चितपुण्याय । पुरुहूतबहुप्रियाय । अप्सरोहस्तविन्यस्तचामरस्तोमवीजिताय । अशेषदेवताक्लृप्तपुष्पवर्षौघवर्षिताय । ऐरावतसमानीतदेव-सिन्धुजलाप्लुताय । जिह्वानाथेरितानेकगानप्रियदयानिधये । देवभाषाविशेषज्ञाय । देवगानप्रियाय । विभवे । मुचुकुन्दार्चि-ताय । मुख्याय । मुचुकुन्दवरप्रदाय । मुचुकुन्दस्वप्नवेला-दर्शितस्वात्म-विग्रहाय । मुचुकुन्द[1] सप्तभेददर्शितस्वात्म-रूपिणे । नववीरसमुपेत[2] मुचुकुन्दसुवन्दिताय । षडङ्गहंसनटन-समूलास्थितविग्रहाय । सामऋग्यजुराथर्ववेदवेदितविग्रहाय । कुङ्कुमाङ्कितपादाब्जाय । कर्पूरालेपिताङ्गकाय नमः । ३८०

कृष्णागरुकृतामोदनासायुगलमण्डिताय नमः । कृष्ण-गन्धप्रियाय । कृष्णगन्धगन्धितकर्णिकाय । प्रलयकाल-प्रवीणप्रगल्भानन्दताण्डवाय । प्रणवध्वनिगम्भीरमृगासक्त-कराम्बुजाय । प्रलयानलधिक्कारप्रवीणपरशुभृते । वरप्रदान-निपुणवामपाणिसरोरुहाय । चिन्मुद्राञ्चितदक्षपाणये । चित्प्रदाय । चित्प्रबोधकाय । मोक्षविज्ञापनोद्भासिलम्बमान-पदाम्बुजाय । वीरासनान्यपादाब्जकृतकिल्बिष-संहृतये । आनन्दनृत्तव्यापार-स्कन्दगौरीसमन्विताय । शङ्खकाहलसंयुक्त-तालमद्दलनर्तकाय । वीणावेणुमृदङ्गादिवाद्यश्रवणलोलुपाय । प्रणवान्तर्गतज्योतिषे । काहलप्रणवध्वनये । तालमद्दल-वाद्यौघध्वनिसाम्याजपानटनाय । विरिञ्चिविष्णुसंताड्यताल-मद्दलजध्वनये । काहलीमङ्गला-रावसंपूरितदिगन्तराय नमः । ४००

1. स्तव 2. समानीत

कौसुम्भवसनप्रीताय नमः । दुकूलवसनान्विताय । अनेकपुष्पविलसच्चीनाम्बरसमावृताय । विचित्ररेखासंयुक्त-वसनाय । व्याघ्रचर्मभृते । सप्तसागरवेलाढ्यस्वात्मवस्त्र-परिच्छदाय । स्वच्छवस्त्रपरीधानसर्वाभरणभूषिताय । वर्णन्य-ग्रोधमूलस्थदक्षिणामूर्तिसंज्ञिताय । शिवज्ञानामृतनिधये । मुनि-बृन्दनिषेविताय । विश्वन्यग्रोधमूलस्थविश्वव्यापारशक्तिमते । अन्तर्यजनसुप्रीताय । ध्यानैकनिरतोत्सुकाय । मातृकावर्णपीठ-स्थाय । मातृकावर्णविग्रहाय । महापद्मोन्मनारूपकर्णिका-बिन्दुमध्यगाय । मूलादिद्वादशान्तस्थमन्त्रसिंहासनस्थिताय । गोसृष्टिस्थितिसंहारस्वापकालप्रवर्तकाय । विद्यारूप-प्रकाशात्मने । जन्ममृत्युजरापहाय नमः । ४२०

कालातीताय । कालहन्त्रे । देहाहंकारकर्त्रे । मृत्युहन्त्रे मृत्युवाहाय । मृत्युञ्जयमयाकृतये । स्कन्दोमामुख-सौन्दर्या-लोकनोत्सुकलोचनाय । सर्वज्वालाप्रभासीनाय । अतिनिर्मल-देहाय । सामगानानुरञ्जिताय । सोमसूर्याग्नि-रूपवते । कार्यकारणरूपवते । सोमसूर्याग्निलोचनाय । विश्वनेत्राय विश्वगर्भाय विश्वेशाय विश्वविग्रहाय । षट्छक्तिव्यक्तमूर्तये । षडङ्गावरणोज्ज्वलाय । वेदवेदाङ्गकर्त्रे । त्रयीयुवतिसुन्दराय । शब्दब्रह्मात्मरूपाय । शब्दब्रह्मैकनू पुराय । सर्वाधारादिरूपाय । सर्वशब्दैककारणाय नमः । ४४०

लिङ्गत्रयात्मकाय नमः । महालिङ्गमहातनवे । समांशक-महालिङ्गाय । स्वात्मलिङ्गसमुद्भवाय । आद्यलिङ्गाकृतये । सुरलिङ्गाकृतये । स्वयम्भूबाणलिङ्गात्मने । परलिङ्गपरात्पराय । अग्निष्टोमात्मलिङ्गाय । मातृकालिङ्गाय । स्थूललिङ्गमहामेरवे ।

1. कोशान्तरे 'श्रीविद्या'.

सूक्ष्मकैलासलिङ्गकृते । पञ्चलिङ्गमयस्वात्मने । पञ्चलिङ्गमयाकृतये। सर्वलिङ्गमयाकाराय। सहस्रलिङ्गस्वरूपिणे। विश्वाकारमहामेरोः स्वात्मलिङ्गमयोद्भवाय । श्यामरत्नसितज्योतिर्ज्योतिर्लिङ्गमहातनवे। पातालबुद्बुदाकारतेजोलिङ्गमहाकृतये। विद्याराज्ञीसप्तकोशाय नमः ४६०

विद्याराज्ञीसमर्चिताय नमः। घोराय। शान्तमहाविष्णवे। सर्वतोऽनन्तवक्त्रकाय । सर्वतोऽनन्तपादाय । सर्वतोऽनन्तहस्ताय। असङ्ख्यभुजपादाय । असङ्ख्यातगुणनिधये । क्रमाक्रमसमुत्पत्तिरक्षासंहारकारकाय । सर्वदा सुप्रदर्शिने । मानतर्काद्यगोचराय। असङ्ख्यदलसंराजत्कमलालयमध्यगाय। घृतायितजलोद्भूतदीपदीप्तदिनान्तराय। चमत्कारपुराधीशाय। चमत्कारनृपाधिपाय। चमत्कारमहीपालभक्त्युद्भूताचलेश्वराय। दीपच्छायाप्रत्ययकृते। हाटकक्षेत्रनायकाय। अन्तर्गतेश्वराय। अन्तर्मुखमनोहराय नमः। ४८०

वम्रिरूपेन्द्रसंछिन्नसज्याविष्णुशिरोधृताय नमः । महालक्ष्मीवराल्लभ्यस्वमाङ्गल्यपतीसुताय । पुत्रार्थिविष्णुसंक्लृप्तसिद्धिसंपत्तिसाधकाय । श्रीविष्णुतपसा प्राप्तस्वात्मवल्मीकसंभवाय । विराड्विष्णुसमुत्पन्नविटङ्कात्मस्वरूपवते । विराड्विष्णुसमुत्पन्नविष्णुहृत्पद्मवासभुवे । क्षीरसागरवैकुण्ठश्रीविष्णुस्वात्मपूजिताय। सहस्रपद्मैकशून्यहरिनेत्रसमर्चिताय। महासुरजयोद्युक्तविष्णुचक्रप्रदायकाय । हरिलक्ष्मीविधिवाणीगौरीशचीन्द्रपूजिताय । पादाब्जपालिताजस्रमुसलासुरशिक्षकाय । कबन्धकबलप्राप्तकपर्दाङ्कितमस्तकाय । कुरुक्षेत्रमहायज्ञकोपोद्धृतस्वकार्मुकाय । अध्यात्मदृष्टिसंदृश्याय । अध्यात्मज्ञानिवत्सलाय। चमत्कारकलाकर्त्रे। चमत्कारवचः

पटवे। षट्छताधिक-विंशैकसहस्राजपयान्विताय। सफल्गुन्य-जपासीनताण्डवाडम्बरोत्सुकाय । पुरन्दरमहायातमुकुन्दपरि-वन्दिताय नमः । ५००

मुचुकुन्दसमारभ्यमहोत्सवसमुत्सुकाय नमः । वसन्त-वातसंसेविने । वसन्तनर्तनोत्सुकाय । हस्तादिफल्गुनी-प्रान्तमहादिव्यमहोत्सवाय । हस्ताद्युत्तराषाढान्तषट्त्रिंशद्दि-वसोत्सवाय । षट्त्रिंशत्तत्त्वबन्धघ्नसाङ्गोपाङ्गमहोत्सवाय । महार्द्रोत्सवसंप्राप्तजनानुग्रहकारकाय। दिनान्तसुप्रसन्नात्मदीप-संदर्शनोत्सुकाय। हंसकीकृतभोगीन्द्राय। हंसताण्डवसुप्रीताय। पतञ्जलिव्याघ्रपादमुनिमानसहंसकाय । कलासहस्रसंपूर्ण-महादीपावलोकवते । कर्पूरधूलीमिलित धवलावयवोज्ज्वलाय । सायाह्नदीपसंद्रष्टृभक्ताभीष्टप्रदायकाय । भक्तिमत्पापतूलाग्नये । भक्तिमत्सुलभाभयाय । अनन्तपुण्यफलदाय। अनन्तामृत-वारिधये। दिनाष्टकनिविष्टात्मने। पाशाष्टकविनाशनाय नमः । ५२०

महास्वापे जागरूकाय नमः । महासन्ध्यासुवन्दिताय । महादिवससंस्थायिने। महासंहारकारकाय। मध्यावान्तरसंहार-सृष्टिस्थितिविधायकाय । महाविष्णुमहारुद्रश्रीकण्ठानन्द-विग्रहाय। महास्वापसमुद्भूतपञ्चकृत्यपरायणाय । रत्नसिंहा-सनासीनाय । रत्नप्रासादमध्यगाय । नवरत्नसभाधीशाय । रत्नप्राकारमध्यगाय । पञ्चाशत्पीठशक्तिसपरिवारपरीवृताय । कामरूपमहा-पीठपरमानन्दविग्रहाय । श्रीपीठमध्यवासिने । श्रीकण्ठादिभिरावृताय । नवरत्नगृहज्योतिर्मातृकाक्षरमालि-काय। कामेश्वरीवल्लभाय। महाकामेश्वराकृतये। आसीनोत्था-ननटननानाताण्डवपण्डिताय । ऊर्ध्वताण्डवसंवादिने नमः । ५४०

पादव्यत्यासताण्डवाय नमः । सप्तसागरपरिखाभ-भूमिदुर्गपरिच्छदाय । ज्योतिष्मतीशिखावासस‍र्वदेवगणा-वृताय। यशोवतीपुरीशानाय । मनोवाक्यविधिस्तुताय । भूविम्बस्थ-महामायालिपिवृत्तसमाश्रयाय। पञ्चकोशान्तरप्राप्तत्रि-कोणस्थितमध्यगाय । अजपावर्णवाच्याय । अजपाजप-सुप्रीताय । समस्तजनहृत्पद्मज्वलद्दीपसमाकृतये । देश-कालानवच्छिन्नाय । देशकालप्रवर्तकाय । महाभोगिने । महायोगिने । महास्यन्दन-सुन्दराय । तिरोभावक्रिया-शक्तिसंसर्गपशुबन्धकृते । अनुग्रहपराशक्तिलीलाकलनलोलु-पाय । नाडीत्रयान्तविलसत्सुधासाराभिवर्षणाय । नानाविध-रसास्वादमहानुभवशक्तिमते । सोमसूर्याग्निपाद्यार्घ्यसुधाबिन्दु-समर्चिताय नमः । ५६०

अपराधसहिष्णवे नमः । शरणागतवत्सलाय । श्रीमद्देवर-खण्डात्मने । देवतासार्वभौमाय । वीरखड्गाभिरामाय । सर्ववीराधिनायकाय । वीरसिंहासनारूढाय । महावीरासन-स्थिताय । विराट्हृदयपद्मस्थाय । वीर्योद्भूतविनायकाय । आधारपद्मवल्मीकनाथाय । घोषस्वनात्मकाय । सकुलान्त-महापद्मसंराजत्समनाकृतये । ब्रह्मरन्ध्रमहापद्मकोटिशीतांशु-सन्निभाय । हृत्पद्ममध्यसंस्थानसूर्यबिम्बोपमद्युतये । तिथि-संख्यफणादीप्तमहाकुण्डलिभूषणाय । त्रुट्यादिकालपवन-फूत्कारफणिभूषणाय । उमाकुमारसहिताय । श्रीकण्ठपुरनाय-काय । अनाश्रितादिकालाग्निरुद्रान्तभुवनाधिपाय नमः । ५८०

एकादशमहाकोटिरुद्रावरणसंस्थिताय नमः । अनेक-द्वादशादित्यमण्डलान्तसमुज्ज्वलाय । अष्टकोटिवसुप्राज्ञपुष्प-पूजितपादुकाय । महापूरचतुःषष्टिमण्डलाधिपतीश्वराय ।

सप्तलोकान् समालोक्य स्वात्मप्रतिमतेजसे । सर्वलोकमहापुण्यप्रदर्शितमहात्मने । विरिञ्चियज्ञसंभूतकपालमालयायुताय । ऋणत्रयविनाशाय स्वर्णामलकवर्षिणे । देवतीर्थसकृत्स्नानदेवत्ववरदायकाय । जननान्मोक्षदानेन जितचण्डकृतान्तकाय । मरणान्मोक्षदानेन मृत्युवाहनतत्पराय । जननान्मोक्षसंदायिक्षितिमूलनिवासिने । कृतमृत्युक्रियाविष्टमृत्युञ्जयमयाकृतये । जन्ममृत्युजरातप्तजनविश्रान्तिदायकाय । मुनिपक्षिमृगेन्द्रादिमुक्तिमार्गैकतत्पराय । पिष्टार्थमृद्धृतो मूर्ध्नि वेत्रप्रहरचिह्निताय । प्रकृत्याकारसगुणसकलीकृतविग्रहाय । असंख्यरूपसंख्यात्मने । सर्वनाम्ने । सर्वगाय नमः । ६००

सर्वप्रज्ञानिवासाय नमः । सर्वसंकेतजन्मभुवे । सर्वसंकेतसमयकारकाय । करुणानिधये । जगद्भ्रात्रे । जगद्बान्धवाय । जगन्मात्रे । जगत्पित्रे । कालज्ञाय । कालकर्त्रे । महाकालप्रवर्तकाय । अष्टादशाधिकशतमहारुद्रप्रपूजिताय । सौगन्धिकलसत्पुष्पस्रगन्वितभुजान्तराय । सर्वसौन्दर्यनिल-याय । सर्वसंपत्समृद्धिमते । दुग्धसंमितवागीशज्ञानदुग्धाब्धिवासभुवे । श्रुतिस्मृतिपुराणैक्यगम्यविग्रहरूपवते । चिद्घन सुमहारुद्र गुरुमन्त्रेशनायकाय । श्यामोमारुण-स्कन्दवामभागमनोहराय । पश्यन्तीमध्यमाभिख्यवैखर्याश्रित-विग्रहाय नमः । ६२०

घोषमेघविद्युदाभमहापद्मासनप्रभवे नमः । वसन्तवातविलसद्धृहत्पुष्पावतंसकाय । प्राणापानागमप्राज्ञाय । विश्वातीतस्वरूपगाय । सुभुजोद्दण्डदौर्भाग्यहरणेऽतिनिपुणाय । दुरितारण्य दावाग्नये । दुष्टदूर[1]स्थिताय । अशेषदेवताधीशविष्णुहृत्पद्मवासभुवे । स्वपादहंसकोद्भूतप्रत्याहारार्थसूत्रकाय । स्वपादकिंकिणी-जातनवव्याकरणावलये । कामिकाद्या-

1. कोशान्तरे यमत्र

गमाकाराय। सर्वावयववर्जिताय । सर्वावयवसंपन्नाय । द्वात्रिंशल्लक्षणान्विताय । सर्वलक्षणसंपन्नाय । अनौपम्यशुभाकाराय । निस्तुलाय । निरहंकृतये। निराधारात्मसर्वविदे । सर्वज्ञाय। सर्वगोचराय नमः । ६४०

लौकिकागमकर्त्रे नमः । वैदिकोक्तफलप्रदाय। अध्यात्मज्ञानकर्त्रे । अतिमार्गप्रवर्तकाय । स्वशक्तिज्वालाकल्पाय । स्वशक्तिकिरणोज्ज्वलाय स्वशक्तये लीनविग्रहाय । लोकातिशयसौन्दर्यनिधये अन्तर्बहिर्गताय । साम्ना शक्त्येकाशीति पादुकाय परमार्थदाय । वरप्रासादचक्रस्थद्रुम वर्णत्रयात्मकाय । शुद्धप्रपञ्चसृष्ट्यादिकर्तृसिद्धान्तबोधकाय । महत्परादिसंबन्धगुरुसन्तानबोधकाय । धर्माधिष्ठानचक्रस्थभूतग्रामविवर्तकाय । निष्प्रपञ्चाय । निराकाराय। ध्यातृमानसमन्दिराय । महामायासुधासिन्धवे । परानन्दामृतोदधये। अशेषदुःखतरणज्ञानानन्दसुबोधकाय । विराण्मूलालयाम्भोजमहामन्दिरमध्यगाय नमः । ६६०

परमानन्दसन्दोहमन्दस्मितमुखाम्बुजाय नमः । करोटिमालाकलितहरिगर्वनिवारकाय । ललाटनेत्रदहनभस्मीकृतमनोभवाय। कवचीकृतषट्चक्रतिरोधानमहेश्वराय। बाह्यदृष्ट्यप्रमेयाङ्गाय । ज्ञानदृष्ट्यवलोकिताय । पञ्चमूर्धफणीशानतिरोहितपदाम्बुजाय। त्रिलोकसंरक्षणार्थाय राजवेषधराय। पुष्यात्मरथसंप्रीताय । पुण्यभूमिनिवेशिताय । पुरुहूतार्चितपुण्याय । पुरुहूताघमोचनाय। सौन्दर्यसिन्धुसंभूतनिशाकरसमाकृतये । जघन्यजन्मविच्छेत्त्रे । देवेन्द्रस्य वरप्रदाय । पुरन्दरमहाघोरचण्डालत्वविमोचकाय । कृतपाणिग्रहोदारगुणेन्द्राणीपुरन्दराय । देवराजमहाघोर-गुल्मरोगनिवारकाय ।

पुरन्दरमहाशापपुरोगमसमुत्सुकाय । शिलादजात्मजेनाशु नन्दिकेशाधिकारिताय नमः । ६८०

सुमेरुशृङ्गमूलस्थविश्वसृष्ट्याद्यकारकाय नमः । आमूल-द्वादशान्ताद्याधारादिषु वासिताय । अद्वितीयचिदानन्दघन-कल्याणसुन्दराय । अशेषकलुषारण्यदावानलशिखायुताय । दशप्राणमहाभूतप्राणायामकचिन्मयाय । आनन्दचित्सभा-शैलाद्विनिर्गतविभावसवे । तेजोमण्डलमध्यस्थचिदानन्द-दिवाकराय । भानुमण्डलमध्यस्थाय । चन्द्रमण्डलमध्यगाय । तेजोमण्डलमध्यस्थाय । तेजस्विने । तेजसां निधये । कालाधिदैवताय । कालाय । अवस्थानीतमूर्तिमते । कालहन्त्रे । कालरूपिणे । सर्वकालप्रवर्तकाय । चतुरन्तायतमूर्तये । सर्वावस्थाप्रवर्तकाय नमः । ७००

चतुराम्नायमूर्तये नमः । षडङ्गावरणोज्ज्वलाय । मीमांसा-मांसलांसाय । तर्कशास्त्रकशेरुकाय । पुराणेन्द्रियसंयुक्ताय । धर्मशास्त्रात्मचेतनाय । षट्स्मृतिचतुर्वेदधनुर्वेदप्रतापवते । गान्धर्ववेदगानाढ्याय । आयुर्वेदारोग्यविदे । अवर्णविग्रह-ज्योतिषे । नाट्यकादिरसान्विताय । चतुःषष्टिकलारूपसर्वा-वयवसुन्दराय । मनोवाङ्मयदेहाय । शब्दब्रह्मस्वरूपवते । भक्तेष्टचित्तशुद्ध्यर्थं शाकीकृतशिशूत्सवाय । उमास्कन्दादि-सहितमहाचण्डालवेषभृते । सोमयाजिमहायागप्रवेशव्यग्र-विग्रहाय । सोमपूज्यसोमयुत-सोमसुन्दरविग्रहाय । सोमयाजि-महाभक्तिव्यक्तिसंतुष्टमानसाय । पदद्वयैर्नटत्सोमहविर्भाग-प्रतिग्रहाय नमः । ७२०

सोमसूर्याग्निनाड्यन्तर्वीथीसंचारसुन्दराय नमः । हंस-मन्त्राक्षरद्वन्द्ववाच्याय । विश्वाघमोचकाय । दिग्देशकालर-

हितानन्याय । अचिन्त्यरूपवते । शतोपनिषदुद्धुष्टनित्याखण्डप्रकाशकृते । कलापञ्चककालादित्यागराजतटित्प्रभवे । सुप्रसन्नेन्द्रियग्रामाय । सर्वप्रत्यक्षदर्शनाय । कृशानुरेतसे । सर्वात्मने । ऊर्ध्वरेतसे । जितेन्द्रियाय । समस्तगुणसंपन्नाय । सर्वापगुणवर्जिताय । निष्प्रपञ्चाय । प्रपञ्चात्मने । सेन्द्रियाय । निरिन्द्रियाय । शान्त्यादिषड्गुणोपेताय नमः । ७४०

मोहाद्यखिलदोषहृते नमः । निर्मलाय । मलध्वंसिने । शान्तशाश्वतविग्रहाय । सुषुम्नान्तःसमुदितनादरूपिणे । नटाधिपाय । निःश्वासलीलासंजातनिगमागमसंततये । देशिकादिष्टमार्गैकदृश्याय । देशिकपुङ्गवाय । वक्त्रे । वाचालकाय । वाच्याय । कैवर्तरूपोद्वहाय । ज्ञानज्ञातृज्ञेयरूपाय । अज्ञानज्ञानगोचराय । कृशानुभानुचन्द्रात्मने । त्रेताग्निपवना-कृतये । दिवासन्ध्यानिशाकाराय । सन्ध्यात्रयनिषेविताय । गायत्रीमन्त्रवेद्याय नमः । ७६०

गायत्रीत्रिपदात्मकाय नमः । वाग्बीजकामराजाख्यपराबीजत्रयाभिधाय । षड्विधैक्यानुसंधानपरदेशिकदर्शिताय । षड्विधार्थस्वरूपेण षडक्षरमयाकृतये । त्रयीदर्शितमूर्त्यात्म मन्त्रमूर्तिमहातनवे । शब्दार्थमात्रसामान्यबिन्दुमूर्तित्रयोज्ज्वलाय । सन्ध्यात्रयात्मस्वरूपत्रिसन्ध्यापरिवर्जिताय । विश्वात्मवेद्य-वेदान्तत्रयीसिद्धान्तदर्शिताय । सच्चिदानन्दविधृतसोमास्कन्दमहेश्वराय । समस्तजननिध्यातचित्ताम्बुजसुखासनाय । पुरुषार्थप्रदाय पूर्णाय । हेयोपादेयवर्जिताय । सविमर्शप्रकाशात्मसहजानन्दविग्रहाय । शिवशक्तिस्वरूपात्मशक्तिशक्तिमदाकृतये । तत्पदार्थैकस्वरूपात्मतत्त्वंपदसुलक्षिताय । आवृत्तित्रयसंपूज्यत्रिलोकीपरिरक्षिताय । रत्नस्तम्भ-

सहस्राढ्यकलासंपूर्णमन्दिराय । आसीनस्पन्दनटनपरशम्भु-परासखाय। सहस्रभानुसदृशाय। चन्द्रकोटिसुशीतलाय नमः। ७८०

अपारकरुणासिन्धवे नमः । असंख्यमहिमार्णवाय । सर्वज्ञतादिषाड्गुण्यसंयुतस्वात्मवैभवाय । पञ्चाशद्वर्णमध्यस्थ-पराप्रासादमन्त्रगाय । पञ्चाशद्वर्णराज्ञीभिः स्तुतशाम्भव-वैभवाय। तेजःपञ्चकबिम्बोद्यद्दीपज्वालावलोकनाय । सोम-सूर्याग्निनक्षत्रविद्युत्प्रतिमतेजसे । श्रीविद्याराज्ञीकराम्भोज-कृतकौतुकमङ्गलाय । मेघध्वनिसमालापाय। वल्मीकसाध्व-सध्वनये । यज्ञेश्वराय । यज्ञमयाय । महायज्ञक्रमावृताय। जपयज्ञक्रियाज्ञानतोषितध्वनये मन्त्रविदे । वागर्थरूपाय । वागीशाय। त्रिकालप्रणवाभिधाय । भक्तोत्सुकाय । भक्ति गम्याय। भक्ति गीतस्तवोन्मुखाय नमः। ८००

दृष्टादृष्टानेकमूर्तये नमः। दुष्टारिबलमर्दनाय। शिवोत्त-माय। शिवतमाय। शिवदात्रे। शिवाप्रियाय। शिवानन्दमया-काराय । शिवाप्रेमविधायकाय । शिवामृताब्धिशीतांशवे । शिवानन्दामृतार्णवाय। शिवाक्षरपरंज्योतिषे। शिवाङ्गाधिक-सुन्दराय । शिवासंसक्तहृदयाय। शिवातोषितमानसाय । शिवाक्षरद्वयाकाराय। शिवागममुखाम्बुजाय। शिवशृङ्गार-वेषाढ्याय । शिवाकल्याणसुन्दराय । शिवागमैकनिलयाय । शिवोऽहंभावना-प्रीताय नमः। ८२०

शिवजीवात्मबोधकाय नमः । शिवमन्त्रोपदेशकाय । शिवागमोक्तनिय(ग)माय। शिवागमनदीपकाय। शिवमन्त्र-ज्ञमुक्तिदाय। शिवमन्त्रजपप्रियाय। भूताधिपाय। भूतनाथाय। भूतवाहनसुन्दराय। भूतनाट्योत्सुकाय। भूतसन्दोहसुप्रियाय।

भूतचक्राराधिताय । भूतसङ्घसमावृताय । भूतादिकालवेत्रे । भूतिभूषितविग्रहाय । भूतसङ्घप्रपूजिताय । भूतपञ्चकविग्रहाय । लक्षकोटिमहाभूतगणसंरक्षकावृताय । कोटिकोटिमहाभूतरक्षिताण्डबहिःस्थलाय । पुण्यापुण्यविनिर्मुक्त पुण्यापुण्यसमेक्षणाय नमः । ८४०

सकृत्संदर्शनादेव सुरेन्द्रपददायकाय नमः । पुण्यश्रवणकीर्त्यात्मने । पुण्यापुण्यफलप्रदाय । करालमुख-कृष्णाङ्गाय । कृष्णाजिनसुलाञ्छिताय । कोटिचन्द्रप्रभाकारपूर्णचन्द्रनिभाननाय । महाकैरातवेषाढ्यपार्थप्रहर-मूर्धकाय । महापाशुपतास्त्रेशदानतोषितपाण्डवाय । महागणेशविध्वस्तविघ्नसिद्धौघवन्दिताय । महाप्रलयंसभूतसर्वप्राण्युप-संहृतये । महाप्रलयकालान्तसृष्टिस्थितिविधायकाय । मूलात्मकोषःकालस्थमुद्गान्नप्रियमानसाय । स्वाधिष्ठानात्मक-प्रातर्दध्यन्नप्रियमानसाय । मणिपूरात्ममध्याह्नघृतमुद्गान्नमानसाय । अनाहतात्मसायाह्नगुळान्नप्रियमानसाय । विशुद्ध्यात्मनिशासंध्यापायसान्नप्रियात्मकाय । आज्ञात्मकार्धयामस्थसर्वान्नप्रियमानसाय । समुद्रशर्कराज्यान्नमाषापूपरसप्रियाय । समुद्रचोचकैर्मिश्रसूचीघनबहुप्रियाय । नानाकोणमधुच्छिद्रनानाभक्ष्यबहुप्रियाय नमः । ८६०

लीलामात्रकृतानेकजगदुत्पत्तिनाशनाय नमः । अव्याजकरुणामूर्तये । अज्ञानध्वान्तभास्कराय । मार्ताण्डभैरवाराध्यवीरखड्गविराजिताय । वीरभद्रसमाराध्यवृषभेन्द्रविलासिताय । वेदमार्गैकनिपुणाय । वेदान्तपरिनिष्ठिताय । वैदिकाचारसंपन्नाय । वामदेववरप्रदाय । ऊर्ध्वस्वायम्भुवादृश्याय । दिव्यस्वायम्भुवात्म- काय । मन्वात्मने । शैवसंपन्नाय ।

सकृत्सन्तानबोधकाय। कमलापतिसंसेव्य कमलासनपूजिताय। उक्षपताकापतये। हराय आरूढवृषध्वजाय। अजय्यगोपदीप्य-ग्राय। महाकारुणिकोत्त-माय। जगत्प्रदीपरूपिणे। लोकत्रयविभावनाय नमः। ८८०

जगद्धितैषिणे नमः। दिव्यात्मने। श्रीमते अमित-विग्रहाय। महाग्रासाय। महामानिने। क्षयद्वीराय। शाश्वताय। श्रीक्षेत्रभैरवाय। कैवर्तकन्यकोद्वहाय। नृसिंहहन्त्रे। कामारये। विष्णुमायान्तकाय। त्र्यम्बकाय। शिपिविष्टाय। मखारये। नीललोहिताय। महाप्राणाय महाजीवाय। प्राणापानप्रवर्तकाय। व्योमव्यापिने। व्योमरूपाय नमः। ९००

व्योमसूक्ष्माय नमः। विराण्मयाय। एकाधिपत्यसाम्राज्य-प्रदाय। एकान्तपूजिताय। द्विरूपशिवशक्त्यात्मने। हंसदिव्याक्षराभिधाय। त्रिमात्रप्रणवध्येयाय। त्र्यक्षाय। त्रिजगदीश्वराय। चतुर्मुखादिसंसेव्याय। चतुर्वर्गफलप्रदाय। पञ्चाक्षरपरंज्योतिषे। पञ्चाक्षरमयाकृतये। पञ्चाक्षरप्राणरूपाय। पञ्चाक्षरजपप्रियाय। पञ्चाक्षर ग्रहाधीशाय। पञ्चाक्षरतिरोहि-ताय। पञ्चाक्षरसदाव्यापिने। पञ्चाक्षरपुरेश्वराय। पञ्चाक्षर-प्रमाणज्ञाय नमः। ९२०

पञ्चाक्षरकमुक्तिदाय नमः। पञ्चाक्षरविदीप्ताय। पञ्चाक्षरफलप्रदाय। पञ्चाक्षरनिवासीन क्षीरार्णवमणये। नटाय। पञ्चाक्षरमहामन्त्रशब्दब्रह्माक्षरोज्ज्वलाय। चतुः षष्टिकलातीर्थ-देवताकोटिसंश्रिताय। श्रीमत्स्वात्मकलामूर्ध्नि जटागङ्गा-कलाधराय। श्रीमद्भगीरथेन्द्राय भूवाराणसिदर्शकाय। श्रीमत्कात्यायनीमुख्यशक्तिपाणिग्रहोत्सुकाय। षडङ्ग-संस्थिताय। सप्तकोटीश्वरनिषेविताय। अष्टमूर्तयेऽनेकात्मने

अष्टैश्वर्यफलप्रदाय। नवतत्त्वातीतमूर्तये नवाक्षरजपप्रियाय। दशायुधाय दशभुजाय दशदिग्व्याप्तविग्रहाय। एकादशमहारुद्ररूपिणे। सर्वजगत्प्रभवे। भूलोकजनपुण्यौघसंप्राप्तकमलालयाय। शुद्धस्फटिक-संकाशस्मितशोभिमुखाम्बुजाय। दयातरङ्गितापाङ्गविलोकन-विलासवते नमः। ९४०

वरदाभीतिपरशुमृगासक्तकराम्बुजाय नमः। कोटिकन्दर्पलावण्यपुण्यसर्वाङ्गसुदराय। सौन्दर्यलहरीपूर्णराजकुम्भेशविग्रहाय। निजावयवगन्धश्रीसुगन्धितदिगन्तराय। श्रवणानन्दसंदायिसौन्दर्यमृदुभाषणाय। कर्पूरधूलिमिलितभस्मोद्धूलितपाण्डराय। महामृगमदोद्दामकृष्णगन्धसुगन्धिताय। कर्पूरकुङ्कुमाद्यष्टचन्दनद्रवचर्चिताय। कालागरुकृतानेकधूपामोदसुमोदिताय। गव्यनिर्वर्तितानेकप्रदीपावलिभासुराय। समुद्गरलभ्राजद्गलस्थलसुशोभिताय। तिलोत्तमोर्वशीरम्भाकल्पितारात्रिकक्रमाय। सायन्तनमहादीप मङ्गलाराधनक्रमाय। दर्पणान्तर्गतस्वात्मप्रतिबिम्बनिभेक्षणाय। चन्द्रमण्डलसंकाशश्वेतच्छत्रविराजिताय। पार्श्वद्वयपरिभ्राजच्चामरावलिराजिताय। तापिञ्छनीलपिञ्छौघच्छायासंछादिताम्बराय। मयूरव्यजनोद्भूतमन्दमारुतसन्ततये। ऋग्यजुःसामजस्तोत्रश्रवणोत्सुकमानसाय। तरुणीभिःसमारब्धशुद्धनृत्तेक्षणप्रियाय नमः। ९६०

पञ्चब्रह्मषडङ्गार्णपञ्चब्रह्मषडङ्गकाय नमः। एकमन्त्रषडङ्गार्णपञ्चब्रह्मषडङ्गवते। अष्टत्रिंशत्कलाक्लृप्ततनुवीक्षणवैभवाय। व्योमव्यापिमहामन्त्रवर्णितानेकशक्तिकाय। अनन्तादिशिवध्याननन्दिभृङ्ग्यादिसेविताय। दशायुधादिदिक्पालैर्दिक्पतिद्विदशावृताय। शतरुद्रावृतप्रान्तसहस्रगणपावृताय। सिद्धगन्धर्वयक्षादिदेवसङ्घनिषेविताय। अनेक-

जन्मसंसिद्धपुण्यलभ्यपदाम्बुजाय । नित्यतृप्तानादिबोधस्वतन्त्रालुप्त्यनन्तकाय । प्रत्युप्तनवरत्नौघसिंहासनवरस्थिताय । भक्ताभीष्टप्रदाय साक्षात्सकलीकृतविग्रहाय । वसन्तवातसंतुष्टाय । वसन्तनर्तनोत्सुकाय । श्रीनीलोत्पलनायक्याः पाणिग्रहणभास्वराय। संसारतापविच्छेत्त्रे । महासंसारकारकाय । ईषणारहितोद्युक्त शिवज्ञानप्रदायकाय । हाटकक्षेत्रसंभूतजीवन्मुक्तिप्रदायकाय । हाटकाभरणाबद्धसर्वावयवशोभिताय नमः । ९८०

शेखरीकृतशीतांशुजाह्नवीबद्धमस्तकाय नमः । शरच्चन्द्रसमाकारवदनाय । मञ्जुलस्वनाय । प्रलयाग्निसमाकारहालाहलविषाशनाय । अनेककोटिब्रह्माण्डनायकाय । नीलकन्धराय । कनकाङ्गदकेयूरकमनीयभुजान्विताय । झलंझलितशब्दौघकटकाबद्धपादुकाय । व्याघ्रचर्मधराय । व्याघ्रपादपूजितपादुकाय । आनन्दवनमध्यस्थाय । सर्वानन्दविधायकाय । सिद्धेश्वराय । सर्वसिद्धपूजिताय । परमाद्भुताय । षष्टित्रिंशत्संख्यातलीलाकल्पितविग्रहाय । लोकसंरक्षणार्थाय राजवेषधराय । नानाविचित्रवेषाढ्याय । नानासिद्धान्तवेदिने । दिव्यशृङ्गारवेषाढ्याय नामरूपविवर्जिताय नमः । १०००

दिगम्बराय अव्ययाय शृङ्गारवनमध्यगाय नमः । भूदाररूपवैकुण्ठपरिमृग्यपदाम्बुजाय । हंसरूपहंसवाहादृष्टशिरसे । लेलिहानमहाघोरमहातेजःस्वरूपवते । चन्द्रहासद्वययुत चन्द्रहासमुखान्विताय । वीथीविटङ्कसाम्बाय । स्वात्मपूजनतत्पराय । महाभिषेकनैवेद्यमहापूजनतत्पराय । विराडाधारमूलस्थत्यागराजमहेश्वराय । श्रीसोमास्कन्दवीथीविटङ्कसाम्बपरमेश्वराय नमः । १०१० श्रीत्यागराजाय । कृपानिधये । दयानिधये नमः ।

॥ श्रीः ॥

# ॥ श्रीवटुकभैरव-सहस्रनामस्तोत्रम् ॥

ॐ तस्य श्रीवटुकभैरवसहस्रनामात्मकस्तोत्रस्य दुर्वासा ऋषिः । अनुष्टुप् छन्दः । भैरवो वटुकनाथो देवता । मम सर्वकार्यसिद्ध्यर्थसर्वशत्रुनिवारणार्थ-वटुकसहस्रनामपाठे विनियोगः ।

ॐ ह्रीं वटुकः कामदो नाथोऽनाथप्रियः प्रभाकरः ।
भैरवो भीतिहा दर्पः कन्दर्पो मीनकेतनः ॥ १

रुद्रो वटुको भूतीशो भूतनाथः प्रजापतिः ।
दयालुः क्रूर ईशानो जनीशी लोकवल्लभः ॥ २

देवो दैत्येश्वरो वीरो वीरवन्द्यो दिवाकरः ।
बलिप्रियः सुरश्रेष्ठः कनिष्ठो नैष्ठिकः शिशुः ॥ ३

महाबलो महातेजा वित्तजो द्युतिवर्द्धनः ।
तेजस्वी वीर्यवान् वृद्धो विवृद्धो भूतनायकः ॥ ४ ॥

बालकः पालकः कामो विकामः काममर्दनः ।
कालिकारमणः कालीनायकः कालिकाप्रियः ॥ ५

कालीशः कालिकाकान्तः कालिकानन्दवर्धनः ।
कालिकाहृदयज्ञानी कालिकातनयो नयः ॥ ६

खगेशः खेचरः खेटो विशिष्टः खेटकप्रियः ।
कुमारः क्रोधनः कालीप्रियः पर्वतरक्षकः ॥ ७

गणेज्यो गणपो गूढो गूढप्रायो गणेश्वरः ।
गणनाथो गणश्रेष्ठो गणमुख्यो गणप्रियः ॥ ८

घोरनादो घनश्यामो घनस्वामी घनान्तकः ।
चम्पकाभश्चिरञ्जीवी चारुवेषश्चराचरः ।। ९

चिन्त्योऽचिन्त्यगुणो धीमान् सुचित्तस्थश्चितीश्वरः ।
छत्री छत्रपतिश्छत्ता छिन्ननासो मनःप्रियः ।। १०

छिन्नाभश्छिन्नसन्तापश्छद्दीराट्छर्दिनान्तकः ।
जेता जिष्णुर्जहीशानो जनानन्दो जनेश्वरः ।। ११

जनको जनसन्तोषो जनजाय विनाशनः ।
जालन्धरो जनाराध्यो जनाध्यक्षो जनप्रियः ।। १२

जीवहा जीवदो जन्तुर्जीवनाथो जलेश्वरः ।
जयदो जित्वरो जिह्मो जयश्रीर्जयवर्धनः ।। १३

जयभूमिर्जयाकारो जयहेतुर्जयेश्वरः ।
झङ्कारकृदनन्तात्मा झङ्कारहेतुरात्मभूः ।। १४

झञ्योश्वरि - र्हरिर्भर्त्ता विभर्त्ता भृत्यकेश्वरः ।
टीत्कारहृदमेयात्मा टङ्केशष्टङ्कनायकः ।। १५

टकारभूष्ठरन्ध्रीशो गिरिष्ठष्ठकुरः पतिः ।
ढुण्ढिर्ढक्काप्रियः पान्थो ढुण्ढिराजो निरन्तकः ।। १६

ताम्रस्तमीश्वरः स्तोता तीर्थराजस्तडित्प्रभः ।
त्रियक्षस्त्र्यक्षकः स्तम्भः स्तार्क्षकः स्तम्भटेश्वरः ।। १७

स्थलस्थः स्थावरः स्थाता स्थिरबुद्धिः स्थिरेन्द्रियः ।
स्थिरज्ञानी स्थिरप्रीतिः स्थिरस्थितिः स्थिराशयः ।। १८

दामो दामोदरो दम्भो दाडिमीकुसुमप्रियः ।
दारिद्र्यहा दमी दिव्यो दिव्यदेहो दिनप्रभुः ।। १९

दिनकरो दिवानाथो दिवसेशो दिवाकरः ।
दीर्घश्वरो दलज्योतिर्दलेशो दलसुन्दरः ॥ २०

दलप्रियो दलाभासो दलपूज्यो दलप्रभुः ।
दलकान्तिर्दलाकारो दलसेव्यो दलार्चितः ॥ २१

दीर्घबाहुर्दलश्रेष्ठो दललुब्धो दलाकृतिः ।
दानवघ्नो दयासिन्धुर्दयालुर्दीनवल्लभः ॥ २२

धनेशो धनदो धर्मो धनराजो धनप्रभुः ।
धनप्रदो धनाध्यक्षो धनमान्यो धनञ्जयः ॥ २३

धीवरो धातुको धाता ध्रुवो धूमलवर्धनः ।
धनिष्ठो धवलच्छत्री धनकाम्यो धनेश्वरः ॥ २४

धीरो धीरतरो धेनुर्धरिशो धरणीप्रभुः ।
धराधीशो धरानाथो धरणीनायको धरः ॥ २५

धराकान्तो धरापालो धरणीजनवल्लभः ।
धराधरोऽधरो धृष्टो धृतराष्ट्रो धनीश्वरः ॥ २६

नारदो नीरदो नेता नीतिपूज्यो नतिप्रियः ।
नीतिलभ्यो नतीशानो नीतिलब्धो नतीश्वरः ॥ २७

पार्थिवः पार्थसम्पूज्यः पार्थदः प्रणतः पृथुः ।
पृथिवीशः पृथासूनुः पृथिवीभृत्य ईश्वरः ॥ २८

पुराणः पारदः पान्थः पाञ्चालीपावकः प्रभुः ।
पूर्वः सुरपतिः श्रेयान् प्रीतिदः प्रीतिवर्द्धनः ॥ २९

पार्वतीशः परेशानः पार्वतीहृदयप्रियः ।
पार्वतीरमणः पूतः पवित्रः पापनाशनः ॥ ३०

पात्री पत्रालिसन्तुष्टः परितुष्टः पुमान् प्रियः ।
पर्वेशः पर्वताधीशः पर्वतो नायकामजः ।। ३१

फाल्गुनस्तु फणानाथः फणीशः फणरक्षकः ।
फणीपतिः फणीशानः फणराजः फणाकृतिः ।। ३२

बलभद्रो बली बालो बलधीर्बलवर्द्धनः ।
बलप्राणो बलाधीशो बलिदान-प्रियंकरः ।। ३३

बलिराजो बलिप्राणो बलिनाथो बलप्रियः ।
बली वरश्च बालेशो बालकः प्रियदर्शनः ।।। ३४

भद्रो भद्रपदो भीमो भीमसेनो भयङ्करः ।
भव्यो भव्यप्रियो भूतपतिर्भूविनायकः ।। ३५

भूतेशो भूतिदो भर्गो भूतभव्यो भवेश्वरः ।
भवानीशो भवेशानो भवानीनायकोऽर्भकः ।। ३६

मकारो माधवो मीनो मीनकेतुर्महेश्वरः ।
महेषुर्मदनो मन्थो मिथुनेशोऽमराधिपः ।। ३७

मरीचिर्मञ्जुलो मोहो मोहहा मोहमर्दनः ।
मोहको मोहनो मेधाप्रियो मोहविनाशकः ।। ३८

महीपतिर्महीशानो महीराजो मनोहरः ।
महीश्वरो महीपालो महीनाथो महीप्रियः ।। ३९

महीधरो महादेवो मनुराजो मनुप्रियः ।
मौनी मौनधरो मेधो मन्दारो मतिवर्द्धनः ।। ४०

मतिदो मन्थरो मन्त्रो मन्त्रीशो मन्त्रनायकः ।
मेधावी मानदो मानी मानहा मानमर्दनः ।। ४१

मीनगो मकराधीशो मधुरो मणिरञ्जितः ।
मणिरम्यो मणिभ्राता मणिमण्डन-मण्डितः ।। ४२

मन्त्रपो मन्त्रदो मुग्धो मोक्षदो मोक्षवल्लभः ।
मल्लो मल्लप्रियो मञ्चो मल्लको मेलनप्रभुः ।। ४३

मल्लिको मल्लिकागन्धी मल्लिकाकुसुमप्रियः ।
मालतीशो मघानाथोऽमोघमूर्तिर्मघेश्वरः ।। ४४

मूलाभो मूलहा मूलो मूलदो मूलमत्सरः ।
माणिक्यरोचिः सम्मुग्धो मणिकूटो मणिप्रियः ।। ४५

मुकुन्दो मदनो मन्दो मन्दवन्द्यो मनुप्रभुः ।
मनःस्थो मेनकाधीशो मेनकाप्रियदर्शनः ।। ४६

यमो यामो यमीदेवो यादवो यदुनायकः ।
याचको याज्ञिको यज्ञो यज्ञेशो यज्ञवर्धनः ।। ४७

रमापती रमाधीशो रमेशो रामवल्लभः ।
रमापती रमानाथो रमाकान्तो रमेश्वरः ।। ४८

रेवतीरमणो रामो रमेशो रामनन्दनः ।
रमामूर्ती रतीशानो राकाया नायको रविः ।। ४९

लक्ष्मीधरो ललज्जिह्वो लक्ष्मीबीजजपे रतः ।
लम्पटो लम्बराजेशो लम्बोदरो लकारभूः ।। ५०

वामनो वल्लभो वन्द्यो वनमाली वनेश्वरः ।
वरस्थो वनगो विन्ध्यो विन्ध्यराजो वनाह्वयः ।। ५१

वनेचरो वनाधीशो वनमालाविभूषणः ।
वेणुप्रियो वनाकारो वनाराध्यो वनप्रभुः ।। ५२

शम्भुः शङ्करसन्तुष्टः शम्बरारिः शरासनः ।
शबरीप्रणतः शालः शिलीमुखध्वनिप्रियः ॥ ५३

शकुलः शल्लकः शीतः शीतरश्मिः सितांशुकः ।
शीलदः शीकरः शीलः शीलशीली शनैश्वरः ॥ ५४

सिद्धः सिद्धिकरः साध्यः सिद्धिभूः सिद्धिभावनः ।
सिद्धान्तवल्लभः सिन्धुः सिन्धुतीरनिषेवितः ॥ ५५

सिन्धुपतिः सरोधीरः सरसीरुहलोचनः ।
सरित्पतिः सरित्संस्थः सरः सिन्धुः सरोवरः ॥ ५६

सखा वीरपतिः सूतः सचेताः सत्पतिः सितः ।
सिन्धुराजः सदाभूतः सदाशिवः सताम्पतिः ॥ ५७

सदीशः सदनः सूरिः सेव्यमानः सतीपतिः ।
सूर्यः सूर्यपतिः सेव्यः सेवाप्रियः सनातनः ॥ ५८

सतीशः सरसीनाथः सतीराजः सतीश्वरः ।
सतीप्राणः सतीनाथः सतीसेव्यः सतीपतिः ॥ ५९

सिद्धराजः सतीतुष्टः सचिवः सव्यवाहनः ।
सतीनायक-सन्तुष्टः सव्यसाची सुमन्त्रकः ॥ ६०

सच्चित्तः सर्वसन्तोषी सर्वारामः सुसिद्धिदः ।
सर्वाराध्यः सचिवाख्यः सतीपतिसुसेवितः ॥ ६१

सागरः सगरः सार्थः समुद्रः समुद्रप्रियः ।
समुद्रतीरसन्तुष्टः समुद्रप्रियदर्शनः ॥ ६२

समुद्रेशः सरोनाथः सरसिज-विलोचनः
सरसीजलदाकारः सरसीजलदार्चितः ॥ ६३

सामुद्रिकः समुद्रात्मा साध्यमानः सुरेश्वरः ।
सुरसेव्यः सुरेशानः सुरनाथः सुरार्चितः ॥ ६४

सुराध्यक्षः सुराराध्यः सुरवन्द्यो विशारदः ।
सुरमुख्यः सुरप्रायः सुरः सिन्धुनिवासवान् ॥ ६५

सुधाप्रियः सुधाधीशः सुधाराध्यः सुधापतिः ।
सुधानाथः सुधाभूतः सुधासागर-सेवितः ॥ ६६

हाटको हीरको हन्ता हीरकस्य रुचिः प्रभुः ।
हव्यवाहो हरिद्राभो हरिद्रारसमर्दनः ॥ ६७

हेतिर्हेतुर्हरित्राता हरिनाथो हरिप्रियः ।
हरिपूज्यो हरिप्राणो हरहृष्टो हरीन्द्रकः ॥ ६८

हरीशो हन्तृको हीरो हरिनामपरायणः ।
हरिमुग्धो हरिरम्यो हरिदासो हरीश्वरः ॥ ६९

हरो हरिपतिर्हारो रोहिणीचित्तहारकः ।
हरिहितो हरिप्राणो हरिवाहन-शोभनः ॥ ७०

हासो हासप्रियो हूहूर्हुतभुग् हुतवाहनः ।
हुताशनो हली हक्को हालाहलो हलायुधः ॥ ७१

हलाकारो हलीशानो हलिपूज्यो हलिप्रियः ।
हरपुत्रो हरोत्साहो हरसूनुर्हरात्मजः ॥ ७२

हरवन्द्यो हराधीशो हरातङ्को हराकृतिः ।
हरमान्यो हराङ्कस्थो हरवैरि-विनाशनः ॥ ७३

हरशत्रुर्हरामर्षोऽहङ्कारो हरिणीप्रियः ।
हाटकेशो हटेशानो हाटकप्रियदर्शनः ॥ ७४

हाटको हाटक-प्राणो हाटभूषणभूषितः ।
हेतिदो हन्तको हंसो हंसगतिर्हराह्वयः ॥ ७५

हंसीपतिर्हरोन्मत्तो हंसीशो हरवल्लभः ।
हरपुष्पप्रभो हंसीप्रियो हंसविलासकः ॥ ७६

हरबीजरतो हारी हरितो हरिताम्पतिः ।
हरित्प्रभुर्हरित्पालो हरिरन्तरनायकः ॥ ७७

हरिद्दिशो हरित्प्राणो हरप्रियः प्रियो हितः ।
हेरम्बो हुँकृतिः क्रुद्धो हेरम्बानन्दनो हठी ॥ ७८

हेरम्बप्राण-संहर्ता हेरम्ब-हृदयप्रियः ।
क्षमापतिः क्षणः क्षान्तः क्षुरधारः क्षितीश्वरः ॥ ७९

क्षितीशः क्षितिदः क्षीणः क्षितिपालः क्षितिप्रभुः ।
क्षितीशानः क्षितिप्राणः क्षितिनायकसत्प्रियः ॥ ८०

क्षितिराजः क्षणाधीशः क्षणपतिः क्षणेश्वरः ।
क्षणप्रियः क्षमानाथः क्षणदानायकःप्रियः ॥ ८१

क्षणिकः क्षणदाधीशः क्षणदाप्राणदः क्षमी ।
क्षमः क्षोणिपतिः क्षोभः क्षोभकारी क्षमाप्रियः ॥ ८२

क्षमाशीलः क्षमारूपः क्षमामण्डनमण्डितः ।
क्षमानाथः क्षमाधारः क्षमाकारी क्षमाकरः ॥ ८३

क्षेमः क्षीणरजाः क्षुद्रः क्षुद्रपानविशारदः ।
क्षुद्रेशानः क्षणाकारः क्षीरपानकतत्परः ॥ ८४

क्षीरशायी क्षणेशानः क्षोणिभृत्क्षणदोत्सवः ।
क्षेमंकरः क्षमालुब्धः क्षमाशास्त्र-विशारदः ॥ ८५

क्षमीश्वरः क्षमाकामः क्षमाहृदयमण्डनः ।
नीलाद्रिरुचिराशेशो नीलपर्वत-सन्निभः ।। ८६

नीलमणिप्रभारम्यः शशिभूषण-भूषितः ।
शशधरः शरीभूतो मुण्डमाला-विभूषितः ।। ८७

मुण्डस्थो मुण्ड-सन्तुष्टो मुण्डमालाधरोऽनघः ।
दिग्वासा विदिगाकारो दिगम्बरवरप्रदः ।। ८८

दिगम्बरेश आनन्दो दिगम्बर-तनूद्भवः ।
पिङ्गलैकजटो धृष्टो डमरुवादनप्रियः ।। ८९

सृणीकरः सृणीशानः खड्गधृद् खड्गपालकः ।
शूलहस्तो मतङ्गाभो मातङ्गोत्सवसुन्दरः ।। ८०

अभयङ्कर ऊर्वङ्गो लङ्कापति-विनाशनः ।
नगाशयो नगेशानो नागमण्डन-मण्डितः ।। ९१

नगाकारो नगाधीशो नगशायी नगप्रियः ।
घटोत्सवो घटाकारो घण्टावाद्य-विशारदः ।। ९२

कपालपाणिरम्बेशः कपालासनसादनः ।
पद्मपाणिः कपालश्च त्रिनेत्रो नागवल्लभः ।। ९३

किङ्किणीजालसन्तुष्टो जलप्रायो जलाकरः ।
अपमृत्युहरो मायामोहमूल-विनाशनः । ९४

आयुधीकमलनाथः कमलाकान्तवल्लभः ।
राज्यदो राजराजेशो राजीवपट्ट-शोभनः ।। ९५

डाकिनीनायको नित्यो नित्यधर्मपरायणः ।
डाकिनीहृदयज्ञानी डाकिनीदेहनाशकः ।। ९६

डाकिनी-प्राणदः शुद्धः श्रद्धेयचरितो विभुः ।
हेमप्रभो हिमेशानो हिमानीप्रियदर्शनः ।। ९७

हेमदो मर्मदो नामी मानधेयो नगात्मजः ।
वैकुण्ठो वासुकीप्राणो वासुकी-कण्ठभूषणः ।। ९८

कुण्डलीशो मखध्वंसी मखराजो मखेश्वरः ।
मखाकारो मखाधीशो मखमाला-विभूषणः ।। ९९

अम्बिकावल्लभो वाणीपतिर्वाणी-विशारदः ।
वाणीशो वाचः प्राणश्च वचःस्थो वचन-प्रियः ।। १००

वेलाधरो दिशामीशो दिङ्नागो हि दिगीश्वरः ।
दूर्वाप्रियो दुराराध्यो दारिद्र्य-भयभञ्जनः ।। १०१

तर्कस्तर्कप्रियस्तर्क्यो वितर्कस्तर्कवल्लभः ।
तर्कसिद्धोऽतिसिद्धात्मा सिद्धदेहो गुहाशयः ।। १०२

ग्रहगर्भो ग्रहेशानो गन्धगन्धी विशारदः ।
मङ्गलो मङ्गलाकारो मङ्गलवाद्य-वादकः ।। १०३

मङ्गलीशो विमानस्थो विमानो नैकनायकः ।
बुधेशो बिबुधाधीशो बुधवारो बुधाकरः ।। १०४

बुधनाथो बुधप्रीतो बुधवन्द्यो बुधाधिपः ।
बुधसिद्धो बुधप्राणो बुधबुद्धो बुधप्रियः ।। १०५

सोमप्रभो मनःसिद्धो मनोज-प्राणनाशनः ।
सोमेशो मशकाकारो सोमपः सोमनायकः ।। १०६

कामगः कामहा बौद्धः कामनाफलदोऽधिपः ।
त्रिदशो दशरात्रेशो दशानन-विनाशनः ।। १०७

लक्ष्मणो लक्ष्यसम्भर्त्ता लक्ष्यसंख्यो मनःप्रियः ।
विभावसुर्नलेशानो नायको नगजाप्रियः ।। १०८

नलकान्तिर्नलोत्साहो नरदेवो नराकृतिः ।
नरपतिर्नरेशानो नारायण-नरेश्वरः ।। १०९

अनिलो मारुतो मांसो मांसैककरसेवितः ।
मरीचिरमरेशानो मागधो मगधप्रभुः ।। ११०

सुन्दरो सेवकोद्धारी द्वारदेशनिवासनः ।
देवकीगर्भसञ्जातो देवकी-सेवकः कुहूः ।। १११

बृहस्पतिः कविः शुक्रः शारदासाधक प्रियः ।
शारदासाधक प्राणः शारदासेवकोत्सुकः ।। ११२

शारदासाधक-श्रेष्ठो वीतरागो गजप्रभुः ।
मांसप्रियो मधुप्राणो मधुमांस-महोत्सवः ।। ११३

मधुपो मधुपश्रेष्ठो मधुपानसदारतिः ।
मोदकादान-सम्प्रीतो मोदकामोदमोदितः ।। ११४

आमोदामोदितो नन्दो नन्दिकेशो नदेश्वरः ।
नदीप्रीयो नदीनाथो नदीतीरहस्तपः ।। ११५

तपनस्तापनस्ताम्रतापहा तापकारकः ।
पतङ्गो गोमुखो गौरो गोपालो गोपवर्द्धनः ।। ११६

गोपतिर्गोपसंहर्ता गोवृन्दैकप्रियोऽतिगः ।
गर्विष्ठो गुणरम्यश्च गुणसिन्धुर्गुरुप्रियः ।। ११७

गुणपूज्यो गुणोपेतो गुणवाद्यो गुणोत्सुकः ।
गुणीशः केवलो गर्भः सुगर्भो गर्भरक्षकः ।। ११८

गाम्भीर्यधारको धर्त्ता विधर्ता धर्मपालकः ।
जगदीशो जगन्मित्रो जगत्त्राता जगत्प्रभुः ।। ११९

जगद्धाता जगद्भोक्ता जगज्जाप्यविनाशनः ।
जगत्कर्ता जगद्धर्ता जगज्जीवन-जीवनः ।। १२०

मालतीपुष्प-सुप्रीतो मालती-कुसुमोत्सवः ।
मालतीकुसुमाकारो मालती-कुसुमप्रभुः ।। १२१

रसालमञ्जरीरम्यो रसगन्ध-निषेवितः ।
रसालमञ्जरीलुब्धो रसालतरुवल्लभः ।। १२२

रसालतरुवासी वै रसालफलसुन्दरः ।
रसालरससन्तुष्टो रसालरसलालसः ।। १२३

केतकी-पुष्पसन्तुष्टो केतकीगर्भसम्भवः ।
केतकीपत्र-संकाशः केतकी-प्राणनाशनः ।। १२४

गर्त्तस्थो गर्त्तगम्भीरो गर्त्तेशो गर्त्तनायकः ।
गर्त्तगेशोऽतिगर्त्तस्थो गर्त्तक्षीरनिवासकः ।। १२५

गणसेव्यो गणाध्यक्षो गणराजो गणाह्वयः ।
आनन्दभैरघोऽभीरुर्भैरवेशो रुरुर्भगः ।। १२६

सुब्रह्मभैरवो वामभैरवो भूतभावनः ।
भैरवी-तनयो देवीपुत्रः पर्वतसम्भवः ह्रीं ॐ ।। १२७

फलश्रुतिः

नाम्नाऽनेन सहस्रेण स्तुत्वा वटुकभैरवम् ।
लभते ह्यतुलां लक्ष्मीं देवानामपि दुर्लभाम् ।। १२८

उपदेशं गुरोर्लब्ध्वा योगे त्रिमङ्गली भवेत् ।
अष्टम्यां वा चतुर्दश्यां वासरे भूमिसम्भवे ।। १२९

शुक्रे वा रविसंक्रान्तौ योगोऽयमुत्तमः प्रभो।
तस्मिन् योगे महेशानि सर्वसिद्धिमवाप्नुयात्॥ १३०

लक्षमावर्त्तयेन्मन्त्री मन्त्रराजं नगेश्वरि।
नित्यकर्म सुसिद्ध्यर्थं तत्फलं लभते ध्रुवम्॥ १३१

स्तवमेनं पठेन्मन्त्री पाठयन् वा यथाविधि।
दुर्लभां लभते सिद्धिं सर्वदेव-नमस्कृताम्॥ १३२

न प्रकाश्यं च पुत्रेषु भ्रष्टेषु तु कदाचन।
अन्यथा सिद्धिरोधः स्याद्वातुलो वा भवेत्प्रियः॥ १३३

स्तवस्यास्य प्रसादेन देवनायकवत्प्रियः।
संग्रामे विजयेच्छत्रून्मातङ्गानिव केसरी॥ १३४

राजानं वशयेत्सद्यो देवानपि वशं नयेत्।
किं वा परं फलं नाथ स्तवराजस्य कथ्यताम्॥ १३५

यद्यन्मनसि संक्लप्य स्तवमेनमुदीरयन्।
तत्तदाप्नोति देवेश वटुकस्य प्रसादतः॥ १३६

आपदां हि विनाशाय कारणं कान्त-दुर्लभम्।
देवासुररणे घोरे देवानामुपकारकम्॥ १३७

प्रकाशितं मया नाथ तन्त्रे भैरवदीपके।
अपुत्रो लभते पुत्रं षण्मासान्निरतो नरः॥ १३८

पठित्वा पाठयित्वाऽपि स्तवराजमनुत्तमम्।
दरिद्रो लभते लक्ष्मीमीप्सितामपि निश्चलम्॥ १३९

कन्यार्थी लभते कन्यां सर्वरूपसमन्विताम्।
प्रदोषे बलिदाने च वशयेदखिलं जगत्॥ १४०

वटे वा बिल्वमूले वा रम्भायां विपिनेऽपि वा ।
जपेत्सततमालक्षं मन्त्रराजस्य सिद्धये ।। १४१

वर्णलक्षं जपेद्वापि दिङ्मात्रं हि प्रदर्शितम् ।
पूजयेत्तु तिलैर्माषैर्दुग्धैर्मांसैर्झषैस्तथा ।। १४२

घृतपक्वान्नतो वाऽपि जेमनै रससंकुलैः ।
पूजयेद्धारयेद्वापि स्तवमेनं सुसाधकः ।। १४३

पठेद्वा पाठयेद्वापि यथाविधि सुरप्रिये ।
शत्रुतो न भयं तस्य नाग्निचौरास्त्रवज्रजम् ।। १४४

ज्वरादिसम्भवं वापि सत्यं सत्यं महेश्वरि ।
भैरवाराधनाशक्तो यो भवेत्साधकः प्रभो ।। १४५

सदाशिवः स विज्ञेयो भैरवेणेति भाषितम् ।

श्रीमद्भैरवराजरञ्जनविधौ वैयग्र्यमासेदुषः
पुंसः पञ्चविधा भवन्ति नवधा ह्यष्टौ तथा सिद्धयः ।
क्षोणीपाल-किरीट-कोटिमणिरुङ्मालाभरैर्भूयशो-
मौग्ध्यं पादपयोजयोर्विजयते मूर्ध्नि प्रभोश्छत्रताम् ।।

इति श्रीभैरवतन्त्रोक्तं श्रीवटुकभैरवसहस्रनामस्तोत्रं समाप्तम् ।

# श्री वटुकभैरवसहस्रनामावलिः

ओं ह्रीं वटुकाय नमः । कामदाय । नाथाय । अनाथप्रियाय । प्रभाकराय । भैरवाय । भीतिघ्ने । । दर्पाय । कन्दर्पाय । मीनकेतनाय । रुद्राय । वटुकाय । भूतीशाय । भूतनाथाय । प्रजापतये । दयालवे । क्रूराय । ईशानाय । जनीशिने । लोकवल्लभाय नमः (२०)

देवाय नमः । दैत्येश्वराय । वीराय । वीरवन्द्याय । दिवाकराय । बलिप्रियाय । सुरश्रेष्ठाय । कनिष्ठाय । नैष्ठिकाय । शिशवे । महाबलाय । महातेजसे । वित्तजाय । द्युतिविवर्धनाय । तेजस्विने । वीर्यवते । वृद्धाय । विवृद्धाय । भूतनायकाय । बालकाय नमः । (४०)

पालकाय नमः । कामाय । विकामाय । काममर्दनाय । कालिकारमणाय । कालीनायकाय । कालिकाप्रियाय । कालीशाय । कालिकाकान्ताय । कालिकानन्दवर्धनाय । कालिकाहृदयज्ञानिने । कालिकातनयाय । नयाय । खगेशाय । खेचराय । खेटाय । विशिष्टाय । खेटकप्रियाय । कुमाराय । क्रोधनाय नमः ।। ६०

कालीप्रियाय नमः । पर्वतरक्षकाय । गणेज्याय । गणपाय । गूढाय । गूढप्रायाय । गणेश्वराय । गणनाथाय । गणश्रेष्ठाय । गणमुख्याय । गणप्रियाय । घोरनादाय । घनश्यामाय । घनस्वामिने । घनान्तकाय । चम्पकाभाय । चिरञ्जीविने । चारुवेषाय । चराचराय । चिन्त्याय ।। ८०

अचिन्त्यगुणाय नमः । धीमते । सुचित्तस्थाय । चितीश्वराय । छत्रिणे । छत्रपतये । छत्त्रे । छिन्ननासाय । मनःप्रियाय । छिन्नाभाय । छिन्नसन्तापाय । छर्दीराजे । छर्दिनान्तकाय । जेत्रे । जिष्णवे । जहीशानाय । जनानन्दाय । जनेश्वराय । जनकाय । जनसन्तोषाय नमः ।। १००

जनजायविनाशनाय नमः । जालन्धराय । जनाराध्याय । जनाध्यक्षाय । जनप्रियाय । जीवघ्ने । जीवदाय । जन्तवे । जीवनाथाय । जलेश्वराय । जयदाय । जित्वराय । जिह्वाय ।

जयश्रिये । जयवर्धनाय । जयभूमये । जयाकाराय । जयहेतवे । जयेश्वराय । झङ्कारकृते नमः (१२०)

अनन्तात्मने नमः । झङ्कारहेतवे । आत्मभुवे । झंयोश्वरये । हरये । भर्त्रे । विभर्त्रे । भृत्यकेश्वराय । टीत्कारहृदे । अमेयात्मने । टंकेशाय । टंकनायकाय । ठकारभुवे। ठरन्ध्रीशाय । गिरिछाय । ठकुराय । पतये । ढुण्ढुये । ढक्काप्रियाय । पान्थाय नमः । (१४०)

ढुण्ढिराजाय नमः । निरन्तकाय । ताम्राय । तमीश्वराय । स्तोत्रे । तीर्थराजाय । तटित्प्रभाय । त्रियक्षाय । त्र्यक्षकाय । स्तम्भाय । तार्क्षकाय । स्तम्भटेश्वराय । स्थलस्थाय । स्थावराय । स्थात्रे । स्थिरबुद्धये । स्थिरेन्द्रियाय । स्थिरज्ञानिने । स्थिरप्रीतये । स्थिरस्थितये नमः ।। १६०

स्थिराशयाय नमः । दामाय । दामोदराय । दम्भाय । दाडिमीकुसुमप्रियाय । दारिद्र्यघ्ने । दमिने । दिव्याय । दिव्यदेहाय । दिनप्रभवे । दिनकराय । दिवानाथाय । दिवसेशाय । दिवाकराय । दीर्घाय । चराय । दलज्योतिषे । दलेशाय । दलसुन्दराय । दलप्रियाय नमः (१८०)

दलाभासाय नमः । दलपूज्याय । दलप्रभवे । दलकान्तये । दलाकाराय । दलसव्याय । दलार्चिताय । दीर्घबाहवे । दलश्रेष्ठाय । दललुब्धाय । दलाकृतये । दानवश्याय । दयासिन्धवे । दयालवे । दीनवल्लभाय । धनेशाय । धनदाय । धर्माय । धनराजाय । धनप्रभवे नमः । २००

धनप्रदाय नमः । धनाध्यक्षाय । धनमान्याय । धनञ्जयाय । धीवराय । धातुकाय । धात्रे । ध्रुवाय । धूमलवर्धनाय । धनिष्ठाय । धवलछत्रिणे । धनकाम्याय । धनेश्वराय । धीराय । धीरतराय ।

धेनवे। धीरेशाय। धरणीप्रभवे। धराधीशाय। धरानाथाय नमः (२२०)

धरणीनायकाय। धराय। धराकान्ताय। धरापालाय। धरणीजनवल्लभाय। धराधराय। अधराय। धृष्टाय। धृतराष्ट्राय। धनीश्वराय। नारदाय। नीरदाय। नेत्रे। नीतिपूज्याय। नतिप्रियाय। नीतिलभ्याय। नतीशानाय। नीतिलब्धाय। नतीश्वराय। पार्थिवाय नमः। (२४०)

पार्थसंपूज्याय नमः। पार्थदाय। प्रणताय। पृथवे। पृथिवीशाय। पृथासूनवे। पृथिवीभृत्याय। ईश्वराय। पुराणाय। पारदाय। पान्थाय। पाञ्चालीपावकाय। प्रभवे। पूर्वाय। सुरपतये। श्रेयसे। प्रीतिदाय। प्रीतिवर्धनाय। प्रार्न्नतीशाय। परेशानाय नमः। (२६०)

पार्वतीहृदय प्रियाय नमः। पार्वतीरमणाय। पूताय। पवित्राय। पापनाशनाय। पात्रिणे। पत्रालिसन्तुष्टाय। परितुष्टाय। पुंसे। प्रियाय। पर्वेशाय। पर्वताधीशाय। पर्वताय। नायकात्मजाय। फाल्गुनाय। फणानाथाय। फणीशाय। फणरक्षकाय। फणीपतये। फणीशानाय नमः ।। (२८०)

फणराजाय। फणाकृतये। बलभद्राय। बलिने। बालाय। बलधिये। बलवर्धनाय। बलप्राणाय। बलाधीशाय। बलिदानप्रियंकराय। बलिराजाय। बलिप्राणाय। बलिनाथाय। बलप्रियाय। बलिने। वराय। बालेशाय। बालकाय। प्रियदर्शनाय। भद्राय नमः। (३००)

भद्रपदाय नमः। भीमाय। भीमसेनाय। भयङ्कराय। भव्याय। भव्यप्रियाय। भूतपतये। भूविनायकाय। भूतेशाय।

भूतिदाय । भर्गाय । भूतभव्याय । भवेश्वराय । भवानीशाय । भवेशानाय । भवानीनायकाय । अर्भकाय । मकाराय । माधवाय । मीनाय नमः (३२०)

मीनकेतवे नमः । महेश्वराय । महेषवे ।मदनाय । मन्थाय । मिथुनेशाय । अमराधिपाय । मरीचये । मञ्जुलाय । मोहाय । मोहघ्ने । मोहमर्दनाय । मोहकाय । मोहनाय । मेधाप्रियाय । मोहविनाशकाय । महीपतये । महीशानाय । महीराजाय । मनोहराय नमः ।। ३४०

महीश्वराय नमः । महीपालाय । महीनाथाय । महीप्रियाय । महीधराय । महादेवाय । मनुराजाय । मनुप्रियाय । मौनिने । मौनधराय । मेघाय । मन्दाराय । मतिवर्धनाय । मतिदाय । मन्थराय । मन्त्राय । मन्त्रीशाय । मन्त्रनायकाय । मेधाविने । मानदाय नमः (३६०)

मानिने नमः । मानघ्ने । मानमर्दनाय । मीनगाय । मकराधीशाय । मधुराय । मणिरञ्जिताय । मणिरम्याय । मणिभ्रात्रे । मणिमण्डनमण्डिताय । मन्त्रपाय । मन्त्रदाय । मुग्धाय । मोक्षदाय । मोक्षवल्लभाय । मल्लाय । मल्लप्रियाय । मञ्चाय । मल्लकाय । मेलनप्रभवे नमः । ३८०

मल्लिकाय । मल्लिकागन्धिने । मल्लिका कुसुमप्रियाय । मालतीशाय । मघानाथाय । अमोघमूर्तये । मघेश्वराय । मूलाभाय । मूलघ्ने । मूलाय । मूलदाय । मूलमत्सराय । माणिक्यरोचिषे । संमुग्धाय । मणिकूटाय । मणिप्रियाय । मुकुन्दाय । मदनाय । मन्दाय । मन्दवन्द्याय नमः । ४००

मनुप्रभवे नमः । मनः स्थाय । मेनकाधीशाय । मेनकाप्रियदर्शनाय । यमाय । यामाय । यमिने । देवाय । यादवाय । यदुनायकाय । याचकाय । याज्ञिकाय । यज्ञाय । यज्ञेशाय । यज्ञवर्धनाय । रमापतये । रमाधीशाय । रमेशाय । रामवल्लभाय । रमापतये नमः (४२०)

रमानाथाय नमः । रमाकान्ताय । रमेश्वराय । रेवतीरमणाय । रामाय । रमेशाय । रामनन्दनाय । रमामूर्तये ! रतीशानाय । राकाया नायकाय । रवये । लक्ष्मीधराय । ललज्जिह्वाय । लक्ष्मीबीजजपेरताय । लम्पटाय । लम्बराजेशाय । लम्बोदराय । लकारभुवे । वामनाय । वल्लभाय नमः (४४०)

वन्द्याय नमः । वनमालिने । वनेश्वराय । वनस्थाय । वनगाय । विन्ध्याय । विन्ध्यराजाय । वनाह्वयाय । वनेचराय । वनाधीशाय । वनमालाविभूषणाय । वेणुप्रियाय । वनाकाराय । वनाराध्याय । वनप्रभवे । शम्भवे । शङ्करसन्तुष्टाय । शम्बरारये । शरासनाय । शबरीप्रणताय नमः ४६०

शालाय । शिलीमुखध्वनिप्रियाय । शकुलाय । शल्लकाय । शीताय । शीतरश्मये । सितांशुकाय । शीलदाय । शीकराय । शीलाय । शीलशीलिने । शनैश्चराय । सिद्धाय । सिद्धिकराय । साध्याय । सिद्धिभुवे । सिद्धिभावनाय । सिद्धान्तवल्लभाय । सिन्धवे । सिन्धुतीरनिषेविताय नमः (४८०)

सिन्धुपतये नमः । सरोधीराय । सरसीरुहलोचनाय । सरित्पतये । सरित्संस्थाय । सरसे । सिन्धवे । सरोवराय । सख्ये । वीरपतये । सूताय । सचेतसे । सत्पतये । सिताय । सिन्धुराजाय । सदाभूताय । सदाशिवाय । सतांपतये । सदीशाय । सदनाय नमः । ५००

सूरये। सेव्यमानाय। सतीपतये। सूर्याय। सूर्यपतये। सेव्याय। सेवाप्रियाय। सनातनाय। सतीशाय। सरसीनाथाय। सतीराजाय। सतीश्वराय। सतीप्राणाय। सतीनाथाय। सतीसेव्याय। सतीपतये। सिद्धराजाय। सतीतुष्टाय। सचिवाय। सव्यवाहनाय नमः ५२०

सतीनायकसन्तुष्टाय। सव्यसाचिने। सुमन्त्रकाय। सच्चित्ताय। सर्वसन्तोषिणे। सर्वारामाय। सुसिद्धिदाय। सर्वाराध्याय। सचिवाख्याय। सतीपति सुसेविताय। सागराय। सगराय। सार्थाय। समुद्राय। समुद्रप्रियाय। समुद्रतीरसन्तुष्टाय। समुद्रप्रियदर्शनाय। समुद्रेशाय। सरोनाथाय। सरसिजविलोचनाय नमः। (५४०)

सरसीजलदाकाराय नमः। सरसीजलदार्चिताय। सामुद्रिकाय। समुद्रात्मने। साध्यमानाय। सुरेश्वराय। सुरसेव्याय। सुरेशानाय। सुरनाथाय। सुरार्चिताय। सुराध्यक्षाय। सुराराध्याय। सुखवन्द्याय। विशारदाय। सुरमुख्याय। सुरप्रायाय। सुराय। सिन्धुनिवासवते। सुधाप्रियाय। सुधाधीशाय नमः (५६०)

सुधाराध्याय नमः। सुधापतये। सुधानाथाय। सुधाभूताय। सुधासागर सेविताय। हाटकाय। हीरकाय। हन्त्रे। हीरकस्य रुचये। प्रभवे। हव्यवाहाय। हरिद्राभाय। हरिद्रारसमर्दनाय। हेतये। हेतवे। हरित्रात्रे। हरिनाथाय। हरिप्रियाय। हरिपूज्याय। हरिप्राणाय नमः। (५८०)

हरहृष्टाय। हरीन्द्रकाय। हरीशाय। हन्तृकाय। हीराय। हरिनामपरायणाय। हरिमुग्धाय। हरये। रम्याय। हरिदासाय। हरीश्वराय। हराय। हरिपतये। हाराय। रोहिणीचित्तहारकाय।

हरिहिताय । हरिप्राणाय । हरिवाहनशोभनाय । हासाय । हासप्रियाय नमः (६००)

हुह्वे नमः । हुतभुजे । हुतवाहनाय । हुताशनाय । हलिने । हकाय । हालाहलाय । हलायुधाय । हलाकाराय । हलिने । ईशानाय । हलिपूज्याय । हलिप्रियाय । हरपुत्राय । हरोत्साहाय । हरसूनवे । हरात्मजाय । हरवन्द्याय । हराधीशाय । हरातङ्काय नमः (६२०)

हराकृतये नमः । हरमान्याय । हरांकस्थाय । हरवैरिविनाशनाय । हरशत्रवे । हरामर्षाय । अहङ्काराय । हरिणीप्रियाय । हाटकेशाय । हटेशानाय । हाटकप्रियदर्शनाय । हाटकाय । हाटकप्राणाय । हाटभूषणभूषिताय । हेतिदाय । हन्तकाय । हंसाय । हंसगतये । हराह्वयाय । हंसीपतये नमः (६४०)

हरोन्मत्ताय । हंसीशाय । हरवल्लभाय । हरपुष्पप्रभाय । हंसीप्रियाय । हंसविलासकाय । हरबीजरताय । हारिणे । हरिताय । हरितां पतये । हरित्प्रभवे । हरित्पालाय । हरये । अन्तरनायकाय । हरिद्दिशाय । हरित्प्राणाय । हरप्रियाय । प्रियाय । हिताय । हेरम्बाय नमः । ६६०

हुं कृतये नमः । क्रुद्धाय । हेरम्बानन्दनाय । हठिने । हेरम्बप्राणसंहर्त्रे । हेरम्बहृदयप्रियाय । क्षमापतये । क्षणाय । क्षान्ताय । क्षुरधाराय । क्षितीश्वराय । क्षितीशाय । क्षितिदाय । क्षीणाय । क्षितिपालाय । क्षितिप्रभवे । क्षितीशानाय । क्षिति प्राणाय । क्षितिनायक सत्प्रियाय । क्षितिराजाय नमः । ६८०

क्षणाधीशाय नमः । क्षणपतये । क्षणेश्वराय । क्षणप्रियाय । क्षमानाथाय । क्षणदानायकाय । प्रियाय । क्षणिकाय ।

क्षणदाधीशाय। क्षणदाप्राणदाय। क्षमिणे। क्षमाय। क्षोणीपतये। क्षोभाय । क्षोभकारिणे । क्षमाप्रियाय । क्षमाशीलाय । क्षमारूपाय। क्षमामण्डनमण्डिताय । क्षमानाथाय नमः । (७००)

क्षमाधाराय नमः। क्षमाकारिणे। क्षमाकराय। क्षेमाय। क्षीणरजसे । क्षुद्राय । क्षुद्रपानविशारदाय । क्षुद्रेशानाय । क्षणाकाराय। क्षीरपानकतत्पराय। क्षीरशायिने। क्षणेशानाय। क्षोणिभृते । क्षणदोत्सवाय । क्षेमङ्कराय । क्षमालुब्धाय । क्षमाशास्त्रविशारदाय। क्षमीश्वराय। क्षमाकामाय। क्षमाहृदय मण्डनाय नमः। ७२०

नीलाद्रिरुचये । आशेशाय । नीलपर्वतसन्निभाय । नीलमणिप्रभारम्याय । शशिभूषण भूषिताय । शशधराय । शरीभूताय । मुण्डमाला विभूषिताय । मुण्डस्थाय । मुण्डसन्तुष्टाय। मुण्डमालाधराय । अनघाय । दिग्वाससे । विदिगाकाराय। दिगम्बरवरप्रदाय। दिगम्बरेशाय। आनन्दाय। दिगम्बरतनूद्भवाय। पिङ्गलैकजटाय। धृष्टाय नमः (७४०)

डमरुवादन प्रियाय । सृणीकराय । सृणीशानाय । खड्गधृते। खड्गपालकाय । शूलहस्ताय । मतङ्गाभाय । मातङ्गोत्सवसुन्दराय। अभयङ्कराय । ऊर्वङ्गाय । लङ्कापतिविनाशनाय । नगाशयाय । नगेशानाय । नागमण्डनमण्डिताय। नगाकाराय। नगाधीशाय। नगशायिने। नगप्रियाय। घटोत्सवाय। घटाकाराय नमः। (७६०)

घण्टावाद्यविशारदाय । कपालपाणये । अम्बेशाय । कपालासनसादनाय । पद्मपाणये । कपालाय । त्रिनेत्राय । नागवल्लभाय । किंकिणीजालसन्तुष्टाय । जलप्रायाय ।

जलाकराय । अपमृत्युहराय । मायामोहमूलविनाशनाय । आयुधिने । कमलनाथाय । कमलाकान्तवल्लभाय । राज्यदाय । राजराजेशाय । राजीवपट्टशोभनाय । डाकिनीनायकाय नमः (७८०)

नित्याय नमः । नित्यधर्मपरायणाय । डाकिनीहृदयज्ञानिने । डाकिनीदेहनाशकाय । डाकिनीप्राणदाय । शुद्धाय । श्रद्धेयचरिताय । विभवे । हेमप्रभाय । हिमेशानाय । हिमानीप्रियदर्शनाय । हेमदाय । मर्मदाय । नामिने । नामधेयाय । नगात्मजाय । वैकुण्ठाय । वासुकीप्राणाय । वासुकीकण्ठभूषणाय । कुण्डलीशाय नमः । (८००)

मखध्वंसिने नमः । मखराजाय । मखेश्वराय । मखाकाराय । मखाधीशाय । मखमालाविभूषणाय । अम्बिकावल्लभाय । वाणीपतये । वाणीविशारदाय । वाणीशाय । वाग्भ्यः । प्राणाय । वचःस्थाय । वचनप्रियाय । वेलाधराय । दिशामीशाय । दिङ्नागाय । दिगीश्वराय । दूर्वाप्रियाय । दुराराध्याय नमः (८२०)

दारिद्र्यभयभञ्जनाय नमः । तर्काय । तर्कप्रियाय । तर्क्याय । वितर्काय । तर्कवल्लभाय । तर्कसिद्धाय । अतिसिद्धात्मने । सिद्धदेहाय । गुहाशयाय । ग्रहगर्भाय । ग्रहेशानाय । गन्धगन्धिने । विशारदाय । मङ्गलाय । मङ्गलाकाराय । मङ्गलवाद्यवादकाय । मङ्गलीशाय । विमानस्थाय । विमानाय नमः (८४०)

नैकनायकाय नमः। बुधेशाय । विबुधाधीशाय । बुधवाराय । बुधाकराय । बुधनाथाय । बुधप्रीताय । बुधवन्द्याय । बुधाधिपाय । बुधसिद्धाय । बुधप्राणाय । बुधबुद्धाय । बुधप्रियाय । सोमप्रभाय ।

मनःसिद्धाय। मनोजप्राणनाशनाय। सोमेशाय। मशकाकाराय। सोमपाय। सोमनायकाय नमः (८६०)

कामगाय नमः । कामघ्ने । बौद्धाय । कामनाफलदाय । अधिपाय । त्रिदशाय । दशरात्रेशाय । दशाननविनाशनाय । लक्ष्मणाय । लक्ष्यसंभर्त्रे । लक्ष्यसंख्याय । मनःप्रियाय । विभावसवे । नलेशानाय । नायकाय । नगजाप्रियाय । नलकान्तये। नलोत्साहाय। नरदेवाय। नराकृतये नमः (८८०)

नरपतये नमः । नरेशानाय । नारायणनरेश्वराय । अनिलाय। मारुताय। मांसाय। मांसैककरसेविताय। मरीचये। अमरेशानाय। मागधाय। मगधप्रभवे। सुन्दराय। सेतकोद्धारिणे। द्वारदेशनिवासनाय । देवकीगर्भसञ्जाताय । देवकीसेवकाय । कुह्वे। बृहस्पतये। कवये। शुक्राय नमः। ९००

शारदासाधकप्रियाय । शारदासाधकप्राणाय । शारदासेवकोत्सुकाय । शारदासाधकश्रेष्ठाय । वीतरागाय । गजप्रभवे । मांसप्रियाय । मधुप्राणाय । मधुमांसमहोत्संवाय । मधुपाय। मधुपश्रेष्ठाय। मधुपानसदारतये। मोदकादानसंप्रीताय। मोदकामोदमोदिताय । आमोदामोदिताय । नन्दाय । नन्दिकेशाय । नदेश्वराय। नदीप्रियाय। नदीनाथाय नमः। ९२०

नदीतीररुहाय नमः । तपसे । तपनाय । तापनाय । ताम्रतापघ्ने । तापकारकाय । पतङ्गाय । गोमुखाय । गौराय । गोपालाय । गोपवर्धनाय । गोपतये । गोपसंहर्त्रे । गोपबृन्दैकप्रियाय । अतिगाय । गर्विष्ठाय । गुणरम्याय । गुणसिन्धवे। गुरुप्रियाय। गुणपूज्याय नमः। ९४०

गुणोपेताय नमः। गुणवाद्याय। गुणोत्सुकाय। गुणीशाय। केवलाय। गर्भाय। सुगर्भाय। गर्भरक्षकाय। गाम्भीर्यधारकाय। धर्त्रे। विधर्त्रे। धर्मपालकाय। जगदीशाय। जगन्मित्राय। जगत्त्रात्रे। जगत्प्रभवे। जगद्धात्रे। जगद्भोक्त्रे। जगज्जाप्यविनाशनाय। जगत्कर्त्रे नमः ९६०

जगद्धर्त्रे नमः। जगज्जीवनजीवनाय। मालतीपुष्पसुप्रीताय। मालतीकुसुमोत्सवाय। मालतीकुसुमाकाराय। मालतीकुसुमप्रभवे। रसालमञ्जरीरम्याय। रसगन्धनिषेविताय। रसालमञ्जरीलुब्धाय। रसालतरुवल्लभाय। रसालतरुवासिने। रसालफलसुन्दराय। रसालरससन्तुष्टाय। रसालरसलालसाय। केतकीपुष्पसन्तुष्टाय। केतकीगर्भसंभवाय। केतकीपत्रसंकाशाय। केतकीप्राणनाशनाय। गर्तस्थाय। गर्तगम्भीराय नमः। ९८०

गर्तेशाय नमः। गर्तनायकाय। गर्तगेशाय। अतिगर्तस्थाय। गर्तक्षीरनिवासकाय। गणसेव्याय। गणाध्यक्षाय। गणराजाय। गणाह्वयाय। आनन्दभैरवाय। अभीरवे। भैरवेशाय। रुरवे। भगाय। सुब्रह्मभैरवाय। वामभैरवाय। भूतभावनाय। भैरवीतनयाय। देवीपुत्राय। पर्वतसंभवाय नमः ह्रीं ओं। (१०००)

॥ श्रीः ॥

# ॥ श्री वटुकभैरव-सहस्रनामस्तोत्रम् ॥

ॐ अस्य श्रीवटुकभैरवसहस्रनामात्मकस्तोत्रस्य दुर्वासा ऋषिः[1] । अनुष्टुप् छन्दः । भैरवो वटुकनाथो देवता । मम सर्वकार्यसिद्ध्यर्थसर्वशत्रुनिवारणार्थ-वटुकसहस्रनामपाठे विनियोगः ।

ॐ ह्रीं नमो भैरवरूपाय भैरवाय नमो नमः ।
नमो भद्रस्वरूपाय जगदाद्य[2] नमो नमः ॥ १

नमः कल्पस्वरूपाय विकल्पाय नमो नमः ।
नमः शुद्धस्वरूपाय सुप्रकाशाय ते नमः ॥ २

नमः कङ्कालरूपाय कालरूप नमोऽस्तु ते ।
नमस्त्र्यम्बकरूपाय महाकालाय ते नमः ॥ ३

नमः संसारसाराय [3]शारदाय नमो नमः ।
नमो भैरवरूपाय भैरवाय नमो नमः ॥ ४

नमः क्षेत्रनिवासाय क्षेत्रपालाय ते नमः ।
क्षेत्रक्षेत्रस्वरूपाय क्षेत्रकर्त्रे नमो नमः ॥ ५

नमो नागविनाशाय[4] भैरवाय नमो नमः ।
नमो मातङ्गरूपाय भाररूप नमोऽस्तु ते ॥ ६

नमः सिद्धस्वरूपाय सिद्धिदाय नमो नमः ।
नमो बिन्दुस्वरूपाय बिन्दुसिन्धुप्रकाशिने ॥ ७ ॥

1. महाकालः दत्तात्रेयः, गौतमः, रावणः हनुमान्, निर्गुणो, वटुकः सनकादयः, महाविष्णुः, श्रीकृष्णः, इति ऋषयो नैके तत्र तत्र ग्रन्थान्तरेषु । 2. जयदाय 3. सारदाय 4. नामविनाशाय

नमो मङ्गलरूपाय मालवाय[1] नमो नमः ।
नमः सङ्कटनाशाय शङ्कराय नमो नमः ॥ ८

नमो धर्मस्वरूपाय धर्मदाय नमो नमः ।
नमोऽनन्तस्वरूपाय एकरूप नमोऽस्तुते ॥ ९

नमो वृद्धिस्वरूपाय वृद्धिकार[2] नमोऽस्तुते ।
नमो मोहनरूपाय मोक्षरूपाय ते नमः ॥ १०

नमो जलदरूपाय सामरूप नमोऽस्तु ते ।
नमः स्थूलस्वरूपाय शुद्धरूपाय ते नमः ॥ ११

नमो नीलस्वरूपाय रङ्गरूपाय ते नमः ।
नमो मण्डलरूपाय मण्डलाय नमो नमः ॥ १२

नमो रुद्रस्वरूपाय रुद्रनाथाय ते नमः ।
नमो ब्रह्मस्वरूपाय ब्रह्मवक्त्रे नमो नमः ॥ १३

नमस्त्रिशूलधाराय धाराधारिन्नमोस्तु ते ।
नमः संसारबीजाय विरूपाय नमो नमः ॥ १४

नमो विमलरूपाय भैरवाय नमो नमः ।
नमो जङ्गमरूपाय जलजाय नमो नमः ॥ १५

नमः कालस्वरूपाय कालरुद्राय ते नमः ।
नमो भैरवरूपाय भैरवाय नमो नमः ॥ १६

नमः शत्रुविनाशाय भीषणाय नमो नमः ।
नमः शान्ताय दान्ताय भ्रमरूप[3] नमोऽस्तु ते ॥ १७

*1.* मङ्गलाय *2.* वृद्धिकामिन् *3.* भ्रमरूपिन्

न्यायगम्याय शुद्धाय योगिध्येयाय ते नमः ।
नमः कमलकान्ताय कालवृद्धाय ते नमः ॥ १८

नमो ज्योतिः स्वरूपाय सुप्रकाशाय ते नमः ।
नमः कल्पस्वरूपाय भैरवाय नमो नमः ॥ १९

नमो जयस्वरूपाय जगज्जाड्य-निवारिणे ।
महाभूताय भूताय भूतानां पतये नमः ॥ २० ॥

नमो नन्दाय वृन्दाय वादिने ब्रह्मवादिने ।
नमो वादस्वरूपाय न्यायगम्याय ते नमः ॥ २१ ॥

नमो भवस्वरूपाय मायानिर्माणरूपिणे ।
विश्ववन्द्याय वन्द्याय नमो विश्वम्भराय ते ॥ २२ ॥

नमो नेत्रस्वरूपाय नेत्ररूपिन्नमोऽस्तु ते ।
नमो वरुणरूपाय भैरवाय नमो नमः ॥ २३ ॥

नमो यमस्वरूपाय वृद्धरूपाय ते नमः ।
नमः कुबेररूपाय कालनाथाय ते नमः ॥ २४ ॥

नमः ईशानरूपाय अग्निरूपाय ते नमः ।
नमो वायुस्वरूपाय विश्वरूपाय ते नमः ॥ २५ ॥

नमः प्राणस्वरूपाय प्राणाधिपतये नमः ।
नमः संहाररूपाय पालकाय नमो नमः ॥ २६ ॥

नमश्चन्द्रस्वरूपाय चण्डरूपाय ते नमः ।
नमो मन्दरवासाय वासिने सर्वयोगिनाम् ॥ २७ ॥

योगिगम्याय योग्याय योगिनां पतये नमः ।
नमो जङ्गमवासाय वामदेवाय ते नमः ॥ २८ ॥

नमः शत्रु-विनाशाय नीलकण्ठाय ते नमः ।
नमो भक्ति-विनोदाय दुर्भगाय नमो नमः ॥ २९ ॥

नमो मान्यस्वरूपाय मानदाय नमो नमः ।
नमो भूतिविभूषाय भूषिताय नमो नमः ॥ ३० ॥

नमो रजःस्वरूपाय सात्त्विकाय नमो नमः ।
नमस्तामसरूपाय तारणाय नमो नमः ॥ ३१ ॥

नमो गङ्गाविनोदाय जयसन्धारिणे[1] नमः ।
नमो भैरवरूपाय भीषणाय[2] नमो नमः ॥ ३२ ॥

नमः सङ्ग्रामरूपाय सङ्ग्रामजयदायिने ।
सङ्ग्रामसाररूपाय पावनाय[3] नमो नमः ॥ ३३ ॥

नमो वृद्धिस्वरूपाय वृद्धिदाय नमो नमः ।
नमस्त्रिशूलहस्ताय शूलसंहारिणे नमः ॥ ३४ ॥

नमो द्वन्द्वस्वरूपाय रूपदाय नमो नमः ।
नमः शत्रुविनाशाय शत्रुबुद्धिविनाशिने ॥ ३५ ॥

महाकालाय कालाय कालनाथाय ते नमः ।
नमो भैरवरूपाय भैरवाय नमो नमः ॥ ३६ ॥

नमः शुभस्वरूपाय शम्भुरूपिन्नमोऽस्तु ते ।
नमः कमलहस्ताय डमरुहस्ताय ते नमः ॥ ३७ ॥

नमः कुक्कुरवाहाय वहनाय नमो नमः ।
नमो विमलनेत्राय त्रिनेत्राय नमो नमः ॥ ३८ ॥

---

1. जटासन्धारिणे 2. भयदाय 3. यौवनाय

नमः संसाररूपाय सारमेयाय वाह्निने।
संसारज्ञानरूपाय ज्ञाननाथाय ते नमः ॥ ३९ ॥

नमो मङ्गलरूपाय मङ्गलाय नमो नमः।
नमो न्यायविशालाय मन्त्ररूपाय ते नमः ॥ ४० ॥

नमो यन्त्रस्वरूपाय यन्त्रधारिन्नमोऽस्तु ते।
नमो भैरवरूपाय भैरवाय नमो नमः ॥ ४१ ॥

नमः कलङ्करूपाय कलङ्काय नमो नमः।
नमः संसारपाराय भैरवाय नमो नमः ॥ ४२ ॥

रुण्डमालाविभूषाय भीषणाय नमो नमः।
नमो दुःखनिवाराय विहाराय नमो नमः ॥ ४३ ॥

नमो दण्डस्वरूपाय क्षणरूपाय ते नमः।
नमो मुहूर्तरूपाय सर्वरूपाय ते नमः ॥ ४४ ॥

नमो मोदस्वरूपाय श्रोतरूपाय[1] ते नमः।
नमो नक्षत्ररूपाय क्षेत्ररूपाय ते नमः ॥ ४५ ॥

नमो विष्णुस्वरूपाय बिन्दुरूपाय ते नमः।
नमो ब्रह्मस्वरूपाय ब्रह्मचारिन्नमोऽस्तु ते ॥ ४६ ॥

नमः कन्थानिवासाय पटवासाय ते नमः।
मो ज्वलनरूपाय[2] ज्वलनाय नमो नमः ॥ ४७ ॥

नमो वटुकरूपाय धूर्तरूपाय ते नमः।
नमो भैरवरूपाय भैरवाय नमो नमः ॥ ४८ ॥

नमो वैद्यस्वरूपाय वैद्यरूपिन्नमोऽस्तु ते।
नमः औषधरूपाय औषधाय नमो नमः ॥ ४९ ॥

*1.* श्रोणरूपाय 2. ज्वालन रूपाय

नमो व्याधिनिवाराय व्याधिरूपिन्नमो नमः ।
नमो द्वारनिवाराय ज्वररूपाय ते नमः ।। ५० ।।

नमो रुद्रस्वरूपाय रुद्राणां पतये नमः ।
विरूपाक्षाय देवाय भैरवाय नमो नमः ।। ५१ ।।

नमो ग्रहस्वरूपाय ग्रहाणां पतये नमः ।
नमः पवित्रधाराय पर्शुधाराय ते नमः ।। ५२ ।।

यज्ञोपवीतदेवाय देवदेव नमोऽस्तुते ।
नमो यज्ञस्वरूपाय यज्ञानां फलदायिने ।। ५३ ।।

नमो रण[1]प्रतापाय तापनाय नमो नमो नमः ।
नमो गणेशरूपाय गणरूपाय ते नमः ।। ५४ ।।

नमो रश्मिस्वरूपाय रश्मिरूपाय ते नमः ।
नमो मलयरूपाय रश्मिरूपाय ते नमः ।। ५५ ।।

नमो विभक्तिरूपाय विमलाय नमो नमः ।
नमो मधुररूपाय माधिपूर्णकलापिने ।। ५६ ।।

कालेश्वराय कालाय कालनाथाय ते नमः ।
नमो विश्वप्रकाशाय भैरवाय नमो नमः ।। ५७ ।।

नमो योनिस्वरूपाय मातृ[2]रूपाय ते नमः ।
नमो भगिनीरूपाय भैरवाय नमो नमः ।। ५८ ।।

नमो वृषस्वरूपाय कर्मरूपाय ते नमः ।
नमो वेदान्तवेद्याय वेदसिद्धान्तसारिणे ।। ५९ ।।

नमः शाखाप्रकाशाय पुरुषाय नमो नमः ।
नमः प्रकृतिरूपाय भैरवाय नमो नमः ।। ६० ।।

*1.* रुद्र *2.* भ्रातृ

नमो विश्वस्वरूपाय शिवरूपाय ते नमः ।
नमो ज्योतिःस्वरूपाय निर्गुणाय नमो नमः ॥ ६१ ॥

निरञ्जनाय शान्ताय निर्विकाराय ते नमः ।
निर्ममाय विमोहाय विश्वनाथाय ते नमः ॥ ६२ ॥

नमः कण्ठप्रकाशाय शत्रुनाशाय ते नमः ।
नमः आशाप्रकाशाय आशापूरकृते नमः ॥ ६३ ॥

नमो मत्स्यस्वरूपाय योगरूपाय ते नमः ।
नमो वाराहरूपाय वामनाय नमो नमः ॥ ६४ ॥

नमः आनन्दरूपाय आनन्दाय नमो नमः ।
नमोऽस्त्वनर्घकेशाय ज्वलत्केशाय ते नमः ॥ ६५ ॥

नमः पापविमोक्षाय मोक्षाय च नमो नमः ।
नमः कैलाशनाथाय कालनाथाय ते नमः ॥ ६६ ॥

नमो बिन्दुदबिन्दाय बिन्दुभाय नमो नमः ।
नमः प्रणवरूपाय भैरवाय नमो नमः ॥ ६७ ॥

नमो मेरुनिवासाय र[1]क्तवासाय ते नमः ।
नमो मेरुस्वरूपाय भैरवाय नमो नमः ॥ ६८ ॥

नमो भद्रस्वरूपाय भद्ररूपाय ते नमः ।
नमो योगिस्वरूपाय योगितां पतये नमः ॥ ६९ ॥

नमो मन्त्रस्वरूपाय मित्ररूपाय ते नमः ।
नमो ब्रह्मनिवासाय काशीनाथाय ते नमः ॥ ७० ॥

1. भक्त

नमो ब्रह्माण्डवासाय ब्रह्मवासाय ते नमः ।
नमो मातङ्गवासाय सूक्ष्मवासाय ते नमः ॥ ७१ ॥

नमो मातृनिवासाय भ्रातृवासाय ते नमः ।
नमो जगन्निवासाय जलावासाय ते नमः ॥ ७२ ॥

नमः कौलनिवासाय नेत्रवासाय ते नमः ।
नमो भैरववासाय भैरवाय नमो नमः ॥ ७३ ॥

नमः समुद्रवासाय वह्निवासाय ते नमः ।
नमश्चन्द्रनिवासाय चन्द्रावासाय ते नमः ॥ ७४ ॥

नमः कलिङ्गवासाय कलिङ्गाय नमो नमः ।
नमः उत्कलवासाय इन्द्रवासाय ते नमः ॥ ७५ ॥

नमः कर्पूरवासाय सिद्धिवासाय ते नमः ।
नमः सुन्दर-वासाय भैरवाय नमो नमः ॥ ७६ ॥

नमः आकाशवासाय वासिने सर्वयोगिनाम् ।
नमो ब्राह्मणवासाय शूद्रवासाय ते नमः ॥ ७७ ॥

नमः क्षत्रियवासाय वैश्यवासाय ते नमः ।
नमः पक्षिनिवासाय भैरवाय नमो नमः ॥ ७८ ॥

नमः पातालमूलाय मूलावासाय ते नमः ।
नमो रसातलवासाय सर्वपातालवासिने ॥ ७९ ॥

नमः कङ्कालवासाय कङ्कवासाय ते नमः ।
नमो मन्त्रनिवासाय भैरवाय नमो नमः ॥ ८० ॥

नमोऽहङ्काररूपाय रजोरूपाय ते नमः ।
नमः सत्त्वनिवासाय भैरवाय नमो नमः ॥ ८१ ॥

नमो नलिनरूपाय नलिनाङ्गप्रकाशिने।
नमः सूर्यस्वरूपाय भैरवाय नमो नमः ॥ ८२ ॥

नमो दुष्टनिवासाय साधूपायस्वरूपिणे।
नमो नम्रस्वरूपाय स्तम्भनाय नमो नमः ॥ ८३ ॥

पञ्चयोनिप्रकाशाय चतुर्योनिप्रकाशिने।
नवयोनिप्रकाशाय भैरवाय नमो नमः ॥ ७४ ॥

नमः षोडशरूपाय नमः षोडशधारिणे।
चतुःषष्टिप्रकाशाय भैरवाय नमो नमः ॥ ८५ ॥

नमो बिन्दुप्रकाशाय सुप्रकाशाय ते नमः।
नमो गणस्वरूपाय सुखरूप नमोऽस्तु ते॥ ८६ ॥

नमोऽम्बरस्वरूपाय भैरवाय नमो नमः।
नमो नानास्वरूपाय मुख[1]रूप नमोऽस्तु ते॥ ८७ ॥

नमो दुर्गस्वरूपाय दुःखहन्त्रे नमोऽस्तुते।
नमो विशुद्धदेहाय दिव्यदेहाय ते नमः ॥ ८८ ॥

नमो भैरवरूपाय भैरवाय नमो नमः।
नमः प्रेतनिवासाय पिशाचाय नमो नमः ॥ ८९ ॥

नमो निशाप्रकाशाय निशारूप नमोऽस्तु ते।
नमः सोमार्धरामाय धराधीशाय ते नमः ॥ ९० ॥

नमः संसारभाराय भारकाय नमो नमः।
नमो देहस्वरूपाय अदेहाय नमो नमः ॥ ९१ ॥

---

1. सुखरूप

देवदेहाय देवाय भैरवाय नमो नमः ।
विश्वेश्वराय विश्वाय विश्वधारिन्नमोऽस्तु ते ॥ ९२ ॥

स्वप्रकाशप्रकाशाय भैरवाय नमो नमः ।
स्थितिरूपाय नित्याय स्थितीनां पतये नमः ॥ ९३ ॥

सुस्थिराय सुकेशाय केशवाय नमा नमः ।
स्थविष्ठाय गरिष्ठाय प्रेष्ठाय परमात्मने ॥ ९४ ॥

नमो भैरवरूपाय भैरवाय नमो नमः ।
नमः पारदरूपाय पवित्राय नमो नमः ॥ ९५ ॥

नमो वेधकरूपाय अनिन्दा[1]य नमा नमः ।
नमः शब्दस्वरूपाय शब्दातीताय ते नमः ॥ ९६ ॥

नमो भैरवरूपाय भैरवाय नमो नमः ।
नमोऽनिन्द्यस्वरूपाय अनिन्दाय नमो नमः ॥ ९७ ॥

नमो विष्णुस्वरूपाय[2] भैरवाय नमो नमः ।
नमः शरण्यशरण[3] शरण्यानां सुखाय ते ॥ ९८ ॥

नमः शरण्यरक्षाय भैरवाय नमो नमः ।
नमः स्वाहास्वरूपाय स्वधारूपाय ते नमः ॥ ९९ ॥

नमो वौषट्स्वरूपाय भैरवाय नमो नमः ।
अक्षराय नमस्तुभ्यं त्रिधामात्रास्वरूपिणे ॥ १०० ॥

नमोऽक्षराय शुद्धाय भैरवाय नमो नमः ।
अर्धमात्राय पूर्णाय संपूर्णाय नमो नमः ॥ १०१ ॥

---

*1.* ह्यनिन्द्याय *2.* विशदरूपाय *3.* शरणरूपाय ।

नमो भैरवरूपाय भैरवाय नमो नमः ।
नमोऽष्टचक्ररूपाय ब्रह्मरूपाय ते नमः ॥ १०२ ॥

नमो भैरवरूपाय भैरवाय नमो नमः ।
नमः सृष्टिस्वरूपाय[1] सृष्टिकर्त्रे महात्मने ॥ १०३ ॥

नमः पाल्यस्वरूपाय भैरवाय नमो नमः ।
सनातनाय नित्याय निर्गुणाय गुणाय ते ॥ १०४ ॥

नमः सिद्धाय शान्ताय भैरवाय नमो नमः ।
नमो धारास्वरूपाय खड्गहस्ताय ते नमः ॥ १०५ ॥

नमस्त्रिशूलहस्ताय भैरवाय नमो नमः ।
नमः कुण्डलवर्णाय शवमुण्डविभूषिणे ॥ १०६ ॥

महाक्रुद्धाय चण्डाय भैरवाय नमो नमः ।
नमो वासुकिभूषाय सर्पभूषाय[2] ते नमः ॥ १०७ ॥

नमः कपालहस्ताय भैरवाय नमो नमः ।
पानपात्रप्रमत्ताय मत्तरूपाय ते नमः ॥ १०८ ॥

नमो भैरवरूपाय भैरवाय नमो नमः ।
नमो माधवरूपाय[1] माधवाय नमो नमः ॥ १०९ ॥

नमो माङ्गल्यरूपाय भैरवाय नमो नमः ।
नमः कुमाररूपाय स्त्रीरूपाय नमो नमः ॥ ११० ॥

नमो गन्धस्वरूपाय भैरवाय नमो नमः ।
नमो दुर्गन्धरूपाय सुगन्धाय नमो नमः ॥ १११ ॥

नमः पुष्पस्वरूपाय पुष्पभूषण ते नमः ।
नमः पुष्पप्रकाशाय भैरवाय नमो नमः ॥ ११२ ॥

1. भैरवरूपाय 2. सर्वभूषाय 3. माध्वाकारसुपर्णाय

नमः पुष्पविनोदाय पुष्पपूजाय ते नमः ।
नमो भक्तिनिवासाय भक्तदुः खनिवारिणे ।। ११३ ।।

भक्तप्रियाय शान्ताय भैरवाय नमो नमः ।
नमो भक्तस्वरूपाय रूपदाय नमो नमः ।। ११४ ।।

नमो भैरवरूपाय भैरवाय नमो नमः ।
नमो वासाय भद्राय वीरभद्राय ते नमः ।। ११५ ।।

नमः संग्रामसाराय भैरवाय नमो नमः ।
नमः खट्वाङ्गहस्ताय कालहस्ताय ते नमः ।। ११६ ।।

नमोऽघोराय घोराय घोराघोरस्वरूपिणे ।
घोरधर्माय घोराय भैरवाय नमो नमः ।। ११७ ।।

घोरत्रिशूलहस्ताय घोरपानाय ते नमः ।
घोररूपाय नीलाय भैरवाय नमो नमः ।। ११८ ।।

घोरवाहनगम्याय अगम्याय नमो नमः ।
घोरब्रह्मस्वरूपाय भैरवाय नमो नमः ।। ११९ ।।

घोरशब्दाय घोराय घोरदेहाय ते नमः ।
घोरद्रव्याय घोराय भैरवाय नमो नमः ।। १२० ।।

घोरसञ्ज्ञाय सिंहाय सिद्धसिंहाय ते नमः ।
नमः प्रचण्डसिंहाय सिंहरूपाय ते नमः ।। १२१ ।।

नमः सिंहप्रकाशाय सुप्रकाशाय ते नमः ।
नमो विजयरूपाय जगदाद्य[1] नमो नमः ।। १२२ ।।

1. जयदाय

नमो भार्गवरूपाय गर्भरूपाय नमो नमः ।
नमो भैरवरूपाय भैरवाय नमो नमः ॥ १२३ ॥

नमो मेध्याय शुद्धाय मायाधीशाय ते नमः ।
नमो मेघप्रकाशाय भैरवाय नमो नमः ॥ १२४ ॥

दुर्ज्ञेयाय दुरन्ताय दुर्लभाय दुरात्मने ।
भक्तिलभ्याय भव्याय भविताय नमो नमः ॥ १२५ ॥

नमो गौरवरूपाय गौरवाय नमो नमः ।
नमो भैरवरूपाय भैरवाय नमो नमः ॥ १२६ ॥

नमो विघ्ननिवाराय विघ्ननाशिन्नमोऽस्तु ते ।
नमो विघ्नविदाराय[1] भैरवाय नमो नमः ॥ १२७ ॥

नमः किंशुकरूपाय रजोरूपाय ते नमः ।
नमो नीलस्वरूपाय भैरवाय नमो नमः ॥ १२८ ॥

नमो गणस्वरूपाय गणनाथाय ते नमः ।
नमो विश्वप्रकाशाय भैरवाय नमो नमः ॥ १२९ ॥

नमो योगिप्रकाशाय योगिगम्याय ते नमः ।
नमो हेरम्बरूपाय भैरवाय नमो नमः ॥ १३० ॥

नमस्त्रिधा स्वरूपाय रूपदाय नमो नमः ।
नमः स्वरस्वरूपाय भैरवाय नमो नमः ॥ १३१ ॥

नमः सरस्वतीरूप बुद्धिरूपाय ते नमः ।
नमो वन्धस्वरूपाय भैरवाय नमो नमः ॥ १३२ ॥

1. विघ्नविद्रावणायैव

नमस्त्रिविक्रमरूपाय त्रिस्वरूपाय ते नमः ।
नमः शशाङ्करूपाय[1] भैरवाय नमो नमः । १३३ ।।

नमो व्यापकरूपाय व्याप्यरूपाय ते नमः ।
नमो भैरवरूपाय भैरवाय नमो नमः ।। १३४ ।।

नमो विशदरूपाय भैरवाय नमो नमः ।
नमः सत्त्वस्वरूपाय भैरवाय नमो नमः ।। १३५ ।।

नमः सूक्तस्वरूपाय शिवदाय नमो नमः ।
नमो गङ्गास्वरूपाय यमुनारूपिणे नमः ।। १३६ ।।

नमो गौरीस्वरूपाय भैरवाय नमो नमः ।
नमो दुःखविनाशाय दुःखमोक्षस्वरूपिणे ।। १३७ ।।

महाचलाय वन्द्याय भैरवाय नमो नमः ।
नमो नन्दस्वरूपाय भैरवाय नमो नमः ।। १३८ ।।

नमो नन्दिस्वरूपाय स्थिररूपाय ते नमः ।
नमः केलिस्वरूपाय भैरवाय नमो नमः ।। १३९ ।।

नमः क्षेत्रनिवासाय वासिने ब्रह्मवादिने ।
नमः शान्ताय शुद्धाय भैरवाय नमो नमः ।। १४० ।।

नमो नर्मदरूपाय जलरूपाय ते नमः ।
नमो विश्वविनोदाय जयदाय नमो नमः ।। १४१ ।।

नमो महेन्द्ररूपाय महनीयाय ते नमः ।
नमः संसृतिरूपाय शरणीयाय ते नमः ।। १४२ ।।

नमस्त्रिबन्धुवासाय बालकाय नमो नमः ।
नमः संसारसाराय सरसां पतये नमः ।। १४३ ।।

1. शशांकरूढाय

नमस्ते जलरूपाय[1] भैरवाय नमो नमः ।
नमः काव्यस्वरूपाय[2] भैरवाय नमो नमः ॥ १४४ ॥

नमो गोकर्णरूपाय ब्रह्मवर्णाय ते नमः ।
नमः शङ्करवर्णाय हस्तिकर्णाय ते नमः ॥ १४५ ॥

नमो विष्टरकर्णाय यज्ञकर्णाय ते नमः ।
नमः शम्बुककर्णाय भैरवाय नमो नमः ॥ १४६ ॥

नमो दिव्यसुकर्णाय कालकर्णाय ते नमः ।
नमो भयदकर्णाय भैरवाय नमो नमः ॥ १४७ ॥

नम आकाशवर्णाय कालकर्णाय ते नमः ।
नमो दिग्रूपकर्णाय भैरवाय नमो नमः ॥ १४८ ॥

नमो विशुद्धकर्णाय विमलाय नमो नमः ।
नमः सहस्रकर्णाय भैरवाय नमो नमः ॥ १४९ ॥

नमो नेत्रप्रकाशाय सुनेत्राय नमो नमः ।
नमो वरदनेत्राय जयनेत्राय ते नमः ॥ १५० ॥

नमो विमलनेत्राय योगिनेत्राय ते नमः ।
नमः सहस्रनेत्राय भैरवाय नमो नमः ॥ १५१ ॥

नमः कलिन्दरूपाय कलिन्दाय नमो नमः ।
नमो ज्योतिःस्वरूपाय ज्योतिषाय नमो नमः ॥ १५२ ॥

नमस्तारप्रकाशाय ताररूपिन् नमोऽस्तुते ।
नमो नक्षत्रनेत्राय भैरवाय नमो नमः ॥ १५३ ॥

नमश्चन्द्रप्रकाशाय चन्द्ररूप नमोऽस्तु ते ।
नमो रश्मिस्वरूपाय भैरवाय नमो नमः ॥ १५४ ॥

1. नमस्तेजःस्वरूपाय 2. कारुण्यरूपाय

नम आनन्दरूपाय जयानन्द[1]स्वरूपिणे ।
नमो द्रविडरूपाय भैरवाय नमो नमः ॥ १५५ ॥

नमः शङ्खनिवासाय शङ्कराय नमो नमः ।
नमो मुद्राप्रकाशाय भैरवाय नमो नमः ॥ १५६ ॥

नमो न्यासस्वरूपाय न्यासरूप नमोऽस्तुते ।
नमो बिन्दुस्वरूपाय भैरवाय नमो नमः ॥ १५७ ॥

नमो विसर्गरूपाय प्रणवरूप ते नमः ।
नमो मन्त्रप्रकाशाय भैरवाय नमो नमः ॥ १५८ ॥

नमो जम्बुकरूपाय जङ्गमाय नमो नमः ।
नमो गरुडरूपाय भैरवाय नमो नमः ॥ १५९ ॥

नमो लम्बुकरूपाय लम्बिकाय नमो नमः ।
नमो लक्ष्मीस्वरूपाय भैरवाय नमो नमः ॥ १६० ॥

नमो वीरस्वरूपाय वीरणाय नमो नमः ।
नमः प्रचण्डरूपाय भैरवाय नमो नमः ॥ १६१ ॥

नमो दम्भस्वरूपाय डमरुधारिन्नमोऽस्तु ते ।
नमः कलङ्कनाशाय कालनाथाय ते नमः ॥ १६२ ॥

नमः सिद्धिप्रकाशाय[2] सिद्धिदाय नमो नमः ।
नमः सिद्धस्वरूपाय भैरवाय नमो नमः ॥ १६३ ॥

नमो धर्मप्रकाशाय धर्मनाथाय ते नमः ।
धर्माय धर्मराजाय भैरवाय नमो नमः ॥ १६४ ॥

नमो धर्माधिपतये धर्मध्येयाय ते नमः ।
नमो धर्मार्थसिद्धाय भैरवाय नमो नमः ॥ १६५ ॥

*1.* जगदानन्द *2.* ऋद्धिप्रकाशाय

नमो निर्जररूपाय[1] रूपारूपप्रकाशिने।
नमो राजप्रकाशाय भैरवाय नमो नमः ॥ १६६ ॥

नमः प्रतापसिंहाय प्रतापाय नमो नमः।
नमः कोटिप्रतापाय भैरवाय नमो नमः ॥ १६७ ॥

नमः सहस्ररूपाय कोटिरूपाय ते नमः।
नम आनन्दरूपाय भैरवाय नमो नमः ॥ १६८ ॥

नमः संहारबन्धाय बन्धकाय नमो नमः।
नमो विमोक्षरूपाय मोक्षदाय नमो नमः ॥ १६९ ॥

नमो विष्णुस्वरूपाय व्यापकाय नमो नमः।
नमो माङ्गल्यनाथाय शिवनाथाय ते नमः ॥ १७० ॥

नमो व्यालाय व्याघ्राय व्याघ्ररूप नमोऽस्तु ते।
नमो व्यालविभूषाय भैरवाय नमो नमः ॥ १७१ ॥

नमो विद्याप्रकाशाय विद्यानां पतये नमः।
नमो योगिस्वरूपाय क्रूररूपाय ते नमः ॥ १७२ ॥

नमः संहाररूपाय शत्रुनाशाय ते नमः।
नमो पालकरूपाय भैरवाय नमो नमः ॥ १७३ ॥

नमः कारुण्यदेवाय देवदेवाय ते नमः।
नमो विश्वविलासाय भैरवाय नमो नमः ॥ १७४ ॥

नमो नमः प्रकाशाय काशीवासिन्नमोऽस्तुते।
नमो भैरवक्षेत्राय क्षेत्रपालाय ते नमः ॥ १७५ ॥

1. विरजरूपाय

नमो भद्रस्वरूपाय भद्रकाय नमो नमः ।
नमो भद्राधिपतये भयहन्त्रे नमोऽस्तु ते ॥ १७६ ॥

नमो मायाविनोदाय मायिने मदरूपिणे ।
नमो मत्ताय शान्ताय भैरवाय नमो नमः ॥ १७७ ॥

नमो मलयवासाय कैलाशाय नमो नमः ।
नमः कैलाशवासाय कालिकातनयाय ते ॥ १७८ ॥

नमः संसारसाराय भैरवाय नमो नमः ।
नमो मातृविनोदाय विमलाय नमो नमः ॥ १७९ ॥

नमो यमप्रकाशाय नियमाय नमो नमः ।
नमः प्राणप्रकाशाय ध्यानाधिपतये नमः ॥ १८० ॥

नमः समाधिरूपाय निर्गुणाय नमो नमः ।
नमो मन्त्रप्रकाशाय मन्त्ररूपाय ते नमः ॥ १८१ ॥

नमो वृन्दविनोदाय वृन्दकाय नमो नमः ।
नमो बृंहितरूपाय भैरवाय नमो नमः ॥ १८२ ॥

नमो मान्यस्वरूपाय मानदाय नमो नमः ।
नमो विश्वप्रकाशाय भैरवाय नमो नमः ॥ १८३ ॥

नमो नैमिष[1]पीठाय सिद्धपीठाय ते नमः ।
नमो मण्डलपीठाय भक्त[2]पीठाय ते नमः ॥ १८४ ॥

नमो यशोदानाथाय कामनाथाय ते नमः ।
नमो विनोदनाथाय सिद्धनाथाय ते नमः ॥ १८५ ॥

नमो नाथाय नाथाय ज्ञाननाथाय ते नमः ।
नमः शङ्करनाथाय जयनाथाय ते नमः ॥ १८६ ॥

1. वै स्थिरपीठाय 2. उक्तपीठाय

नमो मुद्गलनाथाय नीलनाथाय ते नमः ।
नमो बालकनाथाय धर्मनाथाय ते नमः ॥ १८७ ॥

विश्वनाथाय नाथाय कार्यनाथाय ते नमः ।
नमो भैरवनाथाय महानाथाय ते नमः ॥ १८८ ॥

नमो ब्रह्मसनाथाय योगनाथाय ते नमः ।
नमो विश्वविहाराय विश्वमाराय ते नमः ॥ १८९ ॥

नमो रङ्गसनाथाय रङ्गनाथाय ते नमः ।
नमो मोक्षसनाथाय भैरवाय नमो नमः ॥ १९० ॥

नमो गोरक्षनाथाय गोरक्षाय नमो नमः ।
नमो मन्दारनाथाय नन्दनाथाय ते नमः ॥ १९१ ॥

नमो मङ्गलनाथाय चम्पानाथाय ते नमः ।
नमः सन्तोषनाथाय भैरवाय नमो नमः ॥ १९२ ॥

नमो निर्धननाथाय[1] सुखनाथाय ते नमः ।
नमः कारुण्यनाथाय भैरवाय नमो नमः ॥ १९३ ॥

नमो द्रविडनाथाय दरिनाथाय ते नमः ।
नमः संसारनाथाय जगन्नाथाय ते नमः ॥ १९४ ॥

नमो माध्वीकनाथाय मन्त्रनाथाय ते नमः ।
नमो न्याससनाथाय ध्याननाथाय ते नमः ॥ १९५ ॥

नमो गोकर्णनाथाय महानाथाय ते नमः ।
नमः शुभ्रसनाथाय भैरवाय ते नमः ॥ १९६ ॥

1. नमोऽङ्गारकनाथाय

नमो विमलनाथाय मण्डलनाथाय[1] ते नमः ।
नमः सरोजनाथाय सत्यनाथाय[2] ते नमः ॥ १९७ ॥

नमो भक्तसनाथाय भक्तिनाथाय ते नमः ।
नमो मोहननाथाय वत्सनाथाय ते नमः ॥ १९८ ॥

नमो मातृसनाथाय विश्वनाथाय ते नमः ।
नमो बिन्दुसनाथाय जयनाथाय ते नमः ॥ १९९ ॥

नमो मङ्गलनाथाय धर्मनाथाय ते नमः ।
नमो गङ्गासनाथाय भूमिनाथाय ते नमः ॥ २०० ॥

नमो धीरसनाथाय बिन्दुनाथाय ते नमः ।
नमः कञ्चुकिनाथाय शृङ्गिनाथाय ते नमः ॥ २०१ ॥

नमः समुद्रनाथाय गिरिनाथाय ते नमः ।
नमो माङ्गल्यनाथाय कद्रुनाथाय[3] ते नमः ॥ २०२ ॥

नमो वेदान्तनाथाय श्रीनाथाय नमो नमः ।
नमो ब्रह्माण्डनाथाय भैरवाय नमो नमः ॥ २०३ ॥

नमो गिरीशनाथाय वामनाथाय ते नमः ।
नमो बीजसनाथाय भैरवाय नमो नमः ॥ २०४ ॥

नमो मन्दिरनाथाय[4] मनोनाथाय[5] ते नमः ।
नमो भैरवनाथाय[6] भैरवाय नमो नमः ॥ २०५ ॥

अम्बानाथाय नाथाय जन्तुनाथाय ते नमः ।
नमः कालिसनाथाय भैरवाय नमो नमः ॥ २०६ ॥

---

1. मण्डलेशाय 2. मत्स्यनाथाय 3. कुद्रुनाथाय 4. मन्दरनाथाय 5. मन्दनाथाय
6. भैरवीनाथाय

नमो मुकुन्दनाथाय कुन्दनाथाय ते नमः ।
नमः कुण्डलनाथाय भैरवाय नमो नमः ॥ २०७ ॥

नमोऽष्टचक्रनाथाय शूलनाथाय[1] ते नमः ।
नमो विभूतिनाथाय शूलनाथाय ते नमः ॥ २०८ ॥

नमो न्यायसनाथाय न्यायनाथाय ते नमः ।
नमो दयासनाथाय जङ्गमनाथाय[2] ते नमः ॥ २०९ ॥

नमो विशदनाथाय जगन्नाथाय ते नमः ।
नमः कामिकनाथाय भैरवाय नमो नमः ॥ २१० ॥

नमः क्षेत्रसनाथाय जीवनाथाय ते नमः ।
नमः शैल[3]सनाथाय चैलनाथाय ते नमः ॥ २११ ॥

नमो मात्रासनाथाय अमात्राय नमो नमः ।
नमो द्वन्द्वसनाथाय भैरवाय नमो नमः ॥ २१२ ॥

नमः शूरसनाथाय शूरनाथाय ते नमः ।
नमः सौजन्यनाथाय सौजन्याय नमो नमः ॥ २१३ ॥

नमो दुष्टसनाथाय भैरवाय नमो नमः ।
नमो भय-सनाथाय बिम्बनाथाय ते नमः ॥ २१४ ॥

नमो भैरवनाथाय[4] भैरवाय नमो नमः ।
नमो विटङ्कनाथाय टङ्कनाथाय ते नमः ॥ २१५ ॥

नमश्चर्मसनाथाय खड्गनाथाय ते नमः ।
नमः शक्तिसनाथाय धनुर्नाथाय ते नमः ॥ २१६ ॥

नमो बाणस[5]नाथाय शापनाथाय ते नमः ।
नमो यन्त्रसनाथाय भैरवाय नमो नमः ॥ २१७ ॥

*1.* चक्रनाथाय *2.* जंगमेशाय *3.* केवलनाथाय *4.* मायासनाथाय *5.* मानसनाथाय

नमो गण्डूषनाथाय गण्डूषाय नमो नमः ।
नमो डाकिनीनाथाय भैरवाय नमो नमः ॥ २१८ ॥

नमो डामरनाथाय डारकाय नमा नमः ।
नमो डङ्कसनाथाय डङ्कनाथाय ते नमः ॥ २१९ ॥

नमो माण्डव[1]नाथाय यज्ञनाथाय ते नमः ।
नमो यजुःसाथाय क्रीडानाथाय ते नमः ॥ २२० ॥

नमः सामसनाथायाथर्वनाथाय ते नमः ।
नमः शून्याय नाथाय स्वर्गनाथाय ते नमः ह्रीं ॐ ॥ २२१

फलश्रुतिः

इदं नामसहस्रं मे रुद्रेण परिकीर्तितम् ।
यः पठेत्पाठयेद्वापि स एव मम सेवकः ॥ २२२

यं यं चिन्तयते कामं कारं कारं प्रियाकृतिम् ।
यः शृणोति दुरापन्तं तं तं प्राप्नोति मामकः ॥ २२३ ॥

राजद्वारे श्मशाने तु पृथिव्यां जलसन्निधौ ।
यः पठेन्मानवो नित्यं स शूरः स्यान्न संशयः ॥ २२४ ॥

एककालं द्विकालं वा त्रिकालं वा पठेन्नरः ।
स भवेद्बुद्धिमान्लोके सत्यमेव न संशयः ॥ २२५ ॥

यः शृणोति नरो भक्त्या स एव गुणसागरः ।
यः श्रद्धया रात्रिकाले शृणोति पठ्यते च वा ॥ २२६ ॥

स एव साधकः प्रोक्तः सर्वदुष्टविनाशकः ।
अर्धरात्रे पठेद्यस्तु स एव पुरुषोत्तमः ॥ २२७ ॥

1. माण्डव्यनाथाय

त्रिसन्ध्यायां देवगृहे श्मशाने च विशेषतः ।
वने च मार्गगमने बले दुर्जनसन्निधौ ॥ २२८ ॥

यः पठेत्प्रयतो नित्यं स सुखी स्यान्न संशयः ।
विद्यार्थी लभते विद्यां धनार्थी लभते धनम् ॥ २२९ ॥

शौर्यार्थी लभते शौर्यं पुत्रार्थी पुत्रमाप्नुयात् ।
एवं विंशतिमन्त्रेण अक्षरेण सहैव मे ॥ २३० ॥

यः पठेत्प्रातरुत्थाय सर्वकाममवाप्नुयात् ।
रसार्थी पाठमात्रेण रसं प्राप्नोति नित्यशः ॥ २३१ ॥

अन्नार्थी लभते चान्नं सुखार्थी सुखमाप्नुयात् ।
रोगी प्रमुच्यते रोगाद्बद्धो मुच्येत बन्धनात् ॥ २३२ ॥

शापार्थी लभेते शापं सर्वशत्रुविनाशनम् ।
स्थावरं जङ्गमं वापि विषं सर्वं प्रणश्यति ॥ २३३ ॥

सर्वलोकप्रियः शान्तो मातृपितृ-प्रियङ्करः ।
संग्रामे विजयस्तस्य यः पठेद्भक्तिसंयुतः ॥ २३४ ॥

सर्वत्र जयदं देवि स्तोत्रमेतत्प्रकीर्तितम् ।
इदं स्तोत्रं महत्पुण्यं निन्दकाय न दर्शयेत् ॥ २३५॥

असाधकाय दुष्टाय मातृपितृविकारिणे ।
अधार्मिकायाकुलीनाय नैतत्स्तोत्रं प्रकाशयेत् ॥ २३६ ॥

साधकाय च भक्ताय योगिने धार्मिकाय च ।
गुरुभक्ताय शान्ताय दर्शयेत्साधकोत्तमः ॥ २३७ ॥

अन्यथा पापलिप्तः स्यात्क्रोधाय भैरवोत्तमे ।
तस्मात्सर्वप्रयत्नेन गोपनीयं प्रयत्नतः ॥ २३८ ॥

इदं स्तोत्रं च रुद्रेण रामस्यापि मुखेऽर्पितम्।
तन्मुखान्निः सृतं लोके दरिद्रायापि साधवे।। २३९।।

रामेण कथितं भ्रात्रे लक्ष्मणाय महात्मने।
ततो दुर्वासिसा प्राप्तं तैनेवोक्तं तु पाण्डवे।। २४०।।

पाण्डवोऽप्यब्रवीत्कृष्णं कृष्णेनेह प्रकीर्तितम्।
अस्य स्तोत्रस्य माहात्म्यं रामो जानाति तत्त्वतः।। २४१

रामोपि राज्यं संप्राप्तो ह्यस्य स्तोत्रस्य पाठतः।
पाण्डवोपि तथा राज्यं सम्प्राप्तो भैरवस्य च।। २४२।।

अनेन स्तोत्रपाठेन किमलभ्यं भवेदिति।
सर्वलोकस्य पूज्यस्तु जायते नात्र संशयः।। २४३।।

इति श्रीरुद्रयामलोक्तं श्रीवटुकभैरव-सहस्रनामस्तोत्रम्।।

## ओं नमः श्री वटुकभैरवाय।

आद्यो भैरवभीषणो निगदितः श्री कालराजः क्रमात्,
श्रीसंहारकभैरवोऽप्यथ रुरुश्चोन्मत्तको भैरवः।
क्रोधश्चण्ड - कपाल - भैरववरः श्रीभूतनाथस्ततो
ह्यष्टौ भैरवमूर्तयः प्रतिदिनं दद्युः सदा मङ्गलम्।

।। श्रीः ।।

## ।। श्रीवटुकभैरवाष्टोत्तरशतनामस्तोत्रम्।।

ॐ अस्य श्रीमदापदुद्धारक-वटुकभैरवाष्टोत्तरशतनाम-स्तोत्रस्य, बृहदारण्यक ऋषिः। अनुष्टुप्छन्दः। श्रीमदापदुद्धारक-वटुकभैरवो देवता। वं बीजं, ह्रीं वटुकाय इति शक्तिः। प्रणवः कीलकं, ममाभीष्टसिद्धयर्थे पाठे विनियोगः।

अथ ऋष्यादिन्यासः

बृहदारण्यकऋषये नमः (शिरसि)। अनुष्टुप्छन्दसे नमः (मुखे)। वं बीजाय नमः (गुह्ये)। ह्रीं वटुकायेति शक्तये नमः (पादयोः)। ओं कीलकाय नमः (नाभौ)। अथ करन्यासः। ॐ ह्राँ वां अङ्गुष्ठाभ्यां नमः। ॐ ह्रीं वीं तर्जनीभ्यां नमः। ॐ ह्रूं वूं मध्यमाभ्यां नमः। ॐ ह्रैं वैं अनामिकाभ्यां नमः। ॐ ह्रौं वौं कनिष्ठिकाभ्यां नमः। ॐ ह्रः वः करतलकरपृष्ठाभ्यां नमः।

अथ हृदयादिषडङ्गन्यासः

ॐ ह्रां वां हृदयाय नमः। ॐ ह्रीं वीं शिरसे स्वाहा। ॐ ह्रूं वूंशिखायै वषट्। ॐ ह्रैं वैं कवचाय हुम्। ॐ ह्रौं वौं नेत्रत्रयाय वौषट्। ओं ह्रः वः अस्त्राय फट्।

अथ ध्यानम्—

वन्दे बालं स्फटिकसदृशं कुण्डलोद्भासिवक्त्रं
दिव्याकल्पैर्नवमणिमयैः किङ्किणीनूपुराढ्यैः।
दीप्ताकारं विशदवदनं सुप्रसन्नं त्रिनेत्रं
हस्ताग्राभ्यां वटुकमनिशं शूलदण्डौ दधानम्॥

करकलितकपालः कुण्डली दण्डपाणिः
तरुणतिमिरनीलो व्यालयज्ञोपवीती।
क्रतुसमयसपर्याविघ्नविच्छित्तिहेतुः
जयति वटुकनाथः सिद्धिदः साधकानाम्॥

ॐ ह्रीं भैरवो भूतनाथश्च भूतात्मा भूतभावनः।
क्षेत्रज्ञः क्षेत्रपालश्च क्षेत्रदः क्षत्रियो विराट्॥ १

श्मशानवासी मांसाशी खर्पराशी स्मरान्तकः।
रक्तपः पानपः सिद्धः सिद्धिदः सिद्धसेवितः॥ २

कङ्कालः कालशमनः कलाकाष्ठातनुः कविः ।
त्रिनेत्रो बहुनेत्रश्च तथा पिङ्गललोचनः ॥ ३

शूलपाणि; खड्गपाणिः कङ्काली धूम्रलोचनः ।
अभीरुर्भैरवीनाथो भूतपो योगिनीपतिः ॥ ४

धनदोऽधनहारी च धनवान् प्रतिभानवान् ।
नागहारो नागपाशो व्योमकेशः कपालभृत् ॥ ५

कालः कपालमाली च कमनीयः कलानिधिः ।
त्रिलोचनो ज्वलन्नेत्रस्त्रिशिखी च त्रिलोकपः ॥ ६

त्रिनेत्रतनयो डिम्भशान्तः शान्तजनप्रियः ।
वटुको बहुवेषश्च खट्वाङ्गवरधारकः ॥ ७

भूताध्यक्षः पशुपतिर्भिक्षुकः परिचारकः ।
धूर्तो दिगम्बरः शूरो हरिणः पाण्डुलोचनः ॥ ८

प्रशान्तः शान्तिदः शुद्धः शङ्करप्रियबान्धवः ।
अष्टमूर्तिर्निधीशश्च ज्ञानचक्षुस्तपोमयः ॥ ९

अष्टाधारः षडाधारः सर्पयुक्तः शिखीसखः ।
भूधरो भूधराधीशो भूपतिर्भूधरात्मजः ॥ १०

कङ्कालधारी मुण्डी च आन्त्रयज्ञोपवीतवान् ।
जृम्भणो मोहनः स्तम्भी मारणः क्षोभणस्तथा ॥ ११

शुद्धनीलाञ्जनप्रख्यो दैत्यहा मुण्डभूषितः ।
बलिभुग् बलिभुङ्नाथो बालोऽबालपराक्रमः ॥ १२

सर्वापत्तारणो दुर्गो दुष्टभूतनिषेवितः ।
कामी कलानिधिकान्तः कामिनीवशकृद् वशी ॥ १३

जगद्रक्षाकरोऽनन्तो मायामन्त्रौषधीमयः ।
सर्वसिद्धिप्रदो वैद्यः प्रभविष्णुरितीव हि ह्रीं ॐ ।। १४

अष्टोत्तरशतं नाम्नां भैरवाय महात्मनः ।
मया ते कथितं देवि रहस्यं सर्वकामदम् ।। १५

य इदं पठति स्तोत्रं नामाष्टशतमुत्तमम् ।
न तस्य दुरितं किञ्चिन्न रोगेभ्यो भयं भवेत् ।। १६

न च मारीभयं किञ्चिन्न च भूतभयं क्वचित् ।
न शत्रुभ्यो भयं किञ्चित् प्राप्नुयान्मानवः क्वचित् ।। १७

पातकेभ्यो भयं नैव यः पठेत् स्तोत्रमुत्तमम् ।
मारीभये राजभये तथा चौराग्निजे भये ।। २८

औत्पातिके महाघोरे तथा दुःस्वप्नदर्शने ।
बन्धने च तथा घोरे पठेत् स्तोत्रमनुत्तमम् ।। २९

सर्वं प्रशममायाति भयं भैरवकीर्तनात् ।
एकादशसहस्रन्तु पुरश्चरणमुच्यते ।। २०

यस्त्रिसन्ध्यं पठेद्देवि संवत्सरमतन्द्रितः ।
स सिद्धिं प्राप्नुयादिष्टां दुर्लभामपि मानवः ।। २१

षण्मासं भूमिकामस्तु जपित्वा प्राप्नुयान्महीम् ।
राजशत्रुविनाशार्थं पठेन्मासाष्टकं पुनः ।। २२

रात्रौ वारत्रयं चैव नाशयत्येव शात्रवान् ।
जपेन्मासत्रयं मर्त्यो राजानं वशमानयेत् ।। २३

धनार्थी च सुतार्थी च दारार्थी चापि मानवः ।
पठेन्मासत्रयं देवि वारमेकं तथा निशि ।।। २४

धनं पुत्रं तथा दारान् प्राप्नुयान्नात्र संशयः ।
रोगी रोगात् प्रमुच्येत बद्धो मुच्येत बन्धनात् ।। २५

भीतो भयात् प्रमुच्येत तत्तदापन्न आपदः ।
निगडैश्चापि बद्धो यः कारगृहनिपातितः ।। २६

शृङ्खलाबन्धनं प्राप्तः पठेच्चैव दिवानिशम् ।
यान्यान् समीहते कामाँस्ताँस्तानाप्नोति मानवः ।। २७

अप्रकाश्यं परं गुह्यं न देयं यस्य कस्यचित् ।
सुकुलीनाय शान्ताय ऋजवे दम्भवर्जिने ।। २८

दद्यात् स्तोत्रमिदं पुण्यं सर्वकामफलप्रदम् ।

(श्री रुद्रयामलतन्त्रे विश्वसारोद्धारतन्त्रे च)

# वटुकभैरवाष्टोत्तरशतनामावलिः

ओं ह्रीं भैरवाय नमः । भूतनाथाय । भूतात्मने । भूतभावनाय । क्षेत्रज्ञाय । क्षेत्रपालाय । क्षेत्रदाय । क्षत्रियाय । विराजे । श्मशानवासिने । मांसाशिने । खर्पराशिने । स्मरान्तकाय । रक्तपाय । पानपाय । सिद्धाय । सिद्धिदाय । सिद्धसेविताय । कङ्कालाय । कालशमनाय नमः । २०

कलाकाष्ठातनवे नमः । कवये । त्रिनेत्राय । बहुनेत्राय । पिङ्गललोचनाय । शूलपाणये । खड्गपाणये । कंकालिने । धूम्रलोचनाय । अभीरवे । भैरवीनाथाय । भूतपाय । योगिनीपतये । धनदाय । अधनहारिणे । धनवते । प्रतिभानवते । नागहाराय । नागपाशाय । व्योमकेशाय नमः । ४०

कपालभृते नमः । कालाय । कपालमालिने । कमनीयाय । कलानिधये । त्रिलोचनाय । ज्वलनेत्राय । त्रिशिखिने ।

त्रिलोकपाय। त्रिनेत्रतनयाय। डिम्भशान्ताय। शान्तजनप्रियाय। वटुकाय । बहुवेषाय । खट्वाङ्ग वरधारकाय । भूताध्यक्षाय । पशुपतये। भिक्षुकाय। परिचारकाय। धूर्ताय नमः। ६०

दिगम्बराय नमः । शूराय। हरिणाय। पाण्डुलोचनाय। प्रशान्ताय । शान्तिदाय । शुद्धाय । शङ्करप्रियबान्धवाय । अष्टमूर्तये। निधीशाय। ज्ञानचक्षुषे। तपोमयाय। अष्टाधाराय। षडाधाराय । सर्पयुक्ताय । शिखीसखाय । भूधराय । भूधराधीशाय। भूपतये। भूधरात्मजाय नमः। ८०

कंकालधारिणे । मुण्डिने । आन्त्रयज्ञोपवीतिने । जृम्भणाय। मोहनाय । स्तंभिने । मारणाय । क्षोभणाय । शुद्धनीलाञ्जनप्रख्याय । दैत्यघ्ने । मुण्डभूषिताय । बलिभुजे । बलिभुङ्नाथाय। बालाय। अबालपराक्रमाय। सर्वापत्तारणाय। दुर्गाय। दुष्टभूतनिषेविताय। कामिने। कलानिधिकान्ताय नमः। १००

कामिनीवशकृते नमः । वशिने । जगद्रक्षाकराय । अनन्ताय। मायामन्त्रौषधीमयाय । सर्वसिद्धिप्रदाय । वैद्याय । प्रभविष्णवे नमः ह्रीं। १०८

॥ श्रीः ॥

# ॥ श्रीवटुकभैरवकवचम् ॥

ॐ अस्य श्रीवटुकभैरवकवचस्य भैरवऋषिः, अनुष्टुप्छन्दः, वटुकभैरवो देवता। मम वटुकभैरवप्रसादसिद्ध्यर्थे सर्वार्थसाधने च पाठे विनियोगः।

ॐ ह्रीं पातु शिरसि नित्यं पातु ह्रीं कण्ठदेशके।
वटुकः पातु हृदये आपदुद्धारणाय च॥ १

कुरुद्वयं मे लिङ्गस्य आधारे वटुकाय च।
सर्वदा पातु ह्रीं बीजं बाह्वोर्युगलमेव च॥ २

षडङ्गसहितो देवो नित्यं रक्षतु भैरवः।
ॐ ह्रीं वटुकाय सततं सर्वाङ्गे मम सर्वदा॥ ३

ॐ ह्रीं कालाय पादयोः पातु पातु वीरासनं हृदि।
ॐ ह्रीं महाकालः शिरः पातु कण्ठदेशे तु भैरवः॥ ४

दण्डपाणिर्गुह्यमूले भैरवीसहितस्ततः।
ललिताभैरवः पातु अष्टाभिः शक्तिभिः सह॥ ५

विश्वनाथः सदा पातु सर्वाङ्गे मम सर्वदा।
अन्नपूर्णा सदा पातु अंसं रक्षतु चण्डिका॥ ६

असिताङ्गः शिरः पातु ललाटं पातु भैरवः।
चण्डभैरवः पातु वक्त्रे कण्ठे श्रीक्रोधभैरवः॥ ७

मूलाधारं भीषणश्च बाहुयुग्मं च भैरवः।
हंसबीजं पातु हृदि सोऽहं रक्षतु प्राणयोः॥ ८

प्राणापानसमानं च उदानं व्यानमेव च।
रक्षन्तु द्वारमूले तु दशदिक्षु समन्ततः॥ ९

प्रणवः पातु सर्वाङ्गं लज्जाबीजं महाभये।
इति श्री ब्रह्मकवचं भैरवस्य प्रकीर्तितम् ह्रीं ॐ॥ १०

# श्री वटुकभैरवकवचम् (२)

ॐ ह्रीं सहस्रारे महाचक्रे कर्पूरधवले गुरुः ।
पातु मां वटुको देवो भैरवः सर्वकर्मसु ॥ १

पूर्वस्याममसिताङ्गो मां दिशि रक्षतु सर्वदा ।
आग्नेय्यां च रुरुः पातु दक्षिणे चण्डभैरवः ॥ २

नैर्ऋत्यां क्रोधनः पातु उन्मत्तः पातु पश्चिमे ।
वायव्यां मां कपाली च नित्यं पायात् सुरेश्वरः ॥ ३

भीषणो भैरवः पातु उत्तरस्यां तु सर्वदा ।
संहारभैरवः पायादीशान्यां च महेश्वरः ॥ ४

ऊर्ध्वं पातु विधाता च पाताले नन्दको विभुः ।
सद्योजातस्तु मां पायात् सर्वतो देवसेवितः ॥ ५

रामदेवो वनान्ते च वनेऽघोरस्तथाऽवतु ।
जले तत्पुरुषः पातु स्थले ईशान एव च ॥ ६

डाकिनीपुत्रकः पातु पुत्रान् मे सर्वतः प्रभुः ।
हाकिनीपुत्रकः पातु दारांस्तु लाकिनीसुतः ॥ ७

पातु शाकिनिकापुत्रः सैन्यं वै कालभैरवः ।
मालिनीपुत्रकः पातु पशूनश्वान् गजांस्तथा ॥ ८

महाकालोऽवतु क्षेत्रं श्रियं मे सर्वतो गिरा ।
वाद्यं वाद्यप्रियः पातु भैरवो नित्यसम्पदा ह्रीं ॐ ॥ ९

चतुर्वर्गप्रदं नित्यं स्वयं देवप्रकाशितम् ।
यः पठेच्छृणुयान्नित्यं धारयेत्कवचोत्तमम् ॥

सदानन्दमयो भूत्वा लभते परमं पदम्।
य इदं कवचं देवि चिन्तयेन्मन्मुखोदितम्॥

कोटिजन्मार्जितं पापं विनश्यति च तत्क्षणात्।
जलमध्येऽग्निमध्ये वा दुर्ग्रहे शत्रुसङ्कटे॥

कवचस्मरणाद्देवि सर्वत्र विजयी भवेत्।
भक्तियुक्तेन मनसा कवचं पूजयेद्यदि॥

कामतुल्यस्तु नारीणां रिपूणां च यमोपमः।
तस्य पादाम्बुजद्वंन्द्वं राज्ञां मुकुटभूषणम्॥

तस्य भूतिं विलोक्यैव कुबेरोऽपि तिरस्कृतः।
यस्य विज्ञानमात्रेण मन्त्रसिद्धिर्न संशयः॥
इदं कवचमज्ञात्वा यो जपेद्बटुकं नरः।
न चाप्नोति फलं तस्य परं नरकमाप्नुयात्॥

मन्वन्तरत्रयं स्थित्वा तिर्यग्योनिषु जायते।
इह लोके महारोगी दारिद्र्येणातिपीडितः॥

शत्रूणां वशगो भूत्वा करपात्री भवेज्जडः।
देयं पुत्राय शिष्याय शान्ताय प्रियवादिने॥

कार्पण्यरहितायालं वटुभक्तिरताय च।
योऽपरागे प्रदाता वै तस्य स्यादतिसत्वरम्॥

आयुर्विद्या यशो धर्मबलं चैव न संशयः।
इति ते कथितं देवि गोपनीयं स्वयोनिवत्॥

—*—*—

# ॥ श्रीरुद्रसहस्रनाम स्तोत्रम् ॥

## ॥ पूर्वपीठिका ॥

कैलासाचलशृंगाग्रे रत्नसिंहासने स्थितम् ।
पार्वत्या सहितं देवं शिवं वेदान्तवर्णितम् ॥ १ ॥

कदाचिद्भगवान्विष्णुः आगत्य परया मुदा ।
तुष्टाव विविधैस्स्तोत्रैः भगवन्तमुमापतिम् ॥ २ ॥

महादेव ! महादेव ! महादेव ! दयानिधे ! ।
भवानेव भवानेव भवानेव गतिर्मम ॥ ३ ॥

स्रष्टारोऽपि प्रजानां प्रबलभवभयाद्यं नमस्यन्ति देवाः
यश्चित्ते संप्रविष्टोऽप्यवहितमनसां ध्यानयुक्तात्मनां च ।
लोकानामादिदेवः स जयतु भगवान्श्रीभवानीसमेतः
बिभ्राणः सोमलेखामहिवलयवरं गांगचन्द्रौ कपालम् ॥ ४

नमश्शिवाय सांबाय सगणाय ससूनवे ।
सनन्दिने सगङ्गाय सवृषाय नमो नमः ॥ ५ ॥

स्वर्णासनाय सौम्याय शक्तिशूलधराय च ।
नमो दिक्चर्मवस्त्राय ईशानाय नमो नमः ॥ ६ ॥

ब्रह्मणे ब्रह्मदेहाय नमस्तत्पुरुषाय ते ।
नमोऽन्धकविनाशाय अघोराय नमो नमः ॥ ७ ॥

रुद्राय पंचवक्त्राय वामदेवाय ते नमः ।
सर्वरोगविनाशाय सद्योजाताय ते नमः ॥ ८ ॥

गिरिशाय सुदेहाय सुन्दराय नमो नमः ।
भीमायोग्रस्वरूपाय विजयाय नमो नमः ॥ ९ ॥

सुरासुराधिपतये अनन्ताय नमो नमः ।
सूक्ष्माय वह्निहस्ताय वरखट्वांगधारिणे ॥ १० ॥

शिवोत्तमाय भर्गाय विरूपाक्षाय ते नमः ।
शान्ताय च तमोघ्नाय एकनेत्राय ते नमः ॥ ११ ॥

वेधसे विश्वरूपाय एकरुद्राय ते नमः ।
भक्तानुकंपिनेऽत्यर्थं नमस्तेऽस्तु त्रिमूर्तये ॥
श्रीकण्ठाय नमस्तेऽस्तु रुद्राणां शतधारिणे ॥ १२ ॥

पंचास्याय शुभास्याय नमस्तेऽस्तु शिखण्डिने ।
एवं स्तुतो महादेवः प्राह गंभीरया गिरा ॥ १३ ॥

किं तवेष्टं मम पुरो वद विष्णो ! प्रियंकर ! ।
इत्युक्तः कमलाक्षस्तु शिवं प्राह रमापतिः ॥ १४ ॥

लोकानां रक्षणे तावत् नियुक्तो भवता ह्यहम् ।
तद्रक्षणे यथाशक्तो भवेयं च तथा कुरु ॥ १५ ॥

असुराणां वधार्थाय बलं देहि वपुष्षु मे ।
रुद्रनामसहस्रं च तदर्थं वद मे प्रभो ॥ १६ ॥

इति संप्रार्थितस्तेन माधवेन महेश्वरः ।
प्रोवाच रुद्रनामानि तन्माहात्म्यस्य संग्रहम् ॥ १७ ॥

अजैकपादहिर्बुध्न्यः त्वष्टा प्रोक्तस्तृतीयगः ।
विश्वरूपहरश्चैव बहुरूपस्त्रियम्बकः ॥ १८ ॥

अपराजितस्सप्तमश्च अष्टमश्च वृषाकपिः ।
शंभुः कपर्दी दशमः रैवत एकादशः स्मृतः ॥ १९ ॥

इत्येकादशरुद्राणां नामानि कथितानि ते ।
जामातारमनाहूय शिवं शान्तं पिनाकिनम् ॥ २० ॥

यज्ञमारब्धवान्दक्षः मामेकं च सतीपतिम्।
इति विज्ञाय संक्रुद्धः भगवान्सोमशेखरः ॥ २१ ॥

प्रलयाग्निप्रभो रुद्रः सहस्रशिरसान्वितः।
द्विसहस्रकरो दीर्घः सकलायुधपाणिमान्॥ २२ ॥

अट्टहासकरो भीमः द्विसहस्राक्षिसंयुतः।
महोग्रनर्तनाभिज्ञः सर्वसंहारताण्डवः ॥ २३ ॥

दक्षाध्वरं नाशितवान् ततो देवाः पलायिताः।
अतः श्रीरुद्रदेवस्य पूजनात्सर्वदेवताः ॥ २४ ॥

प्रीताश्च वरदाने याः सुमुख्यश्च भवन्ति ताः।
तस्मात्त्वमपि देवेशं रुद्रं संपूजयाधुना ॥ २५ ॥

तत्पूजनोपकाराय तन्नामानि वदामि ते।
शृणु त्वं श्रद्धयोपेतः तन्नामानि वराणि च ॥ २६ ॥

इत्युक्त्वा भगवान्देवो विष्णवे प्रभविष्णवे।
रुद्रस्यारम्भमन्त्रोऽयं प्रणवः परिकीर्तितः ॥ २७ ॥

ततो नमश्चेति परं भगवते च ततः परम्।
रुद्रायेति ततः पश्चात् मन्त्रक्रम उदीरितः ॥ २८ ॥

प्रत्यक्षरं नामशतं सहस्रं क्रमशो भवेत्।
रुद्रनाम्नां सहस्रं च उपदिश्यान्तर्दधे प्रभुः ॥ २९ ॥

॥ न्यासः ॥ अस्य श्री रुद्रसहस्रनामस्तोत्रमहामन्त्रस्य भगवान् महादेव ऋषिः, देवी गायत्रीछन्दः। सर्वसंहारकर्ता श्रीरुद्रो देवता। श्रीं बीजम्। रुं शक्तिः। द्रं कीलकम्। श्रीरुद्र प्रसादसिद्ध्यर्थे जपे विनियोगः।

ओं अंगुष्ठाभ्यं नमः। नं तर्जनीभ्यां। मं मध्यमाभ्यां। भं अनामिकाभ्यां। गं कनिष्ठिकाभ्यां। वं करतलकरपृष्ठाभ्यां। तें हृदयाय नमः। रुं शिरसे स्वाहा। द्रां शिखायै वषट्। यं कवचाय हुम्। ओं नेत्रत्रयाय वौषट्। श्रीं अस्त्राय फट्। भूर्भुवस्सुवरोमिति दिग्बन्धः। ॥ ध्यानम् ॥

नेत्राणां द्विसहस्रकैः परिवृतमत्युग्रचर्माम्बरं
हेमाभं गिरिशं सहस्रशिरसं आमुक्तकेशान्वितम्।
घण्टामण्डितपादपद्मयुगलं नागेन्द्रकुम्भोपरि
तिष्ठन्तं द्विसहस्रहस्तमनिशं ध्यायामि रुद्रं परम् ॥

॥ पञ्चपूजा ॥ लं पृथिव्यात्मने गन्धं समर्पयामि। हं आकाशात्मने पुष्पाणि समर्पयामि। यं वाय्वात्मने धूपमाघ्रापयामि। रं वह्न्यात्मने दीपं दर्शयामि। वं अमृतात्मने अमृतं निवेदयामि। सं सर्वात्मने सर्वोपचारान्समर्पयामि।

सहस्रनामस्तोत्र पारायणसमाप्तौ अङ्गन्यासमात्रं कृत्वा ध्यात्वा दिग्विमोकं, लमित्यादि पंचपूजां च कुर्यात्।

# ॥ श्रीरुद्रसहस्रनामस्तोत्रम् ॥

। ओं नमो भगवते रुद्राय ।

ओं ऐं ह्रीं जपस्तुत्यः ओं नमः पदवाच्चकः ।
ओंकारकर्ता चोंकारवेत्ता चोंकारबोधकः ॥ १ ॥

ओंकारकन्दरासिंहः ओंकारज्ञानवारिधिः ।
ओंकारकन्दांकुरिकः ओंकारवदनोज्ज्वलः ॥ २ ॥

ओंकारकाकुदश्चार्यं ओंकारपदवाच्चकः ।
ओंकारकुण्डसप्तार्चिः ओंकारावालकल्पकः ॥ ३ ॥

ओंकारकोकमिहिरः ओंकारश्रीनिकेतनः ।
ओंकारकण्ठश्चोंकारस्कन्धश्चोंकारदोर्युगः ॥ ४ ॥

ओंकारचरणद्वन्द्वः ओंकारमणिपादुकः ।
ओंकारचक्षुश्चोंकारश्रुतिश्चोंकारभ्रूयुगः ॥ ५ ॥

ओंकारजपसुप्रीतः ओंकारैकपरायणः ।
ओंकारदीर्घिकाहंसश्चोंकारजपतारकः ॥ ६ ॥

ओंकारपदतत्त्वार्थः ओंकारांभोधिचन्द्रमाः ।
ओंकारपीठमध्यस्थः ओंकारार्थप्रकाशकः ॥ ७ ॥

ओंकारपूज्यश्चोंकारस्थितश्चोंकारसुप्रभुः ।
ओंकारपृष्ठश्चोंकारकटिश्चोंकारमध्यमः ॥ ८ ॥

ओंकारपेटकमणिः ओंकाराभरणोज्ज्वलः ।
ओंकारपंजरशुकः ओंकारार्णवमौक्तिकः ॥ ९ ॥

ओंकारभद्रपीठस्थः ओंकारस्तुतविग्रहः ।
ओंकारभानुकिरणः ओंकारकमलाकरः ॥ १० ॥

ओंकारमणिदीपार्चिः ओंकारवृषवाहनः ।
ओंकारमयसर्वांग ओंकारगिरिजापतिः ॥ ११ ॥

ओंकारमाकन्दविकः ओंकारादर्शबिंबितः ।
ओंकारमूर्तिश्चोंकारनिधिश्चोंकारसन्निभः ॥ १२ ॥

ओंकारमूर्धा चोंकारफालश्चोंकारनासिकः ।
ओंकारमण्डपावासः ओंकारांगणदीपकः ॥ १३ ॥

ओंकारमौलिश्चोंकारकेलिश्चोंकारवारिधिः ।
ओंकारारण्यहरिणः ओंकारशशिशेखरः ॥ १४ ॥

ओंकारारामममन्दारः ओंकारब्रह्मवित्तमः ।
ओंकाररूपश्चोंकारवाच्य ओंकारचिन्तकः ॥ १५ ॥

ओंकारोद्यानबर्हीं च ओंकारशरदम्बुदः ।
ओंकारवक्षाश्चोंकार कुक्षिश्चोंकारपार्श्वकः ॥ १६ ॥

ओंकारवेदोपनिषत् ओंकाराध्वरदीक्षितः ।
ओंकारशेखरश्चैव तथा चोंकारविश्वकः ॥ १७ ॥

ओंकारसक्थिश्चोंकारजानुश्चोंकारगुल्फकः ।
ओंकारसारसर्वस्वः ओंकारसुमषट्पदः ॥ १८ ॥

ओंकारसौधनिलयः ओंकारास्थाननर्तकः ।
ओंकारहनुरेवायं ओंकारवटु रीरितः ॥ १९ ॥

ओंकारज्ञेय एवायं तथा चोंकारपेशलः ।
ओं नं बीजजपप्रीतः ओं यों भंमंस्वरूपकः ॥ २० ॥

ओंपदातीतवस्त्वंशः ओमित्येकाक्षरात्परः ।
ओंपदेन च संस्तव्यः ओंकारध्येय एव च ॥ २१ ॥

ओं यं बीजजपाराध्यः ओंकारनगराधिपः ।
ओं वं तें बीजसुलभः ओं रुं द्रां बीजतत्परः ॥ २२ ॥

ओं शिवायेति संजप्यः ओं ह्रीं श्रीं बीजसाधकः ।
नकाररूपो नादान्तो नारायणसमाश्रितः ॥ २३ ॥

नगप्रवरमध्यस्थो नमस्कारप्रियो नटः ।
नगेन्द्रभूषणो नागवाहनो नन्दिवाहनः ॥ २४ ॥

नन्दिकेशसमाराध्यो नन्दनो नन्दिवर्धनः ।
नरकक्लेशशमनो निमेषो निरुपद्रवः ॥ २५ ॥

नरसिंहार्चितपदः नवनागनिषेवितः ।
नवग्रहार्चितपदो नवसूत्रविधानवित् ॥ २६ ॥

नवचन्दनलिप्तांगो नवचन्द्रकलाधरः ।
नवनीत प्रियाहारो निपुणो निपुणप्रियः ॥ २७ ॥

नवब्रह्मार्चितपदो नगेन्द्रतनयाप्रियः ।
नवभस्मविदिग्धाङ्गो नवबंधविमोचकः ॥ २८ ॥

नववस्त्रपरीधानो नवरत्नविभूषितः ।
नवसिद्धसमाराध्यो नामरूपविवर्जितः ॥ २९ ॥

नाकेशपूज्यो नादात्मा निर्लेपो निधनाधिपः ।
नादप्रियो नदीभर्ता नरनारायणार्चितः ॥ ३० ॥

नादबिन्दुकलातीतः नादबिन्दुकलात्मकः ।
नादाकारो निराधारो निष्प्रभो नीतिवित्तमः ॥ ३१ ॥

नानाक्रतुविधानज्ञो नानाभीष्टवरप्रदः ।
नामपारायणप्रीतो नानाशास्त्रविशारदः ॥ ३२ ॥

नारदादि समाराध्यो नवदुर्गार्चनप्रियः ।
निखिलागम संसेव्यो निगमाचारतत्परः ॥ ३३ ॥

निचेरुर्निष्क्रियो नाथो निरीहो निधिरूपकः ।
नित्यक्रुद्धो निरानन्दो निराभासो निरामयः ॥ ३४ ॥

नित्यानपायमहिमा नित्यबुद्धो निरंकुशः ।
नित्योत्साहो नित्यनित्यो नित्यानन्द स्वरूपकः ॥ ३५ ॥

निरवद्यो निशुंभघ्नो नदीरूपो निरीश्वरः ।
निर्मलो निर्गुणो नित्यो निरपायो निधिप्रदः ॥ ३६ ॥

निर्विकल्पो निर्गुणस्थो निषङ्गी नीललोहितः ।
निष्कलंको निष्प्रपंचो निर्द्वन्द्वो निर्मलप्रभः ॥ ३७ ॥

निस्तुलो नीलचिकुरो निस्सङ्गो नित्यमङ्गलः ।
नीपप्रियो नित्यपूर्णो नित्यमङ्गलविग्रहः ॥ ३८ ॥

नीलग्रीवो निरुपमो नित्यशुद्धो निरंजनः ।
नैमित्तिकार्चनप्रीतो नवर्षिगणसेवितः ॥ ३९ ॥

नैमिशारण्यनिलयो नीलजीमूतनिस्वनः ।
मकाररूपो मन्त्रात्मा मायातीतो महानिधिः ॥ ४० ॥

मकुटाङ्गदकेयूरकंकणादिपरिष्कृतः ।
मणिमण्डपमध्यस्थो मृडानीपरिसेवितः ॥ ४१ ॥

मधुरो मधुरानाथो मीनाक्षीप्राणवल्लभः ।
मनोन्मनो महेष्वासो मांधानृपति पूजितः ॥ ४२ ॥

मयस्करो मृडो मृग्यो मृगहस्तो मृगप्रियः ।
मलयस्थो मन्दरस्थो मलयानिलसेवितः ॥ ४३ ॥

महाकायो महावक्त्रो महादंष्ट्रो महाहनुः ।
महाकैलासनिलयो महाकारुण्यवारिधिः ॥ ४४ ॥

महागुणो महोत्साहो महामङ्गलविग्रहः ।
महाजानुर्महाजंघो महापादो महानखः ॥ ४५ ॥

महाधारो महाधीरो मङ्गलो मङ्गलप्रदः ।
महाधृतिर्महामेघः महामन्त्रो महाशनः ॥ ४६ ॥

महापापप्रशमनो मितभाषी मधुप्रदः ।
महाबुद्धिर्महासिद्धिर्महायोगी महेश्वरः ॥ ४७ ॥

महाभिषेकसन्तुष्टो महाकालो महानटः ।
महाभुजो महावक्षाः महाकुक्षिर्महाकटिः ॥ ४८ ॥

महाभूतिप्रदो मान्यो मुनिबृन्द निषेवितः ।
महावीरेन्द्रवरदो महालावण्यशेवधिः ॥ ४९ ॥

मातृमण्डलसंसेव्यः मन्त्रतन्त्रात्मको महान् ।
माध्यन्दिनसवस्तुत्यो मखध्वंसी महेश्वरः ॥ ५० ॥

मायाबीजजपप्रीतः माषान्नप्रीतमानसः ।
मार्ताण्डभैरवाराध्यो मोक्षदो मोहिनीप्रियः ॥ ५१ ॥

मार्ताण्डमण्डलस्थश्च मन्दारकुसुमप्रियः ।
मिथिलापुर संस्थानो मिथिलापतिपूजितः ॥ ५२ ॥

मिथ्याजगदधिष्ठानो मिहिरो मेरुकार्मुकः ।
मुद्गौदनप्रियो मित्रो मयोभूर्मन्त्रवित्तमः ॥ ५३ ॥

मूलाधारस्थितो मुग्धो मणिपूरनिवासकः ।
मृगाक्षो महिषारूढो महिषासुरमर्दनः ॥ ५४ ॥

मृगाङ्कशेखरो मृत्युंजयो मृत्युविनाशकः ।
मेरुशृङ्गाग्रनिलयो महाशान्तो महीस्तुतः ॥ ५५ ॥

मौंजीबद्धश्च मघवान्महेशो मङ्गलप्रदः ।
मंजुमंजीरचरणो मंत्रिपूज्यो मदापहः ॥ ५६ ॥

मंबीज जपसंतुष्टः मायावी मारमर्दनः ।
भक्तकल्पतरुर्भाग्यदाता भावार्थगोचरः ॥ ५७ ॥

भक्तचैतन्यनिलयो भाग्यारोग्यप्रदायकः ।
भक्तप्रियो भक्तिगम्यो भक्तवश्यो भयापहः ॥ ५८ ॥

भक्तेष्टदाता भक्तार्तिभंजनो भक्तपोषकः ।
भद्रदो भङ्गुरो भीष्मो भद्रकालीप्रियङ्करः ॥ ५९ ॥

भद्रपीठकृतावासो भुवन्तिर्भद्रवाहनः ।
भवभीतिहरो भर्गो भार्गवो भारतीप्रियः ॥ ६० ॥

भव्यो भवो भवानीशो भूतात्मा भूतभावनः ।
भस्मासुरेष्टदो भूमा भर्ता भूसुरवन्दितः ॥ ६१ ॥

भागीरथीप्रियो भौमो भगीरथसमर्चितः ।
भानुकोटिप्रतीकाशः भगनेत्रविदारणः ॥ ६२ ॥

भालनेत्राग्निसंदग्धमन्मथो भूभृदाश्रयः ।
भाषापतिस्तुतो भास्वान् भवहेतिर्भयंकरः ॥ ६३ ॥

भास्करो भास्कराराध्यो भक्तचित्तापहारकः ।
भीमकर्मा भीमवर्मा भूतिभूषणभूषितः ॥ ६४ ॥

भीमघंटाकरो भण्डासुरविध्वंसनोत्सुकः ।
भुंभारवप्रियो भ्रूणहत्यापातकनाशनः ॥ ६५ ॥

भूतकृद् भूतभृद्भावो भीषणो भीतिनाशनः ।
भूतव्रातपरित्राता भीताभीतभयापहः ॥ ६६ ॥

भूताध्यक्षो भरद्वाजो भारद्वाजसमाश्रितः ।
भूपतित्वप्रदो भीमो भैरवो भीमनिस्वनः ॥ ६७ ॥

भूभारोत्तरणो भृंगिरिटिसेव्यपदांबुजः ।
भूमिदो भूतिदो भूतिर्भवारण्यकुठारकः ॥ ६८ ॥

भूर्भुवस्स्वः पतिः भूपो भिण्डिवालभुसुण्डिभृत् ।
भूलोकवासी भूलोकनिवासिजनसेवितः ॥ ६९ ॥

भूसुराराधनप्रीतो भूसुरेष्टफलप्रदः ।
भूसुरेड्यो भूसूरेशो भूतभेताल सेवितः ॥ ७० ॥

भैरवाष्टकसंसेव्यो भैरवो भूमिजार्च्चितः ।
भोगदो भोगभुग्भोग्यो भोगिभूषणभूषितः ॥ ७१ ॥

भोगमार्गप्रदो भोगी भोगिकुंडलमण्डितः ।
भोगमोक्षप्रदो भोक्ता भिक्षाचरणतत्परः ॥ ७२ ॥

गकाररूपो गणपो गुणातीतो गुहप्रियः ।
गजचर्मपरीधानो गंभीरो गाधिपूजितः ॥ ७३ ॥

गजाननप्रियो गौरीवल्लभो गिरिशो गुणः ।
गणो गृत्सो गृत्सपतिर्गरुडाग्रजपूजितः ॥ ७४ ॥

गदाद्यायुधसंपन्नो गंधमाल्यविभूषितः ।
गयाप्रयागनिलयो गुडाकेशप्रपूजितः ॥ ७५ ॥

गर्वातीतो गण्डपतिर्गणको गणगोचरः ।
गायत्रीमन्त्रजनको गीयमानगुणो गुरुः ॥ ७६ ॥

गुणज्ञेयो गुण ध्येयो गोप्ता गोदावरीप्रियः ।
गुणाकरो गुणातीतो गुरुमण्डल सेवितः ॥ ७७ ॥

गुणाधारो गुणाध्यक्षो गर्वितो गानलोलुपः ।
गुणत्रयात्मा गुह्यश्च गुणत्रयविभावितः ॥ ७८ ॥

गुरुध्यातपदद्वन्द्वो गिरीशो गुणगोचरः ।
गुहावासो गुहाध्यक्षो गुडान्नप्रीतमानसः ॥ ७९ ॥

गूढगुल्फो गूढतनुर्गजारूढो गुणोज्ज्वलः ।
गूढपादप्रियो गूढो गौडपादनिषेवितः ॥ ८० ॥

गोत्राणतत्परो ग्रीष्मो गीष्पतिर्गोपतिस्तथा ।
गोरोचनप्रियो गुप्तो गोमातृपरिसेवि तः ॥ ८१

गोविन्दवल्लभो गङ्गाजूटो गोविन्दपूजितः ।
गोष्ठ्यो गृह्यो गुहान्तस्थो गह्वरेष्ठो गदांतकृत् ॥ ८२ ॥

गोसवासक्तहृदयो गोप्रियो गोधनप्रदः ।
गोहत्यादिप्रशमनो गोत्री गौरीमनोहरः ॥ ८३ ॥

गङ्गास्नानप्रियो गर्गो गङ्गास्नानफलप्रदः ।
गन्धप्रियो गीतपादो ग्रामणीर्गहनो गिरिः ॥ ८४ ॥

गन्धर्वगानसुप्रीतो गन्धर्वाप्सरसां प्रियः ।
गन्धर्वसेव्यो गन्धर्वो गन्धर्वकुलभूषणः ॥ ८५ ॥

गंबीजजपसुप्रीतो गायत्रीजपतत्परः ।
गंभीरवाक्यो गगनसमरूपो गिरिप्रियः ॥ ८६ ॥

गंभीरहृदयो गेयो गंभीरो गर्वनाशनः ।
गाङ्गेयाभरणप्रीतो गुणज्ञो गुणवान्गुहः ॥ ८७ ॥

वकाररूपो वरदो वागीशो वसुदो वसुः ।
वज्री वज्रप्रियो विष्णुः वीतरागो विरोचनः ॥ ८८ ॥

वन्द्यो वरेण्यो विश्वात्मा वरुणो वामनो वपुः ।
वश्यो वशंकरो वात्यो वास्तव्यो वास्तुपो विधिः ॥ ८९ ॥

वाचामगोचरो वाग्मी वाचस्पत्यप्रदायकः ।
वामदेवो वरारोहो विघ्नेशो विघ्ननाशकः ॥ ९० ॥

वारिरूपो वायुरूपो वैरिवीर्य विदारणः ।
विक्लबो विह्वलो व्यासो व्याससूत्रार्थगोचरः ॥ ९१ ॥

विप्रप्रियो विप्ररूपो विप्रक्षिप्रप्रसादकः ।
विप्राराधनसन्तुष्टो विप्रेष्टफलदायकः ॥ ९२ ॥

विभाकरस्तुतो वीरो विनायकनमस्कृतः ।
विभुर्विभ्राजिततनुर्विरूपाक्षो विनायकः ॥ ९३ ॥

विरागिजनसंस्तुत्यो विरागी विगतस्पृहः ।
विरिंचपूज्यो विक्रान्तो वदनत्रयसंयुतः ॥ ९४ ॥

विशृंखलो विविक्तस्थो विद्वान्वक्त्रचतुष्टयः ।
विश्वप्रियो विश्वकर्ता वषट्कारप्रियो वरः ॥ ९५ ॥

विश्वमूर्तिर्विश्वकीर्तिर्विश्वव्यापी वियत्प्रभुः ।
विश्वस्रष्टा विश्वगोप्ता विश्वभोक्ता विशेषवित् ॥ ९६ ॥

विष्णुप्रियो वियद्रूपो विराड्रूपो विभावसुः ।
वीरगोष्ठीप्रियो वैद्यो वदनैकसमन्वितः ॥ ९७ ॥

वीरभद्रो वीरकर्ता वीर्यवान्वारणार्तिहृत् ।
वृषांको वृषभारूढो वृक्षेशो विंध्यमर्दनः ॥ ९८ ॥

वेदान्तवेद्यो वेदात्मा वदनद्वयशोभितः ।
वज्रदंष्ट्रो वज्रनखो वन्दारुजनवत्सलः ॥ ९९ ॥

वंद्यमानपदद्वन्द्वो वाक्यज्ञो वक्त्रपंचकः ।
वंबीजजपसंतुष्टो वाक्प्रियो वामलोचनः ॥ १०० ॥

व्योमकेशो विधानज्ञो विषभक्षणतत्परः ।
तकाररूपस्तद्रूपस्तत्पदार्थस्वरूपकः ॥ १०१ ॥

तटिल्लतासमरुचिस्तत्वज्ञानप्रबोधकः ।
तत्वमस्यादिवाक्यार्थ स्तपोदानफलप्रदः ॥ १०२ ॥

तत्वज्ञस्तत्वनिलयस्तत्ववाच्यस्तपोनिधिः ।
तत्वासनस्तत्सवितुर्जपसंतुष्टमानसः ॥ १०३ ॥

तन्त्रयन्त्रात्मकस्तन्त्री तंत्रज्ञस्ताण्डवप्रियः ।
तन्त्रीलयविधानज्ञस्तन्त्रमार्गप्रदर्शकः ॥ १०४ ॥

तपस्याध्याननिरतस्तपस्वी तापसप्रियः ।
तपोलोकजनस्तुत्यस्तपस्विजनसेवितः ॥ १०५ ॥

तरुणस्तारणस्तारस्ताराधिपनिभाननः ।
तरुणादित्यसंकाशस्तप्तकांचनभूषणः ॥ १०६ ॥

तलादिभुवनान्तस्थस्तत्वमर्थस्वरूपकः ।
ताम्रवक्त्रस्ताम्रचक्षुस्ताम्रजिह्वस्तनूदरः ॥ १०७ ॥

तारकासुरविध्वंसी तारकस्तारलोचनः ।
तारानाथकलामौलिस्तारानाथसमुद्युतिः ॥ १०८ ॥

तार्क्ष्यकस्तार्क्ष्यविनुतस्त्वष्टा त्रैलोक्यसुन्दरः ।
तांबूलपूरितमुखस्तक्षा ताम्राधरस्तनुः ॥ १०९ ॥

तिलाक्षतप्रियस्त्रिस्थस्तत्वसाक्षी तमोगुणः ।
तुरङ्गवाहनारूढस्तुलादानफलप्रदः ॥ ११० ॥

तुलसीबिल्वनिर्गुण्डीजंबीरामलकप्रियः ।
तुलामाघस्नानतुष्टस्तुष्टातुष्टप्रसादनः ॥ १११ ॥

तुहिनाचलसंकाशस्तमालकुसुमाकृतिः ।
तुङ्गभद्रातीरवासी तुष्टभक्तेष्टदायकः ॥ ११२ ॥

तोमराद्यायुधधरस्तुषाराद्रिसुताप्रियः ।
तोषिताखिलदैत्यौघस्त्रिकालज्ञमुनिप्रियः ॥ ११३ ॥

त्रयीमयस्त्रयीवेद्यस्त्रयीवंद्यस्त्रयीतनुः ।
त्रय्यन्तनिलयस्तत्वनिधिस्ताम्रस्तमोपहः ॥ ११४ ॥

त्रिकालपूजनप्रीतस्तिलान्नप्रीतमानसः ।
त्रिधामा तीक्ष्णपरशुः तीक्ष्णेषुस्तेजसां निधिः ॥ ११५ ॥

त्रिलोकरक्षकस्त्रेतायजनप्रीतमानसः ।
त्रिलोकवासी त्रिगुणो द्विनेत्रस्त्रिदशाधिपः ॥ ११६ ॥

त्रिवर्गदस्त्रिकालज्ञस्तृप्तिदस्तुंबुरुस्तुतः ।
त्रिविक्रमस्त्रिलोकात्मा त्रिमूर्तिस्त्रिपुरान्तकः ॥ ११७ ॥

त्रिशूलभीषणस्तीव्रस्तीर्थ्यस्तीक्ष्णवरप्रदः ।
रघुस्तुतपदद्वंद्वो रव्यादिग्रहसंस्तुतः ॥ ११८ ॥

रजताचलशृङ्गाग्रनिलयो रजतप्रभः ।
रतप्रियो रहःपूज्यो रमणीयगुणाकरः ॥ ११९ ॥

रथकारो रथपतिः रथो रत्नाकरप्रियः ।
रथोत्सवप्रियो रस्यो रजोगुणविनाशकृत् ॥ १२० ॥

रत्नडोलोत्सवप्रीतो रणत्किंकिणिमेखलः ।
रत्नदो राजको रागी रङ्गविद्याविशारदः ॥ १२१ ॥

रत्नपूजनसंतुष्टो रत्नसानुशरासनः ।
रत्नमण्डपमध्यस्थो रत्नग्रैवेयकुण्डलः ॥ १२२ ॥

रत्नाकरस्तुतो रत्नपीठस्थो रणपण्डितः ।
रत्नाभिषेकसंतुष्टो रत्नकांचनभूषणः ॥ १२३ ॥

रत्नाङ्गुलीयवलयो राजत्करसरोरुहः ।
रमापतिस्तुतो रम्यो राजमण्डलमध्यगः ॥ १२४ ॥

रमावाणीसमाराध्यो राज्यदो रत्नभूषणः ।
रम्भादिसुन्दरीसेव्यो रक्षोहा राकिणीप्रियः ॥ १२५ ॥

रविचन्द्राग्निनयनो रत्नमाल्याम्बरप्रियः ।
रविमण्डलमध्यस्थो रविकोटिसमप्रभः ॥ १२६ ॥

राकेन्दुवदनो रात्रिंचरप्राणापहारकः ।
राजराजप्रियो रौद्रो रुरुहस्तो रुरुप्रियः ॥ १२७ ॥

राजराजेश्वरो राजपूजितो राज्यवर्धनः ।
रामार्चितपदद्वन्द्वो रावणार्चितविग्रहः ॥ १२८ ॥

राजवश्यकरो राजा राशीकृतजगत्त्रयः ।
राजीवचरणो राजशेखरो रविलोचनः ॥ १२९ ॥

राजीवपुष्पसंकाशो राजीवाक्षो रणोत्सुकः ।
रात्रिंचरजनाध्यक्षो रात्रिंचरनिषेवितः ॥ १३० ॥

राधामाधवसंसेव्यो राधामाधववल्लभः ।
रुक्माङ्गदस्तुतो रुद्रो रजस्सत्वतमोमयः ॥ १३१ ॥

रुद्रमन्त्रजपप्रीतो रुद्रमण्डलसेवितः ।
रुद्राक्षजपसुप्रीतो रुद्रलोकप्रदायकः ।। १३२ ।।

रुद्राक्षमालाभरणो रुद्राणीप्राणनायकः ।
रुद्राणीपूजनप्रीतो रुद्राक्षमकुटोज्वलः ।। १३३ ।।

रुरुचर्मपरीधानो रुक्माङ्गदपरिष्कृतः ।
रेफस्वरूपो रुद्रात्मा रुद्राध्यायजपप्रियः ।। १३४ ।।

रेणुकावरदो रामो रूपहीनो रविस्तुतः ।
रेवानदीतीरवासी रोहिणीपतिवल्लभः ।। १३५ ।।

रोगेशो रोगशमनो रैदो रक्तबलिप्रियः ।
रंबीजजपसंतुष्टो राजीवकुसुमप्रियः ।। १३६ ।।

रंभाफलप्रियो रौद्रदृक् रक्षाकर रूपवान् ।
दकाररूपो देवेशो दरस्मेरमुखांबुजः ।। १३७ ।।

दरान्दोलितदीर्घाक्षो द्रोणपुष्पार्चनप्रियः ।
दक्षाराध्यो दक्षकन्यापतिर्दक्षवरप्रदः ।। १३८ ।।

दक्षिणादक्षिणाराध्यो दक्षिणामूर्तिरूपभृत् ।
दाडिमीबीजरदनो दाडिमीकुसुमप्रियः ।। १३९

दान्तो दक्षमखध्वंसी दंडो दमयिता दमः ।
दारिद्र्यध्वंसको दाता दयालुर्दानवान्तकः ।। १४०

दारुकारण्यनिलयो दशदिक्पालपूजितः ।
दाक्षायणीसमाराध्यो दनुजारिर्दयानिधिः ।। १४१ ।।

दिव्यायुधधरो दिव्यमाल्यांबरविभूषणः ।
दिगम्बरो दानरूपो दुर्वासमुनिपूजितः ।। १४२ ।।

दिव्यान्तरिक्षगमनो दुराधर्षो दयात्मकः ।
दुग्धाभिषेचनप्रीतो दुःखदोषविवर्जितः ॥ १४३ ॥

दुराचारप्रशमनो दुग्धान्नप्रीतमानसः ।
दुर्लभो दुर्गमो दुर्गो दुःखहन्ता दुरार्तिहा ॥ १४४ ॥

दुर्वासा दुष्टभयदो दुर्जयो दुरतिक्रमः ।
दुष्टहन्ता देवसैन्यपतिर्दंभविवर्जितः ॥ १४५ ॥

दुःस्वप्ननाशनो दुष्टदुरो दुर्वारविक्तमः ।
दूर्वायुग्मसमाराध्यो दुत्तूरकुसुमप्रियः ॥ १४६ ॥

देवगंगाजटाजूटो देवताप्राणवल्लभः ।
देवतार्तिप्रशमनो दीनदैन्यविमोचनः ॥ १४७ ॥

देवदेवो दैत्यगुरुः दण्डनाथप्रपूजितः ।
देवभोग्यो देवयोग्यो दीप्तमूर्तिर्दिवस्पतिः ॥ १४८ ॥

देवर्षिवर्यो देवर्षिवन्दितो देवभोगदः ।
देवादिदेवो देवेज्यो दैत्यदर्पनिषूदनः ॥ १४९ ॥

देवासुरगणाध्यक्षो देवासुरगणाग्रणीः ।
देवासुर तपस्तुष्टो देवासुरवरप्रदः ॥ १५० ॥

देवासुरेश्वराराध्यो देवान्तकवरप्रदः ।
देवासुरेश्वरो देवो देवासुरमहेश्वरः ॥ १५१ ॥

देवेन्द्ररक्षको दीर्घो देवबृन्दनिषेवितः ।
देशकालपरिज्ञाता देशोपद्रवनाशकः ॥ १५२ ॥

दोषाकरकलामौलिर्दुर्वारभुजविक्रमः ।
दण्डकारण्यनिलयो दण्डी दण्डप्रसादकः ॥ १५३ ॥

दण्डनीतिर्दुरावासो द्योतो दुर्मतिनाशनः ।
द्वंद्वातीतो दीर्घदर्शी दानाध्यक्षो दयापरः ।। १५४ ।।

यकाररूपो यन्त्रात्मा यन्त्राराधनतत्परः ।
यजमानाद्यष्टमूर्तिर्यामिनीचरदर्पहा ।। १५५ ।।

यजुर्वेदप्रियो युद्धमर्मज्ञो युद्धकौशलः ।
यत्नसाध्यो यष्टिधरो यजमानप्रियो यजुः ।। १५६ ।।

यथार्थरूपो युगकृद्युगरूपो युगान्तकृत् ।
यथोक्तफलदो योषापूजनप्रीतमानसः ।। १५७ ।।

यदृच्छालाभसंतुष्टो याचकार्तिनिषूदनः ।
यन्त्रासनो यन्त्रमयो यन्त्रमन्त्रस्वरूपकः ।। १५८ ।।

यमरूपो यामरूपो यमबाधानिवर्तकः ।
यमादियोगनिरतो योगमार्गप्रदर्शकः ।। १५९ ।।

यवाक्षतार्चनरतो यावचिह्नितपादुकः ।
यक्षराजसखो यज्ञो यक्षेशो यक्षपूजितः ।। १६० ।।

यक्षराक्षससंसेव्यो यातुधानवरप्रदः ।
यज्ञगुह्यो यज्ञकर्ता यजमानस्वरूपकः ।। १६१ ।।

यज्ञान्तकृद्यज्ञपूज्यो यज्ञभुग्यज्ञवाहनः ।
यागप्रियो यानसेव्यो युवा यौवनगर्वितः ।। १६२ ।।

यातायातादिरहितो यतिधर्मपरायणः ।
यात्राप्रियो यमी याम्यदण्डपाशनिकृन्तनः ।। १६३ ।।

यात्राफलप्रदो युक्तो यशस्वी यमुनाप्रियः ।
यादःपतिर्यज्ञपतिर्यतिर्यज्ञपरायणः ।। १६४ ।।

यादवानां प्रियो योद्धा योधाराधन तत्परः ।
यामपूजनसंतुष्टो योषित्सङ्गविवर्जितः ।। १६५ ।।

यामिनीपतिसंसेव्यो योगिनीगणसेवितः ।
यायजूको युगावर्तो याच्ञारूपो यथेष्टदः ।। १६६ ।।

यावौदनप्रीतचित्तो योनिष्ठो यामिनीप्रियः ।
याज्ञवल्क्यप्रियो यज्वा यज्ञेशो यज्ञसाधनः ।। १६७ ।।

योगमायामयो योगमायासंवृतविग्रहः ।
योगसिद्धो योगिसेव्यो योगानन्दस्वरूपकः ।। १६८ ।।

योगक्षेमकरो योगक्षेमदाता यशस्करः ।
योगी योगासनाराध्यो योगाङ्गो योगसंग्रहः ।। १६९ ।।

योगीश्वरेश्वरो योग्यो योगदाता युगंधरः ।
योषित्प्रियो यदुपतिर्योषार्धीकृतविग्रहः ।। १७० ।।

यंबीजजपसंतुष्टो यंत्रेशो यन्त्रसाधनः ।
यन्त्रमध्यस्थितो यन्त्री योगीश्वरसमाश्रितः ।। १७१ ।।

।। उत्तरपीठिका ।।

एतत्ते कथितं विष्णो रुद्रनामसहस्रकम् ।
श्रवणात्पठनाच्चैव मननाच्च फलप्रदम् ।। १ ।।

धर्मार्थकाममोक्षाख्य चतुर्वर्गफलप्रदम् ।
विद्याकामी सुविद्यां च लभते नात्र संशयः ।। २ ।।

पुत्रार्थी लभते पुत्रं कन्यार्थी फलमश्नुते ।
विजयार्थी विजयं चैव गृहार्थी गृहमाप्नुयात् ।। ३ ।।

पुष्टिं बलं यशो वर्चो दीर्घमायुश्च विन्दते ।
सर्वज्वरविनाशाय एतन्नामसहस्रकम् ।। ४ ।।

पठित्वा पाठयित्वा वा मुच्यते ज्वरपीडनात्।
परमन्त्रकृताद्दोषात् रक्षतीदं न संशयः ॥ ५ ॥

सर्वग्रन्थिविनाशाय पठेन्नामसहस्रकम्।
सर्वग्रहविनाशार्थं जपेदेतत्सहस्रकम् ॥ ६ ॥

अपमृत्युभयं नास्ति अनेकविषनाशनम्।
नहि चोरभयं तस्य नामसाहस्रपाठिनः ॥ ७ ॥

सर्वपुष्पैस्समभ्यर्च्य सर्वसिद्धिमवाप्नुयात्।
त्रिदलैः बिल्वपत्रैश्च अच्छिद्रैः कोमलैः नवैः ॥ ८ ॥

रुद्रार्पणं यः करोति सर्वदोषात्प्रमुच्यते।
अष्टम्यां पूर्णिमायां च अमायां च विशेषतः ॥ ९ ॥

आर्द्रायां च प्रदोषे च सोमवारे गुरोर्दिने।
यः पठित्वा चार्चनां च कुरुते स च मानवः ॥ १० ॥

स सर्वकामान्लभते वाग्यतो नियमी शुचिः।
सर्वसौभाग्यमाप्नोति क्षेमारोग्यं सुखं परम् ॥ ११ ॥

चैत्रे दमनकैः पूजा वैशाखे गन्धवारिभिः।
ज्येष्ठे तु त्रिफलैः पक्वैः आषाढे क्षीरपूजनम् ॥ १२ ॥

श्रावण्यां शर्कराभिःस्यात् गुडापूपैश्च भद्रदे।
अन्नैराश्वयुजे मासि कार्तिक्यां दीपमालया ॥ १३ ॥

मार्गशीर्षे घृतैः पूजा पौषे चेक्षुरसैरपि।
आज्यार्द्रकम्बलैर्माघे फाल्गुने दधिभिर्भवेत् ॥ १४ ॥

इत्थं द्वादशमासेषु पूर्णिमायां विशेषतः।
महेश्वरस्य पूजां यः कुरुते भक्तिसंयुतः ॥ १५ ॥

सर्वान्कामानवाप्नोति शिवसायुज्यमाप्नुयात्।
मङ्गलानां मङ्गलं च एतन्नामसहस्रकम्॥ १६॥

सुरूपं गुणसंपन्नं कन्या च लभते पतिम्।
दीर्घसौमङ्गल्यमाप्नोति मङ्गलानां परंपराम्॥ १७॥

इति श्रीभृङ्गिरिटिसंहितायां शिवविष्णुसंवादे शिवोत्कर्षप्रकरणे
श्रीरुद्रसहस्रनामस्तोत्रं संपूर्णम्॥

## श्रीरुद्रसहस्रनामावलिः

ओं नमो भगवते रुद्राय

ओं-नमः। ओं ऐंह्रीं जपस्तुत्याय। ओं नमः पदवाचकाय। ओंकारकर्त्रे। ओंकारवेत्रे। ओंकारबोधकाय। ओंकारकन्दरा-सिंहाय। ओंकारज्ञानवारिधये। ओंकारकन्दांकुरिकाय। ओंकारवदनोज्ज्वलाय। ओंकारकाकुदाय। ओंकारपदवाच-काय। ओंकारकुण्डसप्तार्चिषे। ओंकारावालकल्पकाय। ओंकारकोकमिहिराय। ओंकारश्रीनिकेतनाय। ओंकारकण्ठाय। ओंकार-स्कंधाय। ओंकारदोर्युगाय। ओंकारचरणद्वन्द्वाय। ओंकारमणि-पादुकाय नमः। २०

ओंकारचक्षुषे नमः। ओंकारश्रुतये। ओंकारभ्रूयुगाय। ओंकारजपसुप्रीताय। ओंकारैकपरायणाय। ओंकारदीर्घिका-हंसाय। ओंकारजपतारकाय। ओंकारपदतत्वार्थाय। ओंकारांभोधिचन्द्रमसे। ओंकारपीठमध्यस्थाय। ओंकारार्थ-प्रकाशकाय। ओंकारपूज्याय। ओंकारस्थिताय। ओंकारसुप्रभवे। ओंकारपृष्ठाय। ओंकारकटये। ओंकारमध्यमाय। ओंकारपेटक-मणये। ओंकाराभरणोज्ज्वलाय। ओंकारपंजरशुकाय नमः। ४०

ओंकारार्णवमौक्तिकाय नमः । ओंकारभद्रपीठस्थाय । ओंकारस्तुतविग्रहाय । ओंकारभानुकिरणाय । ओंकारकमलाकराय । ओंकारमणिदीपार्चिषे । ओंकारवृषवाहनाय । ओंकारमयसर्वाङ्गाय । ओंकारगिरिजापतये । ओंकारमाकन्दविकाय । ओंकारादर्शबिम्बिताय । ओंकारमूर्तये । ओंकारनिधये । ओंकारसन्निभाय । ओंकारमूर्ध्ने । ओंकारफालाय । ओंकारनासिकाय । ओंकारमंडपावासाय । ओंकारांगणदीपकाय । ओंकारमौलये नमः । ६०

ओंकारकेलये नमः । ओंकारवारिधये । ओंकारारण्यहरिणाय । ओंकारशशिशेखराय । ओंकारराममन्दाराय । ओंकारब्रह्मवित्तमाय । ओंकाररूपाय । ओंकारवाच्याय । ओंकारचिन्तकाय । ओंकारोद्यानबर्हिणे । ओंकारशरदम्बुदाय । ओंकारवक्षसे । ओंकारकुक्षये । ओंकारपार्श्वकाय । ओंकारवेदोपनिषदे । ओंकाराध्वरदीक्षिताय । ओंकारशेखराय । ओंकारविश्वकाय । ओंकारसक्थये । ओंकारजानवे नमः । ८०

ओंकारगुल्फकाय नमः । ओंकारसारसर्वस्वाय । ओंकारसुमषट्पदाय । ओंकारसौधनिलयाय । ओंकारास्थाननर्तकाय । ओंकारहनवे । ओंकारवटवे । ओंकारज्ञेयाय । ओं नं बीजजपप्रीताय । ओं यों भं मं स्वरूपकाय । ओंपदातीतवस्त्वंशाय । ओमित्येकाक्षरात्पराय । ओंपदेन च संस्तव्याय । ओंकारध्येयाय । ओं यं बीजजपाराध्याय । ओंकारनगराधिपाय । ओं वं तें बीजसुलभाय । ओं रुं द्रां बीजतत्पराय । ओं शिवायेतिसंजप्याय नमः । १००

ओं ह्रीं श्रीं बीजसाधकाय नमः । नकाररूपाय । नादान्ताय । नारायणसमाश्रिताय । नगप्रवरमध्यस्थाय । नमस्कारप्रियाय ।

नटाय। नगेन्द्रभूषणाय । नागवाहनाय । नन्दिवाहनाय । नन्दिकेशसमाराध्याय । नन्दनाय । नन्दिवर्धनाय । नरकक्लेश-शमनाय। निमेषाय । निरुपद्रवाय । नरसिंहार्चितपदाय । नवनागनिषेविताय । नवग्रहार्चितपदाय । नवसूत्रविधानविदे नमः । १२०

नवचन्दनलिप्तांगाय नमः । नवचन्द्रकलाधराय । नवनीत-प्रियाहाराय । निपुणाय । निपुणप्रियाय । नवब्रह्मार्चितपदाय । नगेन्द्रतनयाप्रियाय । नवभस्मविदिग्धाङ्गाय । नवबन्ध-विमोचकाय। नववस्त्रपरीधानाय । नवरत्नविभूषिताय । नवसिद्धसमाराध्याय । नामरूपविवर्जिताय । नाकेशपूज्याय । नादात्मने । निर्लेपाय । निधनाधिपाय । नादप्रियाय । नदीभर्त्रे । नरनारायणार्चिताय नमः । १४०

नादबिन्दुकलातीताय नमः । नादबिन्दुकलात्मकाय । नादाकाराय । निराधाराय । निष्प्रभाय । नीतिवित्तमाय । नानाक्रतुविधानज्ञाय । नानाभीष्टवरप्रदाय । नामपारायण-प्रीताय। नानाशास्त्रविशारदाय । नारदादिसमाराध्याय । नवदुर्गार्चनप्रियाय। निखिलागमसंसेव्याय । निगमाचार-तत्पराय । निचेरवे । निष्क्रियाय । नाथाय । निरीहाय । निधिरूपकाय। नित्यक्रुद्धाय नमः । १६०

निरानन्दाय नमः । निराभासाय । निरामयाय । नित्यानपायमहिम्ने। नित्यबुद्धाय। निरंकुशाय। नित्योत्साहाय। नित्यनित्याय । नित्यानन्दस्वरूपकाय । निरवद्याय । निशुंभघ्नाय। नदीरूपाय। निरीश्वराय। निर्मलाय। निर्गुणाय। नित्याय। निरपायाय। निधिप्रदाय। निर्विकल्पाय। निर्गुणस्थाय नमः । १८०

निषङ्गिणे नमः । नीललोहिताय । निष्कलंकाय । निष्प्रपंचाय। निर्द्वन्द्वाय । निर्मलप्रभाय । निस्तुलाय । नीलचिकुराय । निस्संगाय । नित्यमंगलाय । नीपप्रियाय । नित्यपूर्णाय । नित्यमंगलविग्रहाय । नीलग्रीवाय । निरुपमाय । नित्यशुद्धाय । निरंजनाय । नैमित्तिकार्चनप्रीताय । नवर्षिगणसेविताय । नैमिशारण्यनिलयाय नमः । २००

नीलजीमूतनिस्वनाय नमः । मकाररूपाय । मन्त्रात्मने । मायातीताय । महानिधये । मकुटांगदकेयूरकंकणादिपरिष्कृताय । मणिमण्डपमध्यस्थाय । मृडानीपरिसेविताय । मधुराय । मधुरानाथाय । मीनाक्षीप्राणवल्लभाय । मनोन्मनाय । महेष्वासाय । मांधानृपतिपूजिताय । मयस्कराय । मृडाय । मृग्याय । मृगहस्ताय । मृगप्रियाय । मलयस्थाय नमः । २२०

मन्दरस्थाय नमः । मलयानिलसेविताय । महाकायाय । महावक्त्राय । महादंष्ट्राय । महाहनवे । महाकैलासनिलयाय । महाकारुण्यवारिधये । महागुणाय । महोत्साहाय । महामंगलविग्रहाय । महाजानवे । महाजंघाय । महापादाय । महानखाय । महाधाराय । महाधीराय । मंगलाय । मंगलप्रदाय । महाधृतये नमः । २४०

महामेघाय नमः । महामन्त्राय । महाशनाय । महापापप्रशमनाय । मितभाषिणे । मधुप्रदाय । महाबुद्धये । महासिद्धये । महायोगिने । महेश्वराय । महाभिषेकसन्तुष्टाय । महाकालाय । महानटाय । महाभुजाय । महावक्षसे । महाकुक्षये । महाकट्ये । महाभूतिप्रदाय । मान्याय । मुनिबृन्दनिषेविताय नमः । २६०

महावीरेन्द्रवरदाय नमः । महालावण्यशेवधये । मातृमंडल-संसेव्याय । मन्त्रतन्त्रात्मकाय । महते । माध्यन्दिनसवस्तुत्याय । मखध्वंसिने । महेश्वराय । मायाबीजजपप्रीताय । माषान्नप्रीत-मानसाय । मार्ताण्डभैरवाराध्याय । मोक्षदाय । मोहिनीप्रियाय । मार्ताण्डमण्डलस्थाय । मन्दारकुसुमप्रियाय । मिथिलापुर-संस्थानाय । मिथिलापतिपूजिताय । मिथ्याजगदधिष्ठानाय । मिहिराय । मेरुकार्मुकाय नमः । २८०

मुद्गौदनप्रियाय नमः । मित्राय । मयोभुवे । मन्त्रवित्तमाय । मूलाधारस्थिताय । मुग्धाय । मणिपूर-निवासकाय । मृगाक्षाय । महिषारूढाय । महिषासुरमर्दनाय । मृगाङ्कशेखराय । मृत्युंजयाय । मृत्युविनाशकाय । मेरुशृङ्गाग्र-निलयाय । महाशान्ताय । महीस्तुताय । मौञ्जी-बद्धाय । मघवते । महेशाय । मंगलप्रदाय नमः । ३००

मंजुमंजीरचरणाय नमः । मन्त्रिपूज्याय । मदापहाय । मंबीजजपसंतुष्टाय । मायाविने । मारमर्दनाय । भक्तकल्पतरवे । भाग्यदात्रे । भावार्थगोचराय । भक्तचैतन्यनिलयाय । भाग्यारोग्यदायकाय । भक्तप्रियाय । भक्तिगम्याय । भक्तवश्याय । भयापहाय । भक्तेष्टदात्रे । भक्तार्तिभञ्जनाय । भक्तपोषकाय । भद्रदाय । भंगुराय नमः । ३२०

भीष्माय नमः । भद्रकालीप्रियंकराय । भद्रपीठकृता-वासाय । भुवन्तये । भद्रवाहनाय । भवभीतिहराय । भर्गाय । भार्गवाय । भारतीप्रियाय । भव्याय । भवाय । भवानीशाय । भूतात्मने । भूतभावनाय । भस्मासुरेष्टदाय । भूम्ने । भर्त्रे । भूसुरवन्दिताय । भागीरथीप्रियाय । भौमाय नमः । ३४०

भगीरथसमर्चिताय नमः । भानुकोटिप्रतीकाशाय । भगनेत्रविदारणाय । भालनेत्राग्निसंदग्धमन्मथाय । भूभृदाश्रयाय। भाषापतिस्तुताय। भास्वते। भवहेतये। भयंकराय। भास्कराय । भास्करराध्याय । भक्तचित्तापहारकाय । भीमकर्मणे। भीमवर्मणे। भूतिभूषणभूषिताय। भीमघंटाकराय। भंडासुरविध्वंसनोत्सुकाय । भुंभारवप्रियाय । भ्रूणहत्यापातक नाशनाय। भूतकृते नमः। (३६०)

भूतभृद्भावाय नमः । भीषणाय । भीतिनाशनाय । भूतव्रातपरित्रात्रे । भीताभीतभयापहाय । भूताध्यक्षाय । भरद्वाजाय। भारद्वाजसमाश्रिताय। भूपतित्वप्रदाय। भीमाय। भैरवाय । भीमनिस्वनाय। भूभारोत्तरणाय। भृंगिरिटिसेव्यपदांबुजाय। भूमिदाय। भूतिदाय। भूतये। भवारण्यकुठारकाय। भूर्भुवस्स्वः पतये। भूपाय नमः। ३८०

भिंडिवालभुसुण्डिभृते नमः । भूलोकवासिने । भूलोकनिवासिजन-सेविताय । भूसुराराधनप्रीताय । भूसुरेष्टफलप्रदाय । भूसुरेड्याय । भूसुरेशाय । भूतभेतालसेविताय । भैरवाष्टकसंसेव्याय। भैरवाय। भूमिजार्चिताय। भोगभुजे। भोग्याय। भोगिभूषणभूषिताय। भोगमार्गप्रदाय। भोगिकुंडलमण्डिताय। भोगमोक्षप्रदाय। भोक्त्रे। भिक्षाचरणतत्पराय नमः। ४००

गकाररूपाय नमः। गणपाय। गुणातीताय। गुहप्रियाय। गजचर्मपरीधानाय। गंभीराय। गाधिपूजिताय। गजाननप्रियाय। गौरीवल्लभाय । गिरिशाय । गुणाय । गणाय । गृत्साय। गृत्सपतये। गरुडाग्रजपूजिताय । गदाद्यायुधसंपन्नाय । गंधमाल्यविभूषिताय । गयाप्रयागनिलयाय । गुडाकेशप्रपूजिताय। गर्वातीताय नमः। ४२०

गंडपतये नमः । गणकाय । गणगोचराय । गायत्रीमंत्र-जनकाय । गीयमानगुणाय । गुरवे । गुणज्ञेयाय । गुणध्येयाय । गोप्त्रे । गोदावरीप्रियाय । गुणाकराय । गुणातीताय । गुरुमंडलसेविताय । गुणाधाराय । गुणाध्यक्षाय । गर्विताय । गानलोलुपाय । गुणत्रयात्मने । गुह्याय । गुणत्रयविभाविताय नमः । ४४०

गुरुध्यातपदद्वन्द्वाय नमः । गिरीशाय । गुणगोचराय । गुहावासाय । गुहाध्यक्षाय । गुडान्नप्रीतमानसाय । गूढगुल्फाय । गूढतनवे । गजारूढाय । गुणोज्ज्वलाय । गूढपादप्रियाय । गूढाय । गौडपादनिषेविताय । गोत्राणतत्पराय । ग्रीष्माय । गीष्पतये । गोपतये । गोरोचनप्रियाय । गुप्ताय । गोमातृपरिसेविताय नमः । ४६०

गोविन्दवल्लभाय नमः । गङ्गाजूटाय । गोविन्दपूजिताय । गोष्ठ्याय । गृह्याय । गुहान्तस्थाय । गह्वरेष्ठाय । गदांतकृते । गोसवासक्तहृदयाय । गोप्रियाय । गोधनप्रदाय । गोहत्यादि-प्रशमनाय । गोत्रिणे । गौरीमनोहराय । गङ्गास्नानप्रियाय । गर्गाय । गङ्गास्नानफलप्रदाय । गंधप्रियाय । गीतपादाय । ग्रामण्यै नमः । ४८०

गह्नाय नमः । गिरये । गंधर्वगानसुप्रीताय । गंधर्वाप्सरसां प्रियाय । गंधर्वसेव्याय । गंधर्वाय । गंधर्वकुलभूषणाय । गंबीजजपसुप्रीताय । गायत्रीजपतत्पराय । गंभीरवाक्याय । गगनसमरूपाय । गिरिप्रियाय । गंभीरहृदयाय । गेयाय । गंभीराय । गर्वनाशनाय । गांगेयाभरणप्रीताय । गुणज्ञाय । गुणवते । गुहाय नमः । ५००

वकाररूपाय नमः। वरदाय। वागीशाय। वसुदाय। वसवे। वज्रिणे। वज्रप्रियाय। विष्णवे। वीतरागाय। विरोचनाय। वन्द्याय। वरेण्याय। विश्वात्मने। वरुणाय। वामनाय। वपुषे। वश्याय। वंशकराय। वात्याय। वास्तव्याय नमः। ५२०

वास्तुपाय नमः। विधये। वाचामगोचराय। वाग्मिने। वाचस्पत्यप्रदायकाय। वामदेवाय। वरारोहाय। विघ्नेशाय। विघ्ननाशकाय। वारिरूपाय। वायुरूपाय। वैरिवीर्यविदारणाय। विक्लबाय। विह्वलाय। व्यासाय। व्याससूत्रार्थगोचराय। विप्रप्रियाय। विप्ररूपाय। विप्रक्षिप्र प्रसादकाय। विप्राराधनसन्तुष्टाय नमः। ५४०

विप्रेष्टफलदायकाय नमः। विभाकरस्तुताय। वीराय। विनायकनमस्कृताय। विभवे। विभ्राजिततनवे। विरूपाक्षाय। विनायकाय। विरागिजनसंस्तुत्याय। विरागिणे। विगतस्पृहाय। विरिंचपूज्याय। विक्रान्ताय। वदनत्रयसंयुताय। विशृंखलाय। विविक्तस्थाय। विदुषे। वक्त्रचतुष्टयाय। विश्वप्रियाय। विश्वकर्त्रे नमः। ५६०

वषट्कारप्रियाय। वराय। विश्वमूर्तये। विश्वकीर्तये। विश्वव्यापिने। वियत्प्रभवे। विश्वस्रष्ट्रे। विश्वगोप्त्रे। विश्वभोक्त्रे। विशेषविदे। विष्णुप्रियाय। वियद्रूपाय। विराड्रूपाय। विभावसवे। वीरगोष्ठीप्रियाय। वैद्याय। वदनैकसमन्विताय। वीरभद्राय। वीरकर्त्रे। वीर्यवते नमः। ५८०

वारणार्तिहृते नमः। वृषांकाय। वृषभारूढाय। वृक्षेशाय। विंध्यमर्दनाय। वेदान्तवेद्याय। वेदात्मने। वदनद्वयशोभिताय। वज्रदंष्ट्राय। वज्रनखाय। वन्दारुजनवत्सलाय। वंद्यमानपद-द्वन्द्वाय। वाक्यज्ञाय। वक्त्रपंचकाय। वंबीजजपसंतुष्टाय।

वाक्प्रियाय । वामलोचनाय । व्योमकेशाय । विधानज्ञाय । विषभक्षणतत्पराय नमः । ६००

तकाररूपाय नमः । तद्रूपाय । तत्पदार्थस्वरूपकाय । तटिल्लतासमरुचये । तत्वज्ञानप्रबोधकाय । तत्वमस्यादि-वाक्यार्थाय । तपोदानफलप्रदाय । तत्वज्ञाय । तत्वनिलयाय । तत्ववाच्याय । तपोनिधये । तत्वासनाय । तत्सवितुर्जप-संतुष्टमानसाय । तन्त्रयन्त्रात्मकाय । तन्त्रिणे । तन्त्रज्ञाय । ताण्डवप्रियाय । तन्त्रीलयविधानज्ञाय । तन्त्रमार्गप्रदर्शकाय । तपस्याध्याननिरताय नमः । ६२०

तपस्विने नमः । तापसप्रियाय । तपोलोकजनस्तुत्याय । तपस्विजनसेविताय । तरुणाय । तारणाय । ताराय । ताराधिपनिभाननाय । तरुणादित्यसंकाशाय । तप्तकांचन-भूषणाय । तलादिभुवनान्तस्थाय । तत्वमर्थस्वरूपकाय । ताम्रवक्त्राय । ताम्रचक्षुषे । ताम्रजिह्वाय । तनूदराय । तारकासुरविध्वंसिने । तारकाय । तारलोचनाय । तारानाथकला-मौलये नमः । ६४०

तारानाथसमद्युतये नमः । तार्क्ष्यकाय । तार्क्ष्यविनुताय । त्वष्ट्रे । त्रैलोक्यसुन्दराय । तांबूलपूरितमुखाय । तक्ष्णे । ताम्राधराय । तनवे । तिलाक्षतप्रियाय । त्रिस्थाय । तत्वसाक्षिणे । तमोगुणाय । तुरंगवाहनारूढाय । तुलादानफलप्रदाय । तुलसी-बिल्वनिर्गुण्डी जंबीरामलकप्रियाय । तुलामाघस्नानतुष्टाय । तुष्टातुष्टप्रसादनाय । तुहिनाचलसंकाशाय । तमालकुसुमाकृतये नमः । ६६०

तुंगभद्रातीरवासिने नमः । तुष्टभक्तेष्टदायकाय । तोमराद्या-युधधराय । तुषाराद्रिसुताप्रियाय । तोषिताखिलदैत्यौघाय ।

त्रिकालज्ञमुनिप्रियाय । त्रयीमयाय । त्रयीवेद्याय । त्रयीवंद्याय । त्रयीतनवे । त्रय्यन्तनिलयाय । तत्वनिधये । ताम्राय । तमोपहाय । त्रिकालपूजनप्रीताय । तिलान्नप्रीतमानसाय । त्रिधाम्ने । तीक्ष्णपरशवे । तीक्ष्णेषवे । तेजसां निधये नमः । ६५०

त्रिलोकरक्षकाय नमः । त्रेतायजनप्रीतमानसाय । त्रिलोकवासिने । त्रिगुणाय । द्विनेत्राय । त्रिदशाधिपाय । त्रिवर्गदाय । त्रिकालज्ञाय । तृप्तिदाय । तुम्बुरुस्तुताय नमः । त्रिविक्रमाय । त्रिलोकात्मने । त्रिमूर्तये । त्रिपुरान्तकाय । त्रिशूलभीषणाय । तीव्राय । तीर्थ्याय । तीक्ष्णवरप्रदाय । रघुस्तुतपदद्वन्द्वाय । रव्यादिग्रहसंस्तुताय नमः । ७००

रजताचलशृंगाग्रनिलयाय नमः । रजतप्रभाय । रतप्रियाय । रहःपूज्याय । रमणीयगुणाकराय । रथकाराय । रथपतये । रथाय । रत्नाकरप्रियाय । रथोत्सवप्रियाय । रस्याय । रजोगुणविनाशकृते । रत्नडोलोत्सवप्रीताय । रणत्किंकिणिमेखलाय । रत्नदाय । राजकाय । रागिणे । रङ्गविद्याविशारदाय । रत्नपूजनसंतुष्टाय । रत्नसानुशरासनाय नमः । ७२०

रत्नमण्डपमध्यस्थाय नमः । रत्नग्रैवेयकुण्डलाय । रत्नाकरस्तुताय । रत्नपीठस्थाय । रणपण्डिताय । रत्नाभिषेकसंतुष्टाय । रत्नकाञ्चनभूषणाय । रत्नांगुलीयवलयाय । राजत्करसरोरुहाय । रमापतिस्तुताय । रम्याय । राजमण्डलमध्यगाय । रमावाणीसमाराध्याय । राज्यदाय । रत्नभूषणाय । रम्भादिसुन्दरीसेव्याय । रक्षोघ्ने । राकिणीप्रियाय । रविचन्द्राग्निनयनाय । रत्नमाल्याम्बरप्रियाय नमः । ७४०

रविमण्डलमध्यस्थाय नमः । रविकोटिसमप्रभाय । राकेन्दुवदनाय । रात्रिञ्चरप्राणापहारकाय । राजराजप्रियाय ।

रौद्राय। रुरुहस्ताय। रुरुप्रियाय। राजराजेश्वराय। राजपूजिताय। राज्यवर्धनाय । रामार्चितपदद्वन्द्वाय । रावणार्चितविग्रहाय । राजवश्यकराय । राज्ञे । राशीकृतजगत्त्रयाय । राजीवचरणाय । राजशेखराय। रविलोचनाय। राजीवपुष्पसंकाशाय नमः । ७६०

राजीवाक्षाय । रणोत्सुकाय । रात्रिञ्चरजनाध्यक्षाय । रात्रिञ्चरनिषेविताय । राधामाधवसंसेव्याय । राधामाधव-वल्लभाय। रुक्माङ्गदस्तुताय । रुद्राय । रजस्सत्वतमोमयाय । रुद्रमन्त्रजपप्रीताय। रुद्रमण्डलसेविताय । रुद्राक्षजपसुप्रीताय । रुद्रलोकप्रदायकाय। रुद्राक्षमालाभरणाय। रुद्राणीप्राण-नायकाय। रुद्राणीपूजनप्रीताय । रुद्राक्षमकुटोज्ज्वलाय। रुरुचर्मपरीधानाय। रुक्माङ्गदपरिष्कृताय। रेफस्वरूपाय नमः । ७८०

रुद्रात्मने नमः । रुद्राध्यायजपप्रियाय । रेणुकावरदाय । रामाय। रूपहीनाय । रविस्तुताय । रेवानदीतीरवासिने । रोहिणीपतिवल्लभाय । रोगेशाय । रोगशमनाय । रैदाय । रक्तबलिप्रियाय । रंबीजजपसन्तुष्टाय । राजीवकुसुमप्रियाय । रंभाफलप्रियाय। रौद्रदृशे। रक्षाकराय। रूपवते। दकाररूपाय। देवेशाय नमः । ८००

दरस्मेरमुखांबुजाय नमः । दरान्दोलितदीर्घाक्षाय । द्रोणपुष्पार्चनप्रियाय । दक्षाराध्याय । दक्षकन्यापतये । दक्षवरप्रदाय। दक्षिणादक्षिणाराध्याय । दक्षिणामूर्तिरूपभृते । दाडिमीबीजरदनाय। दाडिमीकुसुमप्रियाय । दान्ताय। दक्षमखध्वंसिने। दण्डाय। दमयित्रे। दमाय। दारिद्र्यध्वंसकाय। दात्रे । दयालवे । दानवान्तकाय । दारुकारण्यनिलयाय नमः । ८२०

दशदिक्पालपूजिताय नमः । दाक्षायणीसमाराध्याय । दनुजारये । दयानिधये । दिव्यायुधधराय । दिव्यमाल्याम्बर-विभूषणाय। दिगम्बराय । दानरूपाय । दुर्वासमुनिपूजिताय । दिव्यान्तरिक्षगमनाय। दुराधर्षाय। दयात्मकाय। दुग्धाभिषेचन-प्रीताय । दुःखदोषविवर्जिताय । दुराचारप्रशमनाय। दुग्धान्नप्रीतमानसाय। दुर्लभाय। दुर्गमाय। दुर्गाय। दुःखहन्त्रे नमः। ८४०

दुरार्तिघ्ने नमः । दुर्वाससे । दुष्टभयदाय । दुर्जयाय । दुरतिक्रमाय। दुष्टहन्त्रे । देवसैन्यपतये । दम्भविवर्जिताय । दुःस्वप्ननाशनाय । दुष्टदूराय । दुर्वारविक्रमाय । दूर्वायुग्म-समाराध्याय। दुत्तूरकुसुमप्रियाय । देवगङ्गाजटाजूटाय । देवताप्राणवल्लभाय। देवतार्तिप्रशमनाय। दीनदैन्यविमोचनाय। देवदेवाय। दैत्यगुरवे। दण्डनाथप्रपूजिताय नमः। ८६०

देवभोग्याय नमः। देवयोग्याय। दीप्तमूर्तये। दिवस्पतये। देवर्षिवर्याय। देवर्षिवन्दिताय। देवभोगदाय। देवादिदेवाय। देवेज्याय । दैत्यदर्पनिषूदनाय । देवासुरगणाध्यक्षाय । देवासुरगणाग्रण्ये । देवासुरतपस्तुष्टाय । देवासुरवरप्रदाय । देवासुरेश्वराराध्याय । देवान्तकवरप्रदाय । देवासुरेश्वराय । देवाय। देवासुरमहेश्वराय। देवेन्द्ररक्षकाय नमः। ८८०

दीर्घाय नमः । देववृन्दनिषेविताय । देशकालपरिज्ञात्रे । देशोपद्रवनाशकाय। दोषाकरकलामौलये। दुर्वारभुजविक्रमाय। दण्डकारण्यनिलयाय। दण्डिने। दण्डप्रसादकाय। दण्डनीतये नमः। दुरावासाय। द्योताय। दुर्मतिनाशनाय। द्वंद्वातीताय। दीर्घदर्शिने । दानाध्यक्षाय । दयापराय । यकाररूपाय । यन्त्रात्मने। यन्त्राराधनतत्पराय नमः। ९००

यजमानाद्यष्टमूर्तये नमः । यामिनीचरदर्पघ्ने । यजुर्वेद-प्रियाय। युद्धमर्मज्ञाय । युद्धकौशलाय । यत्नसाध्याय । यष्टिधराय। यजमानप्रियाय। यजुषे। यथार्थरूपाय। युगकृते। युगरूपाय । युगान्तकृते । यथोक्तफलदाय । योषापूजनप्रीत-मानसाय । यदृच्छालाभसन्तुष्टाय । याचकार्तिनिषूदनाय । यन्त्रासनाय। यन्त्रमयाय। यन्त्रमन्त्रस्वरूपकाय नमः। ९२०

यमरूपाय नमः । यामरूपाय । यमबाधानिवर्तकाय । यमादियोगनिरताय। योगमार्गप्रदर्शकाय। यवाक्षतार्चनरताय। यावच्चिह्नितपादुकाय । यक्षराजसखाय । यज्ञाय। यक्षेशाय । यक्षपूजिताय । यक्षराक्षससंसेव्याय । यातुधानवरप्रदाय । यज्ञगुह्याय। यज्ञकर्त्रे । यजमानस्वरूपकाय। यज्ञान्तकृते । यज्ञपूज्याय। यज्ञभुजे। यज्ञवाहनाय नमः। ९४०

यागप्रियाय नमः। यानसेव्याय। यूने। यौवनगर्विताय। यातायातादिरहिताय । यतिधर्मपरायणाय । यात्राप्रियाय । यमिने। याम्यदण्डपाशनिकृन्तनाय। यात्राफलप्रदाय। युक्ताय। यशस्विने । यमुनाप्रियाय । यादःपतये । यज्ञपतये । यतये । यज्ञपरायणाय। यादवानां प्रियाय। योद्ध्रे। योधाराधनतत्पराय नमः। ९६०

यामपूजनसन्तुष्टाय नमः । योषित्संगविवर्जिताय । यामिनीपतिसंसेव्याय । योगिनीगणसेविताय । यायजूकाय । युगावर्ताय। याच्ञारूपाय। यथेष्टदाय। यावौदनप्रीतचित्ताय। योनिष्ठाय । यामिनीप्रियाय । याज्ञवल्क्यप्रियाय । यज्वने । यज्ञेशाय। यज्ञसाधनाय । योगमायामयाय । योगमाया-संवृतविग्रहाय । योगसिद्धाय । योगिसेव्याय । योगानन्द-स्वरूपकाय नमः। ९८०

योगक्षेमकराय नमः। योगक्षेमदात्रे। यशस्कराय। योगिने। योगासनाराध्याय। योगाङ्गाय। योगसंग्रहाय। योगीश्वरेश्वराय। योग्याय। योगदात्रे। युगन्धराय। योषित्प्रियाय। यदुपतये। योषार्धीकृतविग्रहाय। यंबीजजपसन्तुष्टाय। यन्त्रेशाय। यन्त्र-साधनाय। यन्त्रमध्यस्थिताय। यन्त्रिणे। योगीश्वरसमाश्रिताय नमः। १०००

## शिवषडक्षरस्तोत्रम्

ओङ्कारं बिन्दुसंयुक्तं नित्यं ध्यायन्ति योगिनः।
कामदं मोक्षदं चैव ओङ्काराय नमो नमः॥ १

नमन्ति ऋषयो देवाः नमन्त्यप्सरसां गणाः।
नरा नमन्ति देवेशं नकाराय नमो नमः॥ २

महादेवं महात्मानं महाध्यानपरायणम्।
महापापहरं देवं मकाराय नमो नमः॥ ३

शिवं शान्तं जगन्नाथं लोकानुग्रहकारणम्।
शिवमेकपदं नित्यं शिकाराय नमो नमः॥ ४

वाहनं वृषभो यस्य वासुकिः कण्ठभूषणम्।
वामे शक्तिधरं देवं वकाराय नमो नमः॥ ५

यत्र यत्र स्थितो देवः सर्वव्यापी महेश्वरः।
यो गुरुः सर्वदेवानां यकाराय नमो नमः॥ ६

षडक्षरमिदं स्तोत्रं यः पठेच्छिवसन्निधौ।
शिवलोकमवाप्नोति शिवेन सह मोदते॥ ७

(रुद्रयामलतः)

# श्रीरुद्रत्रिशती

(आगमसारतः - ३२८ नामानि)

ध्यानम्—

पादे विष्णुविलोचनं, कटितटे श्रीनारसिंहाजिनं
हस्ते शूलकपालढक्कडमरुं कण्ठे तु हालाहलम्।
शूलाग्रे शवकेशवं हरिशिरोमालां दधन्मौलिना
सर्वं विष्णुमयं सदाशिववपुर्वक्त्रं पुराणोदितम्॥

शिवाय नमः । तुरीयचैतन्याय । कूटस्थचैतन्याय । प्रणवार्थाय। सर्वश्रुत्यर्थाय। तत्पदलक्ष्यार्थाय। अहंपदलक्ष्यार्थाय। अशरीराय । अतीन्द्रियाय । अनन्तकारणाय । शुद्धचैतन्याय । आत्मने। सच्चिदानन्दाय। जगत्सृष्टिस्थितिलयकारिणे। अतर्क्य-महिम्ने । जगदधिष्ठानाय । परिच्छेदरहिताय । भेदत्रयरहिताय । श्रुतिप्रणवगम्याय। अन्तरिन्द्रियगम्याय नमः (२०)

निष्कलाय नमः । सदाशिवात्मने । निष्कलसकलाय । निर्विशेषाय। वियतीन्द्रचापवत्तेजोमयवपुषे। अव्यक्ताय। विज्ञा-नाद्यनुग्रहनिमित्तसदाशिवात्मनानारूपवते । सदाशिवात्मने। लिङ्गत्रय रहिताय। पुरुषाकृतये। एकस्मै अपि शिवशक्त्युभयस्मै। सहस्रशीर्षाय । पञ्चशीर्षाय । विश्वतोमुखाय । पञ्चमुखाय । विश्वतश्चक्षुषे । पञ्चदशवपुषे । विश्वतोहस्ताय । दशहस्ताय । विश्वतः पादाय नमः। (४०)

द्विपादाय नमः । जातिवर्णरहिताय । देवब्राह्मणाय । अवर्ण्यगुणाय । देहधावल्य शुद्धसत्वात्मक प्रकटनाय । अवस्थारहिताय । सन्तत जागृतये । स्वयं विश्वाभासकाय ।

चन्द्रकलाचूडामणये । उपमारहिताय । देहचरणकान्त्या सत्वाधिकाय । निर्गुणाय । गुणत्रयात्ममाया शबलत्वात् महत्त्वप्रकटनाय। श्रुतिचूडामणये। चन्द्रचूडामणये। गङ्गाभासक-मौलये । स्वगतभेदरहिताय । सन्ततकान्तमन्दस्मितसुन्दर-वदनारविन्दाय। वृत्तिरहिताय। कैलासवासिने (६०)

स्वयं सर्वाधाराय। अन्तर्ध्यानिरोहणव्यसनाय। अक्लेद्याय। कल्पकादिदिव्यरूपपरिपालक कुसुमबृन्दनिष्यन्दमानम-करन्दसिन्धुसन्दोहसन्तत सन्त्यज्यमान सकलाङ्गाय । सकलाङ्गाय। विजातीय रहिताय । मुक्तातपत्रनित्य-निरर्गलमौक्तिक धारासन्तत निरन्तर सर्वाङ्गाय । अक्रियाय । सर्वप्रपञ्च सृष्ट्यादि पञ्चकृत्यकर्त्रे। अनङ्गाय। महेश्वरजनकाय। निष्पन्दाय। स्वयं सर्वाधाराय। मूर्तित्वरहिताय। पञ्चब्रह्ममूर्तये। शरीरत्रयरहिताय । सर्वज्ञाय । महेश्वरात्मने । ईश्वरचैतन्याय । तत्पदोपहितार्थाय नमः। (८०)

अहंपदोपहितार्थाय नमः । सकलाय । रुद्रविष्णुब्रह्मादि-जनकाय। सदाशिवाय।

पञ्चब्रह्मात्मकसर्वाङ्गाय। ईशानात्मकमूर्ध्ने। तत्पुरुषात्मक-वदनाय । अघोरात्मकहृदयाय । वामदेवात्मक गुह्याय । सद्योजातात्मकपादाय।

पञ्चब्रह्मात्मकवदनाय । ईशानात्मकोर्ध्ववदनाय । तत्पुरुषात्मकपूर्ववदनाय । अघोरात्मकदक्षिणवदनाय । वाम-देवात्मकोत्तरवदनाय। सद्योजातात्मकपश्चिमवदनाय।

पञ्चसादाख्यात्मक पञ्चवदनाय। शिवसादाख्य तत्त्वात्मक ऊर्ध्व वदनाय । कर्तृसादाख्यात्मक दक्षिणवदनाय । अमूर्ति

सादाख्यात्मकोत्तर(पश्चिम)वदनाय । (१००) मूर्ति-सादाख्यात्मक पश्चिम(उत्तर)वदनाय । कर्मसादाख्यात्मक पूर्ववदनाय ।

परापरशिवतत्वात्मने । परामूर्तितत्त्वात्मने । सूक्ष्मात्सूक्ष्म-मूर्तितत्वात्मने । सूक्ष्ममूर्तितत्वात्मककर्मात्मने । देहरहित-निष्कलात्मने । देहसंयुतसकलात्मने । देहदेहिसम्बन्धभावात्मने । शुद्धविद्यादेहमहासदाशिवाय ।

ईशानात्मकोर्ध्ववदनाय । ईश्वरात्मकदक्षिणवदनाय । ब्रह्मात्मकोत्तरवदनाय । विष्ण्वात्मकपूर्ववदनाय । सदा-शिवात्मकपश्चिमवदनाय ।

पञ्चकलात्मकसर्वाङ्गाय । शान्त्यतीतकलात्मकमूर्धादि-काय । शान्तिकलात्मकभ्रुवादिकाय । विद्याकलात्मकताल्वादि-काय । प्रतिष्ठाकलात्मक कण्ठादिकाय (१२०) निवृत्ति-कलात्मकहृदयादिकाय ।

पञ्चमूर्त्यात्मने । ब्रह्मात्मकपादाय । विष्ण्वात्मकगुह्याय । रुद्रात्मकहृदयाय । ईश्वरात्मकवदनाय । सदाशिवात्मकमूर्ध्ने ।

पञ्चमूर्त्यात्मकपञ्चवदनाय । सदाशिवमूर्त्यात्मकोर्ध्व-वदनाय । ईश्वरात्मकपूर्ववदनाय । रुद्रात्मकदक्षिणवदनाय । विष्ण्वात्मकोत्तरवदनाय । ब्रह्मात्मकपश्चिमवदनाय ।

सर्ववेदमन्त्रजनकपञ्चवदनाय । प्रणवादिमन्त्रजनकोर्ध्व-वदनाय । अथर्वणवेदजनक दक्षिणवदनाय । यजुर्वेदजनकोत्तर-वदनाय । ऋग्वेदजनक पश्चिमवदनाय । सामवेदजनक-पूर्ववदनाय ।

अष्टाविंशत्यागमप्रतिपादक पञ्चवदनाय नमः। १४०)

प्रोद्गीताद्यागमाष्टकप्रतिपादकोर्ध्ववदनाय । वीराद्यागमपञ्चक प्रतिपादकदक्षिणवदनाय । दीप्त्याद्यागमपञ्चकप्रतिपादकोत्तरवदनाय । कामिकाद्यागमपञ्चकप्रतिपादकपूर्ववदनाय। रौरवाद्यागमपञ्चकप्रतिपादकपश्चिमवदनाय।

पञ्चविंशतिमूर्तिप्रतिपादकपञ्चवदनाय । सुखासीनादिपञ्चकमूर्तिप्रतिपादकोर्ध्व वदनाय । लिङ्गोद्भवादि पञ्चकमूर्ति प्रतिपादक पूर्ववदनाय । कालाग्न्यादिसप्तकमूर्ति प्रतिपादकदक्षिणवदनाय । अर्धनारीश्वरादि चतुर्मूर्तिप्रतिपादकपश्चिमवदनाय।

पराशरवसिष्ठ - मार्कण्डेयापस्तम्बबोधायनादि वर्गाधीशागस्त्यादि पञ्चकदीक्षागुरुभूत पञ्चवदनाय। अगस्त्यदीक्षागुरु भूतोर्ध्ववदनाय । गौतमदीक्षागुरुभूतपूर्ववदनाय। भरद्वाजदीक्षा गुरुभूतदक्षिणवदनाय । काश्यपदीक्षागुरुभूतोत्तरवदनाय । कौशिकदीक्षागुरुभूतपश्चिमवदनाय। पराद्बालाकिचिदीशानोर्ध्ववदनाय । पीततरुण-पूर्ववदनाय । दंष्ट्राभ्रुकुटीधरश्यामदक्षिणवदनाय नमः (१६०) युवतीविलासतरुणोत्तरवदनाय नमः । सम्राडाकृतिधवल-पश्चिमवदनाय।

षडर्थात्मने । मन्त्रनामकप्रणवात्मने । यन्त्रनामकलिङ्गात्मने। देवतानामकपञ्चब्रह्मात्मने। प्रापकनामकव्यक्तादिपृथिव्यात्मने। गुरुनामकज्ञापकात्मने। शिष्यनामक ज्ञात्रात्मने।

षड्विधाभिधात्मने । पतिनामकव्यापारत्रयलक्षितशक्तिमदात्मने । कुण्डलीनामकलयादिव्यापार शुद्धजन्यात्मने । मायानामक भोक्तृत्वसाधनवपुरिन्द्रियादिजनकजन्तु सृष्ट्यात्मने।

पशुनामकसकलादिवन्ध्यत्रयात्मने। पाशनामकसकलादि ध्वान्तभ्रमात्मने। कारकनामकभुक्ति-मुक्तिफलप्रददीक्षाक्रियात्मने।

षडध्वात्मने। कलाध्वसर्वाङ्गाय। भुवनाध्व रोम्णे। वर्णाध्वत्वचिने नमः (१८०) मन्त्राध्वरुधिराय नमः। पदाध्वसिरामांसादिकाय। तत्वाध्वास्थिकाय।

षडङ्गात्मने। सर्वज्ञशक्तिहृदयात्मने। नित्यतृप्तिशक्तिशिरसे। अनादिबोधशक्तिशिखायै। स्वतन्त्रशक्तिकवचाय। अलुप्तशक्तिनेत्रत्रयाय। अनन्तशक्त्यस्त्राय।

षडक्षरात्मने नमः। प्रणवाक्षरहृदयाय। न अक्षरवदनाय। म अक्षरदक्षिणबाहवे। शि अक्षरवामबाहवे। वा अक्षर दक्षिणपादाय। य अक्षरवामपादाय नमः।

ईशानमन्त्रादिकमूर्धादिकाय नमः। तत्पुरुषात्मकललाटाक्षाय। अघोरमन्त्रात्मककण्ठाय। (२००) वामदेव मन्त्रात्मकनाभ्यादिकाय। सद्योजातमन्त्रात्मक मूलाधारादिकाय। प्रणवाय। वेष्टकप्रणवान्तोदितनादस्याधः पीठमध्योपक्रमादि विलसदकारादि नादान्तात्मने।

कामिकागमपादाय। योगजागम गुल्फाय। चिन्त्यागमपादाङ्गुलये। कारणागमजङ्घाय। अजितागमजानवे। दीप्तागमोरवे। सूक्ष्मागमगुह्यबीजाय। सहस्रागमकट्यै। अंशुमदागमपृष्ठाय। सुप्रभेदागमनाभये। विजयागमकुक्षये। नित्यागमहृदयाय। स्वयंभ्वागममस्तकाय। अनलागमलोचनाय। वीरागमकर्णाय। रौरवागमश्रोत्राय (२२०) मकुटागममकुटाङ्गप्रत्यङ्गाय। विमलागमबाहवे। चन्द्रज्ञानागममानसिकाय। बिम्बागमवदनाय। प्रोद्गीतागमजिह्वाय। ललितागमकपोलाय।

सिद्धान्तागमललाटाय। सन्तानागम-रत्नकुण्डलाय। शर्वोत्तमागमोपवीताय। परमेश्वरागम हाराय। किरणागमरत्नभूषणाय। वातूलागमवाग्मिने। कालोत्तरागमनासाय। पौष्टिकागमरदनाय। वातुलागमवस्त्राय।

शिवधर्मानुलेपनाय। शिवस्थलपुष्पमाल्याय। शिवसिद्धान्तनिवेदनाय। शिवतन्त्राकारशरीराय। दक्षिणाभिमुखमुखाय नमः। (२४०)

ज्ञानचन्द्रकलाशेखराय। अमृतकायगङ्गाधराय। नित्यज्ञानाय। नित्यवैराग्याय। नित्यधृतधैर्याय। नित्यक्षमाय। नित्यसत्वस्थाय। नित्यात्मबोधाय। नित्यादिषष्ठाश्रयाय। पञ्चविंशतिमूर्त्यात्मने।

चन्द्रशेखराय। उमामहेश्वराय। वृषभवाहनाय। नटेश्वराय। कल्याणसुन्दराय। भिक्षाटनवेषाय। कामारये। कालारये। जलन्धरारये। गजासुरारये नमः। (२६०) त्रिपुरारये। वीरभद्राय। शरभेश्वराय। अघोरेश्वराय। अर्धनारीश्वराय। किरातकेश्वराय। कङ्कालवेषधराय। चण्डेश्वरवरदाय। विषहारिणे। चक्रदानमूर्तये। विघ्नेश्वरप्रसादकाय। सोमास्कन्दाय। एकपादाय। सुखासीनाय। श्रीदक्षिणामूर्तये।

स्थाणवे। पृथिव्यात्मने। अबात्मने। तेजसात्मने। वाय्वात्मने। (२८०) आकाशात्मने। रव्यात्मने। चन्द्रात्मने। यजमानात्मने। आत्मने।

वर्णभूषाय। अं मकुटाय। कं कपर्दाय। खं चन्द्रकलाय। गं गङ्गाधराय। घं घटिकाय। ङं ललाटभूषणाय। चं दक्षिणकर्णकुण्डलाय। छं वामकर्णकुण्डलाय। जं दक्षिणकर्णभूषणाय। झं

वामकर्णभूषणाय । ञं दक्षिणकर्णतटस्थाय । टं वामकर्णतटस्थाय । ठं ग्रैवेयकाय । डं उरगभूषणाय । (३००) ढं हाराय । णं सुमालायै । तं यज्ञोपवीताय । थं दक्षिण बाहुभूषणाय । दं वामबहुभूषणाय । धं दक्षिण बाहुकटकाय । नं वामबाहुकटकाय । पं दक्षिणबाहुकराङ्गुलीयकाय । फं वामबाहुकराङ्गुलीयकाय । बं परशवे । भं मृगाय । मं वरदाय । यं अभयाय । रं ओड्याणाय । लं कटिसूत्राय । वं चर्माम्बराय । शं दक्षिणपादनूपुराय । षं वामपादनूपुराय । सं दक्षिणपादकटकाय । हं वामपादकटकाय । (३२०) ळं दक्षिणपादाङ्गुलीयकाय । क्षं वामपादाङ्गुलीयकाय ।

विष्णुकन्धरपादाय । मत्स्याक्षि हृदयाय । क्रोडशृङ्गधराय । नरसिंहचर्माम्बराय । त्रिविक्रमास्थिगणाय । हंसमयसर्वाङ्गाय । (३२८) श्री परमकल्याणीसमेत श्रीपरमशिवचरणारविन्दाभ्यां नमः ।

कोपेन स्फुरिताननं कुटिलताभ्रूभङ्ग मुद्रादिभिः
भीमैः संस्कृतमम्बजाक्षमतुलं कारुण्यपाथोनिधिम् ।
दोर्दण्डैर्विधृतं कपालमनघं शूलं वराभीतिते
पादाघात विदारितान्तकतनुं मृत्युञ्जयं भावये ॥

॥ श्रीः ॥

# ॥ श्रीमेधादक्षिणामूर्तिसहस्रनामस्तोत्रम् ॥

अस्य श्री दक्षिणामूर्तिसहस्रनामस्तोत्रस्य ब्रह्मा ऋषिः । गायत्री छन्दः । दक्षिणामूर्तिर्देवता । ओं बीजम् । स्वाहा शक्तिः । नमः कीलकम् । मेधा दक्षिणामूर्तिप्रसादसिध्यर्थे जपे विनियोगः । ह्रामित्यादिना अङ्गन्यासः । ध्यानम्—

सिद्धितोयनिधेर्मध्ये रत्नग्रैवे मनोरमे ।
कदम्बवनिकामध्ये श्रीमद्वटतरोरधः ॥ १

आसीनमाद्यं पुरुषमादिमध्यान्तवर्जितम् ।
शुद्धस्फटिकगोक्षीरशरत्पूर्णेन्दुसन्निभम् ॥ २

दक्षिणे चाक्षमालां च वह्निं वै वामहस्तके ।
जटामण्डलसंलग्नशीतांशुकरमण्डितम् ॥ ३

नागहारधरं चारुकङ्कणैः कटिसूत्रकैः ।
विराजमानवृषभं व्याघ्रचर्माम्बरावृतम् ॥ ४

चिन्तामणिमहाबृन्दैः कल्पकैः कामधेनुभिः ।
चतुःषष्टिकलाविद्यामूर्तिभिः श्रुतिमस्तकैः ॥ ५

रत्नसिंहासने साधुद्वीपिचर्मसमायुते ।
तत्राष्टदलपद्मस्य कर्णिकायां सुशोभने ॥ ६

वीरासने समासीनं लम्बदक्षपदाम्बुजम् ।
ज्ञानमुद्रां पुस्तकं च वराभीतिधरं हरम् ॥ ७

पादमूलसमाक्रान्तमहापस्मारवैभवम् ।
रुद्राक्षमालाभरणभूषितं भूतिभासुरम् ॥ ८

गजचर्मोत्तरीयं च मन्दस्मितमुखाम्बुजम्।
सिद्धबृन्दैर्योगिबृन्दैर्मुनिबृन्दैर्निषेवितम्।। ९

आराध्यमानवृषभमग्नीन्दुरविलोचनम्।
पूरयन्तं कृपादृष्ट्या पुमर्थानाश्रिते जने।। १०

एवं विभावयेदीशं सर्वविद्याकलानिधिम्। ११

लमित्यादिना पञ्चोपचाराः

देवदेवो महादेवो देवानामपि देशिकः।
दक्षिणामूर्तिरीशानो दयापूरितदिङ्मुखः।। १

कैलासशिखरोत्तुङ्ग कमनीयनिजाकृतिः।
वटद्रुमतटीदिव्य कनकासनसंस्थितः।। २

कटीतटपटीभूत करिचर्मोज्ज्वलाकृतिः।
पाटीरापाण्डुराकार परिपूर्णसुधाधिपः।। ३

जटाकोटीरघटित सुधाकरसुधाप्लुतः।
पश्यल्ललाटसुभग सुन्दरभ्रूविलासवान्।। ४

कटाक्षसरणीनिर्यत्करुणापूर्णलोचनः।
कर्णालोलतटिद्वर्णकुण्डलोज्ज्वलगण्डभूः।। ५

तिलप्रसूनसंकाश नासिकापुटभासुरः।
मन्दस्मितस्फुरन्मुग्ध महनीयमुखाम्बुजः।। ६

कुन्दकुड्मलसंस्पर्धि दन्तपङ्क्तिविराजितः।
सिन्दूरारुणसुस्निग्ध कोमलाधरपल्लवः।। ७

शङ्खाटोपगलद्दिव्य गळवैभवमञ्जुलः।
करकन्दलितज्ञान मुद्रारुद्राक्षमालिकः।। ८

अन्यहस्ततलन्यस्त वीणापुस्तोल्लसद्वपुः ।
विशालरुचिरोरस्क वलिमत्पल्लवोदरः ॥ ९

बृहत्कटिनितम्बाढ्यः पीवरोरुद्वयान्वितः ।
जङ्घाविजिततूणीरस्तुङ्गगुल्फयुगोज्ज्वलः ॥ १०

मृदुपाटलपादाब्जश्चन्द्राभनखदीधितिः ।
अपसव्योरुविन्यस्त सव्यपादसरोरुहः ॥ ११

घोरापस्मारनिक्षिप्त धीरदक्षपदाम्बुजः ।
सनकादिमुनिध्येयः सर्वाभरणभूषितः ॥ १२

दिव्यचन्दनलिप्ताङ्गश्चारुहासपरिष्कृतः ।
कर्पूरधवलाकारः कन्दर्पशतसुन्दरः ॥ १३

कात्यायनीप्रेमनिधिः करुणारसवारिधिः ।
कामितार्थप्रदः श्रीमत्कमलावल्लभप्रियः ॥ १४

कटाक्षितात्मविज्ञानः कैवल्यानन्दकन्दलः ।
मन्दहाससमानेन्दुः छिन्नाज्ञानतमस्ततिः ॥ १५

संसारानलसंतप्त जनतामृतसागरः ।
गम्भीरहृदयाम्भोज नभोमणिनिभाकृतिः ॥ १६

निशाकरकराकार वशीकृतजगत्त्रयः ।
तापसाराध्यपादाब्जस्तरुणानन्दविग्रहः ॥ १७

भूतिभूषितसर्वाङ्गो भूताधिपतिरीश्वरः ।
वदनेन्दुस्मितज्योत्स्ना निलीनत्रिपुराकृतिः ॥ १८

तापत्रयतमोभानुः पापारण्यदवानलः ।
संसारसागरोद्धर्ता हंसाग्र्योपास्यविग्रहः ॥ १९

ललाटहुतभुग्दग्ध मनोभवशुभाकृतिः ।
तुच्छीकृतजगज्जालस्तुषारकरशीतलः ॥ २०

अस्तङ्गतसमस्तेच्छो निस्तुलानन्दमन्थरः ।
धीरोदात्तगुणाधार उदारवरवैभवः ॥ २१

अपारकरुणामूर्तिं रज्ञानध्वान्तभास्करः ।
भक्तमानसहंसाग्र्यो भवामयभिषक्तमः ॥ २२

योगीन्द्रपूज्यपादाब्जो योगपट्टोल्लसत्कटिः ।
शुद्धस्फटिकसंकाशो बद्धपन्नगभूषणः ॥ २३

नानामुनिसमाकीर्णो नासाग्रन्यस्तलोचनः ।
वेदमूर्धैकसंवेद्यो नादध्यानपरायणः ॥ २४

धराधरेन्दुरानन्दसन्दोहरससागरः ।
द्वैतबृन्दविमोहान्ध्यपराकृतदृगद्भुतः ॥ २५

प्रत्यगात्मा परंज्योतिः पुराणः परमेश्वरः ।
प्रपञ्चोपशमः प्राज्ञः पुण्यकीर्तिः पुरातनः ॥ २६

सर्वाधिष्ठानसन्मात्रस्स्वात्मबन्धहरो हरः ।
सर्वप्रेमनिजाहासः सर्वानुग्रहकृच्छिवः ॥ २७

सर्वेन्द्रियगुणाभासः सर्वभूतगुणाश्रयः ।
सच्चिदानन्दपूर्णात्मा सर्वभूतगुणाश्रयः ॥ २८

सर्वभूतान्तरः साक्षी सर्वज्ञः सर्वकामदः ।
सनकादिमहायोगि समाराधितपादुकः ॥ २९

आदिदेवो दयासिन्धुः शिक्षितासुरविग्रहः ।
यक्षकिन्नरगन्धर्व स्तूयमानात्मवैभवः ॥ ३०

ब्रह्मादिदेवविनुतो योगमायानियोजकः ।
शिवयोगी शिवानन्दः शिवभक्तसमुद्धरः ॥ ३१

वेदान्तसारसन्दोहः सर्वसत्वावलम्बनः ।
वटमूलाश्रयो वाग्मी मान्यो मलयजप्रियः ॥ ३२

सुशीलो वाञ्छितार्थज्ञः प्रसन्नवदनेक्षणः ।
नृत्तगीतकलाभिज्ञः कर्मवित्कर्ममोचकः ॥ ३३

कर्मसाक्षी कर्ममयः कर्मणां च फलप्रदः ।
ज्ञानदाता सदाचारः सर्वोपद्रवमोचकः ॥ ३४

अनाथनाथो भगवानाश्रितामरपादपः ।
वरप्रदः प्रकाशात्मा सर्वभूतहिते रतः ॥ ३५

व्याघ्रचर्मासनासीन आदिकर्ता महेश्वरः ।
सुविक्रमः सर्वगतो विशिष्टजनवत्सलः ॥ ३६

चिन्ताशोकप्रशमनो जगदानन्दकारकः ।
रश्मिमान्भुवनेशश्च देवासुरसुपूजितः ॥ ३७

मृत्युञ्जयो व्योमकेशः षट्त्रिंशत्तत्वसङ्ग्रहः ।
अज्ञातसम्भवो भिक्षुरद्वितीयो दिगम्बरः ॥ ३८

समस्तदेवतामूर्तिः सोमसूर्याग्निलोचनः ।
सर्वसाम्राज्यनिपुणो धर्ममार्गप्रवर्तकः ॥ ३९

विश्वाधिकः पशुपतिः पशुपाशविमोचकः ।
अष्टमूर्तिर्दीप्तमूर्तिर्नामोच्चारणमुक्तिदः ॥ ४०

सहस्रादित्यसङ्काशः सदाषोडशवार्षिकः ।
दिव्यकेलीसमायुक्तो दिव्यमाल्याम्बरावृतः ॥ ४१

अनर्घरत्नसम्पूर्णो मल्लिकाकुसुमप्रियः ।
तप्तचामीकराकारो जितदावानलाकृतिः ।। ४२

निरञ्जनो निर्विकारो निजावासो निराकृतिः ।
जगद्गुरुर्जगत्कर्ता जगदीशो जगत्पतिः ।। ४३

कामहन्ता काममूर्तिः कल्याणवृषवाहनः ।
गङ्गाधरो महादेवो दीनबन्धविमोचकः ।। ४४

धूर्जटिः खण्डपरशुः सद्गुणो गिरिजासखः ।
अव्ययो भूतसेनेशः पापघ्नः पुण्यदायकः ।। ४५

उपदेष्टा दृढप्रज्ञो रुद्रो रोगविनाशनः ।
नित्यानन्दो निराधारो हरो देवशिखामणिः ।। ४६

प्रणतार्तिहरः सोमः सान्द्रानन्दो महामतिः ।
आश्चर्यवैभवो देवः संसारार्णवतारकः ।। ४७

यज्ञेशो राजराजेशो भस्मरुद्राक्षलाञ्छनः ।
अनन्तस्तारकः स्थाणुः सर्वविद्येश्वरो हरिः ।। ४८

विश्वरूपो विरूपाक्षः प्रभुः परिबृढो दृढः ।
भव्यो जितारिषड्वर्गो महोदारो विषाशनः ।। ४९

सुकीर्तिरादिपुरुषो जरामरणवर्जितः ।
प्रमाणभूतो दुर्ज्ञेयः पुण्यः परपुरञ्जयः ।। ५०

गुणाकरो गुणश्रेष्ठः सच्चिदानन्दविग्रहः ।
सुखदः कारणं कर्ता भवबन्धविमोचकः ।। ५१

अनिर्विण्णो गुणग्राही निष्कलङ्कः कलङ्कहा ।
पुरुषः शाश्वतो योगी व्यक्ताव्यक्तः सनातनः ।। ५२

चराचरात्मा सूक्ष्मात्मा विश्वकर्मा तमोपहृत्।
भुजङ्गभूषणो भर्गस्तरुणः करुणालयः ॥ ५३

अणिमादिगुणोपेतो लोकवश्यविधायकः ।
योगपट्टधरो मुक्तो मुक्तानां परमा गतिः ॥ ५४

गुरुरूपधरः श्रीमत्परमानन्दसागरः ।
सहस्रबाहुः सर्वेशः सहस्रावयवान्वितः ॥ ५५

सहस्रमूर्धा सर्वात्मा सहस्राक्षः सहस्रपात्।
निराभासः सूक्ष्मतनुर्हृदि ज्ञातः परात्परः ॥ ५६

सर्वात्मगः सर्वसाक्षी निःसङ्गो निरुपद्रवः ।
निष्कलः सकलाध्यक्षश्चिन्मयस्तमसः परः ॥ ५७

ज्ञानवैराग्यसम्पन्नो योगानन्दमयः शिवः ।
शाश्वतैश्वर्यसम्पूर्णो महायोगीश्वरेश्वरः ॥ ५८

सहस्रशक्तिसंयुक्तः पुण्यकायो दुरासदः ।
तारकब्रह्मसम्पूर्णस्तपस्विजनसंवृतः ॥ ५९

विधीन्द्रामरसंपूज्यो ज्योतिषां ज्योतिरुत्तमः ।
निरक्षरो निरालम्बः स्वात्मारामो विकर्तनः ॥ ६०

निरवद्यो निरातङ्को भीमो भीमपराक्रमः ।
वीरभद्रः पुरारातिर्जलन्धरशिरोहरः ॥ ६१

अन्धकासुरसंहर्ता भगनेत्रभिदद्भुतः ।
विश्वग्रासोऽधर्मशत्रुर्ब्रह्मज्ञानैकमन्थरः ॥ ६२

अग्रेसरस्तीर्थभूतः सितभस्मावकुण्ठनः ।
अकुण्ठमेधाः श्रीकण्ठो वैकुण्ठपरमप्रियः ॥ ६३

ललाटोज्ज्वलनेत्राब्जस्तुषारकरशेखरः ।
गजासुरशिरच्छेत्ता गङ्गोद्भासितमूर्धजः ।। ६४

कल्याणाचलकोदण्डः कमलापतिसायकः ।
वारांशेवधितूणीरः सरोजासनसारथिः ।। ६५

त्रयीतुरङ्गसङ्क्रान्तो वासुकिज्याविराजितः ।
रवीन्दुचरणाचारि धरारथविराजितः ।। ६६

त्रय्यन्तप्रग्रहोदार चारुघण्टारवोज्ज्वलः ।
उत्तानपर्वलोमाढ्यो लीलाविजितमन्मथः ।। ६७

जातुप्रपन्नजनता जीवनोपायनोत्सुकः ।
संसारार्णवनिर्मग्न समुद्धरणपण्डितः ।। ६८

मदद्विरदधिक्कारि गतिमञ्जुलवैभवः ।
मत्तकोकिलमाधुर्य रसनिर्भरगीर्गणः ।। ६९

कैवल्योदधिकल्लोल लीलाताण्डवपण्डितः ।
विष्णुर्जिष्णुर्वासुदेवः प्रभविष्णुः पुरातनः ।। ७०

वर्धिणुर्वरदो वैद्यो हरिर्नारायणोऽच्युतः ।
अज्ञानवनदावाग्निः प्रज्ञाप्रासादभूपतिः ।। ७१

सर्पभूषितसर्वाङ्गः कर्पूरोज्ज्वलिताकृतिः ।
अनादिमध्यनिधनो गिरीशो गिरिजापतिः ।। ७२

वीतरागो विनीतात्मा तपस्वी भूतभावनः ।
देवासुरगुरुर्ध्येयो देवासुरनमस्कृतः ।। ७३

देवादिदेवो देवर्षिर्देवासुरवरप्रदः ।
सर्वदेवमयोऽचिन्त्यो देवात्मा चात्मसम्भवः ।। ७४

निर्लेपो निष्प्रपञ्चात्मा निर्विघ्नो विघ्ननाशकः ।
एकज्योतिर्निरातङ्को व्याप्तमूर्तिरनाकुलः ॥ ७५

निरवद्यपदोपाधिर्विद्याराशिरनुत्तमः ।
नित्यानन्दः सुराध्यक्षो निःसङ्कल्पो निरञ्जनः ॥ ७६

निष्कलङ्को निराकारो निष्प्रपञ्चो निरामयः ।
विद्याधरो वियत्केशो मार्कण्डेयवरप्रदः ॥ ७७

भैरवो भैरवीनाथः कामदः कमलासनः ।
वेदवेद्यः सुरानन्दो लसज्ज्योतिः प्रभाकरः ॥ ७८

चूडामणिः सुराधीशो यज्ञगेयो हरिप्रियः ।
निर्लेपो नीतिमान्सूत्री श्रीहालाहलसुन्दरः ॥ ७९

धर्मदक्षो महाराजः किरीटी वन्दितो गुहः ।
माधवो यामिनीनाथः शम्बरः शबरीप्रियः ॥ ८०

सङ्गीतवेत्ता लोकज्ञः शान्तः कलशसम्भवः ।
ब्रह्मण्यो वरदो नित्यः शूली गुरुवरो हरः ॥ ८१

मार्ताण्डः पुण्डरीकाक्षो लोकनायकविक्रमः ।
मुकुन्दार्च्यो वैद्यनाथः पुरन्दरवरप्रदः ॥ ८२

भाषाविहीनो भाषाज्ञो विघ्नेशो विघ्ननाशनः ।
किन्नरेशो बृहद्भानुः श्रीनिवासः कपालभृत् ॥ ८३

विजयो भूतभावज्ञो भीमसेनो दिवाकरः ।
बिल्वप्रियो वसिष्ठेशः सर्वमार्गप्रवर्तकः ॥ ८४

ओषधीशो वामदेवो गोविन्दो नीललोहितः ।
षडर्धनयनः श्रीमन्महादेवो वृषध्वजः ॥ ८५

कर्पूरदीपिकालोलः कर्पूररसचर्चितः ।
अव्याजकरुणामूर्तिस्त्यागराजः क्षपाकरः ।। ८६

आश्चर्यविग्रहः सूक्ष्मः सिद्धेशः स्वर्णभैरवः ।
देवराजः कृपासिन्धुरद्वयोऽमितविक्रमः ।। ८७

निर्भेदो नित्यसत्वस्थो निर्योगक्षेम आत्मवान् ।
निरपायो निरासङ्गो निःशब्दो निरुपाधिकः ।। ८८

भवः सर्वेश्वरः स्वामी भवभीतिविभञ्जनः ।
दारिद्र्यतृणकूटाग्निर्दारितासुरसन्ततिः ।। ८९

मुक्तिदो मुदितोऽकुब्जो धार्मिको भक्तवत्सलः ।
अभ्यासातिशयज्ञेयश्चन्द्रमौलिः कलाधरः ।। ९०

महाबलो महावीर्यो विभुः श्रीशः शुभप्रदः ।
सिद्धः पुराणपुरुषो रणमण्डलभैरवः ।। ९१

सद्योजातो वटारण्यवासी पुरुषवल्लभः ।
हरिकेशो महात्राता नीलग्रीवस्सुमङ्गलः ।। ९२

हिरण्यबाहुस्तीक्ष्णांशुः कामेशः सोमविग्रहः ।
सर्वात्मा सर्वकर्ता च ताण्डवो मुण्डमालिकः ।। ९३

अग्रगण्यस्सुगम्भीरो देशिको वैदिकोत्तमः ।
प्रसन्नदेवो वागीशश्चिन्तातिमिरभास्करः ।। ९४

गौरीपतिस्तुङ्गमौलिर्मखराजो महाकविः ।
श्रीधरस्सर्वसिद्धेशो विश्वनाथो दयानिधिः ।। ९५

अन्तर्मुखो बहिर्दृष्टिः सिद्धवेषमनोहरः ।
कृत्तिवासाः कृपासिन्धुर्मन्त्रसिद्धो मतिप्रदः ।। ९६

महोत्कृष्टः पुण्यकरो जगत्साक्षी सदाशिवः ।
महाक्रतुर्महायज्वा विश्वकर्मा तपोनिधिः ॥ ९७

छन्दोमयो महाज्ञानी सर्वज्ञो देववन्दितः ।
सार्वभौमस्सदानन्दः करुणामृतवारिधिः ॥ ९८

कालकालः कलिध्वंसी जरामरणनाशकः ।
शितिकण्ठश्चिदानन्दो योगिनीगणसेवितः ॥ ९९

चण्डीशः शुकसंवेद्यः पुण्यश्लोको दिवस्पतिः ।
स्थायी सकलतत्वात्मा सदासेवकवर्धनः ॥ १००

रोहिताश्वः क्षमारूपी तप्तचामीकरप्रभः ।
त्रियम्बको वररुचिर्देवदेवश्चतुर्भुजः ॥ १०१

विश्वम्भरो विचित्राङ्गो विधाता पुरशासनः ।
सुब्रह्मण्यो जगत्स्वामी रोहिताक्षः शिवोत्तमः ॥ १०२

नक्षत्रमालाभरणो मघवान् अघनाशनः ।
विधिकर्ता विधानज्ञः प्रधानपुरुषेश्वरः ॥ १०३

चिन्तामणिः सुरगुरुर्ध्येयो नीराजनप्रियः ।
गोविन्दो राजराजेशो बहुपुष्पार्चनप्रियः ॥ १०४

सर्वानन्दो दयारूपी शैलजासुमनोहरः ।
सुविक्रमः सर्वगतो हेतुसाधनवर्जितः ॥ १०५

वृषाङ्को रमणीयाङ्गः सदङ्घ्रिः सामपारगः ।
मन्त्रात्मा कोटिकन्दर्पसौन्दर्यरसवारिधिः ॥ १०६

यज्ञेशो यज्ञपुरुषः सृष्टिस्थित्यन्तकारणम् ।
परहंसैकजिज्ञास्यः स्वप्रकाशस्वरूपवान् ॥ १०७

मुनिमृग्यो देवमृग्यो मृगहस्तो मृगेश्वरः ।
मृगेन्द्रचर्मवसनो नरसिंहनिपातनः ।। १०८

मुनिवन्द्यो मुनिश्रेष्ठो मुनिबृन्दनिषेवितः ।
दुष्टमृत्युरदुष्टेहो मृत्युहा मृत्युपूजितः ।। १०९

अव्यक्तोऽम्बुजजन्मादिकोटिकोटिसुपूजितः ।
लिङ्गमूर्तिरलिङ्गात्मा लिङ्गात्मा लिङ्गविग्रहः ।। ११०

यजुर्मूर्तिः साममूर्तिर्ऋङ्मूर्तिर्मूर्तिवर्जितः ।
विश्वेशो गजचर्मैकचेलाञ्चितकटीतटः ।। १११

पावनान्तेवसद्योगिजनसार्थसुधाकरः ।
अनन्तसोमसूर्याग्नि मण्डलप्रतिमप्रभः ।। ११२

चिन्ताशोकप्रशमनः सर्वविद्याविशारदः ।
भक्तविज्ञप्तिसन्धाता कर्ता गिरिवराकृतिः ।। ११३

ज्ञानप्रदो मनोवासः क्षेम्यो मोहविनाशनः ।
सुरोत्तमश्चित्रभानुः सदावैभवतत्परः ।। ११४

सुहृदग्रेसरः सिद्धज्ञानमुद्रो गणाधिपः ।
आगमश्चर्मवसनो वाञ्छितार्थफलप्रदः ।।११५

अन्तर्हितोऽसमानश्च देवसिंहासनाधिपः ।
विवादहन्ता सर्वात्मा कालः कालविवर्जितः ।। ११६

विश्वातीतो विश्वकर्ता विश्वेशो विश्वकारणम् ।
योगिध्येयो योगनिष्ठो योगात्मा योगवित्तमः ।। ११७

ओङ्काररूपो भगवान् बिन्दुनादमयः शिवः ।
चतुर्मुखादिसंस्तुत्यश्चतुर्वर्गफलप्रदः ।। ११८

सह्याचलगुहावासी साक्षान्मोक्षरसामृतः ।
दक्षाध्वरसमुच्छेत्ता पक्षपातविवर्जितः ।। ११९

ओङ्कारवाचकः शम्भुः शङ्करः शशिशीतलः ।
पङ्कजासनसंसेव्यः किङ्करामरवत्सलः ।। १२०

नतदौर्भाग्यतूलाग्निः कृतकौतुकमङ्गलः ।
त्रिलोकमोहनः श्रीमत्त्रिपुण्ड्राङ्कितमस्तकः ।। १२१

क्रौञ्चारिजनकः श्रीमद्गणनाथसुतान्वितः ।
अद्भुतानन्तवरदोऽपरिच्छिन्नात्मवैभवः ।। १२२

इष्टापूर्तप्रियः शर्व एकवीरः प्रियंवदः ।
ऊहापोहविनिर्मुक्त ओङ्कारेश्वरपूजितः ।। १२३

रुद्राक्षवक्षा रुद्राक्षरूपो रुद्राक्षपक्षकः ।
भुजगेन्द्रलसत्कण्ठो भुजङ्गाभरणप्रियः ।।१२४

कल्याणरूपः कल्याणः कल्याणगुणसंश्रयः ।
सुन्दरभ्रूः सुनयनः सुललाटः सुकन्धरः ।। १२५

विद्वज्जनाश्रयो विद्वज्जनस्तव्यपराक्रमः ।
विनीतवत्सलो नीतिस्वरूपो नीतिसंश्रयः ।। १२६

अतिरागी वीतरागी रागहेतुर्विरागवित् ।
रागहा रागशमनो रागदो रागिरागवित् ।। १२७

मनोन्मनो मनोरूपो बलप्रमथनो बलः ।
विद्याकरो महाविद्यो विद्याविद्याविशारदः ।। १२८

वसन्तकृद्वसन्तात्मा वसन्तेशो वसन्तदः ।
प्रावृट्कृत्प्रावृडाकारः प्रावृट्कालप्रवर्तकः ।। १२९

शरन्नाथो शरत्कालनाशकः शरदाश्रयः ।
कुन्दमन्दारपुष्पौघ लसद्वायुनिषेवितः ॥ १३०

दिव्यदेहप्रभाकूट सन्दीपितदिगन्तरः ।
देवासुरगुरुस्तव्यो देवासुरनमस्कृतः॥ १३१

वामाङ्गभागविलसच्छ्यामलावीक्षणप्रियः ।
कीर्त्याधारः कीर्तिकरः कीर्तिहेतुरहेतुकः ॥ १३२

शरणागतदीनार्त परित्राणपरायणः ।
महाप्रेतासनासीनो जितसर्वपितामहः ॥ १३३

मुक्तादामपरीताङ्गो नानागानविशारदः ।
विष्णुब्रह्मादिवन्द्याङ्घ्रिर्नानादेशैकनायकः ॥ १३४

धीरोदात्तो महाधीरो धैर्यदो धैर्यवर्धकः ।
विज्ञानमय आनन्दमयः प्राणमयोऽन्नदः ॥ १३५

भवाब्धितरणोपायः कविर्दुःस्वप्ननाशनः ।
गौरीविलाससदनः पिशाचानुचरावृतः ॥ १३६

दक्षिणाप्रेमसन्तुष्टो दारिद्र्यबडवानलः ।
अद्भुतानन्तसंग्रामो ढक्कावादनतत्परः ॥ १३७

प्राच्यात्मा दक्षिणाकारः प्रतीच्यात्मोत्तराकृतिः ।
ऊर्ध्वाद्यन्यदिगाकारो मर्मज्ञः सर्वशिक्षकः ॥ १३८

युगावहो युगाधीशो युगात्मा युगनायकः ।
जङ्गमः स्थावराकारः कैलासशिखरप्रियः ॥ १३९

हस्तराजत्पुण्डरीकः पुण्डरीकनिभेक्षणः ।
लीलाविडम्बितवपु र्भक्तमानसमण्डितः ॥ १४०

बृन्दारकप्रियतमो बृन्दारकवरार्चितः ।
नानाविधानेकरत्न लसत्कुण्डलमण्डितः ॥ १४१

निःसीममहिमा नित्यलीलाविग्रहरूपधृत्।
चन्दनद्रवदिग्धाङ्गश्चाम्पेयकुसुमार्चितः ॥ १४२

समस्तभक्तसुखदः परमाणुर्महाह्रदः ।
अलौकिको दुष्प्रधर्षः कपिलः कालकन्धरः ॥ १४३

कर्पूरगौरः कुशलः सत्यसन्धो जितेन्द्रियः ।
शाश्वतैश्वर्यविभवः पोषकः सुसमाहितः ॥ १४४

महर्षिनाथितो ब्रह्मयोनिः सर्वोत्तमोत्तमः ।
भूमिभारार्तिसंहर्ता षडूर्मिरहितो मृडः ॥ १४५

त्रिविष्टपेश्वरः सर्वहृदयाम्बुजमध्यगः ।
सहस्रदलपद्मस्थः सर्ववर्णोपशोभितः ॥ १४६

पुण्यमूर्तिः पुण्यलभ्यः पुण्यश्रवणकीर्तनः ।
सूर्यमण्डलमध्यस्थश्चन्द्रमण्डलमध्यगः ॥ १४७

सद्भक्तध्याननिगलः शरणागतपालकः ।
श्वेतातपत्ररुचिरः श्वेतचामरवीजितः ॥ १४८

सर्वावयवसंपूर्णः सर्वलक्षणलक्षितः ।
सर्वमङ्गलमाङ्गल्यः सर्वकारणकारणः ॥ १४९

आमोदो मोदजनकः सर्पराजोत्तरीयकः ।
कपाली कोविदः सिद्धकान्तिसंवलिताननः ॥ १५०

सर्वसद्गुरुसंसेव्यो दिव्यचन्दनचर्चितः ।
विलासिनीकृतोल्लास इच्छाशक्तिनिषेवितः ॥ १५१

अनन्तानन्दसुखदो नन्दनः श्रीनिकेतनः ।
अमृताब्धिकृतावासो नित्यक्लीबो निरामयः ॥ १५२

अनपायोऽनन्तदृष्टिरप्रमेयोऽजरोऽमरः ।
तमोमोहप्रतिहतिरप्रतर्क्योऽमृतोऽक्षरः ॥ १५३

अमोघबुद्धिराधार आधाराधेयवर्जितः ।
ईषणात्रयनिर्मुक्त इहामुत्रविवर्जितः ॥ १५४

ऋग्यजुः सामनयनो बुद्धिसिद्धिसमृद्धिदः ।
औदार्यनिधिरापूर्ण ऐहिकामुष्मिकप्रदः ॥ १५५

शुद्धसन्मात्रसंविद्धी स्वरूपसुखविग्रहः ।
दर्शनप्रथमाभासो दृष्टिदृश्यविवर्जितः ॥ १५६

अग्रगण्योऽचिन्त्यरूपः कलिकल्मषनाशनः ।
विमर्शरूपो विमलो नित्यरूपो निराश्रयः ॥ १५७

नित्यशुद्धो नित्यबुद्धः नित्यमुक्तोऽपराकृतः ।
मैत्र्यादिवासनालभ्यो महाप्रलयसंस्थितः ॥ १५८

महाकैलासनिलयः प्रज्ञानघनविग्रहः ।
श्रीमान् व्याघ्रपुरावासो भुक्तिमुक्तिप्रदायकः ॥ १५९

जगद्योनिर्जगत्साक्षी जगदीशो जगन्मयः ।
जपो जपपरो जप्यो विद्यासिंहासनप्रभुः ॥ १६०

तत्वानां प्रकृतिस्तत्वं तत्वंपदनिरूपितः ।
दिक्कालाद्यनवच्छिन्नः सहजानन्दसागरः ॥ १६१

प्रकृतिः प्राकृतातीतो विज्ञानैकरसाकृतिः ।
निःशङ्कमतिदूरस्थश्चैत्यचेतनचिन्तनः ॥ १६२

तारकानां हृदन्तस्थस्तारकस्तारकान्तकः ।
ध्यानैकप्रकटो ध्येयो ध्यानी ध्यानविभूषणः ॥ १६३

परं व्योम परं धाम परमात्मा परं पदम् ।
पूर्णानन्दः सदानन्दो नादमध्यप्रतिष्ठितः ॥ १६४

प्रमाविपर्ययातीतः प्रणताज्ञाननाशकः ।
बाणार्चिताङ्घ्रिर्बहुदो बालकेलिकुतूहली ॥ १६५

ब्रह्मरूपी ब्रह्मपदं ब्रह्मविद् ब्राह्मणप्रियः ।
भ्रूक्षेपदत्तलक्ष्मीको भ्रूमध्यध्यानलक्षितः ॥ १६६

यशस्करो रत्नगर्भो महाराज्यसुखप्रदः ।
शब्दब्रह्म शमप्राप्यो लाभकृल्लोकविश्रुतः ॥ १६७

शास्ता शिवाद्रिनिलयः शरण्यो याजकप्रियः ।
संसारवैद्यः सर्वज्ञः सभेषजविभेषजः ॥ १६८

मनोवचोभिरग्राह्यः पञ्चकोशविलक्षणः ।
अवस्थात्रयनिर्मुक्तस्त्ववस्थासाक्षितुर्यकः ॥ १६९

पञ्चभूतादिदूरस्थः प्रत्यगेकरसोऽव्ययः ।
षट्चक्रान्तर्गतोल्लासी षड्विकारविवर्जितः ॥ १७०

विज्ञानघनसम्पूर्णो वीणावादनतत्परः ।
नीहाराकारगौराङ्गो महालावण्यवारिधिः ॥ १७१

पराभिचारशमनः षडध्वोपरिसंस्थितः ।
सुषुम्नामार्गसंचारी बिसतन्तुनिभाकृतिः ॥ १७२

पिनाकी लिङ्गरूपश्रीः मङ्गलावयवोज्ज्वलः ।
क्षेत्राधिपः सुसंवेद्यः श्रीप्रदो विभवप्रदः ॥ १७३

सर्ववश्यकरः सर्वदोषहा पुत्रपौत्रदः ।
तैलदीपप्रियस्तैलपक्वान्नप्रीतमानसः ।। १७४

तैलाभिषेकसन्तुष्टस्तिलभक्षणतत्परः ।
आपादकणिकामुक्ताभूषाशतमनोहरः ।। १७५

शाणोल्लीढमणिश्रेणीरम्याङ्घ्रिनखमण्डलः ।
मणिमञ्जीर किरण किञ्जल्कितपदाम्बुजः ।। १७६

अपस्मारोपरिन्यस्त सव्यपादसरोरुहः ।
कन्दर्पतूणाभजङ्घो गुल्फोदञ्चितनूपुरः ।। १७७

करिहस्तोपमेयोरुरादर्शोज्ज्वलजानुभृत् ।
विशङ्कटकटिन्यस्तवाचालमणिमेखलः ।। १७८

आवर्तनाभिरोमालि वलिमत्पल्लवोदरः ।
मुक्ताहारलसत्तुङ्ग विपुलोरस्करञ्जितः ।। १७९

वीरासनसमासीनो वीणापुस्तोल्लसत्करः ।
अक्षमालालसत्पाणिश्चिन्मुद्रितकराम्बुजः ।। १८०

माणिक्यकङ्कणोल्लासि कराम्बुजविराजितः ।
अनर्घरत्नग्रैवेय विलसत्कम्बुकन्धरः ।। १८१

अनाकलितसादृश्य चिबुकश्रीविराजितः ।
मुग्धस्मितपरीपाक प्रकाशितरदाङ्कुरः ।। १८२

चारुचाम्पेयपुष्पाभ नासिकापुटरञ्जितः ।
वरवज्रशिलादर्श परिभाविकपोलभूः ।। १८३

कर्णद्वयोल्लसद्दिव्य मणिकुण्डलमण्डितः ।
करुणालहरीपूर्ण कर्णान्तायतलोचनः ।। १८४

अर्धचन्द्राभनिटिल पाटीरतिलकोज्ज्वलः ।
चारुचामीकराकार जटाचर्चितचन्दनः ।।
कैलासशिखरस्पर्धि कमनीयनिजाकृतिः ।। १८५

श्री दक्षिणामूर्तिसहस्रनामस्तोत्रं सम्पूर्णम् ।।

---

।। श्रीगुरुभ्यो नमः ।।

## ।। श्रीमेधादक्षिणामूर्ति सहस्रनामावलिः ।।

ओं देवदेवाय नमः । महादेवाय । देवानामपि देशिकाय । दक्षिणामूर्तये । ईशानाय । दयापूरितदिङ्मुखाय । कैलासशिखरोत्तुङ्गकमनीयनिजाकृतये । वटद्रुमतटीदिव्यकनकासनसंस्थिताय । कटीतटपटीभूत करिचर्मोज्ज्वलाकृतये । पाटीरपाण्डुराकारपरिपूर्णसुधाधिपाय । जटाकोटीरघटितसुधाकरसुधाप्लुताय । पश्यल्ललाटसुभगसुन्दरभ्रूविलासवते । कटाक्षसरणीनिर्यत्करुणापूर्णलोचनाय । कर्णालोलतटिद्वर्णकुण्डलोज्ज्वलगण्डभुवे । तिलप्रसूनसंकाशनासिकापुटभासुराय । मन्दस्मितस्फुरन्मुग्धमहनीयमुखाम्बुजाय । कुन्दकुड्मलसंस्पर्धिदन्तपंक्तिविराजिताय । सिन्दूरारुणसुस्निग्धकोमलाधरपल्लवाय । शङ्खाटोपगलद्दिव्यगळवैभवमञ्जुलाय । करकन्दलितज्ञानमुद्रारुद्राक्षमालिकाय नमः। २०

अन्यहस्ततलन्यस्तवीणापुस्तोल्लसद्वपुषे नमः । विशालरुचिरोरस्कवलिमत्पल्लवोदराय । बृहत्कटिनितम्बाढ्याय । पीवरोरुद्वयान्विताय । जङ्घाविजिततूणीराय । तुङ्गगुल्फयुगोज्ज्वलाय । मृदुपाटलपादाब्जाय । चन्द्राभनखदीधितये ।

अपसव्योरुविन्यस्तसव्यपादसरोरुहाय । घोरापस्मारनिक्षिप्त-धीरदक्षपदाम्बुजाय। सनकादिमुनिध्येयाय। सर्वाभरणभूषिताय। दिव्यचन्दनलिप्ताङ्गाय । चारुहासपरिष्कृताय। कर्पूरधवलाकाराय। कन्दर्पशतसुन्दराय। कात्यायनीप्रेमनिधये। करुणारस-वारिधये। कामितार्थप्रदाय। श्रीमत्कमलावल्लभप्रियाय नमः। ४०

कटाक्षितात्मविज्ञानाय नमः । कैवल्यानन्दकन्दलाय । मन्दहाससमानेन्दवे । छिन्नाज्ञानतमस्ततये । संसारानल-संतप्तजनतामृतसागराय । गम्भीरहृदयाम्भोजनभोमणिनिभाकृतये । निशाकरकराकारवशीकृतजगत्त्रयाय । तापसाराध्य-पादाब्जाय । तरुणानन्दविग्रहाय । भूतिभूषितसर्वाङ्गाय । भूताधिपतये। ईश्वराय। वदनेन्दुस्मितज्योत्स्नानिलीनत्रिपुराकृतये। तापत्रयतमोभानवे । पापारण्यदवानलाय । संसारसागरोद्धर्त्रे । हंसाग्र्योपास्यविग्रहाय । ललाटहुतभुग्दग्धमनोभवशुभाकृतये । तुच्छीकृतजगज्जालाय। तुषारकरशीतलाय नमः। ६०

अस्तंगतसमस्तेच्छाय नमः । निस्तुलानन्दमन्थराय । धीरोदात्तगुणाधाराय । उदारवरवैभवाय । अपारकरुणामूर्तये । अज्ञानध्वान्तभास्कराय । भक्तमानसहंसाग्र्याय । भवामयभि-षक्तमाय । योगीन्द्रपूज्यपादाब्जाय । योगपट्टोल्लसत्कटये । शुद्धस्फटिकसंकाशाय । बद्धपन्नगभूषणाय । नानामुनिसमा-कीर्णाय । नासाग्रन्यस्तलोचनाय । वेदमूर्धैकसंवेद्याय । नादध्यानपरायणाय। धराधरेन्दवे। आनन्दसन्दोहरससागराय। द्वैतबृन्दविमोहान्ध्यपराकृतदृगद्भुताय। प्रत्यगात्मने नमः। ८०

परस्मैज्योतिषे नमः । पुराणाय । परमेश्वराय । प्रपञ्चोपशमाय । प्राज्ञाय । पुण्यकीर्तये । पुरातनाय ।

सर्वाधिष्ठानसन्मात्राय । स्वात्मबन्धहराय । हराय । सर्वप्रेमनिजाहासाय । सर्वानुग्रहकृते । शिवाय । सर्वेन्द्रियगुणाभासाय । सर्वभूतगुणाश्रयाय । सच्चिदानन्दपूर्णात्मने । स्वे महिम्नि प्रतिष्ठिताय । सर्वभूतान्तराय । साक्षिणे । सर्वज्ञाय नमः । १००

सर्वकामदाय नमः । सनकादिमहायोगिसमाराधितपादुकाय । आदिदेवाय । दयासिन्धवे । शिक्षितासुरविग्रहाय । यक्षकिन्नरगन्धर्वस्तूयमानात्मवैभवाय । ब्रह्मादिदेवविनुताय । योगमायानियोजकाय । शिवयोगिने । शिवानन्दाय । शिवभक्तसमुद्धराय । वेदान्तसारसन्दोहाय । सर्वसत्त्वावलम्बनाय । वटमूलाश्रयाय । वाग्मिने । मान्याय । मलयजप्रियाय । सुशीलाय । वाञ्छितार्थज्ञाय । प्रसन्नवदनेक्षणाय नमः । १२०

नृत्तगीतकलाभिज्ञाय नमः । कर्मविदे । कर्ममोचकाय । कर्मसाक्षिणे । कर्ममयाय । कर्मणां फलप्रदाय । ज्ञानदात्रे । सदाचाराय । सर्वोपद्रवमोचकाय । अनाथनाथाय । भगवते । आश्रितामरपादपाय । वरप्रदाय । प्रकाशात्मने । सर्वभूतहिते रताय । व्याघ्रचर्मासनासीनाय । आदिकर्त्रे । महेश्वराय । सुविक्रमाय । सर्वगताय नमः । १४०

विशिष्टजनवत्सलाय नमः । चिन्ताशोकप्रशमनाय । जगदानन्दकारकाय । रश्मिमते । भुवनेशाय । देवासुरसुपूजिताय । मृत्युंजयाय । व्योमकेशाय । षट्त्रिंशत्तत्वसंग्रहाय । अज्ञातसम्भवाय । भिक्षवे । अद्वितीयाय । दिगम्बराय । समस्तदेवतामूर्तये । सोमसूर्याग्निलोचनाय । सर्वसाम्राज्यनिपुणाय । धर्ममार्गप्रवर्तकाय । विश्वाधिकाय । पशुपतये । पशुपाशविमोचकाय नमः । १६०

अष्टमूर्तये नमः । दीप्तमूर्तये । नामोच्चारणमुक्तिदाय । सहस्रादित्यसंकाशाय । सदाषोडशवार्षिकाय । दिव्यकेली-समायुक्ताय । दिव्यमाल्याम्बरावृताय । अनर्घरत्नसंपूर्णाय । मल्लिकाकुसुमप्रियाय । तप्तचामीकराकाराय । जितदावानला-कृतये । निरञ्जनाय । निर्विकाराय । निजावासाय । निराकृतये । जगद्गुरवे । जगत्कर्त्रे । जगदीशाय । जगत्पतये । कामहन्त्रे नमः १८०

काममूर्तये नमः । कल्याणवृषवाहनाय । गङ्गाधराय । महादेवाय । दीनबन्धविमोचकाय । धूर्जटये । खण्डपरशवे । सद्गुणाय । गिरिजासखाय । अव्ययाय । भूतसेनेशाय । पापघ्नाय । पुण्यदायकाय । उपदेष्ट्रे । दृढप्रज्ञाय । रुद्राय । रोगविनाशनाय । नित्यानन्दाय । निराधाराय । हराय नमः । २००

देवशिखामणये नमः । प्रणतार्तिहराय । सोमाय । सान्द्रानन्दाय । महामतये । आश्चर्यवैभवाय । देवाय । संसारार्णवतारकाय । यज्ञेशाय । राजराजेशाय । भस्मरुद्राक्षलाञ्छनाय । अनन्ताय । तारकाय । स्थाणवे । सर्वविद्येश्वराय । हरये । विश्वरूपाय । विरूपाक्षाय । प्रभवे । परिबृढाय नमः । २२०

दृढाय नमः । भव्याय । जितारिषड्वर्गाय । महोदाराय । विषाशनाय । सुकीर्तये । आदिपुरुषाय । जरामरणवर्जिताय । प्रमाणभूताय । दुर्ज्ञेयाय । पुण्याय । परपुरञ्जयाय । गुणाकराय । गुणश्रेष्ठाय । सच्चिदानन्दविग्रहाय । सुखदाय । कारणाय । कर्त्रे । भवबन्धविमोचकाय । अनिर्विण्णाय नमः । २४०

गुणग्राहिणे नमः । निष्कलङ्काय । कलङ्कघ्ने । पुरुषाय । शाश्वताय । योगिने । व्यक्ताव्यक्ताय । सनातनाय । चराचरात्मने । सूक्ष्मात्मने । विश्वकर्मणे । तमोपहृते । भुजङ्गभूषणाय । भर्गाय । तरुणाय । करुणालयाय । अणिमादिगुणोपेताय । लोकवश्यविधायकाय । योगपट्टधराय । मुक्ताय नमः । २६०

मुक्तानां परमायै गतये नमः । गुरुरूपधराय । श्रीमत्परमानन्दसागराय । सहस्रबाहवे । सर्वेशाय । सहस्रावयवान्विताय । सहस्रमूर्ध्ने । सर्वात्मने । सहस्राक्षाय । सहस्रपदे । निराभासाय । सूक्ष्मतनवे । हृदि ज्ञाताय । परात्पराय । सर्वात्मगाय । सर्वसाक्षिणे । निःसङ्गाय । निरुपद्रवाय । निष्कलाय । सकलाध्यक्षाय नमः । २८०

चिन्मयाय नमः । तमसः पराय । ज्ञानवैराग्यसंपन्नाय । योगानन्दमयाय शिवाय । शाश्वतैश्वर्यसंपूर्णाय । महायोगीश्वरेश्वराय । सहस्रशक्तिसंयुक्ताय । पुण्यकायाय । दुरासदाय । तारकब्रह्मसंपूर्णाय । तपस्विजनसंवृताय । विधीन्द्रामरसंपूज्याय । ज्योतिषां ज्योतिषे । उत्तमाय । निरक्षराय । निरालम्बाय । स्वात्मारामाय । विकर्तनाय । निरवद्याय । निरातङ्काय नमः । ३००

भीमाय नमः । भीमपराक्रमाय । वीरभद्राय । पुराराातये । जलन्धरशिरोहराय । अन्धकासुरसंहर्त्रे । भगनेत्रभिदे । अद्भुताय । विश्वग्रासाय । अधर्मशत्रवे । ब्रह्मज्ञानैकमन्थराय । अग्रेसराय । तीर्थभूताय । सितभस्मावकुण्ठनाय । अकुण्ठमेधसे । श्रीकण्ठाय । वैकुण्ठपरमप्रियाय । ललाटोज्ज्वलनेत्राब्जाय । तुषारकरशेखराय । गजासुरशिरश्छेत्रे नमः ३२०

गङ्गोद्भासितमूर्धजाय नमः । कल्याणाचलकोदण्डाय । कमलापतिसायकाय । वारांशेवधितूणीराय । सरोजासनसारथये । त्रयीतुरंगसंक्रान्ताय । वासुकिज्याविराजिताय । रवीन्दुचरणाचारिधरारथविराजिताय । त्रय्यन्तप्रग्रहोदारचारुघण्टारवोज्ज्वलाय । उत्तानपर्वलोमाढ्याय । लीलाविजितमन्मथाय । जातुप्रपन्नजनताजीवनोपायनोत्सुकाय । संसारार्णवनिर्मग्नसमुद्धरणपण्डिताय । मदद्विरदधिक्कारिगतिमञ्जुलवैभवाय । मत्तकोकिलमाधुर्यरसनिर्भरगीर्गणाय । कैवल्योदधिकल्लोललीलाताण्डवपण्डिताय । विष्णवे । जिष्णवे । वासुदेवाय । प्रभविष्णवे नमः ३४०

पुरातनाय नमः । वर्धिष्णवे । वरदाय । वैद्याय । हरये । नारायणाय । अच्युताय । अज्ञानवनदावाग्नये । प्रज्ञाप्रासादभूपतये । सर्पभूषितसर्वाङ्गाय । कर्पूरोज्ज्वलिताकृतये । अनादिमध्यनिधनाय । गिरीशाय । गिरिजापतये । वीतरागाय । विनीतात्मने । तपस्विने । भूतभावनाय । देवासुरगुरुध्येयाय । देवासुरनमस्कृताय नमः । ३६०

देवादिदेवाय नमः । देवर्षये । देवासुरवरप्रदाय । सर्वदेवमयाय । अचिन्त्याय । देवात्मने । आत्मसम्भवाय । निर्लेपाय । निष्प्रपञ्चात्मने । निर्विघ्नाय । विघ्ननाशकाय । एकज्योतिषे । निरातङ्काय । व्याप्तमूर्तये । अनाकुलाय । निरवद्यपदोपाधये । विद्याराशये । अनुत्तमाय । नित्यानन्दाय । सुराध्यक्षाय नमः । ३८०

निःसंकल्पाय नमः । निरञ्जनाय । निष्कलङ्काय । निराकाराय । निष्प्रपञ्चाय । निरामयाय । विद्याधराय ।

वियत्केशाय । मार्कण्डेयवरप्रदाय । भैरवाय । भैरवीनाथाय । कामदाय । कमलासनाय । वेदवेद्याय । सुरानन्दाय । लसज्ज्योतिषे प्रभाकराय । चूडामणये । सुराधीशाय । यज्ञगेयाय नमः ४००

हरिप्रियाय नमः । निर्लेपाय । नीतिमते । सूत्रिणे । श्रीहालाहलसुन्दराय । धर्मदक्षाय । महाराजाय । किरीटिने । वन्दिताय । गुहाय । माधवाय । यामिनीनाथाय । शम्बराय । शबरीप्रियाय । संगीतवेत्रे । लोकज्ञाय । शान्ताय । कलशसम्भवाय । ब्रह्मण्याय । वरदाय नमः । ४२०

नित्याय नमः । शूलिने । गुरुवराय हराय । मार्ताण्डाय । पुण्डरीकाक्षाय । लोकनायकविक्रमाय । मुकुन्दार्च्याय । वैद्यनाथाय । पुरन्दरवरप्रदाय । भाषाविहीनाय । भाषाज्ञाय । विघ्नेशाय । विघ्ननाशनाय । किन्नरेशाय । बृहद्भानवे । श्रीनिवासाय । कपालभृते । विजयाय । भूतभावज्ञाय । भीमसेनाय नमः । ४४०

दिवाकराय नमः । बिल्वप्रियाय । वसिष्ठेशाय । सर्वमार्गप्रवर्तकाय । ओषधीशाय । वामदेवाय । गोविन्दाय । नीललोहिताय । षडर्धनयनाय । श्रीमन्महादेवाय । वृषध्वजाय । कर्पूरदीपिकालोलाय । कर्पूररसचर्चिताय । अव्याजकरुणामूर्तये । त्यागराजाय । क्षपाकराय । आश्चर्यविग्रहाय । सूक्ष्माय । सिद्धेशाय । स्वर्णभैरवाय नमः । ४६०

देवराजाय नमः । कृपासिन्धवे । अद्वयाय । अमितविक्रमाय । निर्भेदाय । नित्यसत्वस्थाय । निर्योगक्षेमाय । आत्मवते । निरपायाय । निरासङ्गाय । निःशब्दाय । निरुपाधिकाय । भवाय । सर्वेश्वराय । स्वामिने । भवभीतिविभञ्जनाय । दारिद्र्यतृणकूटाग्नये । दारितासुरसन्ततये । मुक्तिदाय । मुदिताय नमः । ४८०

अकुब्जाय नमः । धार्मिकाय । भक्तवत्सलाय । अभ्यासातिशयज्ञेयाय । चन्द्रमौलये । कलाधराय । महाबलाय । महावीर्याय । विभवे । श्रीशाय । शुभप्रदाय । सिद्धाय । पुराणपुरुषाय । रणमण्डलभैरवाय । सद्योजाताय । वटारण्यवासिने । पुरुषवल्लभाय । हरिकेशाय । महात्रात्रे । नीलग्रीवाय नमः ५००

सुमङ्गलाय नमः । हिरण्यबाहवे । तीक्ष्णांशवे । कामेशाय । सोमविग्रहाय । सर्वात्मने । सर्वकर्त्रे । ताण्डवाय । मुण्डमालिकाय । अग्रगण्याय । सुगम्भीराय । देशिकाय । वैदिकोत्तमाय । प्रसन्नदेवाय । वागीशाय । चिन्तातिमिरभास्कराय । गौरीपतये । तुङ्गमौलये । मखराजाय । महाकवये नमः । ५२०

श्रीधराय नमः । सर्वसिद्धेशाय । विश्वनाथाय । दयानिधये । अन्तर्मुखाय । बहिर्दृष्टये । सिद्धवेषमनोहराय । कृत्तिवाससे । कृपासिन्धवे । मन्त्रसिद्धाय । मतिप्रदाय । महोत्कृष्टाय । पुण्यकराय । जगत्साक्षिणे । सदाशिवाय । महाक्रतवे । महायज्वने । विश्वकर्मणे । तपोनिधये । छन्दोमयाय नमः ५४०

महाज्ञानिने नमः । सर्वज्ञाय । देववन्दिताय । सार्वभौमाय । सदानन्दाय । करुणामृतवारिधये । कालकालाय । कलिध्वंसिने । जरामरणनाशकाय । शितिकण्ठाय । चिदानन्दाय । योगिनीगणसेविताय । चण्डीशाय । शुकसंवेद्याय । पुण्यश्लोकाय । दिवस्पतये । स्थायिने । सकलतत्वात्मने । सदासेवकवर्धनाय । रोहिताश्वाय नमः ५६०

क्षमारूपिणे नमः । तप्तचामीकरप्रभाय । त्रियम्बकाय । वररुचये । देवदेवाय । चतुर्भुजाय । विश्वम्भराय । विचित्राङ्गाय ।

विधात्रे । पुरशासनाय । सुब्रह्मण्याय । जगत्स्वामिने । रोहिताक्षाय । शिवोत्तमाय । नक्षत्रमालाभरणाय । मघवते । अघनाशनाय । विधिकर्त्रे । विधानज्ञाय । प्रधानपुरुषेश्वराय नमः । ५८०

चिन्तामणये नमः । सुरगुरवे । ध्येयाय । नीराजनप्रियाय । गोविन्दाय । राजराजेशाय । बहुपुष्पार्चनप्रियाय । सर्वानन्दाय । दयारूपिणे । शैलजासुमनोहराय । सुविक्रमाय । सर्वगताय । हेतुसाधनवर्जिताय । वृषाङ्काय । रमणीयाङ्गाय । सदङ्घ्रये । सामपारगाय । मन्त्रात्मने । कोटिकन्दर्पसौन्दर्यरसवारिधये । यज्ञेशाय नमः ६००

यज्ञपुरुषाय नमः । सृष्टिस्थित्यन्तकारणाय । परहंसैक-जिज्ञास्याय । स्वप्रकाशस्वरूपवते । मुनिमृग्याय । देवमृग्याय । मृगहस्ताय । मृगेश्वराय । मृगेन्द्रचर्मवसनाय । नरसिंह-निपातनाय । मुनिवन्द्याय । मुनिश्रेष्ठाय । मुनिबृन्दनिषेविताय । दुष्टमृत्यवे । अदुष्टेहाय । मृत्युघ्ने । मृत्युपूजिताय । अव्यक्ताय । अम्बुजजन्मादिकोटिकोटिसुपूजिताय । लिङ्गमूर्तये नमः ६२०

अलिङ्गात्मने नमः । लिङ्गात्मने । लिङ्गविग्रहाय । यजुर्मूर्तये । साममूर्तये । ऋङ्मूर्तये । मूर्तिवर्जिताय । विश्वेशाय । गजचर्मैकचेलाञ्चितकटीतटाय । पावनान्तेवसद्योगिजनसार्थ-सुधाकराय । अनन्तसोमसूर्याग्निमण्डलप्रतिमप्रभाय । चिन्ता-शोकप्रशमनाय । सर्वविद्याविशारदाय । भक्तविज्ञप्तिसन्धात्रे । कर्त्रे । गिरिवराकृतये । ज्ञानप्रदाय । मनोवासाय । क्षेम्याय । मोहविनाशनाय नमः ६४०

सुरोत्तमाय नमः । चित्रभानवे । सदावैभवतत्पराय । सुहृदग्रेसराय । सिद्धज्ञानमुद्राय । गणाधिपाय । आगमाय । चर्मवसनाय । वाञ्छितार्थफलप्रदाय । अन्तर्हिताय । असमानाय । देवसिंहासनाधिपाय । विवादहन्त्रे । सर्वात्मने । कालाय । कालविवर्जिताय । विश्वातीताय । विश्वकर्त्रे । विश्वेशाय । विश्वकारणाय नमः । ६६०

योगिध्येयाय नमः । योगनिष्ठाय । योगात्मने । योगवित्तमाय । ओङ्काररूपाय । भगवते । बिन्दुनादमयाय शिवाय । चतुर्मुखादिसंस्तुत्याय । चतुर्वर्गफलप्रदाय । सह्याचलगुहावासिने । साक्षान्मोक्षरसामृताय । दक्षाध्वर-समुच्छेत्त्रे । पक्षपातविवर्जिताय । ओङ्कारवाचकाय । शम्भवे । शङ्कराय । शशिशीतलाय । पङ्कजासनसंसेव्याय । किङ्करामर-वत्सलाय । नतदौर्भाग्यतूलाग्नये नमः । ६८०

कृतकौतुकमङ्गलाय नमः । त्रिलोकमोहनाय । श्रीमत्त्रि-पुण्ड्राङ्कितमस्तकाय । क्रौञ्चारिजनकाय । श्रीमद्गणनाथ-सुतान्विताय । अद्भुतानन्तवरदाय । अपरिच्छिन्नात्मवैभवाय । इष्टापूर्तप्रियाय । शर्वाय । एकवीराय । प्रियंवदाय । ऊहापोहविनिर्मुक्ताय । ओंकारेश्वरपूजिताय । रुद्राक्षवक्षसे । रुद्राक्षरूपाय । रुद्राक्षपक्षकाय । भुजगेन्द्रलसत्कण्ठाय । भुजङ्गाभरणप्रियाय । कल्याणरूपाय । कल्याणाय नमः । ७००

कल्याणगुणसंश्रयाय नमः । सुन्दरभ्रुवे । सुनयनाय । सुललाटाय । सुकन्धराय । विद्वज्जनाश्रयाय । विद्वज्जनस्तव्यपराक्रमाय । विनीतवत्सलाय । नीतिस्वरूपाय । नीतिसंश्रयाय । अतिरागिणे । वीतरागिणे । रागहेतवे ।

विरागविदे । रागघ्ने । रागशमनाय । रागदाय । रागिरागविदे । मनोन्मनाय । मनोरूपाय नमः । ७२०

बलप्रमथनाय नमः । बलाय । विद्याकराय । महाविद्याय । विद्याविद्याविशारदाय । वसन्तकृते । वसन्तात्मने । वसन्तेशाय । वसन्तदाय । प्रावृट्कृते । प्रावृडाकाराय । प्रावृट्कालप्रवर्तकाय । शरन्नाथाय । शरत्कालनाशकाय । शरदाश्रयाय । कुन्दमन्दार-पुष्पौघलसद्वायुनिषेविताय । दिव्यदेहप्रभाकूटसन्दीपित-दिगन्तराय । देवासुरगुरुस्तव्याय । देवासुरनमस्कृताय । वामाङ्गभागविलसच्छ्यामलावीक्षणप्रियाय नमः । ७४०

कीर्त्याधाराय नमः । कीर्तिकराय । कीर्तिहेतवे । अहेतुकाय । शरणागतदीनार्तपरित्राणपरायणाय । महाप्रेतासनासीनाय । जितसर्वपितामहाय । मुक्तादामपरीताङ्गाय । नानागान-विशारदाय । विष्णुब्रह्मादिवन्द्याङ्घ्रये । नानादेशैकनायकाय । धीरोदात्ताय । महाधीराय । धैर्यदाय । धैर्यवर्धकाय । विज्ञानमयाय । आनन्दमयाय । प्राणमयाय । अन्नदाय । भवाब्धितरणोपायाय नमः । ७६०

कवये नमः । दुःस्वप्ननाशनाय । गौरीविलाससदनाय । पिशाचानुचरावृताय । दक्षिणाप्रेमसन्तुष्टाय । दारिद्र्यबड-वानलाय । अद्भुतानान्तसंग्रामाय । ढक्कावादनतत्पराय । प्राच्यात्मने । दक्षिणाकाराय । प्रतीच्यात्मने । उत्तराकृतये । ऊर्ध्वाद्यन्यदिगाकाराय । मर्मज्ञाय । सर्वशिक्षकाय । युगावहाय । युगाधीशाय । युगात्मने । युगनायकाय । जङ्गमाय नमः । ७८०

स्थावराकाराय नमः । कैलासशिखरप्रियाय । हस्तराजत् पुण्डरीकाय । पुण्डरीकनिभेक्षणाय । लीलाविडम्बितवपुषे ।

भक्तमानसमण्डिताय । बृन्दारकप्रियतमाय। बृन्दारकवरार्चिताय। नानाविधानेकरत्नलसत्कुण्डलमण्डिताय । निःसीममहिम्ने । नित्यलीलाविग्रहरूपधृते । चन्दनद्रवदिग्धाङ्गाय। चाम्पेयकुसुमार्चिताय । समस्तभक्तसुखदाय । परमाणवे। महाह्रदाय। अलौकिकाय। दुष्प्रधर्षाय। कपिलाय। कालकन्धराय नमः। ८००

कर्पूरगौराय नमः। कुशलाय। सत्यसन्धाय। जितेन्द्रियाय। शाश्वतैश्वर्यविभवाय । पोषकाय । सुसमाहिताय । महर्षिनाथिताय । ब्रह्मयोनये। सर्वोत्तमोत्तमाय। भूमिभारार्तिसंहर्त्रे। षडूर्मिरहिताय । मृडाय । त्रिविष्टपेश्वराय । सर्वहृदयाम्बुजमध्यगाय । सहस्रदलपद्मस्थाय । सर्ववर्णोपशोभिताय । पुण्यमूर्तये। पुण्यलभ्याय। पुण्यश्रवणकीर्तनाय नमः। ८२०

सूर्यमण्डलमध्यस्थाय नमः । चन्द्रमण्डलमध्यगाय । सद्भक्तध्याननिगलाय । शरणागतपालकाय । श्वेतातपत्ररुचिराय। श्वेतचामरवीजिताय । सर्वावयवसंपूर्णाय । सर्वलक्षणलक्षिताय। सर्वमङ्गलमाङ्गल्याय। सर्वकारणकारणाय। आमोदाय । मोदजनकाय । सर्पराजोत्तरीयकाय । कपालिने । कोविदाय । सिद्धकान्तिसंवलिताननाय । सर्वसद्गुरुसंसेव्याय । दिव्यचन्दनचर्चिताय । विलासिनीकृतोल्लासाय । इच्छाशक्तिनिषेविताय नमः। ८४०

अनन्तानन्दसुखदाय नमः । नन्दनाय । श्रीनिकेतनाय । अमृताब्धिकृतावासाय। नित्यक्लीबाय। निरामयाय। अनपायाय। अनन्तदृष्टये। अप्रमेयाय। अजराय। अमराय। तमोमोहप्रतिहतये। अप्रतर्क्याय । अमृताय । अक्षराय । अमोघबुद्धये । आधाराय ।

आधाराधेयवर्जिताय। ईषणात्रयनिर्मुक्ताय। इहामुत्रविवर्जिताय नमः। ८६०

ऋग्यजुःसामनयनाय नमः । बुद्धिसिद्धिसमृद्धिदाय । औदार्यनिधये । आपूर्णाय । ऐहिकामुष्मिकप्रदाय । शुद्धसन्मात्रसंविद्धीस्वरूपसुखविग्रहाय । दर्शनप्रथमाभासाय । दृष्टिदृश्यविवर्जिताय । अग्रगण्याय । अचिन्त्यरूपाय । कलिकल्मषनाशनाय। विमर्शरूपाय। विमलाय। नित्यरूपाय। निराश्रयाय । नित्यशुद्धाय । नित्यबुद्धाय । नित्यमुक्ताय । अपराकृताय। मैत्र्यादि वासनालभ्याय नमः। ८८०

महाप्रलयसंस्थिताय नमः । महाकैलासनिलयाय । प्रज्ञानघनविग्रहाय । श्रीमते । व्याघ्रपुरावासाय । भुक्तिमुक्तिप्रदायकाय। जगद्योनये। जगत्साक्षिणे। जगदीशाय। जगन्मयाय। जपाय। जपपराय। जप्याय। विद्यासिंहासनप्रभवे। तत्त्वानां प्रकृतये । तत्वाय । तत्वंपदनिरूपिताय । दिक्कालाद्यनवच्छिन्नाय । सहजानन्दसागराय । प्रकृतये नमः । ९००

प्राकृतातीताय नमः । विज्ञानैकरसाकृतये । निःशङ्कमतिदूरस्थाय । चैत्यचेतनचिन्तनाय । तारकाणां हृदन्तस्थाय । तारकाय । तारकान्तकाय । ध्यानैकप्रकटाय । ध्येयाय। ध्यानिने। ध्यानविभूषणाय। परस्मै व्योम्ने। परस्मै धाम्ने। परमात्मने । परस्मै पदाय । पूर्णानन्दाय । सदानन्दाय । नादमध्यप्रतिष्ठिताय। प्रमाविपर्ययातीताय। प्रणताज्ञाननाशकाय नमः। ९२०

बाणार्चिताङ्घ्रये नमः । बहुदाय । बालकेलिकुतूहलिने । ब्रह्मरूपिणे । ब्रह्मपदाय । ब्रह्मविदे । ब्राह्मणप्रियाय । भ्रूक्षेपदत्तलक्ष्मीकाय । भ्रूमध्यध्यानलक्षिताय । यशस्कराय । रत्नगर्भाय । महाराज्यसुखप्रदाय । शब्दब्रह्मणे । शमप्राप्याय । लाभकृते । लोकविश्रुताय । शास्त्रे । शिवाद्रिनिलयाय । शरण्याय । याजकप्रियाय नमः । ९४०

संसारवैद्याय नमः । सर्वज्ञाय । सभेषजविभेषजाय । मनोवचोभिरग्राह्याय । पञ्चकोशविलक्षणाय । अवस्थात्रयनिर्मुक्ताय । अवस्थासाक्षितुर्यकाय । पञ्चभूतादिदूरस्थाय । प्रत्यगेकरसाय । अव्ययाय । षट्चक्रान्तर्गतोल्लासिने । षड्विकारविवर्जिताय । विज्ञानघनसंपूर्णाय । वीणावादनतत्पराय । नीहाराकारगौराङ्गाय । महालावण्यवारिधये । पराभिचारशमनाय । षडध्वोपरिसंस्थिताय । सुषुम्नामार्गसंचारिणे । बिसतन्तुनिभाकृतये नमः । ९६०

पिनाकिने नमः । लिङ्गरूपश्रिये । मङ्गलावयवोज्ज्वलाय । क्षेत्राधिपाय । सुसंवेद्याय । श्रीप्रदाय । विभवप्रदाय । सर्ववश्यकराय । सर्वदोषघ्ने । पुत्रपौत्रदाय । तैलदीपप्रियाय । तैलपक्वान्नप्रीतमानसाय । तैलाभिषेकसन्तुष्टाय । तिलभक्षणतत्पराय । आपादकणिकामुक्ताभूषाशतमनोहराय । शाणोल्लीढमणिश्रेणीरम्याङ्घ्रिनखमण्डलाय । मणिमञ्जीरकिरणकिञ्जल्कितपदाम्बुजाय । अपस्मारोपरिन्यस्तसव्यपादसरोरुहाय । कन्दर्पतूणाभजङ्घाय । गुल्फोदञ्चितनूपुराय नमः । ९८०

करिहस्तोपमेयोरवे नमः । आदर्शोज्ज्वलजानुभृते । विशंकटकटिन्यस्तवाचालमणिमेखलाय । आवर्तनाभिरोमालि-

वलिमत्पल्लवोदराय । मुक्ताहारलसत्तुङ्गविपुलोरस्करञ्जिताय । वीरासनसमासीनाय । वीणापुस्तोल्लसत्कराय । अक्षमालालसत्पणये । चिन्मुद्रितकराम्बुजाय । माणिक्यकङ्कणोल्लासिकराम्बु विराजिताय । अनर्घरत्नग्रैवेयविलसत्कम्बुकन्धराय । अनाकलितसादृश्यचिबुकश्रीविराजिताय । मुग्धस्मितपरीपाकप्रकाशितरदाङ्कुराय । चारुचाम्पेयपुष्पाभनासिकापुटरञ्जिताय । वरवज्रशिलादर्शपरिभाविकपोलभुवे । कर्णद्वयोल्लसद्दिव्यमणिकुण्डलमण्डिताय । करुणालहरीपूर्णकर्णान्तायतलोचनाय । अर्धचन्द्राभनिटिलपाटीरतिलकोज्ज्वलाय । चारुचामीकराकारजटाचर्चितचन्दनाय । ओं कैलासशिखरस्पर्धि कमनीयनिजाकृतये नमः । १०००

॥ इति श्रीदक्षिणामूर्तिसहस्र नामावलिः ॥

---

# श्रीमेधादक्षिणामूर्तिसहस्रनामावलिः

## (मन्त्रार्णाद्याक्षरघटिता)

(चिदम्बररहस्ये श्रीचिदम्बरनटेश्वर(मन्त्र)तन्त्र संहितायां मेधादक्षिणामूर्तिकल्पे नारदाय ब्रह्मणा उपदिष्टा)

मेधादक्षिणवक्त्रमूर्तिमनुराट् - वर्णाष्ट साहस्रके
श्रीनाम्नां प्रणवाष्टकं प्रथमतो मूर्त्यैकनिर्मश्चिता ।

यो वर्णः स्वरभाक्च पञ्चदशधा साहस्रकृत्तिर्यथा
वर्णैर्मूलमनोः गुरोः सुमदलैः अभ्यर्चने शस्यते ॥

ओं परस्मै नमः । परानन्दाय । परार्थाय । परात्पराय । मन्त्राय । परातीताय । गुरवे । गुणाश्रिताय । नकारार्थाय ।

नकारज्ञाय । नरनारायणप्रियाय । नगचापाय । नगाग्रस्थाय । नाथाय । नटनायकाय । नटेशाय । नादमूलान्ताय । नादात्मने । नागभूषणाय । नागोपवीतिने नमः । २०

नासाग्र्याय नमः । नव्यहव्याग्रभोजनाय । नदीधराय । नवतनवे । नवतत्त्वाधिनायकाय । नक्षत्रमालिने । नन्दीशाय । नामपारायणप्रियाय । नग्नवेषाय । नवरसाय । नादार्थाय । नमनप्रियाय । नवग्रहेशाय । नन्द्यग्राय । नवान्ताय । नन्दिवाहनाय । नरूपाय । नगुणाय । नान्ताय । न भाष्याय नमः ४०

नविनाशनाय नमः । नदोषाय । नागकौपीनाय । नागाङ्गुलिविभूषणाय । नागहाराय । नागकेशाय । नागकेयूरकङ्कणाय । नभोमयाय । नभोऽग्रान्ताय । नभस्स्थाय । नयनत्रयाय । नभोऽन्तरिक्षभूम्यङ्गाय । नविकाराय । नभावनाय । ननिद्राय । नयनादृश्याय । नत्वाय । नारायणप्रियाय । मोक्षज्ञाय । मोक्षफलदाय नमः ६०

मोक्षार्थाय नमः । मोक्षसाधनाय । मोक्षदाय । मोक्षनाथाय । मोक्षसाम्राज्यभोगदाय । मोक्षग्रहाय । मोक्षवराय । मोक्षमन्दिर-दीपकाय । मोहनाय । मोहनाधीशाय । मौल्यग्रेन्दुकलाधराय । मोचिताघाय । मोहनाशाय । मोहशोकार्तिभञ्जनाय । मोहतापसुधावर्षिणे । मोहरोगमहौषधये । मोहवृक्षकुठारिणे । मोहारण्यदवानलाय । मोहान्धकार-मार्ताण्डाय । मोहक्रोधादि-संहराय नमः । ८०

मोहशैलमहावज्रिणे नमः । मोहव्यालगरुडाय । मोहवारण-पञ्चास्याय । मोहतूलहुताशनाय । मोहबुद्धिविदूरस्थाय । मोहात्मजननिन्दकाय । मोहिनीदोषरहिताय । मोहिनी-

विष्णुवल्लभाय। मोहिनीलालनाप्रीताय। मोहिनीप्रियवन्दिताय। मोहिनीपूजितपदाय । मौक्तिकादिविभूषणाय । मौक्तिक-श्रीमहादिव्यमालिकाभरणोज्ज्वलाय। मौनार्थाय। मौनमुद्राङ्काय। मौनीशाय । मौनचिद्घनाय । मौनचित्ताय । मौनहार्दाय । मौनिमण्डलमध्यगाय नमः १००

मौनिहृत्कूटनिलयाय नमः । मौनचित्तसभानटाय । मौनाङ्गना-पतये। मौनमहार्णवसुधाकराय। मौनिहृत्पङ्कजमधवे। मौनतत्वार्थबोधकाय । मौनव्याख्यानचिन्मुद्राकराब्जाय । मौनतत्पराय । भगवते । भवरोगघ्नाय । भवाय । भद्राय । भवोद्भवाय। भवौषधाय। भयापघ्नाय। भस्मोद्धूलितविग्रहाय। भावज्ञाय । भावनातीताय । भारतीश्वरवन्दिताय । भस्मरुद्राक्षभूषाढ्याय नमः। १२०

भावाभावविवर्जिताय नमः । भाषार्थाय । भसिताय । भानवे। भर्गाय। भवविमोचनाय। भास्वराय। भरताय। भासाय। भाष्याय । भागवतस्तुताय । भक्तप्रियाय । भक्तवश्याय । भक्तसंस्तुतवैभवाय । भक्तचित्तार्णवेन्दवे । भक्तसायुज्य-दायकाय । भाग्यपद्मदिनाधीशाय । भास्करायुतसुप्रभाय । भगमालिने। भस्माङ्गाय नमः। १४०

भक्तभव्याय नमः। भयङ्कराय। भयाभयाय। भयध्वंसिने। भवपातकनाशकाय । भववृक्षकुठारिणे । भवतूलधनञ्जयाय । भवान्तकाय । भवातीताय । भवार्तिघ्नाय । भास्कराय । भक्ष्याशनाय । भद्रमूर्तये । भैरवाय । भद्रदायकाय । भक्तार्तिभञ्जनाय। भक्तवत्सलाय। भक्तभद्रदाय। गणेशाय। गणराजे नमः। १६०

गण्याय नमः । गम्भीराय । गगनाश्रयाय । गर्वघ्नाय । गर्विताय । गङ्गाधराय । गरलकन्धराय । गणेशजनकाय । गार्ग्याय । गभस्तिने । गवां पत्ये । गांगेयसुप्रियाय । गङ्गावन्दिताय । गरलाशनाय । गौरीपतये । गोक्षीरसुप्रीताय । गव्यमज्जनाय । गव्याभिषेकसन्तुष्टाय । गजारये । गजचर्मधृते नमः । १८०

गव्यामृतान्नसुप्रीताय नमः । गव्याज्याहुतिभोजनाय । गवयशृङ्गाभिषेकप्रियाय । गगनसन्निभाय । गाणापत्यजन-प्रीताय । गाणापत्यादिसन्मताय । गगनादिपृथिव्यन्तभूतात्मने । गानलोलुपाय । गाढमालिङ्गनानन्द गौरीसम्बोधदेशिकाय । गमनाय । गह्वरेष्ठाय । गालवाय । गतिप्रदाय । गन्धघ्नाय । गन्धरहिताय । गन्धाय । गन्धर्वसंस्तुताय । गन्धपुष्पार्चनप्रीताय । गन्धलिप्तकलेबराय । गन्धाभिषेकसुप्रीताय नमः । २००

गन्धमाल्य-विभूषिताय नमः । गाङ्गेयजनकाय । गद्याय । गण्डमण्डलशोभिताय । गङ्गादिस्नानफलदाय । गजारूढाय । गदाधराय । गणेशस्कन्दनन्दीशविष्णुब्रह्मेन्द्रपूजिताय । वरदाय । वामदेवाय । वामनाय । वसुदायकाय । वाणीसंबोधनगुरवे । वरिष्ठाय । वामसेविताय । वटवे । वरूथिने । वर्मिणे । वटवासिने । वाक्पतये नमः । २२०

वातरोगहराय नमः । वाग्मिने । वाचस्पतिसमर्चिताय । वाचालकाय । वटच्छायासंश्रयाय । वकुलप्रियाय । वर्याय । वराय । वरानन्दाय । वरारोहाय । वरप्रभवे । वटारण्यपतये । वासिने । वरज्ञानविशारदाय । वालिवैरिप्रियाय । वात्याय । वास्तव्याय । वास्तुपाय । वदाय । वदेशाय (वदावदेशाय) नमः । २४०

वाचकान्तस्थाय नमः । वसिष्ठादितपोनिधये । वारिजातसुमप्रख्याय । वामदेवमुनिप्रियाय । वनजाक्षार्चितपदाय। वनबिल्वजटाधराय । वनजांघ्रये । वरोत्कृष्टाय । वरोत्साहाय । वरेश्वराय । वराश्चर्याय । वरपतये । वज्रिणे । वज्रेशवन्दिताय । वञ्जुलाय । वञ्चककराय । वशिने । वन्ध्यादिदायकाय । तेतिवर्णात्मकाय । तेत्यक्षरात्मसुसंज्ञकाय नमः । २६०

तेत्यर्ण श्रवणप्रीताय नमः । तेत्यक्षरसमाश्रिताय । तेतीत्यक्षरसंयुक्ताय । तेत्यक्षरमनुप्रियाय । तेतिसप्तार्णमन्त्रस्थाय। तेतिवर्णान्तसंस्थिताय । तेतिमन्त्रनटारंभाय । तेतिमन्त्राग्रसंश्रयाय । तेदिव्यशब्दसंक्लृप्ताय। तेतिशब्दान्तरात्मकाय। तेषु तेषु च कालज्ञाय। तेषु तेषु गुणज्ञाय। तेषु तेषु गुणानन्दाय। तेषु तेषु स्तवांकिताय। तेषु तेषु मनोऽभिज्ञाय। तेषु तेषु वराधिकाय। तेषु तेषु सुपुण्यज्ञाय। तेषु तेषु स्वधर्मदाय। तैलप्रियाय। तैलदीपप्रियाय नमः। २८०

तैलाङ्गमज्जनाय । तैलाभिषिक्ताय । तैलान्नसुप्रियाय । तैलशोभनाय। तैलाज्यपानसन्तुष्टाय। तैलवासाय। तिलान्नभुजे। तैरोभावानुग्रहेशाय । तैरोभाव-गुणात्मकाय । तोरणालङ्कृतानन्दाय । तोरणांकितमन्दिराय । तोरणद्वार संस्थानाय । तोमराद्यायुधान्विताय। तोताद्रीशादिसंस्तुत्याय। तौलसूक्ष्मान्तरात्मकाय। तौर्ण्यीस्तुतिज्ञाय। तौर्ण्यीवत्स्तव-श्रावमनोहराय। तौणीरपुष्पविशिखसन्धानमदनान्तकाय। तं भक्तजनसुप्रीताय। तं भक्तसुमनोहराय नमः। ३००

तं पदध्यानसुलभाय । तं पदाध्यानदुर्लभाय नमः । तत्वार्थाय। तत्वमूलज्ञाय। तत्वाग्राय। तत्वबोधिताय। तत्पराय।

तत्क्षणे भक्तसर्वाभीष्टफलप्रदाय । दक्षिणाय । दक्षिणामूर्तये । दारपुत्रादिदायकाय । दात्रे । दमनसन्तुष्टाय । दयालवे । दानवान्तकाय । दधीचिमुनिसुप्रीताय । दक्षाध्वरविनाशकाय । दधिप्रियाय । दयासिन्धवे । दाक्षायण्यम्बिकापतये नमः । ३२०

दध्यन्नासक्तहृदयाय नमः । दान्ताय । दाशरथिप्रियाय । दध्नाऽभिषिक्ताय । दामाग्र्याय । दन्तिचर्मसुवस्त्रभृते । दामप्रियाय । दशभुजाय । दशार्धमुखपङ्कजाय । दशायुधवरधराय । दशदिक्पालसेविताय । दर्पघ्नाय । दर्भशयनाय । दर्पणोदर-फालकाय । दर्भासनाय । दयामूर्तये । दहराकाशमध्यगाय । दामशोभितवक्षोभृते । दाडिमीफलसुप्रियाय । दशदिग्दशना-मार्च्याय नमः । ३४०

दशवक्त्रतपः प्रियाय नमः । दासप्रियाय । दासपूज्याय । दासादासनिधिप्रदाय । दानरूपाय । दानपुण्याय । दातॄणां फलदायकाय । दलपद्मासनारूढाय । दलत्रयतरुस्थिताय । दलत्रयश्री वृक्षाग्र्याय । दलबिल्वार्चनप्रियाय । दलदूर्वाधराय । दार्ढ्याय । दयाहृदयमन्दिराय । दहनोद्भासिफालाक्षाय । दहनत्रिपुरान्तकाय । दयान्दोलितपूर्णाक्षाय । दक्षिणाभि-मुखान्विताय । क्षमारूपाय । क्षमानन्दाय नमः । ३६०

क्षमाचित्ताय नमः । क्षमानिधये । क्षमार्णवाय । क्षमापूर्णाय । क्षम्याय । क्षमणनाशकाय । क्षणे क्षणे कृपाचित्ताय । क्षामक्षोभविवर्जिताय । क्षाराद्यब्धिपसंस्तुताय । क्षारादिरस-वर्जिताय । क्षणिकार्चनसुप्रीताय । क्षणिकादिमहोरगाय । क्षणिक-स्तवसुप्रीताय । क्षणार्धेष्टवरप्रदाय । क्षामघ्नाय । क्षामरहिताय । क्षामदेशसुभिक्षदाय । क्षात्रघ्नाय । क्षात्रशत्रुघ्नाय । क्षात्र संकुल नाशनाय नमः । ३८०

क्षिप्रेशाय नमः । क्षिप्रसन्धात्रे । क्षीणपुण्यफलाधिकाय । क्षीणचन्द्र-जटाचूडाय । क्षीणायुरभिवृद्धिदाय । क्षिप्रविघ्नेश-जनकाय । क्षित्यन्तरसमाश्रिताय । क्षित्यादिकुटिलाप्रान्त-मन्त्रसिंहासन-स्थिताय । क्षुद्रप्रयोगसंहर्त्रे । क्षुद्रवृक्षकुठारिकाय । क्षुद्रा-चलमहावज्रिणे । क्षुद्रकर्मजनान्तकाय । क्षुम्बीजश्रवणा-नन्दाय । क्षुंकारहृदयालयाय । क्षुं क्षूं स्मरणसान्निध्याय । क्षुं क्षुं क्षूं मन्त्रनायकाय । क्षेमालयाय । क्षेमकराय । क्षेमारोग्यफलप्रदाय । क्षेमसंपत्प्रदात्रे नमः । ४००

क्षेत्रपालसमर्चिताय नमः । क्षेत्रज्ञाय । क्षेत्रफलदाय । क्षेत्राक्षेत्रसुपालकाय । क्षौद्रसाराभिषिक्ताङ्गाय । क्षौद्रसार-मनोहराय । क्षौं बीजाय । क्षयगुल्मादि सर्वरोगविभञ्जनाय । णकाररूपाय । णार्थार्थाय । णकाराक्षाय । णकारविदे । णकारभृङ्गनिलयाय । नानावर्गफलप्रदाय । णकार-बिन्दुमध्यस्थाय । नारदादिमुनिस्तुताय । णाकारान्तादि-मध्यस्थाय । नानानिगमसारविदे । णकाराश्वमहावेगाय । नवनीतामृतप्रियाय नमः । ४२०

णकारास्याय नमः । णाङ्कजिह्वाय । णफालतिल-कोज्ज्वलाय । णकारवचनानन्दाय । नानाश्चर्यसुमण्टपाय । णकार-निगमार्थज्ञाय । नागभूषणभूषिताय । णकारागमतत्त्वज्ञाय । नानासुरमुनिस्तुताय । णादशाक्षरसंयुक्ताय । नानागणसमा-वृताय । नवान्ताक्षरनादान्ताय । नवबिल्वसदाप्रियाय । नमादिपञ्चार्ण-मयाय । नवसिद्धसमर्चिताय । नवोनवेत्यायुष्य-दाय । नवशक्त्युपदेशकाय । नागेन्द्राङ्गुलिवलयिने । नागवल्लीदल-प्रियाय । नामसहस्रसुप्रीताय नमः । ४४०

नानानन्तसुसंज्ञिताय नमः । नानाधाधारवान्तस्स्थाय । नानाशब्दान्तरात्मकाय । नानाफलरसप्रीताय । नालिकेरामृतप्रियाय । नानाविकाररहिताय । नानालङ्कार शोभिताय । नारङ्गसुफलानन्दाय । नारायणविधिस्तुताय । नानानरकसंमग्नसमुद्धरणपण्डिताय । नादियान्ताक्षरमनवे । नादिपञ्चाक्षरात्मकाय । नमकैश्चमकैः स्तुत्याय । नाद्यन्ताय । नयनत्रयाय । नतृप्ताय । नित्यसन्तृप्ताय । नाकारनयनद्युतये । मूर्ताय । मूर्तीश्वराय नमः । ४६०

मूर्तये नमः । मूर्तिसादाख्यकारणाय । मूर्तिमूलात्मकाय । मूर्तिभेदाय । मूर्तिद्वयात्मकाय । मूर्तित्रयाय । मूर्तिवराय । मूर्तिपञ्चस्वरूपधृते । मूर्तिषट्काय । मूर्त्यष्टात्मने । मूर्तभिन्नविनायकाय । मूर्तिद्विपञ्चकतनवे । मूर्त्येकादशात्मकाय । मूर्तिद्वादशपुरीशाय । मूर्तामूर्तान्तरात्मकाय । मूर्तित्रयोदशीपूज्याय । मूर्तिपञ्चदशीमनवे । मूर्तामूर्तद्विभेदाय । मूर्तिषोडशनामधृते । मूर्त्यात्मपञ्चविंशाङ्काय नमः । ४८०

मूर्तिषट्त्रिंशदुज्ज्वलाय नमः । मूर्त्यष्टाष्टकरूपिणे । मूर्तिरुद्रशताग्रगाय । मूर्तिसाहस्ररुद्रेशाय । मूर्तिकोट्यधिकावृताय । मूर्त्यन्ताय । मूर्तिमध्यस्थाय । मूर्त्यग्र्याय । मूर्तिदेशिकाय । मूर्त्याद्यन्तादिरहिताय । मूर्त्यानन्दैकचिन्मयाय । मूर्तिब्रह्मणे । मूर्तिबेराय । मूषिकारूढसुप्रियाय । मूलमूर्तये । मूलगुरवे । मूलशक्तये । मूल्यकाय । मूढपापविनिर्मुक्ताय । मूकदोषविभञ्जनाय नमः । ५००

मूर्खारिणे नमः । मूलपापघ्नाय । मूलतोऽरिकुलान्तकाय । मूलासुरकुलध्वंसिने । मूर्खदन्तप्रभिन्नकाय । मूलवातादिरोगघ्नाय ।

मूलर्क्षारब्धपापभिदे। मूर्तामूर्तादिसकललिङ्गनिष्कलतत्पराय। एकाक्षराय। एकनाथाय। एकान्ताय। एकमोक्षदाय। एकासनाय। एकपराय। एकार्थाय। एणहस्तकाय। एकमुद्राकराय। एकतत्त्वार्थाङ्कितपुस्तकाय। एषणात्रयदोषघ्नाय। एकतारकमध्यगाय नमः। ५२०

एकदन्तप्रियाय नमः। एकानन्दमोक्षसुखप्रदाय। एकास्याय। एकसन्तुष्टाय। एलादिवसुसुप्रियाय। एकेश्वराय। एकवीराय। एकज्योतिषे। एकधिये। एकाग्रगण्याय। एकाम्राय। एकपदे। एकसिद्धिदाय। एकानेकाय। एकरसाय। एकाङ्गिने। एकसुन्दराय। एकदन्ताय। एकशक्तये। एकचिदे नमः। ५४०

एकवल्लभाय नमः। एकाक्षरज्ञाय। एकाग्राय। एकाक्षरकलात्मकाय। एकप्रभवे। एकविभवे। एकबुद्धये। एकभुजे। एकधीराय। एकशूराय। एकविदे। एकनिश्चलाय। एकनित्याय। एकदृढाय। एकसत्याय। एकजाय। एकाधिपत्यवरदाय। एकसाम्राज्यमोक्षदाय। मेधाप्रदाय। मेरुगर्भाय नमः। ५६०

मेरुस्थाय नमः। मेरुमन्दिराय। मेरुशृङ्गाग्रगाय। मेध्याय। मेधाविने। मेदिनीपतये। मेघश्यामाय। मेघनाथाय। मेघवाहनवन्दिताय। मेषाधिरूढविनुताय। मेषराशीश्वरार्चिताय। म्लेच्छकोपाय। म्लेच्छहराय। म्लेच्छसंपर्कदोषभिदे। म्लेच्छारये। म्लेच्छदहनाय। म्लेच्छसंघविनाशकाय। मेढुष्टमाय। मेरुभुजाय। मेरुवाण्यभिवन्दिताय नमः। ५८०

मेरुपार्श्वाय नमः। मेखलाढ्याय। मेरुगर्वविभेदनाय। मेघांघ्रये। मेधावसनाय। मेधाज्ञानप्रदायकाय। मेधामन्त्रासनारूढाय। मेधाविद्याप्रबोधकाय। मेधाविद्याधिपाय।

मेधामहासारस्वत-प्रदाय। मेषास्यवरदर्पघ्नाय । मेषास्यक्रतु-नाशकाय । मेषास्य चमकस्तोत्रतुष्टाय । मेषाननप्रियाय । मेषास्यजनकाह्लादाय। मेषाननपितृस्तुताय । मेदिनीकान्त-भूतात्मने । मेदिनी-पालनप्रदाय । मेदिन्यब्ध्यन्तसुखदाय । मेदिनीपतिवल्लभाय नमः । ६००

मेदिन्यादित्रिलोकेशाय नमः । मेदिनीवल्लभार्चिताय । मेदिनीखान्तसंपूर्णाय । मेधार्थाय । मेरुवन्दिताय । मेरुकोदण्डगम्भीराय । मेधार्चिषे । मेखलान्विताय । धर्माय । धर्मासनाय । धर्मिणे । धर्मधाम्ने । धराधिपाय । धाराभिषेकसन्तुष्टाय। धराधरपतेः पत्ये। धर्मेष्टाय। धर्मवाहाय। धारणाद्यष्टयोगदाय। धात्रे। धात्रीश्वराय नमः । ६२०

धान्यधनभूषणदायकाय नमः । धर्माध्यक्षाय । धनाध्यक्षाय। धर्मज्ञाय। धर्मपालकाय। धर्मालयाय। धर्मवृत्ताय। धर्मिष्ठाय। धर्मसूचकाय। धनेशमित्राय। धरित्रीदायकाय। धनाय। धातुलिङ्गार्चनप्रीताय । धात्रीशार्धकलेबराय । धन्विने । धनाधिपाय। धारिणे । धाराशङ्खाभिषिक्तकाय । धीप्रज्ञाय । धीरसंपूज्याय नमः । ६४०

धीप्राज्ञाय नमः । धिषणात्मकाय । धीप्रभाय । धीमतये । धियो धिये । धीरभक्तजनप्रियाय । धुत्तरकुसुमप्रीताय । धूपदीपमनोहराय। धूमादिग्रहदोषघ्नाय। धूर्जटये। धूम्रवासभृते। धेनुमुद्राप्रियाय । धेनुवत्सलाय । धेनुवन्दिताय । धैर्यप्रदाय । धैर्यवीर्याय । धैर्धीकृतनटाङ्घ्रिकाय । प्रभवे । प्रभाकराय । प्राज्ञाय नमः । ६६०

प्रभामण्डलमध्यगाय नमः । प्रसिद्धाय । प्रणवाकाराय । प्रयोगार्थाय । प्रचेतसे । प्रमुखाय । प्रणवप्राणाय । प्राणदाय । प्रणवात्मकाय । प्रवीणाय । प्रवराय । प्राच्याय । प्राचीनाय । प्राणवल्लभाय । प्राणात्मने । प्रबलाय । प्राणिने । प्राङ्मुखाय । प्रार्थनाय । प्रजाय नमः । ६८०

प्रजापतये नमः । प्रमाणज्ञाय । प्रकटाय । प्रमथाधिपाय । प्रारम्भाय । प्रमथारूढाय । प्रासादाय । प्राणरक्षकाय । प्रभाकराय । प्रतापिने । प्राज्ञाय । प्रकरणाय । प्रधिये । प्राप्तये । प्राकाम्यसिद्धेशाय । प्रलापज्ञाय । प्रभुप्रभवे । प्रमाथिने । प्रमात्रे । प्रमोदाय नमः । ७००

प्रज्वलाय नमः । प्रसुवे । प्रकोपाय । प्रकृतये । पृथ्व्यै । प्रातः । प्राकृतरक्षणाय । ज्ञानाय । ज्ञानप्रदाय । ज्ञात्रे । ज्ञानिने । ज्ञानविग्रहाय । ज्ञानार्थदाय । ज्ञानरूपिणे । ज्ञानेशाय । ज्ञानपुष्कलाय । ज्ञानानन्दाय । ज्ञानचक्षुषे । ज्ञानधिये । ज्ञानभक्तिदाय नमः । ७२०

ज्ञानार्थाय नमः । ज्ञाननिगमाय । ज्ञानास्याय । ज्ञानसंग्रहाय । ज्ञानसाक्षिणे । ज्ञानपुण्याय । ज्ञानाग्राय । ज्ञानसुन्दराय । ज्ञानाधिकाय । ज्ञानमुद्राय । ज्ञानज्ञाय । ज्ञानकौतुकाय । ज्ञानपूर्णाय । ज्ञाननिधये । ज्ञानकृते । ज्ञानमन्दिराय । ज्ञानमन्त्राय । ज्ञानमयाय । ज्ञातृज्ञानविवर्धकाय । ज्ञानामृताय नमः । ७४०

ज्ञानदीपाय नमः । ज्ञानविदे । ज्ञानविद्रुमाय । ज्ञानपुष्पाय । ज्ञानगन्धाय । ज्ञानविज्ञानमङ्गलाय । ज्ञानाचलाय । ज्ञानभानवे । ज्ञानाद्रये । ज्ञानसंभ्रमाय । ज्ञानभुवे । ज्ञानसंपन्नाय । ज्ञानेच्छाय ।

ज्ञानसागराय । ज्ञानाम्बराय । ज्ञानभावाय । ज्ञानाज्ञान-प्रबोधकाय । प्रत्येकाय । प्रथमारम्भाय । प्रजृम्भाय नमः । ७६०

प्रकृतीपतये नमः । प्रतिपन्मुखदर्शान्ततिथिराश्यृक्ष पूजिताय । प्रार्थनाफलसंपूर्णाय । प्रार्थितार्थफलप्रदाय । प्रद्युम्नाय । प्रभवाद्यब्दवन्दिताय । प्रमथप्रभवे । प्रमथबृन्दविनुताय । प्रमथबृन्दशोभिताय । प्रमथबृन्दसंमुखाय । प्रमथबृन्दमध्यगाय । प्रमथार्चितयुग्मांघ्रये । प्रमथस्तुतवैभवाय । प्रमथस्तुतिसन्तृप्ताय । प्रमथानन्दघोषिताय । प्रमथद्वारगर्भान्तप्रमथेशानपालिताय । प्रमथबृन्दसंप्रीताय । प्रमथाधिष्ठितालयाय । प्रधानपुरुषाकाराय । प्रधानपुरु षार्थदाय नमः । ७८०

प्रधानपुरुषाध्यक्षाय नमः । प्रधानपुरुषप्रियाय । प्रधानवनितार्धाङ्गाय । प्रत्येकं पौरुषप्रदाय । प्रधानलिङ्गमूलस्थाय । प्रधानपरमेश्वराय । प्रधानब्रह्मभूतात्मने । प्रधानब्रह्मदेशिकाय । प्रधानब्रह्मतत्त्वार्थाय । प्रधानब्रह्मतत्पराय । प्रधानब्रह्मतत्वज्ञाय । प्रधानब्रह्मचर्यभृते । प्रधानब्रह्मरन्ध्रान्ताय । प्रधानब्रह्मपीठकाय । प्रधानलिङ्गसंभूताय । प्रथमावरणाश्रिताय । प्रथमावरणे याम्यदिङ्मुखाय । प्रकटाद्भुताय । प्रज्वालाग्निप्रतीकाशाय । प्रज्वलार्कायुतप्रभाय नमः । ८००

प्रभेन्दुकोटिसदृशाय नमः । प्रतिवक्त्रं त्रिलोचनाय । प्रयासभक्तरहिताय । प्रयासार्थलघुप्रदाय । प्रयागाद्यखिल-सरित्स्नानपुण्यफलप्रदाय । प्रभावसंपद्विभवप्रदाय । प्रारब्धनाशनाय । यथार्थाय । यजमानार्थाय । यज्ञभुजे । यज्ञसाधनाय । यज्ञकर्त्रे । यज्ञभर्त्रे । यज्ञेशाय । यज्ञभोजनाय । यशस्कराय । यशस्विने । यज्ञेष्टाय । यज्ञनाशनाय । याज्ञवल्क्यमुनिप्रीताय नमः । ८२०

यज्ञकोटिफलप्रदाय नमः। यज्ञोपवीतिने। यज्ञेशवन्दिताय। यशःप्रदाय। याजुषाय। याजुषाधीशाय। यजुर्वेदमनुप्रियाय। यमान्तकाय। यमभयध्वंसिने। याम्यमुखोज्ज्वलाय। यमुनालीजटाजूटाय। यमानुजसमर्चिताय। यन्त्राय। यन्त्रालयाय। यन्त्रिणे। यन्त्रमन्त्राधिनायकाय। यतीश्वराय। यतिप्रीताय। यवान्नप्रीतमानसाय। यथार्थभक्तसुलभाय नमः। ८४०

यथार्थफलदायकाय नमः। यथार्थजनसन्तुष्टाय। यथार्थपरमेश्वराय। यानाश्वगजसन्दात्रे। यातनादुःखनाशनाय। याचनाय। याचकार्थाय। याचिताय। याचितार्थदाय। याचकार्थातिसन्तुष्टाय। यजुस्साममनुप्रियाय। यामायामादि-संपूज्याय। यामिनीपूजकेष्टदाय। यक्षेश्वराय। यक्षराजप्रियाय। यक्षेशवन्दिताय। यक्षराक्षसपैशाच-ब्रह्मरक्षोनिकृन्तनाय। छन्दोमयाय। छन्दोविदे। छन्दज्ञाय नमः। ८६०

छन्दसां पत्ये नमः। छन्दस्साराय। छन्दोभुवे। छन्दसां भेदबोधकाय। छन्दस्तत्वार्थनिलयाय। छन्दःकिङ्किणिमालिकाय। छन्नवीराङ्किताय। छत्रचामरादिपरीवृताय। छत्रप्रदाय। छत्रधराय। छत्रैकविभवप्रदाय। छत्रदानप्रियाय। छत्रव्यजनादि सुपूजिताय। छायापतिसहस्राभाय। छायावल्लभपूजिताय। छायादेवी स्तुतानन्दाय। छायानन्दनवन्दिताय। छायावृक्षच्छिदोऽघघ्नाय। छायानाथद्युतिप्रदाय। छायाबिल्वद्रुमूलस्थाय नमः। ८८०

छायारण्यान्तरगृहाय नमः। छायादलोत्पन्नशीताय। छायामारुतसौख्यदाय। छायापातकसंहर्त्रे। छायादोषनिवारणाय। छायापश्वकपापघ्नाय। छायासुतकृतार्चनाय। छायापति-सुतार्तिघ्नाय। छिन्नभिदे। छिन्नसंशयाय। छिन्नाभिन्नाय।

छिदार्तिघ्नाय । छिदौघाय । छिन्नकोपनाय । छिन्नकालाय । छिन्नकलाय । छिन्नमस्तावरप्रदाय । छिन्नक्ष्वेलाय । छिन्नगूढाय । छेदितासुरकाननाय नमः । ९००

छेदितारिकुलग्रामाय । छिन्नमृत्युभयङ्कराय । छिन्नदक्षक्रतवे । छिन्नपत्रवर्यार्चनप्रियाय । छविच्छन्नाय । छटात्काराय । छायावटसमाश्रिताय । स्वामिने । स्वतन्त्राय । स्वाधीनाय । स्वाहाकाराय । स्वधार्मिकाय । स्वकर्त्रे । स्वामिनाथाय । स्वस्थाय । स्वातन्त्र्यवल्लभाय । स्वशक्तये । स्वकार्यार्थाय । स्वःपत्ये । स्वस्य कारणाय नमः । ९२०

स्वयं प्रभवे नमः । स्वयं ज्योतिषे । स्वं ब्रह्मणे । स्वं परायणाय । स्वात्मज्ञाय । स्वमनोधर्माय । स्वयं देवाय । स्वयं परस्मै । स्वं स्वं देवाय । स्वस्वनाथाय । स्ववीराय । स्वसुन्दराय । स्वयं सिद्धाय । स्वयं साध्याय । स्वयंवराय । स्वकर्मविदे । स्वयं बुद्धये । स्वयं सिद्धये । स्वयंभुवे । स्वयंगुणाय नमः । ९४०

स्वाध्यायाय नमः । स्वधनाय । स्वापाय । स्वपतये । स्वमनोहराय । स्वरूपज्ञाय । स्वपरावराय । स्वयं रूपाय । स्वरूपकाय । स्वरूपाय । स्वयं जाताय । स्वयं मात्रे । स्वयं पित्रे । स्वयं गुरवे । स्वयं धात्रे । स्वयं स्वाहा । स्वयं स्वधा । हल्लकेशाय । हकारार्थाय । हंसः सोऽहं सुमन्त्रविदे नमः । ९६०

हंसमन्त्रार्थतत्त्वेशाय नमः । हंसार्थाय । हाटकेश्वराय । हालास्यनाथाय । हरिणीटङ्कधारिणे । हरिप्रियाय । हास्य-भस्मीकृतपुराय । हाटकादिनिधिप्रदाय । हारोरगाय । हंसवादाय । हरिकेशोपवीतकाय । हाटकाद्रिमहाचापाय । हरिब्रह्मेन्द्र-वन्दिताय । हानिदुःखविनाशिने । हानिवृद्धिविवर्जिताय ।

हयग्रीवार्चितपदाय । हरिसोदरिनायकाय । हव्यप्रदाय । हविर्भोक्त्रे । हालाहलधराय नमः । ९८०

हराय नमः । हरिब्रह्मशिरोबृन्दकिङ्किणीदाम भूषिताय । हरिशब्दाय । हरानन्दाय । हठात्कारासहाय । हविषे । हन्त्रे । हंसाय । हनीयसे । हंबीजाय । हंकृतये । हरये । हत्यादिपापसंहर्त्रे । हयेभशिबिकाप्रदाय । हर्म्येशाय । हर्म्यकूटस्थाय । हर्म्यगोपुरमन्दिराय । हाहेतिशब्दशमनाय । हास्यशोभि-मुखाम्बुजाय । हालाहलविषोत्पन्नकालदेवाभयप्रदाय नमः । १०००

हारचम्पककल्हारनीपशम्याकभूषिताय नमः । हारकेयूरमकुटभूषालङ्कृतविग्रहाय । हस्तिद्विपश्वनिर्व्यूढशूलवज्रादि सुप्रभाय । हरिश्वेतवृषारूढाय । हाटकश्रीसभापतये । हर्षप्रदाय । हरहरिब्रह्मेन्द्रपरमेश्वराय । श्री मेधादक्षिणामूर्तये नमः ॥

इति श्रीमेधादक्षिणामूर्तिमन्त्रार्णाद्यात्मकाष्टोत्तरसहस्रनामानि

ओं तत्पुरुषाय विद्महे विद्यावासाय धीमहि ।

तन्नो दक्षिणामूर्तिः प्रचोदयात् ।

* * *

जय जय परमेश्वरेन्दुमौले
जय जय शिव साम्ब शङ्करेश ।
जय जय मृड भीम कृत्तिवासो
जय जय पुरकालजित् प्रसीद ॥

# श्री दक्षिणामूर्तिसहस्रनामस्तोत्रम्

(चिदम्बरनटनतन्त्रतः)

(दकारादिथकारान्तम्)

अस्य श्रीदक्षिणामूर्तिसहस्रनामस्तोत्र महामन्त्रस्य गुरुराट् ऋषिः । अनुष्टुप्च्छन्दः । श्रीदक्षिणामूर्तिः परमात्मा देवता । ह्रीं बीजं, स्वाहा शक्तिः । नमः कीलकम् । चतुःषष्टिकलाविद्याज्ञानप्राप्त्यै नामपरायणे विनियोगः ।

ओं नमो भगवते । दक्षिणामूर्तये । मह्यं । मेधां । प्रज्ञां । प्रयच्छ स्वाहा इति षडङ्गन्यासः ।

दक्षिणो दक्षिणामूर्तिर्दयालुर्दीनवल्लभः ।
दीनार्तिहा दीननाथो दीनबन्धुर्दयापरः ॥ १

दारिद्र्यशमनोऽदीनो दीर्घो दानवनाशनः ।
दनुजारिर्दुःखहन्ता दुष्टभूतनिषूदनः ॥ २

दीनार्तिहरणो दान्तो दीप्तिमान् दिव्यलोचनः ।
देदीप्यमानो दुर्गेशः श्रीदुर्गावरदायकः ॥ ३

दरिसंस्थो दानरूपो दानसन्मानतोषितः ।
दीनो दाडिमपुष्पाढ्यो दाडिमीपुष्पभूषितः ॥ ४

दैन्यहृद्दुरितघ्नश्च दिशावासो दिगम्बरः ।
दिक्पतिर्दीर्घसूत्री च दरदम्बुदलोचनः ॥ ५

दक्षिणाप्रेमसन्तुष्टो दारिद्र्यबडबानलः ।
दक्षिणावरदो दक्षो दक्षाध्वरविनाशकृत् ॥ ६

दामोदरप्रियो दीर्घो दीर्घिकाजनमध्यगः ।
धर्मो धनप्रदो ध्येयो धीमान्धैर्यविभूषितः ॥ ७

धरणीधारको धाता धनाध्यक्षो धुरन्धरः ।
धीधारको धिण्डिमको नग्नो नारायणो नरः ॥ ८

नरनाथप्रियो नाथो नदीपुलिनसंस्थितः ।
नानारूपधरो नम्रो नान्दीश्राद्धप्रियो नरः ॥ ९

नटाचार्यो नटवरो नारीमानसमोहनः ।
नदीप्रियो नीतिधरो नानामन्त्ररहस्य वित् ॥ १०

नारदो नामरहितो नौकारूढो नटप्रियः ।
परमः परमादश्च परविद्याविकर्षणः ॥ ११

पतिः पातित्यसंहर्ता परमेशः पुरातनः ।
पुराणपुरुषः पुण्यः पद्यगद्यविशारदः ॥ १२

पद्मप्रियः पद्महस्तः परमार्थपरायणः ।
प्रीतः पुराणपुरुषः पुराणागम सूचकः ॥ १३

पुराणवेत्ता पापघ्नः पार्वतीशः परार्थवित् ।
पद्मावतीप्रियः प्राणः परः पररहस्यवित् ॥ १४

पार्वतीरमणः पीनः पीतवासाः परात्परः ।
पशूपहाररसिकः पाशी पाशुपतः प्रियः ॥ १५

पक्षीन्द्रवाहनप्रीतः पुत्रदः पुत्रपूजितः ।
फणिनादः फैंकृतिश्च फट्कारिः फ्रें परायणः ॥ १६

फ्रीं बीजजपसन्तुष्टः फ्रींकारः फणिभूषितः ।
फणिविद्यामयः फ्रैं फ्रैं फ्रैं फ्रैं शब्दपरायणः ॥ १७

फडस्त्रजपसन्तुष्टो बलिभुग् बाणभूषितः ।
बाणपूजारतो ब्लूं ब्लूं ब्लूं बीजनिरतः शुचिः ।। १८

भवार्णवो बालमतिः बालेशो बालभावधृत् ।
बालप्रियो बालगतिः बलिवरदप्रियो बली ।। १९

बालचन्द्रप्रियो बालो बालशब्दपरायणः ।
ब्रह्माण्डभेदनो ब्रह्मज्ञानी ब्राह्मणपालकः ।। २०

भवानी भूपतिर्भद्रो भद्रदो भद्रवाहनः ।
भूताध्यक्षो भूतपतिः भूतभीति निवारणः ।। २१

भद्रङ्करो भीमगर्भो भीमसंगमलोलुपः ।
भीमो भयानको भ्राता भ्रान्तो भरकासुरप्रियः ।। २२

भस्मभूषो भस्मसंस्थो भैक्षकर्मपरायणः ।
भानुभूषो भानुरूपो भवानीप्रीतिदो भवः ।। २३

भर्गदेवो भर्गवासो भर्गपूजा परायणः ।
भावव्रतो भावरतो भावाभावविवर्जितः ।। २४

भर्गो भावानन्तयुक्तो भां भिं शब्दपरायणः ।
भ्रां बीजजपसन्तुष्टो भट्टारो भद्रवाहनः ।। २५

भट्टारको भीमभीमो भीमचण्डपतिर्भवः ।
भवानीजपसन्तुष्टो भवानीपूजनोत्सुकः ।। २६

भ्रमरो भ्रामरीयुक्तो भ्रमराम्बाप्रपूजितः ।
महादेवो महामान्यो महेशो माधवप्रियः ।। २७

मधुपुष्पप्रियो माध्वी मानपूजापरायणः ।
मधुपानप्रियो मीनो मीनाक्षीनायको महान् ।। २८

मारदृशो मदनघ्नो माननीयो महोक्षगः ।
माधवो मानरहितो म्रांबीजजपतोषितः ॥ २९

मधुपानरतो मानी महार्हो मोहनास्त्रवित् ।
महाताण्डवकृन्मन्त्रो मधुपूजापरायणः ॥ ३०

मूर्तिर्मुद्राप्रियो मित्रो मित्रसन्तुष्टमानसः ।
म्रीं म्रीं मधुमतीनाथो महादेवप्रियो मृडः ॥ ३१

यादोनिधिर्यदुपतिः यतिर्यज्ञपरायणः ।
यज्वा यागप्रियो याजी यायीभावप्रियो यमः ॥ ३२

यातायातादिरहितो यतिधर्मपरायणः ।
यतिसाध्यो यष्टिधरो यजमानप्रियो यजः ॥ ३३

यजुर्वेदप्रियो यायी यमसंयमसंयुतः ।
यमपीडाहरो युक्तिर्योगी योगीश्वरालयः ॥ ३४

याज्ञवल्क्यप्रियो योनिः योनिदोषविवर्जितः ।
यामिनीनाथो यूषी च यमवंशसमुद्भवः ॥ ३५

यक्षो यक्षप्रियो याम्यो रामो राजीवलोचनः ।
रात्रिश्चरो रात्रिचरो रामेशो रामपूजितः ॥ ३६

रामपूज्यो रामनाथो रत्नदो रत्नहारकः ।
राज्यदो रामवरदो रञ्जको रतिमार्गकृत् ॥ ३७

रमणीयो रघुनाथो रघुवंशप्रवर्तकः ।
रामानन्दप्रियो राजा राजराजेश्वरो रसः ॥ ३८

रत्नमन्दिरमध्यस्थो रत्नपूजापरायणः ।
रत्नाकरो लक्ष्मणेशो लक्ष्मको लक्ष्मलक्षणः ॥ ३९

लक्ष्मीनाथप्रियो लाली लम्बिकायोगमार्गधृत्।
लब्धलक्ष्यो लब्धसिद्धिर्लभ्यो लाक्षारुणेक्षणः ॥ ४०

लोलाक्षीनायको लोभी लोकनाथो लतामयः ।
लतापूजापरो लीलो लक्षमन्त्रजपप्रियः ॥ ४१

लम्बिकामार्गनिरतो लक्षकोट्यण्डनायकः ।
वाणीप्रियो वाममार्गो वादी वादपरायणः ॥ ४२

वीरमार्गरतो वीरो वीरचर्यापरायणः ।
वरेण्यो वरदो वामो वाममार्गप्रवर्तकः ॥ ४३

वामदेवो वागधीशो वीणाढ्यो वेणुतत्परः ।
विद्याप्रदो वीतिहोत्रो वीरविद्याविशारदः ॥ ४४

वर्गो वर्गप्रियो वायुः वायुवेगपरायणः ।
वार्तज्ञश्च वशीकारी वर्षिष्ठो वामहर्षकः ॥ ४५

वासिष्ठो वाक्पतिर्वैद्यो वामनो वसुदो विराट्।
वाराहीपालको वश्यो वनवासी वनप्रियः ॥ ४६

वनपतिर्वारिधारी वीरो वाराङ्गनाप्रियः ।
वनदुर्गापतिर्वन्यः शक्तिपूजापरायणः ॥ ४७

शशाङ्कमौलिः शान्तात्मा शक्तिमार्गपरायणः ।
शरच्चन्द्रनिभः शान्तः शक्तिः संशयवर्जितः ॥ ४८

शचीपतिः शक्रपूज्यः शरस्थः शापवर्जितः ।
शापानुग्राहकः शङ्खप्रियः शत्रुनिषूदनः ॥ ४९

शरीरयोगी शान्तारिः शक्ता श्रमगतः शुभः ।
शुक्रपूज्यः शुक्रभोगी शुक्रभक्षणतत्परः ॥ ५०

शारदानायकः शौरिः षण्मुखः षण्मनाः षढः ।
षण्डः षडङ्गः षट्कश्च षडध्वयागतत्परः ॥ ५१

षडाम्नायरहस्यज्ञः षष्ठीजपपरायणः ।
षट्चक्रभेदनः षष्ठीनाद-षड्दर्शनप्रियः ॥ ५२

षष्ठीदोषहरः षट्कः षट्शास्त्रार्थरहस्यवित् ।
षड्भूमि हितः षड्वर्गः षडैश्वर्य फलप्रदः ॥ ५३

षड्गुणः षण्मुखप्रीतः षष्ठिपालः षडात्मकः ।
षट्कृत्तिकासमाजस्थः षडाधारनिवासकः ॥ ५४

षोढान्यासमयः सिन्धुः सुन्दरः सुरसुन्दरः ।
सुराध्यक्षः सुरपतिः सुमुखः सुसमः सुरः ॥ ५५

सुभगः सर्ववित्सौम्यः सिद्धमार्गप्रवर्तकः ।
सहजानन्दजः साम सर्वशास्त्ररहस्यवित् ॥ ५६

समिद्धोमप्रियः सर्वः सर्वशक्तिप्रपूजितः ।
सुरदेवः सुदेवश्च सन्मार्गः सिद्धदर्शनः ॥ ५७

सर्ववित्साधुवित्साधुः सर्वधर्म समन्वितः ।
सर्वाध्यक्षः सर्ववेद्यः सन्मार्गसूचकोऽर्थवित् ॥ ५८

हारी हरिर्हरो हृद्यो हरो हर्षप्रदो हरिः ।
हरयोगी हेहरतो हरिवाहो हरिध्वजः ॥ ५९

हादिमार्गरतो ह्रीं च हारीतवरदायकः ।
हारीतवरदो हीनो हितकृद्धुंकृतिर्हविः ॥ ६०

हविष्यभुग् हविष्याशी हरिद्वर्णो हरात्मकः ।
हैहयेशो ह्रींकृतिश्च हरिमानसतोषणः ॥ ६१

ह्रांङ्कारजपसन्तुष्टो ह्रींकारजपचिह्नितः ।
हितकारी हरिणदृक् हलितो हरनायकः ।। ६२

हारप्रियो हाररतो हाहाशब्दपरायणः ।
ळकार वर्णभूषाढ्यो ळकारेशो महामुनिः ।। ६३

ळकारबीजनिलयो ळांळिं मन्त्रप्रवर्तकः ।
क्षेमङ्करीप्रियः क्षाम्यः क्षमाभृत्क्षणरक्षकः ।। ६४

क्षाङ्कारबीजनिलयः क्षोभहृत् क्षोभवर्जितः ।
क्षोभहारी क्षोभकारी क्ष्रीं बीजः क्षां स्वरूपधृत् ।। ६५

क्षांङ्कारबीजनिलयः क्षौमाम्बरविभूषितः ।
क्षोणीरथः प्रियकरः क्षमापालः क्षमाकरः ।। ६६

क्षेत्रज्ञः क्षेत्रपालश्च क्षयरोगक्षयङ्करः ।
क्षामोदरः क्षामगात्रः क्षामरूपः क्षयोदरः ।। ६७

अद्भुतोऽनन्तवरदः अनसूयुः प्रियंवदः ।
अत्रिपुत्रोऽग्निगर्भश्च अभूतोऽनन्तविक्रमः ।। ६८

आदिमध्यान्तरहितः अणिमादि गुणाकरः ।
अक्षरोऽष्टगुणैश्वर्यः अर्होऽनर्हः स उच्यते ।। ६९

आदित्यश्चागुणश्चात्मा अध्यात्मप्रीतमानसः ।
आद्यश्चाम्रप्रियश्चाम्र आम्रपुष्पविभूषितः ।। ७०

आम्रपुष्पप्रियः प्राणः आर्ष आम्रातकेश्वरः ।
इंगितज्ञश्च इष्टज्ञ इष्टभद्र इष्टप्रदस्तथा ।। ७१

इष्टापूर्तप्रियश्चेष्ट ईश ईश्वरवल्लभः ।
ईङ्कारश्चेश्वराधीनः ईशतटिदिन्द्रवाचकः ।। ७२

उक्षिरूकारगर्भश्च ऊकाराय नमो नमः ।
ऊह्य ऊहविनिर्मुक्त ऊष्मा ऊष्ममणिस्तथा ।। ७३

ऋद्धिकारी ऋद्धिरूपी ऋद्धिप्रावर्तकेश्वरः ।
ॠकारवर्णभूषाढ्यः ॠकाराय नमो नमः ।। ७४

ॡकारगर्भो ॡकार ॡं ॡंकाराय ते नमः ।
एकारगर्भश्चैकारः एकश्चैकप्रवाचकः ।। ७५

एकंकारिश्चैककर एकप्रियतराय ते ।
एकवीर एकपतिः एं ऐं शब्दपरायणः ।। ७६

ऐन्द्रप्रियश्चैक्यकारी ऐं बीजजपतत्परः ।
ओंकारश्चोंकारबीजः ओंकाराय नमो नमः ।। ७७

ओंकारपीठनिलयः ओंकारेश्वरपूजितः ।
अङ्कितोत्तमवर्णश्च अङ्कितज्ञाय ते नमः ।। ७८

कलङ्कहरः कंकालः क्रूरः कुक्कुटवाहनः ।
कामिनी वल्लभः कामी काम्यार्थः कमनीयकः ।। ७९

कलानिधिः कीर्तिनाथः कामेशीहृदयङ्गमः ।
कामेश्वरः कामरूपः कालः कालकृपानिधिः ।। ८०

कृष्णः कालीपतिः कालिः कृशाचूडामणिः कलः ।
केशवः केवलः कान्तः कालीशो (श)वरदायकः ।। ८१

कालिकासम्प्रदायज्ञः कालः कामकलात्मकः ।
खट्वाङ्गपाणिः खतितः खरशूलः खरान्तकृत् ।। ८२

खेलनः खेटकः खड्गः खड्गनाथः खगेश्वरः ।
खेचरः खेचरनाथो गणनाथ सहोदरः ।। ८३

गाढो गह्नगम्भीरो गोपालो गूर्जरो गुरुः ।
गणेशो गायको गोप्ता गायत्रीवल्लभो गुणी ।। ८४

गोमन्तो गारुडो गौरो गौरीशो गिरिशो गुहः ।
गरिर्गर्यो गोपनीयो गोमयो गोचरो गुणः ।। ८५

हेरम्बायुष्यरुचिरो गाणाप त्यागमप्रियः ।
घण्टाकर्णो घर्मरश्मिर्घृणिर्घण्टाप्रियो घटः ।। ८६

घटसर्पो घूर्णितश्च घृमणिर्घृतकम्बलः ।
घण्टादिनादरुचिरो घृणी लज्जाविवर्जितः ।। ८७

घृणिमन्त्रजपप्रीतो घृतयोनिर्घृतप्रियः ।
घर्घरो घोरनादश्चाघोरशास्त्रप्रवर्तकः ।। ८८

घनाघनो घोषयुक्तो घेटको घेटकेश्वरः ।
घनो घनरुचिः घ्रिं घ्रां घ्रां घ्रिं मन्त्रस्वरूपधृत् ।। ८९

घनश्यामो घनतरो घटोत्कचो घटात्मजः ।
घङ्घादो घुर्घुरो घूको घकाराय नमो नमः ।। ९०

ङकाराख्यो ङकारेशो ङकाराय नमो नमः ।
ङकारबीजनिलयो ङां ङिं मन्त्रस्वरूपधृत् ।। ९१

चतुष्षष्टिकलादायी चतुरश्चञ्चलश्चलः ।
चक्री चक्रश्चक्रधरः श्रीबीजजपतत्परः ।। ९२

चण्डश्चण्डेश्वरश्चारुः चक्रपाणिश्चराचरः ।
चराचरमयश्चिन्तामणिश्चिन्तितसारथिः ।। ९३

चण्डरश्मिश्चन्द्रमौलिश्चण्डीहृदयनन्दनः ।
चक्राङ्कितश्चण्डदीप्तिप्रियश्चूडालशेखरः ।। ९४

चण्डश्चण्डालदमनः चिन्तितश्चिन्तितार्थदः ।
चित्तार्पितश्चित्तमायी चित्रविद्यामयश्च चित् ।। ९५

चिच्छक्तिश्चेतनश्चिन्त्यः चिदाभासश्चिदात्मकः ।
छन्दचारी छन्दगतिश्छात्रश्छात्रप्रियश्च छित् ।। ९६

छेदकृच्छेदनश्छेदः छन्दः शास्त्रविशारदः ।
छन्दोमयश्च छान्दोग्य श्छन्दसां पतिरित्यपि ।। ९७

छन्दोभेदश्छन्दनीयः छन्दश्छन्दोरहस्यवित् ।
छत्रधारी छत्रभृतश्छत्रदश्छत्रपालकः ।। ९८

छिन्नप्रियश्छिन्नमस्तः छिन्नमन्त्रप्रसादकः ।
छिन्नताण्डवसम्भूतः छिन्नयोगविशारदः ।। ९९

जाबालिपूज्यो जन्माद्यो जनिता जन्मनाशकः ।
जपायुष्यप्रियकरो जपादाडिमरागधृत् ।। १००

जमलो जैनतो जन्यो जन्मभूमिर्जनप्रियः ।
जन्माद्यश्च प्रियकरो जनिता जाजिरागधृत् ।। १०१

जैनमार्गरतो जैनो जितक्रोधो जितेन्द्रियः ।
जर्जज्जटो जर्जभूषी जटाधारो जटाधरः ।। १०२

जगद्गुरुर्जगत्कारी जामातृवरदोऽजरः ।
जीवनो जीवनाधारो ज्योतिःशास्त्रविशारदः ।। १०३

ज्योतिर्ज्योत्स्नामयो जेता जयो जन्मकृतादरः ।
जामित्रो जैमिनीपुत्रो ज्योतिःशास्त्रप्रवर्तकः ।। १०४

ज्योतिर्लिङ्गो ज्योतीरूपो जीमूतवरदायकः ।
जितो जेता जन्मपुत्रो ज्योत्स्नाजालप्रवर्तकः ।। १०५

जन्मादिनाशको जीवो जीवातुर्जीवनौषधम्।
जराहरो जाड्यहरो जन्माजन्मविवर्जितः ॥ १०६

जनको जननीनाथो जीमूतो जाम्बवप्रियः।
जपमूर्तिर्जगन्नाथो जगत्स्थावरजङ्गमः ॥ १०७

जारदो जारविद्जारो जठराग्निप्रवर्तकः।
जीर्णो जीर्णरतो जातिः जातिनाथो जगन्मयः ॥ १०८

जगत्प्रदो जगत्त्राता जगज्जीवनकौतुकः।
जङ्गमो जङ्गमाकारो जटिलश्च जगद्गुरुः ॥ १०९

झरिर्झंझारिको झंझो झंझानुर्झरुलन्दकृत्।
झकारबीजनिलयो झूं झूं झूं मन्त्ररूपधृत्॥ ११०

ज्ञानेश्वरो ज्ञानगम्यो ज्ञानमार्गपरायणः।
ज्ञानकाण्डी ज्ञेयकाण्डी ज्ञेयाज्ञेयविवर्जितः ॥ १११

टङ्कास्त्रधारी टङ्कारः टीकाटिप्पणकारकः।
टां टीं टूं जपसन्तुष्टो टिट्टिभष्टिट्टिभाननः ॥ ११२

टिट्टिभाननसहितः टकाराक्षरभूषितः।
टङ्कारकार्यष्टसिद्धिरष्टमूर्त्यष्टकष्टहा॥ ११३ ॥

ठाङ्कुरष्ठकुरुष्ठष्ठः ठं ठे बीजपरायणः।
ठां ठीं ठूं जपयोगाढ्यो डामरो डाकिनीप्रियः ॥ ११४

डाकिनीनायको डाडिः डूं डूं शब्दपरायणः।
डकारात्मा डामरश्च डामरीशक्तिरञ्जितः ॥ ११५

डाकारो डांकरो डां डिं डिण्डिवादनतत्परः।
डकाराढ्यो डङ्कहीनो डामरीवादनप्रियः ॥ ११६

ढांकृतिर्ढां पतिः ढां ढीं ढूं ढैं ढौं शब्दतत्परः ।
ढोढिभूषण भूषाढ्यो ढीं ढीं पालो ढपारजः ॥ ११७

णकारकुण्डलो णाडीवर्गप्राणो णणाद्रिभूः ।
णकारपञ्जरीशाय णां णिं णूं णं प्रवर्तकः ॥ ११८

तरुशस्तरुमध्यस्थः तर्वन्तस्तरुमध्यगः ।
तारकस्तारतम्यश्च तारनाथः सनातनः ॥ ११९

तरुणस्ताम्रचूडश्च तमिस्रानायकस्तमी ।
तोतस्त्रिपथगस्तीव्रस्तीव्रवेगस्त्रिशब्दकृत् ॥ १२०

तारिमतस्तालधरः तपःशीलस्त्रपाकरः ।
तन्त्रमार्गरतस्तन्त्रस्तान्त्रिकस्तान्त्रिकोत्तमः ॥ १२१

तुषाराचलमध्यस्थः तुषारवरभूषितः ।
तुरस्तुम्बीफलप्राणस्तुलजापुरनायकः ॥ १२२

तीव्रयष्टिकरस्तीव्रस्तुण्डदुर्ग समाजगः ।
त्रिवर्गयज्ञकृत्त्रयी त्र्यम्बकस्त्रिपुरान्तकः ॥ १२३

त्रिपुरान्तकसंहारस्त्रिधामा स्त्रीतृतीयकः ।
त्रिलोकमुद्रिकाभूषः त्रिपञ्चन्याससंयुतः ॥ १२४

त्रिसुगन्धिस्त्रिमूर्तिस्त्रिगुणस्त्रिगुणसारथिः ।
त्रयीमयश्च त्रिगुणः त्रिपादश्च त्रिहस्तकः ॥ १२५

तन्त्ररूपस्त्रिकोणेशस्त्रिकालज्ञस्त्रयीमयः ।
त्रिसन्ध्यश्च त्रिकालश्च ताम्रपर्णीजलप्रियः ॥ १२६

तोमरस्तुमुलःस्थूलः स्थूलपुरुषरूपधृत् ।
तत्तन्त्री तन्त्रतन्त्री तृतीयस्तरुशेखरः ॥ १२७

तरुणेन्दुशिखस्तालस्तीर्थस्नातस्त्रिशेखरः ।
त्रिजोऽजेशस्त्रिस्वरूपस्त्रित्रिशब्दपरायणः ।। १२८

तारनायकभूषश्च तरुवादनचञ्चलः ।
तिष्कस्त्रिराशिकस्त्र्यक्षः तरुणस्ताटवाहनः ।। १२९

तृतीयस्तारकः स्तम्भः स्तम्भमध्यगतः स्थिरः ।
तत्वरूपस्तलस्तालस्तान्त्रिकस्तन्त्र भूषणः ।। १३०

तत्वस्तुतिमयः स्थूलः स्थूलबुद्धिस्त्रपाकरः ।
तुष्टः स्तुतिमयः स्तोता स्तोत्रप्रीतः स्तुतीडितः ।। १३१

त्रिराशिश्च त्रिबन्धुश्च त्रिप्रस्तारस्त्रिधागतिः ।
त्रिकालेशस्त्रिकालज्ञः त्रिजन्मा च त्रिमेखलः ।। १३२

त्रिदोषश्च त्रिवर्गश्च त्रैराशिकफलप्रदः ।
तन्त्रसिद्धस्तन्त्ररतस्तन्त्रस्तन्त्रफलप्रदः ।। १३३

त्रिपुरारिस्त्रिमधुरस्त्रिशक्तिस्त्रिकतत्त्वधृत् ।
तीर्थप्रीतस्तीर्थरतस्तीर्थोदानपरायणः ।। १३४

त्रयक्लेशः तन्त्रणेशः तीर्थ श्राद्धफलप्रदः ।
तीर्थभूमिरतस्तीर्थस्तित्तिडीफलभोजनः ।। १३५

तित्तिडीफलभूषाढ्यः ताम्रनेत्रविभूषितः ।
तक्षः स्तोत्रपाठप्रीतः स्तोत्रमयः स्तुतिप्रियः ।। १३६

स्तवराजजपप्राणः स्तवराजजपप्रियः ।
तैलस्तिलमनास्तैलपक्वान्न प्रीतमानसः ।। १३७

तैलाभिषेकसन्तुष्टः तैलचर्वणतत्परः ।
तैलाहारप्रियः प्राणः तिलमोदकतोषणः ।। १३८

तिलपिष्टान्नभोजी च तिलपर्वतरूपधृत्।
थकार कूटनिलयः थैरिः थैः शब्दतत्परः ।। १३९

थिमाथिमाथिमारूपः थै थै थै नाट्यनायकः ।
स्थाणुरूपो महेशानि प्रोक्तं नामसहस्रकम्।। १४०

गोप्याद्गोप्यं महेशानि सारात्सारतरं परम्।
ज्ञानकैवल्यनामाख्यं नामसाहस्रकं शिवे।। १४१

यः पठेत्प्रयतो भूत्वा भस्मभूषितविग्रहः ।
रुद्राक्षमूलाभरणो भक्तिमान् जपतत्परः ।। १४२

सहस्रनाम प्रपठेत् ज्ञानकैवल्यकाभिधम्।
सर्वसिद्धिमवाप्नोति साक्षात्कारं च विन्दति।। १४३

तत्वमुद्रां वामकरे कृत्वा नामसहस्रकम्।
प्रपठेत्पञ्च साहस्रं पुरश्चरणमुच्यते ।। १४४

शिवनाम्ना जातभावो वाङ्मनःकायकर्मभिः ।
शिवोऽहमिति वै ध्यायन्नामसाहस्रकं पठेत्।। १४५

रोगार्तो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात्।
विद्यार्थी लभते विद्यां अभीष्टं लभते तथा।। १४६

(चिदम्बरनटनतन्त्रतः)



# श्री दक्षिणामूर्तिसहस्रनामावलिः

ओं नमः ।

ओं दक्षिणाय नमः । दक्षिणामूर्तये । दयालवे । दीनवल्लभाय । दीनार्तिघ्ने । दीननाथाय । दीनबन्धवे । दयापराय । दारिद्र्यशमनाय ।

अदीनाय। दीर्घाय। दानवनाशनाय। दनुजारये। दुःखहन्त्रे। दुष्टभूतनिषूदनाय। दीनार्तिहरणाय। दान्ताय। दीप्तिमते। दिव्यलोचनाय। देदीप्यमानाय नमः। (२०)

दुर्गेशाय नमः। श्री दुर्गावरदायकाय। दरिसंस्थाय। दानरूपाय। दानसन्मानतोषिताय। दीनाय। दाडिमपुष्पाढ्याय। दाडिमीपुष्पभूषिताय। दैन्यहृते। दुरितघ्नाय। दिशावासाय। दिगम्बराय। दिक्पतये। दीर्घसूत्रिणे। दरदम्बुजलोचनाय। दक्षिणाप्रेमसन्तुष्टाय। दारिद्र्यबडबानलाय। दक्षिणावरदाय। दक्षाय। दक्षाध्वरविनाशकृते नमः (४०)

दामोदरप्रियाय नमः। दीर्घाय। दीर्घिकाजनमध्यगाय! धर्माय। धनप्रदाय। ध्येयाय। धीमते। धैर्यविभूषिताय। धरणीधारकाय। धात्रे। धनाध्यक्षाय। धुरन्धराय। धीधारकाय। धिण्डिमकाय। नग्नाय। नारायणाय। नराय। नरनाथप्रियाय। नाथाय। नदीपुलिनसंस्थिताय नमः (६०)

नानारूपधराय नमः। नम्राय। नान्दीश्राद्धप्रियाय। नटाय। नटाचार्याय। नटवराय। नारीमानसमोहनाय। नदीप्रियाय। नीतिधराय। नानामन्त्ररहस्यविदे। नारदाय। नामरहिताय। नौकारूढाय। नटप्रियाय। परमाय। परमादाय। परविद्याविकर्षणाय। पतये। पातित्यसंहर्त्रे। परमेशाय नमः (८०)

पुरातनाय नमः। पुराण पुरुषाय। पुण्याय। पद्यगद्यविशारदाय। पद्यप्रियाय। पद्यहस्ताय। परमार्थपरायणाय। प्रीताय। पुराणाय। पुरुषाय। पुराणागमसूचकाय। पुराणवेत्रे। पापघ्नाय। पार्वतीशाय। परार्थविदे। पद्मावतीप्रियाय। प्राणाय। पराय। पररहस्यविदे। पार्वतीरमणाय नमः (१००)

पीनाय नमः। पीतवाससे। परात्पराय। पशूपहाररसिकाय। पाशिने। पाशुपताय। प्रियाय। पक्षीन्द्रवाहनप्रीताय। पुत्रदाय। पुत्रपूजिताय। फणिनादाय। फें कृतये। फट्कारये। फ्रें परायणाय। फ्रीं बीजजपसन्तुष्टाय। फ्रीं काराय। फणिभूषिताय। फणिविद्यामाय। फ्रैं फ्रैं फ्रैं फ्रैं शब्दपरायणाय। फडस्त्रजपसन्तुष्टाय नमः (१२०)

बलिभुजे नमः। बाणभूषिताय। बाणपूजारताय। ब्लूं ब्लूं ब्लूं बीजनिरताय। शुचये। भवार्णवाय। बालमतये। बालेशाय। बालभावधृते। बालप्रियाय। बालगतये। बलिवरदप्रियाय। बलिने। बालचन्द्रप्रियाय। बालाय। बालशब्दपरायणाय। ब्रह्माण्डभेदनाय। ब्रह्मज्ञानिने। ब्राह्मणपालकाय। भवानीपतये नमः॥ (१४०)

भद्राय नमः। भद्रदाय। भद्रवाहनाय। भूताध्यक्षाय। भूतपतये। भूतभूतिनिवारणाय। भद्रङ्कराय। भीमगर्भाय। भीमसङ्गमलोलुपाय। भीमाय। भयानकाय। भ्रात्रे। भ्रान्ताय। भस्मासुरप्रियाय। भस्मभूषाय। भस्मसंस्थाय। भैक्षकर्मपरायणाय। भानु भूषाय। भानुरूपाय। भवानीप्रीतिदाय नमः॥ (१६०)

भवाय नमः। भर्गदेवाय। भर्गवासाय। भर्गपूजा-परायणाय। भावव्रताय। भावरताय। भावाभावविवर्जिताय। भर्गाय। भावानन्तयुक्ताय। भां भिं शब्दपरायणाय। भ्रांबीजजपसन्तुष्टाय। भट्टाराय। भद्रवाहनाय। भट्टारकाय। भीमभीमाय। भीमचण्डपतये। भवाय। भवानीजपसन्तुष्टाय। भवानीपूजनोत्सुकाय। भ्रमराय नमः (१८०)

भ्रामरीयुक्ताय नमः । भ्रमराम्बाप्रपूजिताय । महादेवाय । महामान्याय । महेशाय । माधवप्रियाय । मधुपुष्पप्रियाय । माध्विने । मानपूजापरायणाय । मधुपानप्रियाय । मीनाय । मीनाक्षीनायकाय । महते । मारदशाय । मदनघ्नाय । माननीयाय । महोक्षगाय । माधवाय । मानरहिताय । म्रांबीजजपतोषिताय नमः (२००)

मधुपानरताय । मानिने । महार्हाय । मोहनास्त्रविदे । महाताण्डवकृते । मन्त्राय । मधुपूजापरायणाय । मूर्तये । मुद्राप्रियाय । मित्राय । मित्रसन्तुष्टमानसाय । म्रीं म्रीं नाथाय । मधुमतीनाथाय । महादेवप्रियाय । मृडाय । यादोनिधये । यदुपतये । यतये । यज्ञपरायणाय । यज्वने नमः (२२०)

यागप्रियाय नमः । याजिने । यायीभावप्रियाय । यमाय । यातायातादिरहिताय । यतिधर्मपरायणाय । यतिसाध्याय । यष्टिधराय । यजमानप्रियाय । यजाय । यजुर्वेदप्रियाय । यायिने । यमसंयमसंयुताय । यमपीडाहराय । युक्तये । यागिने । योगीश्वरालयाय । याज्ञवल्क्यप्रियाय । योनये । योनिदोषविवर्जिताय नमः । (२४०)

यामिनीनाथाय नमः । यूषिणे । यमवंशसमुद्भवाय । यक्षाय । यक्षप्रियाय । याम्याय । रामाय । राजीवलोचनाय । रात्रिञ्चराय । रात्रिचराय । रामेशाय । रामपूजिताय । रामपूज्याय । रामनाथाय । रत्नदाय । रत्नहारकाय । राज्यदाय । रामवरदाय । रञ्जकाय । रतिमार्गकृते नमः । (२६०)

रमणीयाय नमः । रघुनाथाय । रघुवंशप्रवर्तकाय । रामानन्दप्रियाय । राज्ञे । राजराजेश्वराय । रसाय ।

रत्नमन्दिरमध्यस्थाय । रत्नपूजापरायणाय । रत्नाकराय । लक्ष्मणेशाय । लक्ष्मकाय । लक्ष्मलक्षणाय । लक्ष्मीनाथप्रियाय । लालिने । लम्बिकायोगमार्गधृते । लब्धलक्ष्याय । लब्धसिद्धये । लभ्याय । लाक्षारुणेक्षणाय नमः । (२८०)

लोलाक्षीनायकाय नमः । लोभिने । लोकनाथाय । लतामयाय । लतापूजापराय । लोलाय । लक्षमन्त्रजपप्रियाय । लम्बिकामार्गनिरताय । लक्षकोट्यण्डनायकाय । वाणीप्रियाय । वाममार्गाय । वादिने । वादपरायणाय । वीरमार्गरताय । वीराय । वीरचर्यापरायणाय । वरेण्याय । वरदाय । वामाय । वाममार्गप्रवर्तकाय नमः । (३००)

वामदेवाय नमः । वागधीशाय । वीणाढ्याय । वेणुतत्पराय । विद्याप्रदाय । वीतिहोत्राय । वीरविद्याविशारदाय । वर्गाय । वर्गप्रियाय । वायवे । वायुवेगपरायणाय । वार्तज्ञाय । वशीकारिणे । वर्षिष्ठाय । वामहर्षकाय । वासिष्ठाय । वाक्पतये । वेद्याय । वामनाय । वसुदाय नमः ॥ ३२०

विराजे नमः । वाराहीपालकाय । वश्याय । वनवासिने । वनप्रियाय । वनपतये । वारिधारिणे । वीराय । वाराङ्गनाप्रियाय । वनदुर्गापतये । वन्याय । शक्तिपूजापरायणाय । शशाङ्कमौलये । शान्तात्मने । शक्तिमार्गपरायणाय । शरच्चन्द्रनिभाय । शान्ताय । शक्तये । संशयवर्जिताय । शचीपतये नमः । (३४०)

शक्रपूज्याय नमः । शरस्थाय । शापवर्जिताय । शापानुग्राहकाय । शङ्खप्रियाय । शत्रुनिषूदनाय । शरीरयोगिने । शान्तारये । शक्त्रे । श्रमगताय । शुभाय । शुक्रपूज्याय । शुक्रभोगिने । शुक्रभक्षणतत्पराय । शारदानायकाय । शौरये । षण्मुखाय । षण्मनसे । षढाय । षण्डाय नमः । (३६०)

षडङ्गाय नमः । षट्काय । षडध्वयागतत्पराय । षडाम्नायरहस्यज्ञाय । षष्ठीजपपरायणाय । षट्चक्र भेदनाय । षष्ठीनादाय । षड्दर्शनप्रियाय । षष्ठीदोषहराय । षट्काय । षट्शास्त्रार्थविदे । षट्शास्त्ररहस्यविदे । षड्भूमिहिताय । षड्वर्गाय । षडैश्वर्यफलप्रदाय । षड्गुणाय । षण्मुखप्रीताय । षष्ठीपालाय । षडात्मकाय । षट्कृत्तिकासमाजस्थाय नमः ।। ३८०

षडाधारनिवासकाय नमः । षोढान्यासमयाय । सिन्धवे । सुन्दराय । सुरसुन्दराय । सुराध्यक्षाय । सुरपतये । सुमुखाय । सुसमाय । सुराय । सुभगाय । सर्वविदे । सौम्याय । सिद्धमार्गप्रवर्तकाय । सहजानन्दजाय । साम्ने । सर्वशास्त्ररहस्यविदे । समिद्धोमप्रियाय । सर्वाय । सर्वशक्तिप्रपूजिताय नमः (४००)

सुरदेवाय नमः । सुदेवाय । सन्मार्गाय । सिद्धदर्शनाय । सर्वविदे । साधुविदे । साधवे । सर्वधर्मसमन्विताय । सर्वाध्यक्षाय । सर्ववेद्याय । सन्मार्गसूचकाय । अर्थविदे । हारिणे । हरिहराय । हृद्याय । हराय । हर्षप्रदाय । हरये । हरयोगिने । हेहरताय नमः । ४२०

हरिवाहाय नमः । हरिध्वजाय । ह्रादिमार्गरताय । ह्रीं । हारीतवरदायकाय । हारीतवरदाय । हीनाय । हितकृते । हुंकृतये । हविषे । हविष्यभुजे । हविष्याशिने । हरिद्वर्णाय । हरात्मकाय । हैहयेशाय । । ह्रींकृतये । हरिमानसतोषणाय । ह्रांकारजपसन्तुष्टाय । ह्रींकारजपचिह्निताय । हितकारिणे नमः । (४४०)

हरिणदृशे नमः । हलिताय । हरनायकाय । हारप्रियाय । हाररताय । हाहाशब्दपरायणाय । ळकारवर्णभूषाढ्याय ।

ळकारेशाय । महामुनये । ळकारबीजनिलयाय । ळां ळिं मन्त्रप्रवर्तकाय । क्षेमंकरीप्रियाय । क्षाम्याय । क्षमाभृते । क्षणरक्षकाय। क्षांकारबीजनिलयाय। क्षोभहृते। क्षोभवर्जिताय। क्षोभहारिणे। क्षोभकारिणे नमः । ४६०

क्ष्रीं बीजाय। क्ष्रां स्वरूपधृते। क्ष्रांकारबीजनिलयाय। क्षौमाम्बरविभूषिताय। क्षोणीरथाय। प्रियकराय। क्षमापालाय। क्षमाकराय । क्षेत्रज्ञाय । क्षेत्रपालाय । क्षयरोग क्षयङ्कराय । क्षामोदराय। क्षामगात्राय। क्षामरूपाय। क्षयोदराय। अद्भुताय। अनन्तवरदाय। अनसूयवे। प्रियंवदाय। अत्रिपुत्राय नमः (४८०)

अग्निगर्भाय नमः । अभूताय । अनन्तविक्रमाय । आदिमध्यान्तरहिताय । अणिमादिगुणाकराय । अक्षराय । अष्टगुणैश्वर्याय । अर्हाय । अनर्हाय । अगुणाय । आत्मने । अध्यात्मप्रीताय। अध्यात्ममानसाय। आद्याय। आम्रप्रियाय। आम्राय। आम्रपुष्पविभूषिताय। आम्रपुष्पप्रियाय। प्राणाय नमः। (५००)

आर्षाय नमः । आम्रातकेश्वराय। इंगितज्ञाय। इष्टज्ञाय। इष्टभद्राय । इष्टप्रदाय । इष्टापूर्तप्रदाय । इष्टाय । ईशाय । ईश्वरवल्लभाय । ईंकाराय । ईश्वराधीनाय । ईशतटिते । इन्द्रवाचकाय। उक्षये। ऊंकारगर्भाय। ऊकाराय। ऊह्याय। ऊहविनिर्मुक्ताय। ऊष्मणे नमः ५२०

ऊष्ममणये। ऋद्धिकारिणे। ऋद्धिरूपिणे। ऋद्धिप्रवर्तकाय। ऋद्धीश्वराय। ॠकारवर्ण भूषाढ्याय। ॠकाराय। लृकारगर्भाय। लृकाराय। लॄं। लॄकाराय। एकारगर्भाय। एकाराय। एकाय। एकप्रवाचकाय । एकंकारिणे । एककराय । एकप्रियतराय । एकवीराय नमः। ५४०

एकपतये नमः । ऐं । ऐं शब्दपरायणाय । ऐन्द्रप्रियाय । ऐक्यकारिणे । ऐं बीजजपतत्पराय । ओंकाराय । ओंकारबीजाय । ओंकाराय । ओंकारपीठनिलयाय । ओंकारेश्वरपूजिताय । अङ्कितोत्तमवर्णाय । अङ्कितज्ञाय । कलंकहराय । कंकालाय । क्रूराय । कुक्कुटवाहनाय । कामिनीवल्लभाय । कामिने । काम्यार्थाय नमः । (५६०)

कमनीयकाय नमः । कलानिधये । कीर्तिनाथाय । कामेशीहृदयङ्गमाय । कामेश्वराय । कामरूपाय । कालाय । कालकृपानिधये । कृष्णाय । कालीपतये । कालये । कृशाचूडामणये । कलाय । केशवाय । केवलाय । कान्ताय । कालीशाय । वरदायकाय । कालिकासम्प्रदायज्ञाय । कालाय नमः । (५८०)

कामकलात्मकाय । खट्वाङ्गपाणिने । खतिताय । खरशूलाय । खरान्तकृते । खेलनाय । खेटकाय । खड्गाय । खड्गनाथाय । खगेश्वराय । खेचराय । खेचरनाथाय । गणनाथाय । सहोदराय । गाढाय । गहनगम्भीराय । गोपालाय । गूर्जराय । गुरवे । गणेशाय नमः । (६००)

गायकाय नमः । गोप्त्रे । गायत्रीवल्लभाय । गुणिने । गोमन्ताय । गारुडाय । गौराय । गौरीशाय । गिरिशाय । गुहाय । गरये । गर्याय । गोपनीयाय । गोमयाय । गोचराय । गुणाय । हेरम्बायुष्यरुचिराय । गाणापत्यागमप्रियाय । घण्टाकर्णाय । घर्मरश्मये नमः । ६२०

घृणये नमः । घण्टाप्रियाय । घटाय । घटसर्पाय । घूर्णिताय । घृमणये । घृतकंबलाय । घण्टादिनादरुचिराय । घृणिने । लज्जाविवर्जिताय । घृणिमन्त्रजपप्रीतयाय । घृतयोनये ।

घृतप्रियाय। घर्घराय । घोरनादाय । अघोरशास्त्रप्रवर्तकाय । घनाघनाय। घोषयुक्ताय। घेटकाय। घेटकेश्वराय नमः (६४०)

घनाय नमः । घनरुचये। घ्रिं घ्रां घ्रां घ्रिं मन्त्रस्वरूपधृते। घनश्यामाय। घनतराय। घटोत्कचाय। घटात्मजाय। घण्टानादाय। घुर्घुराय । घूकाय । घकाराय । ङकाराख्याय । ङकारेशाय । ङकाराय। ङकारबीजनिलयाय । ङां ङिं मन्त्र स्वरूपधृते । चतुष्षष्टिकलादायिने। चतुराय। चञ्चलाय। चलाय। चक्रिणे नमः (६६०)

चक्राय नमः। चक्रधराय। श्री बीजजपतत्पराय। चण्डाय। चण्डेश्वराय। चारवे। चक्रपाणये। चराचराय। चराचरमयाय। चिन्तामणये । चिन्तितसारथये । चण्डरश्मये । चन्द्रमौलये । चण्डीहृदयनन्दनाय । चक्राङ्किताय । चण्डदीप्तिप्रियाय । चूडालशेखराय। चण्डाय। चण्डालदमनाय। चिन्तिताय नमः (६८०)

चिन्तितार्थदाय । चित्तार्पिताय । चित्तमायिने । चित्रविद्यमयाय । चिदे । चिच्छक्तये । चेतनाय । चिन्त्याय । चिदाभासास। चिदात्मकाय। छन्दचारिणे। छन्दगतये। छात्राय। छात्रप्रियाय। छात्रच्छिदे। छेदकृते। छेदनाय। छेदाय। छन्दः शास्त्रविशारदाय। छन्दोमयाय नमः। (७००)

छन्दोगम्याय नमः । छान्दोग्याय । छन्दसांपतये । छन्दोभेदाय। छन्दनीयाय। छन्दसे। छन्दोरहस्यविदे। छत्रधारिणे। छत्रभृताय । छत्रदाय । छात्रपालकाय । छिन्नप्रियाय । छिन्नमस्तकाय। छिन्नमन्त्रप्रसादकाय। छिन्नताण्डवसंभूताय। छिन्नयोगविशारदाय। जाबालिपूज्याय। जन्माद्याय। जनित्रे। जन्मनाशकाय नमः। ७२०

जपायुष्यप्रियकराय नमः। जपादाडिमरागधृते। जमलाय। जैनताय। जन्याय। जन्मभूम्यै। जनप्रियाय। जन्माद्याय। जनप्रियकराय। जनित्रे। जाजिरागधृते। जैनमार्गरताय। जैनाय। जितक्रोधाय। जितेन्द्रियाय। जर्जज्जटाय। जर्जभूषिणे। जटाधराय। जगद्गुरवे। जगत्कारिणे नमः (७४०)

जामातृवरदाय नमः। अजराय। जीवनाय। जीवनाधाराय। ज्योतिः शास्त्रविशारदाय। ज्योतिषे। ज्योत्स्नामयाय। जेत्रे। जयाय। जन्मकृतादराय। जामित्राय। जैमिनीपुत्राय। ज्योतिः शास्त्रप्रवर्तकाय। ज्योतिर्लिङ्गाय। ज्योतीरूपाय। जीमूतवरदायकाय। जिताय। जेत्रे। जन्मपुत्राय। ज्योत्स्नाजालप्रवर्तकाय नमः (७६०)

जन्मादिनाशकाय नमः। जीवाय। जीवातवे। जीवनौषधाय। जराहराय। जाड्यहराय। जन्माजन्मविवर्जिताय। जनकाय। जननीनाथाय। जीमूताय। जाम्बवप्रियाय। जपमूर्तये। जगन्नाथाय। जगत्स्थावरजङ्गमाय। जारदाय। जारविदे। जाराय जठराग्निप्रवर्तकाय। जीर्णाय। जीर्णरताय नमः (७८०)

जातये नमः। जातिनाथाय। जगन्मयाय। जगत्प्रदाय। जगत्त्रात्रे। जराजीवनकौतुकाय। जङ्गमाय। जङ्गमाकाराय। जटिलाय। जगद्गुरवे। झरये। झञ्झारिकाय। झञ्झाय। झञ्झानवे। झरुलन्दकृते। झकारबीजनिलयाय। झूं झूं झूं मन्त्ररूपधृते। ज्ञानेश्वराय। ज्ञानगम्याय। ज्ञानमार्गपरायणाय नमः (८००)

ज्ञानकाण्डिने नमः। ज्ञेयकाण्डिने। ज्ञेयाज्ञेयविवर्जिताय। टंकास्त्रधारिणे। टङ्काराय। टीकाटिप्पणकारकाय। टां टिं टूं जपसन्तुष्टाय। टिट्टिभाय। टिट्टिभाननाय। टिट्टिभानन सहिताय।

टकाराक्षरभूषिताय । टङ्कारकारिणे । अष्टसिद्धये । अष्टमूर्तये अष्टकष्टघ्ने। ठाङ्कुराय। ढकुराय। ठष्ठाय। ढंबीजपरायणाय। ठां ठि ठूं जपयोगाढ्याय। (८२०)

डामराय। डाकिनीप्रियाय। डाकिनीनायकाय। डाडिने। डूंडूं शब्दपरायणाय। डकारात्मने। डामराय। डामरीशक्तिरञ्जिताय। डाकराय । डांकराय । डां डिं नमः । डिंडिवादनतत्पराय । डकाराढ्याय । डंकहीनाय । डामरीवादनतत्पराय । ढांकृतये । ढांपतये। ढां ढिं ढूं ढैं ढौं शब्दतत्पराय। ढोढि भूषण भूषाढ्याय। ढीं ढीं पालाय नमः। (८४०)

ढपारजाय नमः । णकार कुण्डलाय । णाडीवर्गप्राणाय । णणाद्रिभुवे । णकारपञ्जरीशाय । णां णिं णूं णं प्रवर्तकाय । तरुशाय। तरुमध्यस्थाय। तर्वन्ताय। तरुमध्यगाय। तारकाय। तारतम्याय। तारनाथाय। सनातनाय। तरुणाय। ताम्रचूडाय। तमिस्रानायकाय। तमिने। तोताय। त्रिपथगाय नमः (८६०)

तीव्राय नमः । तीव्रवेगाय । त्रिशब्दकृते । तारिमताय । तालधराय। तपश्शीलाय। त्रपाकराय। तन्त्रमागरताय। तन्त्राय। तान्त्रिकाय । तान्त्रिकोत्तमाय । तुषाराचलमध्यस्थाय । तुषारकरभूषिताय । तुराय । तुम्बीफलप्राणाय । तुलजापुर-नायकाय। तीव्रयष्टिकराय । तीव्राय । तुण्डदुर्गसमाजगाय । त्रिवर्गयज्ञकृते नमः। (८८०)

त्रय्यै नमः । त्र्यम्बकाय । त्रिपुरान्तकाय । त्रिपुरान्तकसंहाराय । त्रिधाम्ने । स्त्रीतृतीयकाय । त्रिलोकमुद्रिकाभूषाय । त्रिपञ्चन्याससंयुताय । त्रिसुगन्धये । त्रिमूर्तये। त्रिगुणाय। त्रिगुणसारथये। त्रयीमयाय। त्रिगुणाय।

त्रिपादाय । त्रिहस्तकाय । तन्त्ररूपाय । त्रिकोणेशाय । त्रिकालज्ञाय । त्रयीमयाय नमः । (९००)

त्रिसन्ध्याय नमः । त्रिकालाय । ताम्रपर्णीजलप्रियाय । तोमराय । तुमुलाय । स्थूलाय । स्थूलपुरुषरूपधृते । तस्मै । तन्त्रिणे । तन्त्रतन्त्रिणे । तृतीयाय । तरुशेखराय । तरुणेन्दुशिखाय । तालाय । तीर्थस्नाताय । त्रिशेखराय । त्रिजाय । अजेशाय । त्रिस्वरूपाय । त्रित्रिशब्दपरायणाय नमः (९२०)

तारानायकभूषाय । तरुवादनचञ्चलाय । तिष्काय । त्रिराशिकाय । त्र्यक्षाय । तरुणाय । ताटवाहनाय । तृतीयाय । तारकाय । स्तम्भाय । स्तम्भमध्यगताय । स्थिराय । तत्वरूपाय । तलाय । तालाय । तान्त्रिकाय । तन्त्रभूषणाय । तथ्याय । स्तुतिमयाय । स्थूलाय नमः (९४०)

स्थूलबुद्धये नमः । त्रपाकराय । तुष्टाय । स्तुतिमयाय । स्तोत्रे । स्तोत्रप्रीताय । स्तुतीडिताय । त्रिराशये । त्रिबन्धवे । त्रिप्रस्ताराय । त्रिधागतये । त्रिकालेशाय । त्रिकालज्ञाय । त्रिजन्मने । त्रिमेखलाय । त्रिदोषाय । त्रिवर्गाय । त्रैराशिकफलप्रदाय । तन्त्रसिद्धाय । तन्त्ररताय नमः । (९६०)

तन्त्राय नमः । तन्त्रफलप्रदाय । त्रिपुरारये । त्रिमधुराय । त्रिशक्तिदाय । त्रितत्वधृते । तीर्थप्रीताय । तीर्थरताय । तीर्थाय । दानपरायणाय । त्रयक्लेशाय । तन्त्रणेशाय । तीर्थश्राद्धफलप्रदाय । तीर्थाय । तित्तिडीफलभोजनाय । तित्तिडीफलभूषाढ्याय । ताम्रनेत्र विभूषिताय । तक्षाय । स्तोत्रपाठप्रीताय नमः । ९८०

स्तोत्रमयाय नमः । स्तुतिप्रियाय । स्तवराजजपप्राणाय । स्तवराजजपप्रियाय । तैलाय । तिलमनसे । तैलपक्वान्न-

प्रीतमानसाय । तैलाभिषेकसन्तुष्टाय । तैलचर्वणतत्पराय । तैलाहारप्रियाय । तैलाहारप्राणाय । तिलमोदकतोषणाय । तिलपिष्टान्नभोजिने । तिलपर्वतरूपधृते । थकारकूटनिलयाय । थैरये । थैः शब्दतत्पराय । थिमाथिमाथिमारूपाय । थै थै थै नाट्यनायकाय । स्थाणुरूपाय नमः (१०००)

# श्री मेधादक्षिणामूर्तित्रिशती

(मन्त्राक्षराद्यादिमा)

ओंकाररूपाय नमः । ओंकारगृहकर्पूरदीपकाय । ओंकारशैलपञ्चास्याय । ओंकारसुमहत्पदाय । ओंकारपञ्जरशुकाय । ओंकारोद्यानकोकिलाय । ओंकारवनमायूराय । ओंकारकमलाकराय । ओंकारकूटनिलयाय । ओंकारतरुपल्लवाय । ओंकार चक्रमध्यस्थाय । ओंकारेश्वरपूजिताय । ओंकारपदसंवेद्याय नमः । १३

नन्दीशाय नमः । नन्दिवाहनाय । नारायणाय । नराधाराय । नारीमानसमोहनाय । नान्दीश्राद्धप्रियाय । नाट्यतत्पराय । नारदप्रियाय । नानाशास्त्ररहस्यज्ञाय । नदीपुलिनसंस्थिताय । नम्राय । नम्रप्रियाय । नागभूषणाय नमः । २६

मोहिनीप्रियाय नमः । महामान्याय । महादेवाय । महाताण्डवपण्डिताय । माधवाय । मधुरालापाय । मीनाक्षीनायकाय । मुनये । मधुपुष्पप्रियाय । मानिने । माननीयाय । मतिप्रियाय । महायज्ञप्रियाय नमः । ३९

भक्ताय नमः । भक्तकल्पमहातरवे । भूतिदाय । भगवते । भक्तवत्सलाय । भवभैरवाय । भवाब्धितरणोपायाय ।

भाववेद्याय। भवापहाय । भवानीवल्लभाय । भानवे । भूतिभूषितविग्रहाय नमः ५१

गणाधिपाय नमः । गणाराध्याय । गम्भीराय । गणभृते । गुरवे । गानप्रियाय । गुणाधाराय । गौरीमानसमोहनाय । गोपालपूजिताय। गोप्त्रे। गौराङ्गाय। गिरिशाय। गुहाय नमः ६४

वरिष्ठाय नमः। वीर्यवते। विदुषे। विद्याधाराय। वनप्रियाय। वसन्तपुष्परुचिरमालालङ्कृतमूर्धजाय । विद्वत्प्रियाय । वीतिहोत्राय। विश्वामित्रवरप्रदाय। वाक्पतये। वरदाय। वायवे। वाराहीहृदयङ्गमाय नमः। ७७

तेजःप्रदाय नमः । तन्त्रमयाय । तारकासुरसंघहृते । ताटकान्तकसंपूज्याय । तारकाधिपभूषणाय । त्रैयम्बकाय । त्रिकालज्ञाय । तुषाराचलमन्दिराय । तपनाग्निशशाङ्काक्षाय । तीर्थाटनपरायणाय । त्रिपुण्ड्रविलसत्फालफलकाय । तरुणाय । तरवे। ९०

दयालवे नमः । दक्षिणामूर्तये । दानवान्तकपूजिताय । दारिद्र्यनाशकाय । दीनरक्षकाय । दिव्यलोचनाय । दिव्यरत्नसमाकीर्णकण्ठाभरणभूषिताय । दुष्टराक्षसदर्पघ्नाय । दुराराध्याय । दिगम्बराय । दिक्पालकसमाराध्यचरणाय । दीनवल्लभाय। दम्भाचारहराय नमः १०३

क्षिप्रकारिणे नमः । क्षत्रियपूजिताय । क्षेत्रज्ञाय । क्षामरहिताय । क्षौमाम्बरविभूषिताय । क्षेत्रपालार्चिताय । क्षेमकारिणे । क्षीरोपमाकृतये । क्षीराब्धिजामनोनाथपूजिताय । क्षयरोगहृते । क्षपाकरधराय । क्षोभवर्जिताय । क्षितिसौख्यदाय नमः ११६

नानारूपधराय नमः । नामरहिताय । नादतत्पराय । नरनाथप्रियाय । नग्नाय । नानालोकसमर्चिताय । नौकारूढाय । नदीभर्त्रे । निगमाश्वाय । निरञ्जनाय । नानाजिनधराय । नीललोहिताय । नित्ययौवनाय नमः (१२९)

मूलाधारादिचक्रस्थाय नमः । महादेवीमनोहराय । माधवार्चितपादाब्जाय । माल्यपुष्पार्चनप्रियाय । मन्मथान्तकराय । मित्रमहामण्डलसंस्थिताय । मित्रप्रियाय । मित्रदन्तहराय । मङ्गलवर्धनाय । मन्मथानेकधिक्कारिलावण्याश्चितविग्रहाय । मित्रेन्दुकृत चक्राढ्यमेदिनी रथनायकाय । मधुवैरिणे । महाबाणाय । मन्दराचलमन्दिराय नमः । (१४३)

तन्वीसहायाय नमः । त्रैलोक्यमोहनास्त्रकलामयाय । त्रिकालज्ञानसम्पन्नाय । त्रिकालज्ञानदायकाय । त्रयीनिपुणसंसेव्याय । त्रिशक्तिपरिसेविताय । त्रिणेत्राय । तीर्थफलकाय । तन्त्रमार्गप्रवर्तकाय । तृप्तिप्रदाय । तन्त्रयन्त्रमन्त्रतत्परसेविताय । त्रयीशिखामयाय नमः (१५५)

यक्षकिन्नराद्यमरार्चिताय नमः । यमबाधाहराय । यज्ञनायकाय । यज्ञमूर्तिभृते । यज्ञेशाय । यज्ञकर्त्रे । यज्ञविघ्नविनाशनाय । यज्ञकर्मफलाध्याक्षाय । यज्ञभोक्त्रे युगावहाय । युगाधीशाय । यदुपतिसेविताय नमः (१६७)

महदाश्रयाय नमः । माणिक्यकङ्कणकराय । मुक्ताहारविभूषिताय । मणिमञ्जीरचरणाय । मलयाचलनायकाय । मृत्युञ्जयाय । मृत्तिकराय । मुदिताय । मुनिसत्तमाय । मोहिनीनायकाय । मायापत्यै । मोहनरूपधृते नमः (१७९)

हरिप्रियाय नमः । हविष्याशाय । हरिमानसगोचराय । हराय । हर्षप्रदाय । हालाहलभोजनतत्पराय । हरिध्वज-समाराध्याय । हरिब्रह्मेन्द्रपूजिताय । हारीतवरदाय । हासजितराक्षससंहतये । हृत्पुण्डरीकनिलयाय । हृतभक्त-विपद्गणाय नमः । (१९१)

मेरुशैलकृतावासाय नमः । मन्त्रिणीपरिसेविताय । मन्त्रज्ञाय । मन्त्रतत्वार्थपरिज्ञानिने । मदालसाय । महादेवी-समाराध्यदिव्यपादुकरञ्जिताय । मन्त्रात्मकाय । मन्त्रमयाय । महालक्ष्मीसमर्चिताय । महाभूतमयाय । मायापूजिताय । मधुरस्वनाय नमः । २०३

धाराधरोपमगलाय नमः । धरास्यन्दनसंस्थिताय । ध्रुवसंपूजिताय । धात्रीनाथभक्तवरप्रदाय । ध्यानगम्याय । ध्याननिष्ठहृत्पद्मान्तरपूजिताय । धर्माधीनाय । धर्मरताय । धनदाय । धनदप्रियाय । धनाध्यक्षार्चनप्रीताय । धीरविद्वज्जनाश्रयाय नमः (२१५)

प्रणवाक्षरमध्यस्थाय नमः । प्रभवे । पौराणिकोत्तमाय । पद्मालयापतिनुताय । परस्त्रीविमुखप्रियाय । पञ्चब्रह्ममयाय । पञ्चमुखाय । परमपावनाय । पञ्चबाणप्रमथनाय । पुरारातये । परात्पराय । पुराणन्यायमीमांसधर्मशास्त्र प्रवर्तकाय नमः । २२७

ज्ञानप्रदाय । ज्ञानगम्याय । ज्ञानतत्परपूजिताय । ज्ञानवेद्याय । ज्ञातिहीनाय । ज्ञेयमूर्तिस्वरूपधृते । ज्ञानदात्रे । ज्ञानशीलाय । ज्ञानवैराग्यसंयुताय । ज्ञानमुद्राञ्चितकराय । ज्ञातमन्त्रकदम्बकाय । ज्ञानवैराग्यसंपन्नवरदाय नमः । २३९

प्रकृतिप्रियाय नमः । पद्मासनसमाराध्याय । पद्मपत्रायतेक्षणाय । परस्मै ज्योतिषे । परस्मै धाम्ने । प्रधानपुरुषाय। परस्मै । प्रावृड्विवर्धनाय । प्रावृण्णिधये । प्रावृट्खगेश्वराय । पिनाकपाणये । पक्षीन्द्रवाहनाराध्यपादुकाय नमः । २५१

यजमानप्रियाय नमः । यज्ञपतये । यज्ञफलप्रदाय । यागाराध्याय । योगगम्याय । यमपीडाहराय । यतये । यातायातादिरहिताय । यतिधर्मपरायणाय । यादोनिधये । यादवेन्द्राय। यक्षकिन्नरसेविताय नमः । २६३

छन्दोमयाय नमः । छत्रपतये। छत्रपालनतत्पराय। छन्दः शास्त्रादिनिपुणाय । छान्दोग्यपरिपूरिताय । छिन्नाप्रियाय । छत्रहस्ताय । छिन्नामन्त्रजपप्रियाय । छायापतये । छद्मगारये । छलजात्यादिदूरगाय। छाद्यमानमहाभूतपञ्चकाय नमः (२७५)

स्वादु तत्पराय नमः । सुराराध्याय। सुरपतये। सुन्दराय। सुन्दरीप्रियाय । सुमुखाय । सुभगाय । सौम्याय । सिद्धमार्गप्रवर्तकाय । सर्वशास्त्ररहस्यज्ञाय । सोमाय । सोमविभूषणाय नमः (२८७)

हाटकाभजटाजूटाय नमः । हाटकाय । हाटकप्रियाय । हरिद्राकुङ्कुमोपेतदिव्यगन्धप्रियाय । हरये । हाटकाभरणोपेत-रुद्राक्षकृतभूषणाय। हैहयेशाय। हतरिपवे। हरिमानसतोषणाय। हयग्रीवसमाराध्याय । हयग्रीववरप्रदाय । हारायितमहाभक्त सुरनाथमहोहराय। दक्षिणामूर्तये नमः । ३००

दक्षिणामूर्तये विद्महे ध्यानाधिष्ठाय धीमहि । तन्नो बोधः प्रयोदयात्।

# श्री मेधादक्षिणामूर्त्यष्टोत्तरशतनामावलिः ।

मूलमन्त्र वर्णाद्यात्मका -

ओङ्काराचलसिंहेन्द्राय नमः । ओङ्कारोद्यानकोकिलाय । ओङ्कारनीडशुकराजे । ओङ्कारारण्यकुञ्जराय । नगराज सुताजानतये । नगराजनिजालयाय । नवमाणिक्यमालाढ्याय । नवचन्द्रशिखामणये । नन्दिताशेषमौनीन्द्राय । नन्दीशादिम-देशिकाय । मोहानलसुधाधाराय । मोहाम्बुजसुधाकराय । मोहान्धकारतरणये । मोहोत्पलनभोमणये । भक्तज्ञानाब्धि-शीतांशवे । भक्तज्ञानतृणानलाय । भक्तांभोजसहस्रांशवे । भक्तकेकिघनाघनाय । भक्तकैरवराकेन्दवे । भक्तकोकदिवाकराय नमः (२०)

गजाननादिसंपूज्याय नमः । गजचर्मोज्ज्वलाकृतये । गङ्गाधवलदिव्याङ्गाय । गङ्गाभङ्गलसज्जटाय । गगनाम्बरसंवीताय । गगनामुक्तमूर्धजाय । वदनाब्जजितश्रिये । वदनेन्दुस्फुरद्दिशाय । वरदानैकनिपुणाय । वरवीणोज्ज्वलत्कराय । वनवाससमुल्लासिने । वनलीलैकलोलुपाय । तेजः पुञ्जघनाकाराय । तेजसाम-विभासकाय । विधेयानां तेजःप्रदाय । तेजोमयनिजाश्रमाय । दमितानङ्गसङ्ग्रामाय । दरहासोज्ज्वलन्मुखाय । दयारस सुधासिन्धवे । दरिद्रधनशेवधये नमः (४०)

क्षीरेन्दुस्फटिकाकाराय नमः । क्षितीन्द्रमकुटोज्ज्वलाय । क्षीरोपहाररसिकाय । क्षिप्रैश्वर्यफलप्रदाय । नानाभरणमुक्ताङ्गाय । नारीसंमोहनाकृतये । नादब्रह्मरसास्वादिने । नागभूषणभूषिताय । मूर्तिनिन्दितकन्दर्पाय । मूर्तामूर्तजगद्वपुषे । मूकाज्ञानतमोभानवे । मूर्तिमत्कल्पपादपाय । तरुणादित्यसङ्काशाय । तन्त्रीवादन-

तत्पराय। तरुमूलैकनिलयाय । तप्तजाम्बूनदप्रभाय । तत्वपुस्तोल्लसत्पाणये। तपनोडुपलोचनाय। यमसन्नुतसंकीर्तये। यमसंयमसंयुताय नमः (६०)

यतिरूपधराय नमः । मौनमुनीन्द्रोपास्यविग्रहाय । मन्दारहाररुचिराय। मदनायुतसुन्दराय। मन्दस्मितलसद्वक्त्राय। मधुराधरपल्लवाय। मञ्जीरमञ्जुपादाब्जाय। मणिपट्टोल्लसत्कटये। हस्ताङ्कुरितचिन्मुद्राय । हंसयोगपटूत्तमाय । हंसजप्याक्षमालाढ्याय । हंसेन्द्राराध्यपादुकाय । मेरुशृङ्गसमुल्लासिने । मेघश्यामममनोहराय। मेघाङ्कुरालवालाग्र्याय। मेधापक्वफलद्रुमाय। धार्मिकान्तकृतावासाय । धर्ममार्गप्रवर्तकाय । धामत्रयनिजारामाय। धरोत्तमहारथाय नमः (८०)

प्रबोधोदारदीपश्रिये नमः । प्रकाशितजगत्त्रयाय । प्रज्ञाचन्द्रशिलाचन्द्राय । प्रज्ञामणिलसत्कराय । ज्ञानिहृद्भासमानात्मने । ज्ञातॄणामविदूरगाय । ज्ञानायादृतदिव्याङ्गाय । ज्ञातिजातिकुलातिगाय। प्रपन्नपारिजाताग्र्याय। प्रणतार्त्यब्धिबाडबाय । भूतानां प्रमाणभूताय । प्रपञ्चहितकारकाय । यमिसत्तमसंसेव्याय। यक्षगेयात्मवैभवाय। यज्ञाधिदेवतामूर्तये। यजमानवपुर्धराय । छत्राधिपदिगीशाय । छत्रचामरसेविताय । छन्दः शास्त्रादिनिपुणाय। छलजात्यादिदूरगाय नमः। १००

स्वाभाविकसुखैकात्मने नमः । स्वानुभूतिरसोदधये । स्वाराज्यसंपदध्यक्षाय । स्वात्माराममहामतये । हाटकाभजटाजूटाय । हासोदस्तारिमण्डलाय । हालाहलोज्ज्वलगलाय । हारायितभुजङ्गमाय नमः। १०८

इति श्री मेधादक्षिणामूर्तिमनुवर्णाद्यादिमा

अष्टोत्तरशतनामावलिः॥

# श्री दक्षिणामूर्त्यष्टोत्तरशतनामस्तोत्रम्

व्याख्यारुद्राक्षमाले कलशसुरभिते बाहुभिर्वामपादं
बिभ्राणो जानुमूर्ध्नि वटतरुनिवृतावस्यधो विद्यमानः ।
सौवर्णे योगपीठे लिपिमयकमले सूपविष्टस्त्रिणेत्रः
क्षीराभश्चन्द्रमौलिर्वितरतु नितरां शुद्धबुद्धिं शिवो नः ॥

विद्यारूपी महायोगी शुद्धज्ञानी पिनाकधृत् ।
रत्नालङ्कृतसर्वाङ्गो रत्नमाली जटाधरः ॥ १

गङ्गाधार्यचलावासी सर्वज्ञानी समाधिधृत् ।
अप्रमेयो योगनिधिस्तारको भक्तवत्सलः ॥ २

ब्रह्मरूपी जगद्व्यापी विष्णुमूर्तिः पुरान्तकः ।
उक्षवाहश्चर्मवासाः पीताम्बरविभूषणः ॥ ३

मोक्षसिद्धिर्मोक्षदायी दानवारिर्जगत्पतिः ।
विद्याधारी शुक्लतनुः विद्यादायी गणाधिपः ॥ ४

पापापस्मृतिसंहर्ता शशिमौलिर्महास्वनः ।
सामप्रियः स्वयं साधुः सर्वदेवैर्नमस्कृतः ॥ ५

हस्तवह्निधरः श्रीमान् मृगधारी च शङ्करः ।
यज्ञनाथः क्रतुध्वंसी यज्ञभोक्ता यमान्तकः ॥ ६

भक्तानुग्रहमूर्तिश्च भक्तसेव्यो वृषध्वजः ।
भस्मोद्धूलितसर्वाङ्गोऽप्यक्षमालाधरो महान् ॥ ७

त्रयीमूर्तिः परं ब्रह्म नागराजैरलङ्कृतः ।
शान्तरूपो महाज्ञानी सर्वलोकविभूषणः ॥ ८ ॥

अर्धनारीश्वरो देवो मुनिसेव्यः सुरोत्तमः ।
व्याख्यानदेवो भगवान् अग्निचन्द्रार्कलोचनः ॥ ९

जगत्स्रष्टा जगद्गोप्ता जगद्ध्वंसी त्रिलोचनः ।
जगद्गुरुर्महादेवो महानन्दपरायणः ॥ १०

जटाधारी महावीरो ज्ञानदेवैरलङ्कृतः ।
व्योमगङ्गाजलस्नाता सिद्धसङ्घसमर्चितः ॥ ११

तत्त्वमूर्तिर्महायोगी महासारस्वतप्रदः ।
व्योममूर्तिश्च भक्तानामिष्टकामफलप्रदः ॥ १२

वीरमूर्तिर्विरूपी च तेजोमूर्तिरनामयः ।
वेदवेदाङ्गतत्त्वज्ञश्चतुष्षष्टिकलानिधिः ॥ १३

भवरोगभयहन्ता भक्तानामभयप्रदः ।
नीलग्रीवो ललाटाक्षो गजचर्मा च ज्ञानदः ॥ १४

अरोगी कामदहनस्तपस्वी विष्णुवल्लभः ।
ब्रह्मचारी च संन्यासी गृहस्थाश्रमकारणः ॥ १५

दान्तशमवतां श्रेष्ठः सत्वरूपो दयानिधिः ।
योगपट्टाभिरामश्च वीणाधारी विचेतनः ॥ १६

मन्त्रप्रज्ञानुगाचारो मुद्रापुस्तकधारकः ।
रागहिक्कादिरोगाणां विनिहन्ता सुरेश्वरः ॥ १७

ओं नमो भगवते गुर्वन्तेवासिवत्सलाय सूक्ष्मरूपाय गुरवे सदाशिवाय सद्गुणपरिपूर्णाय षट्त्रिंशत्तत्त्वाधिकाय महादेव महामुनीश्वर महानन्दरूपाय सगुणरूप दक्षिणामूर्तिसाम्बशिव मयि प्रापय क्लीं श्रीं ओं नमः चतुष्षष्टिकला विद्या मयि प्रापय, मयि सर्वजगद्वित्तं प्रापय, मयि सर्वधान्यानि मद्गेहं प्रापय भूतप्रेतपिशाच ब्रह्मराक्षसानां असन्निकृष्टे वर्त्मनि प्रापय प्रापय क्लीं श्रीं ओं नमः ।

# श्री दक्षिणामूर्त्यष्टोत्तरशतनामावलिः ।

विद्यारूपिणे नमः । महायोगिने । शुद्धज्ञानिने । पिनाकधृते । रत्नालङ्कृत सर्वाङ्गिणे । रत्नमालिने । जटाधराय । गङ्गाधारिणे । अचलावासिने । सर्वज्ञानिने । समाधिधृते । अप्रमेयाय । योगनिधये । तारकाय । भक्तवत्सलाय । ब्रह्मरूपिणे । जगद्व्यापिने । विष्णुमूर्तये । पुरान्तकाय । उक्षवाहाय नमः । (२०)

चर्मवाससे नमः । पीताम्बरविभूषणाय । मोक्षसिद्धये । मोक्षदायिने । दानवारये । जगत्पतये । विद्याधारिणे । शुक्लतनवे । विद्यादायिने । गणाधिपाय । पापापस्मृतिसंहर्त्रे । शशिमौलये । महास्वनाय । सामप्रियाय । स्वयं साधवे । सर्वदेवैर्नमस्कृताय । हस्तवह्निधराय । श्रीमते । मृगधारिणे । शङ्कराय नमः (४०)

यज्ञनाथाय नमः । क्रतुध्वंसिने । यज्ञभोक्त्रे । यमान्तकाय । भक्तानुग्रहमूर्तये । भक्तसेव्याय । वृषध्वजाय । भस्मोद्धूलितसर्वाङ्गाय । अक्षमालाधराय । महते । त्रयीमूर्तये । परस्मै ब्रह्मणे । नागराजैरलङ्कृताय । शान्तरूपाय । महाज्ञानिने । सर्वलोकविभूषणाय । अर्धनारीश्वराय । देवाय । मुनिसेव्याय । सुरोत्तमाय नमः (६०)

व्याख्यानदेवाय । भगवते । अग्निचन्द्रार्कलोचनाय । जगत्स्रष्ट्रे । जगद्गोप्त्रे । जगद्ध्वंसिने । त्रिलोचनाय । जगद्गुरवे । महादेवाय । महानन्दपरायणाय । जटाधारिणे । महावीराय । ज्ञानदेवैरलङ्कृताय । व्योमगङ्गाजलस्नाताय । सिद्धसंघसमर्चिताय । तत्त्वमूर्तये । महायोगिने । महासारस्वतप्रदाय । व्योममूर्तये । भक्तानामिष्टकामफलप्रदाय नमः । (८०)

वीरमूर्तये नमः । विरूपिणे । तेजोमूर्तये । अनामयाय । वेदवेदान्ततत्त्वज्ञाय । चतुःषष्टिकलानिधये । भवरोग भयहन्त्रे । भक्तानामभयप्रदाय । नीलग्रीवाय । ललाटाक्षाय । गजचर्मणे । ज्ञानदाय । अरोगिणे । कामदह्नाय । तपस्विने । विष्णुवल्लभाय । ब्रह्मचारिणे । सन्न्यासिने । गृहस्थाश्रमकारणाय । दान्तशमवतां श्रेष्ठाय नमः (१००)

सत्वरूपदयानिधये नमः । योगपट्टाभिरामाय । वीणाधारिणे । विचेतनाय । मन्त्रप्रज्ञानुगाचाराय । मुद्रापुस्तकधारकाय । रागहिक्कादिरोगाणां विनिहन्त्रे । सुरेश्वराय नमः (१०८)

## श्रीमेधादक्षिणामूर्तेः आनुष्टुभमन्त्रराजषट्कम् ।

नमो भगवते तुभ्यं वटमूलनिवासिने ।
वागीशाय महाज्ञान दायिनेऽमायिने नमः ।। १

गुरवे सर्वलोकानां भिषजे भवरोगिणाम् ।
निधये सर्वविद्यानां दक्षिणामूर्तये नमः ।। २

अक्षीणगुणगण्याय दक्षिणाय जगद्भृते ।
त्र्यक्षाय सर्वगुरवे दक्षिणामूर्तये नमः ।। ३

ईश्वरो गुरुरात्मेति मूर्तिभेदविभागिने ।
व्योमवद्व्याप्तदेहाय दक्षिणामूर्तये नमः ।। ४

ओं नमः प्रणवार्थाय शुद्धज्ञानैक मूर्तये ।
निर्मलाय प्रशान्ताय दक्षिणामूर्तये नमः ।। ५

अमलायाद्वितीयाय मोक्षैकफलहेतवे।
मनोगिरामदूराय दक्षिणामूर्तये नमः ।। ६

# दक्षिणामूर्त्युपनिषत्

ब्रह्मावर्ते महाभाण्डीरवटमूले महासत्राय समेता महर्षयः शौनकादयस्ते ह समित्पाणयस्तत्त्वजिज्ञासवो मार्कण्डेयं चिरंजीविनमुपसमेत्य पप्रच्छुः केन त्वं चिरं जीवसि केन वाऽऽनन्दमनुभवसीति । परमरहस्यशिवतत्त्वज्ञानेनेति स होवाच ।।

किं तत् परमरहस्यशिवतत्त्वज्ञानम्। तत्र को देवः। के मन्त्राः। का निष्ठा। किं तज्ज्ञानसाधनम्। कः परिकरः। को बलिः। कः कालः। किं तत्स्थानमिति।।

स होवाच। येन दक्षिणामुखः शिवोऽपरोक्षीकृतो भवति तत् परमरहस्यशिवतत्वज्ञानम्।।

यः सर्वोपरमे काले सर्वानात्मन्युपसंहृत्य स्वात्मानन्दसुखे मोदते प्रकाशते वा स देवः ।।

अत्रैते मन्त्ररहस्यश्लोका भवन्ति-अस्य श्रीमेधादक्षिणामूर्तिमन्त्रस्य ब्रह्मा ऋषिः। गायत्री छन्दः। देवता दक्षिणास्यः। मन्त्रेणाङ्गन्यासः ।।

ॐ आदौ नम उच्चार्य ततो भगवते पदम्।
दक्षिणेति पदं पश्चान्मूर्तये पदमुद्धरेत्।।

अस्मच्छब्दं चतुर्थ्यन्तं मेधां प्रज्ञां पदं वदेत्।
प्रमुच्चार्य ततो वायुबीजं च्छं च ततः पठेत्।।

अग्निजायां ततस्त्वेष चतुर्विंशाक्षरो मनुः ॥

स्फटिकरजतवर्णं मौक्तिकीमक्षमालां
अमृतकलशविद्यां ज्ञानमुद्रां कराग्रे।
दधतमुरगकक्ष्यं चन्द्रचूडं त्रिणेत्रं
विधृतविविधभूषं दक्षिणामूर्तिमीडे ॥

मूलमन्त्रः - ओं नमो भगवते दक्षिणामूर्तये मह्यं मेधां प्रज्ञां प्रयच्छ स्वाहा।

मन्त्रेण न्यासः -

आदौ वेदादिमुच्चार्य स्वराद्यं सविसर्गकम्।
पञ्चार्णं तत उद्धृत्य अतरं सविसर्गकम्।
अन्ते समुद्धरेत्तारं मनुरेष नवाक्षरः ॥

मुद्रां भद्रार्थदात्रीं सपरशुहरिणं बाहुभिर्बाहुमेकं
जान्वासक्तं दधानो भुजगवरसमाबद्धकक्ष्यो वटाधः ॥
आसीनश्चन्द्रखण्डप्रतिघटितजटाक्षीरगौरस्त्रिणेत्रो
दद्यादाद्यैःशुकाद्यैर्मुनिभिरभिवृतो भावशुद्धिं भवो नः ॥

मूलमन्त्रः - ओं दक्षिणामूर्तिरतरों।

मन्त्रेण न्यासः -

तारं ब्लूंनम उच्चार्य माया वाग्भवमेव च।
दक्षिणापदमुच्चार्य ततः स्यान्मूर्तयेपदम् ॥

ज्ञानं देहि पदं पश्चाद्वह्निजायां ततो न्यसेत्।
मनुरष्टादशार्णोऽयं सर्वमन्त्रेषु गोपितः ॥

भस्मव्यापाण्डराङ्गः शशिशकलधरो ज्ञानमुद्राक्षमाला
वीणापुस्तैर्विराजत्करकमलधरो योगपट्टाभिरामः।
व्याख्यापीठे निषण्णो मुनिवरनिकरैः सेव्यमानः प्रसन्नः
सव्यालः कृत्तिवासाः सततमवतु नो दक्षिणामूर्तिरीशः ।।

मूलमन्त्रः -ओं ब्लूं नमो ह्रीं ऐं दक्षिणामूर्तये ज्ञानं देहि स्वाहा।

मन्त्रेण न्यासः -

तारं परां रमाबीजं वदेत् साम्बशिवाय च।
तुभ्यं चानलजायां तु मनुर्द्वादशवर्णकः ।।

वीणां करैः पुस्तकमक्षमालां बिभ्राणमभ्राभगलं वराढ्यम्।
फणीन्द्रकक्ष्यं मुनिभिः शुकाद्यैः सेव्यं वटाधःकृतनीडमीडे ।।

मूलमन्त्रः - ओं ह्रीं श्रीं साम्बशिवाय तुभ्यं स्वाहा।
विष्णुःऋषिरनुष्टुप् छन्दः। देवता दक्षिणाऽऽस्यः।

मन्त्रेण न्यासः।

तारं नमो भगवते तुभ्यं वटपदं ततः।
मूलेति पदमुच्चार्य वासिने पदमुद्धरेत्।।

वागीशाय पदं पश्चान्महाज्ञानपदं ततः।
दायिने पदमुच्चार्य मायिने नम उद्धरेत्।।
आनुष्टुभो मन्त्रराजः सर्वमन्त्रोत्तमोत्तमः।।

मुद्रापुस्तकवह्निनागविलसद्बाहुं प्रसन्नाननं
मुक्ताहारविभूषणं शशिकलाभास्वत्किरीटोज्ज्वलम्।
अज्ञानापहमादिमादिमगिरामर्थं भवानीपतिं
न्यग्रोधान्तनिवासिनं परगुरुं ध्यायाम्यभीष्टाप्तये।।

मूलमन्त्रः - नमो भगवते तुभ्यं वटमूलनिवासिने।
वागीशाय महाज्ञानदायिने मायिने नमः ॥

सोऽहमिति यावदास्थितिः सा निष्ठा भवति । तदभेदेन मन्वाम्रेडनं ज्ञानसाधनम् । चित्ते तदेकतानता परिकरः । अङ्गचेष्टार्पणं बलिः । त्रीणि धामानि कालः । द्वादशान्तपदं स्थानमिति। ते ह पुनः श्रद्दधानास्तं प्रत्यूचुः -कथं वाऽस्योदयः । किं स्वरूपम्। को वाऽस्योपासक इति ॥

स होवाच -

वैराग्यतैलसंपूर्णे भक्तिवर्तिसमन्विते।
प्रबोधपूर्णपात्रे तु ज्ञप्तिदीपं विलोकयेत् ॥

मोहान्धकारे निःसारे उदेति स्वयमेव हि।
वैराग्यमरणिं कृत्वा ज्ञानं कृत्वा तु चित्रगुम् ॥

गाढतामिस्रसंशान्त्यै गूढमर्थं निवेदयेत्।
मोहभानुजसंक्रान्तं विवेकाख्यं मृकण्डुजम् ॥

तत्त्वाविचारपाशेन बद्धद्वैतभयातुरम्।
उज्जीवयन्निजानन्दे स्वस्वरूपेण संस्थितः ॥

शेमुषी दक्षिणा प्रोक्ता सा यस्याभीक्षणे मुखम्।
दक्षिणाभिमुखः प्रोक्तः शिवोऽसौ ब्रह्मवादिभिः ॥

सर्गादिकाले भगवान् विरिञ्चिरुपास्यैनं सर्गसामर्थ्यमाप्य। तुतोष चित्ते वाञ्छितार्थांश्च लब्ध्वा सोऽस्यो पासको भवति। य इमां परमरहस्य शिवतत्त्व विद्यामधीते स सर्वपापेभ्यो मुक्तो भवति। य एवं वेद स कैवल्यमनुभवतीत्युपनिषत् ॥

# श्रीदक्षिणामूर्तिसंहितायाः उद्धृता रश्मिमालामन्त्राः

अस्य श्रीमेधादक्षिणामूर्तिरश्मिमालामहामन्त्रस्य विश्वामित्राद्या ऋषयः । गायत्र्यादीनि नानाविधानि छन्दांसि । सवित्रादयो देवताः । मन्त्रस्था अचो बीजानि, हलः शक्तयः बिन्दवः कीलकानि । श्रीमेधादक्षिणामूर्तिप्रसादसिद्ध्यर्थे जपे विनियोगः ।

ओं आं ओं अङ्गुष्ठाभ्यां नमः । ओं ईं ओं तर्जनीभ्यां नमः । ओं ऊं ओं मध्यमाभ्यां नमः । ओं ऐं ओं अनामिकाभ्यां नमः । ओं औं ओं कनिष्ठिकाभ्यां नमः । आं अः ओं करतलकरपृष्ठाभ्यां नमः । एवं हृदयादिन्यासः । ध्यानम् -

असङ्ख्यातमहःपुञ्जपिञ्जरीकृतविग्रहम् ।
रश्मिमालामयं वन्दे सदाशिवमुमापतिम् ॥

पञ्च पूजाः -

१ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ।

२ ओं नमो भगवते दक्षिणामूर्तये मह्यं मेधां प्रज्ञां प्रयच्छ स्वाहा ।

३ ओं ह्रीं श्रीं साम्बसदाशिवाय तुभ्यं स्वाहा ।

४ ओं ह्रीं दक्षिणामूर्तये तुभ्यं वटमूलनिवासिने ।
ध्यानैकनिरताङ्गाय नमो रुद्राय शम्भवे ह्रीं ओं ॥

५ ओं नमो भगवते दक्षिणामूर्तये हंसः सोहं मह्यं मेधां प्रज्ञां प्रयच्छ स्वाहा ॥

६ ओं पाशुपतास्त्राय स्वाहा ।

७ ह्रीं स्फुर स्फुर प्रस्फुर प्रस्फुर घोर घोरतर तनुरूप चट चट प्रचट प्रचट कण कण वम वम बन्धय बन्धय घातय घातय हुं फट् (स्वाहा)।

८ ओं वं वटुकाय नमः।

९ चं चण्डाय नमः।

१० ओं ऐं क्लां क्लीं क्लूं क्रों ह्रीं ह्रूं सः कुरु कुरु आपदुद्धारणाय अजामिलबन्धनाय स्वर्णाकर्षणभैरवाय मम दारिद्र्यनिर्मूलनकराय लोकेश्वराय सानन्दाय ओं श्रीं महाभैरवाय नमः।

११ ओं ह्रीं श्रीं उमामहेश्वराभ्यां नमः।

१२ ओं ह्रीं ओं नमो भगवते रुद्राय।

१३ ओं ह्रौं ओं ब्लूं नमः पालय मां पालय पालय मृतसञ्जीविनि ओं भूर्भुवः स्वः त्र्यम्बकं यजामहे + मामृतात् भूर्भुवः स्वरोम्।

१४ ओं ह्रौं ओं ब्लूं भूर्भुवःस्वरों त्र्यम्बकं + मामृतात्।

१५ ओं ह्रौं ब्लूं सः भूर्भुवः स्वरों ओं नमः शिवायै।

१६ ओं ह्रीं गौरि रुद्रदेवते योगिनि हुं फट् स्वाहा।

१७ ओं ह्रीं योगिनि योगिनि योगेश्वरि योगभयङ्करि सकल-स्थावरजङ्गमस्य मुखहृदयं मम वशं आकर्षयाकर्षय स्वाहा।

१८ ओं श्रीं ह्रीं श्रीं शिवे शिवावासे प्रसीद प्रसीद ह्रीं श्रीं ह्रीं ओं शिवकामसुन्दर्यै नमः।

१९ ओं ह्स्रैं ह्स्रौं ह्स्रः क्ष्मां ओं ह्रीं ओं ह्रीं नमः शिवाय नमः शिवाय नमः शिवाय नमः शिवाय नमः

२० ओं ह्रीं ह्रीं सौं तत्पुरुषाय विद्महे महादेवाय धीमहि। तन्नो रुद्रः प्रचोदयात्।

२१ ओं भूर्भुवःस्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्।

२२ ओं नमः शिवाय भूर्भुवः स्वः।

२३ ऐं क्लीं सौः तत्सवितुर्वरेण्यं क ए ई ल ह्रीं भर्गो देवस्य धीमहि ह स क ह ल ह्रीं धियो यो नः प्रचोदयात् सकल ह्रीं सौः क्लीं ऐं ओं आपो ज्योतीरसोऽमृतं ब्रह्म भूर्भुवः स्वरों नमः शिवाय।

२४ आवहन्ती वितन्वाना। कुर्वाणा चीरमात्मनः। वासाँसि मम गावश्च। अन्नपाने च सर्वदा। ततो मे श्रियमावह। लोमशां पशुभिः सह स्वाहा।

२५ नमः शिवाय स्वाहा।

२६ ओं ह्रीं क ए ई ल ह्रीं हसकहलह्रीं सकलह्रीं नमः शिवाय।

२७ विश्वेश्वर विरूपाक्ष विश्वरूप सदाशिव।
शरणं भव भूतेश करुणाकर शङ्कर॥

२८ ओं नमो नीलकण्ठाय।

२९ रुद्र शम्भो महादेव हर सर्वज्ञ शङ्कर।
श्रीवामदेव श्रीकण्ठ नीलकण्ठ नमोऽस्तुते॥

३० मृत्युञ्जयाय रुद्राय नीलकण्ठाय शम्भवे।
अमृतेशाय शर्वाय महादेवाय ते नमः॥

३१ भवाय भवरूपाय भीमाय भयहारिणे।
उग्रायोग्राघनाशाय शर्वाय शशिमौलये॥

३२ गौरीवल्लभ कामारे कालकूटविषाशन।
मामुद्धरापदम्भोधेः त्रिपुरघ्नान्तकान्तक॥

३३ सद्यो जातं प्रपद्यामि + भवोद्भवाय नमः।

३४ वामदेवाय नमो + मनोन्मनाय नमः॥

३५ अघोरेभ्योऽथ + रुद्ररूपेभ्यः।

३६ तत्पुरुषाय + रुद्रः प्रचोदयात्

३७ ईशानः सर्वविद्यानां + सदाशिवोम्।

३८ ओं नमो भगवते सदाशिवाय सर्पयज्ञोपवीतिने जटामकुटालङ्कृतगङ्गाचन्द्रधराय, सर्पभूषणाय सकलविद्यां मे झटिति झटिति प्रयच्छ स्वाहा।

३९ ओं नमो भगवते दक्षिणामूर्तये वीरासनैकनिलयाय ज्ञान-मुद्राधराय वटमूलवासिने सर्वभूताधिपतये कपर्दिने महादेवाय स्वाहा।

४० ओं नमो भगवते दक्षिणामूर्तये सकलदेवपूजिताय सकलविद्यास्वरूपिणे सकलजगन्मन्त्रस्वरूपिणे सृष्टि-स्थितिसंहारकर्त्रे भस्मोद्धूलितविग्रहाय नागयज्ञोपवीतिने (ताय) नीलग्रीवाय शशाङ्कशेखराय घोरापस्मारस्थित-पदाम्बुजाय महाभैरवसेविताय गौरीशोभिवामोरूवराय सनकसनन्दनसनातनसनत्कुमारादिसकलयोगिसेविताय हरिहरब्रह्मादिदेवगणपूजिताय सकलनिगमागमोप-निषत्स्तुतवैभवाय स्वाश्रितभक्तजनाशापरिपूर्तिधृत-

कङ्कणाय नन्दिभृङ्गिचण्डी(डे) शवीरभद्रप्रमुख महागण-नाथवृताय सच्चिदानन्दरूपाय सर्वलोकैकसाक्षिणे देशिकेन्द्राय पावकलोचनाय सकलगुरवे भूतप्रेतपिशाचराक्ष-सचोरापस्मारान् दह दह मां त्रायस्व त्रायस्व हुं फट् (स्वाहा)।

४१ ओं श्रीं खें खां फट् सर्वशत्रुसंहारणाय शरभसालुवपक्षिराजाय हुं फट् स्वाहा।

४२ तत्पुरुषाय विद्महे विद्यावासाय धीमहि।
तन्नो दक्षिणामूर्तिः (देवः) प्रचोदयात्॥



## ॥ श्रीदक्षिणामूर्तिमालामन्त्राः ॥

ब्रह्मा - गायत्री - श्रीदक्षिणामूर्तिः परमात्मा - ओं बीजम्। स्वाहा शक्तिः। फट् कीलकम्। (इष्टार्थे) विनियोगः॥

आं ईं ऊं ऐं औं अः इति कराङ्गन्यासाः॥

ध्यानम् -

व्याख्यारुद्राक्षमाले कलशसुलिखिते बाहुभिर्वामपादं
बिभ्राणो जानुमूर्ध्ना पदतलनिहितापस्मृतिर्घुद्रुमाधः।
सौवर्णे योगपीठे लिपिमयकमले सूपविष्टस्त्रिणेत्रः
क्षीराभश्चन्द्रमौलिर्वितरतु विमलां शुद्धबुद्धिं शिवो नः।

पञ्चपूजा॥ सहनाववतु इति शान्तिः॥

ओं नमो भगवते दक्षिणामूर्तये गुर्वन्तेवासिवत्सलाय गुरवे सूक्ष्मरूपाय सदाशिवाय निर्मलज्ञानप्रदाय षड्गुणपरिपूर्णाय

षट्त्रिंशत्तत्वाधिकाय महादेवमहामुनीश्वर महानन्दरूप श्रीशुद्ध दक्षिणामूर्ते सदाशिव मां अज्ञानान्निवर्तय सुज्ञाने मां प्रवर्तय प्रवर्तय हुं फट् स्वाहा।

ओं ऐं ह्रीं सौः ओं नमो भगवते मेधादक्षिणामूर्तये विद्यामेधाप्रज्ञाप्रदायिने पुस्तकरुद्राक्षमालाधारिणे सकल-साम्राज्यप्रदायिने परमसदागुरुमूर्तये मम चतुःषष्टिकलाविद्याः प्रापय प्रापय ब्रह्मराक्षसगणानुच्चाटयोच्चाटय मेधां प्रज्ञां दापय दापय ओं ऐं ह्रीं सौः हुं फट् स्वाहा।

ओं श्रीं ऐं ह्रीं श्रीं ओं नमो भगवते लक्ष्मीदक्षिणामूर्तये श्रां शमितासुरवृन्दाय श्रीं श्रीमत्त्रिपुरसुन्दरीपरिषेवितपादारविन्द-युगलाय श्रूं शमितशकारिजनवृन्दाय धनुर्बाणहस्ताय खड्गधराय परशुहस्ताय श्रैं श्रेष्ठजनसंस्तुतगुणवृन्दाय सुरूपाय सुरवन्दिताय श्रौं श्रौतस्मार्तादिसकलकर्मप्रवर्तकाय कर्मफलप्रदाय श्रः शरीररक्षकाय भक्तशत्रुविनाशकाय दिव्यमङ्गलविग्रहाय ह्रीं ह्रीं इति परिषेविताय अष्टैश्वर्यसंस्तुताय लक्ष्मीप्रदाय ललितामनोरञ्जनाय श्रीलक्ष्मीदक्षिणामूर्तये तुभ्यं सदाशिव मम सकलैश्वर्यं देहि देहि दापय दापय दारिद्र्यपीडितं मां आप्यायय आप्यायय। ओं श्रीं ऐं ह्रीं श्रीं ओं हुं फट् स्वाहा।।

ओं ह्रां ओं ह्रीं ओं ह्रूं ओं ह्रैं ओं ह्रौं ओं ह्रः ओं नमो भगवते लकुटदक्षिणामूर्तये विबुधवन्दितविग्रहाय शुकाद्यनेकमुनि परिवृताय नीलकण्ठाय कुठारपाणये त्रिणेत्राय दैत्यकुलनाशकाय सुजनरक्षकाय द्विजवरसेविताय फणिभूषणाय निगमसंबाधिता-हर्मुखाय निरुपमाय निर्गुणाय निजभक्तरक्षकाय निखिलसुखैक-निदानभूताय सुन्दराय ज्ञानप्रदाय कमलासनपरिषेविताय

रत्नकिरीटाय विषधरकुण्डलाय द्विजराजकलावतंसाय फणिहाराय भुजगविराजितकङ्कणाय निगमविराजितमञ्जीरकाय सकलैश्वर्यं देहि देहि दापय दापय निरवच्छिन्नसुखं देहि देहि दापय दापय दारिद्यामयतप्तं मां उज्जीवयोज्जीवय संसारार्णवतप्तं (मग्नं) मामुद्धरोद्धर ओं ह्रां ओं ह्रीं ओं ह्रूं ओं ह्रैं ओं ह्रौं ओं ह्रः हुं फट् स्वाहा ।

शिवाय नमः

# श्रीकल्याणसुन्दरपञ्चाक्षरसहस्रनामावलिः

(श्रीसुन्दरकुचांबिकासमेतश्रीतेजिनीवननाथसहस्रनामावलिः)

ओं नकाररूपाय नमः। नभोविदे । नर्तकाय । नदीधराय । नक्षत्रमालिने । नगेशाय । नभोगतये । नरसिंहबाधनाय । नानाशास्त्रविशारदाय । नागहाराय । नभोयोनये । नागाय । नरसिंहनिपातनाय। नन्दिने। नन्दिवराय। नग्नाय। नग्नबृन्दधराय। नभसे। नवपञ्चकनासिकाय। नवीनाचलनायकाय नमः। २०

नवावरणाय नमः । नवविद्रुमाधराय । नादरूपाय । नामरूपविवर्जिताय । नलिनेक्षणाय । नामपारायणप्रियाय । नवशक्तिनायकाय । नवयौवनाय । नटेश्वराय । नरसिंहमहादर्पघातिने । नारङ्गफलप्रियाय । नादहस्ताय । नागेश्वराय । नाद्याय । नानार्थविग्रहाय । नारदस्तुताय । नरकवर्जिताय। नारिकेळफलप्रदाय। नयनत्रयाय। नाट्यार्थरूपाय नमः। ४०

नागयज्ञोपवीताय नमः । नगाधिपाय। नागचूडाय। नागाय। नरेशाय । नवनीतप्रियाय । नन्दिवाहनाय । नटराजाय ।

नवमणिभूषणाय । नववीराय । नववीराश्रयाय । नवविश्वाय । नवतपसे । नवज्योतिषे । नभःपतये । नवात्मभुवे । नष्टशोकाय । नर्मालापविशारदाय । नयकर्त्रे । नवाय नमः । ६०

नवविधिप्रियाय नमः । नवकल्पकतरवे । नगरनायकाय । नरवरदाय । नागलोकप्रियाय । नामरूपवर्जिताय । नाहङ्कारिणे । नकळङ्काय । नवग्रहरूपिणे । नव्याव्ययभोजनाय । नगाधीशाय । नवसुन्दराय । नानृताय । नमज्जनतमोगुणाय । नादपुरस्कृताय । नखोत्पन्नाय । नागेन्द्रवन्दिताय । नागचर्मधराय । नागेन्द्रवन्दिताय । नागेन्द्रवेषधराय नमः । ८०

नागलोकवासिने नमः । नवविद्रुमप्रभाय । नारदादिवन्दिताय । नानाविधविचित्राय । नामानेकविशेषिताय । नवसिद्धवेषधराय । नभोधाय । नवपराय । नवगुणाय । नवगुणातीताय । नवस्वरूपिणे । नवबीजाय । नवभद्राय । नवपुरुषाय । नाहङ्काराय । नवपञ्चलोकेशाय । नवज्ञानिने । नवबुद्धये । नवानन्दमूर्तये । नवविश्वाय नमः । १००

नागविषाशनाय नमः । नागरत्नधराय । नागरञ्जिताय । नागेश्वराय । नागलिङ्गाय । नयोनये । नगधन्वने । नवबालाय । नबालाय । नवहिरण्याय । नवतिषट्तत्वाय । नारायणीनाथाय । नाद्यान्ताय । नभोज्याय । नविशिष्टाय । नागवल्लीदलप्रियाय । नाशवर्जिताय । नवमाणिक्यमकुटाय । नवनाथपूजिताय । नवयौवनशोभिताय नमः । १२०

नास्तिवर्जिताय । नगर्भवासिने । नासत्यवर्जिताय । नार्यर्धदेहाय । नतमसे । नमूर्ताय । नवमूर्ताय । नवरसपूर्णाय । नवकल्याणवेषधराय । नवसूत्रकाराय । नभीताय ।

नादब्रह्ममयाय। नाथदर्पहराय । नाशानर्थाय । नभःस्थाय । नभःस्वरूपाय। नरवेषसदनप्रतिग्रहाय। नरश्वेतान्तकमर्दिताय। नचार्तये। नश्रमोपाधये नमः। १४०

नागवाहनाय नमः । नवनाटकसूत्रधारिणे। नभोनगरेशाय। नगरपञ्चाक्षराय । नवरसोचिताय । नगरपनसारण्यवासिने । नगरभूकैलासनायकाय। नगेन्द्रकुमारीप्रियाय। नाथषण्मङ्गळ-स्थलाय । नरसिद्धवेषधराय । नवरत्नक्रयकारकाय । नन्दिमहाकाळाय । नवब्रह्मशिरच्छेत्रे । नागाभरणभूषिताय । नवकोटिशक्तिपरिवृताय । नवव्याकरणकाय । नवावरण-पूजिताय। नवकोट्यर्कतेजसे। नभस्संमिताय नमः। १६०

नदीप्रवाहमानसाय नमः। नभीस्थिताय। नरभीतिवर्जिताय। नरशाकप्रियाय । नासक्ताय । नवकोटिमन्मथविग्रहाय । नारीमोहितावधूतवेषधराय । नवकोणान्तर्गताय । नासाबिम्बकविराजिताय। नादृशाय। नाद्याय। नभोज्योतिषे। नवरत्नगृहान्तस्थाय । नादबिंदुस्वरूपिणे । नादान्तरूपाय । नराह्लादकराय । नवान्नभोजनाय । नववस्त्रधारिणे । नवभूषणप्रियाय। नरत्वविवर्जिताय नमः। १८०

नवाम्रमूलवासिने नमः । नादान्तविग्रहाय । नागेन्द्राय । नार्यर्धदेहाय । नवकल्हारलोचनाय । नवकल्पतरुवासिने । नरास्थिमालाप्रियाय । नवबिल्ववनवासिने । नामसहस्र-विशेषिताय । नामालापविनोदिताय । नभोमणये । नवखण्डस्वरूपाय । नवखण्डयन्त्रस्थिताय । नवरत्नपीठ-स्थिताय। नगरत्रयान्तकाय। नवशिष्टाय। नवपुष्टाय। नवतुष्टाय। नवबेराय। नवसाराय नमः। २००

नरतारकाय नमः । नवहेमभूषणाय । नवरत्नमणिमण्टपांतर्गताय । नदीजटाधारिणे । मकाररूपाय । महेश्वराय । मनोमयाय । महायोगिने । महाकर्मणे । मन्त्रज्ञाय । महिताय । मन्दारमालाधराय । महौषधाय । महानिधये । महामतये । महर्षये । मरीचये । महीमालाय । महाहृदयाय । महाभक्ताय नमः । २२०

महाभूताय नमः । महानिधये । महाकायाय । मङ्गालयाय । मङ्गळप्रदाय । महातपसे । महामंत्राय । महातेजसे । महाबालाय । महादेवाय । मयूरवासभूमये । मन्ददूराय । मन्मथनाशनाय । मन्त्रविद्याय । मन्त्रशास्त्रवक्त्रे । महामायाय । महानाथाय । महोत्साहाय । महाबलाय । महावीर्याय नमः । २४०

महाशक्तये नमः । महाद्युतये । महाचराय । मध्यस्थाय । महाधनुषे । महेन्द्राय । महाज्ञानिने । मातामहाय । मातरिश्वने । महायशसे । महाकल्पाय । महाधवाय । मनसे । महारूपाय । महागर्भाय । महादंभाय । मखद्वेषिणे । मलविमोचकाय । मनोन्मनीपतये । मत्ताय नमः । २६०

मत्तधूर्तशिरसे नमः । महोत्सवाय । मङ्गळाकृतये । मण्डलप्रियाय । मनोजयाय । मारिणे । मानिने । महाकाळाय । महाकेशाय । महावटवे । महात्यागाय । मध्यस्थाय । मालिने । महिमाणवे । मधुरप्रियाय । महेष्वासाय । महानन्दाय । महासत्वाय । महेशाय । महीभर्त्रे नमः । २८०

महाभुजाय नमः । मन्दस्मितमुखारविन्दाय । माणिक्यमकुटधारिणे । महालावण्याय । महावर्त्माटवीस्थिताय । महापाशुपताय । मणिपुरान्तर्गताय । ममताहन्त्रे । मनोन्मनीप्रियनंदनाय । महेश्वराय । महापूज्याय ।

महायागसमाराध्याय । महापातकनाशिने । महाभैरवपूजिताय । महायंत्राय । महासनाय । महातन्त्राय । महाकल्पाय । महाताण्डवसाक्षिणे । मनोवाचामगोचराय नमः । ३००

मदमालिने नमः । मनुविद्याय । महते । महेशाय । मधुमते । मायाय । मायातीताय । महीयसे । महासंतोषरूपाय । मार्ताण्डभैरवाराध्याय । मातृकावर्णरूपिणे । महाकैलासनिलयाय । महासाम्राज्यदायिने । मलयाचलवासिने । महावीरेन्द्रवरदाय । महाग्रासाय । मनुविद्याय । मदघूर्णितरक्ताक्षाय । मांसनिष्ठाय । मधुप्रीताय नमः । ३२०

मधुमते । महीधराय । महाकाळाय । मनस्विने । महात्मने । मध्यमाय । महाहृदयाय । महेन्द्राय । महापराक्रमाय । महादर्पमथनाय । महादान्ताय । महा[illegible]ने । महेन्द्रोपेन्द्रचंद्रार्कनिध्याताय । मायाबीजाय । महर्षिवन्दिताय । महाबलपराक्रमाय । महानादाय । मातरिश्वने । महाध्वस्थाय । मयोभुवे नमः । ३४०

महाककुप्प्रियाय । मनुजौपवाह्यक्रतवे । महापापहराय । महाभूताय । महावीर्याय । मातृकापतये । महर्षये । मणिपूराय । महाधर्माय । महासेनजनकाय । मयूरत्वप्रियाय । मनोरञ्जिताय । मार्कण्डपूजिताय । मल्लिकार्चिताय । मक्षिकार्चिताय । मातृकावेषधराय । मकरकुण्डलधराय । मराळीगमनप्रियाय । महागणेशजनकाय । मधुरभाषिताय नमः । ३६०

मरतकांकिताय । मन्मथकोटिप्रभाय । मकरासनाय । महदद्भुताय । मस्तकाक्षाय । मन्त्राक्षरस्वरूपाय । मङ्गळवेषधराय । महामेरुस्थिताय । महत्कामिने । महाशान्ताय ।

महासर्पाय। महाबीजाय। महद्भवाय। महाशर्मणे। महाभीमाय। महत्कठोराय। महाविश्वेश्वराय। महागणनाथाय। महाधनदाय। महाभव्याय नमः। ३८०

महाभूतपतये नमः । महदष्टमूर्तये । महदव्यक्ताय । महानन्दाय। महाभगवते । महाविक्रमाय । महाहिरण्याय । महातेजसे । महाप्रचेतसे । मलापहारिणे । महामृत्यवे । महाभिक्षुकाय । महाराजाय । महाकटाक्षवीक्षिताय । महाबलिप्रसन्नाय । मदनागमपारंगताय । महाभिषजे । महानीलग्रीवाय। महातेजिनीशाय नमः। ४००

शिकाररूपाय नमः । शिञ्जानमणिमण्डिताय । शिष्टाय । शिवाय। शिपिविष्टाय। शिवाश्रयाय। शिशवे। शिपिसारथये। शिवालयाय। शिवध्यानरताय। शिखण्डिने। शिवकामेश्वराय। शिवदूताय । शिवाराध्याय । शिवमूर्तये । शिवशङ्कराय । शिवप्रियाय । शिवपराय । शिष्टपूजिताय । शिवज्ञानप्रदायिने नमः। ४२०

शिवानन्दाय नमः । शिवतेजसे । शिवोपाधिरहिताय । शिवोपद्रवहराय। शिवभूतनाथाय। शिवमूलाय। शिरश्चन्द्राय। शितिकण्ठाय । शिवाराधनतत्पराय । शिवकोमळाय । शिवमार्गपरिपालकाय । शिवघनाय । शिवाभिन्नाय । शिवाधीशाय। शिवसायुज्यप्रदाय। शिवासक्ताय। शिवात्मकाय। शिवयोगिने। शिवज्ञानाय। शिवयोगेश्वराय नमः। ४४०

शिवसुन्दरकुचानाथाय नमः। शिवसिद्धाय। शिवनिधये। शिवाध्यक्षाय । शिवात्रस्ताय । शिवलीलाय । शिवतत्वाय । शिवसत्वाय। शिवबुद्धये। शिवोत्तमाय। शिवलिङ्गार्चनप्रियाय।

शिवशब्दैकनिलयाय । शिवभक्तजनप्रियाय । शिवानन्दरसाय । शिवसंपूर्णाय । शिवशंभवे । शिवज्ञानप्रदाय । शिवदिव्यविलासिने । शिवसाम्राज्यदायिने । शिवसाक्षात्काराय नमः । ४६०

शिवब्रह्मविद्याय नमः । शिवताण्डवाय । शिवशास्त्रैकनिलयाय । शिवेच्छाय । शिवसर्वदाय । शिवाभीष्टप्रदाय । शिवश्रीकण्ठकराय । शिवज्योतिषे । शिवकैलासनिलयाय । शिवरंजिने । शिवपरूषिकाय । शिवक्षतदानवाय । शिंशुमारशुकावताराय । शिवसंकल्पाय । शिखामणये । शिवभक्तैकसुलभाय । शिवात्मसुतचक्षुषे । शीतभीतहराय । शिखिवाहनजन्मभुवे । शिवलावण्याय नमः । ४८०

शिवानन्दरसाश्रयाय नमः । शिवप्रकाशाय । शिरःकृतसुरापगाय । शिवकेतनाय । शिवशैलवासिने । शिवशंभवे । शिवभक्तान्तर्गताय । शिवजीवानुकूलिकाय । शिवपुण्यफलप्रदाय । शिवसौभाग्यनिलयाय । शिवनित्यमनोहराय । शिवदिव्यरसाय । शिवसाम्राज्यविग्रहाय । शिवब्रह्मणे । शिवप्रसादसंपन्नाय । शिवसाक्षिभूताय । शिवकामिने । शिवलक्षणाय । शिवसौख्याय । शिवास्याय नमः । ५००

शिवरहस्याय नमः । शिवसर्वदाय । शिवचिन्त्याय । शिवाभीष्टफलप्रदाय । शिवश्रीकण्ठाय । शिवदाय । शिवज्योतिषे । शिवदयाहृदयाय । शिवचिन्तामणिपदाय । शिवविमलज्ञानाय । शिवभाग्याय । शिवभाग्येशाय । शिवपदान्ताय । शिवभोक्त्रे । शिवशक्त्येकनिलयाय । शिवसत्यप्रकाशाय । शिवराजार्चिताय । शिवषण्मङ्गळनिलयाय । शिवकामपूजिताय । शिवविद्वदर्चिताय नमः । ५२०

शिवसाक्षिणे नमः । शिवप्रभावरूपाय । शिवमूलप्रकृतये । शिवगोचराय । शिवत्वगणाधीशाय । शिवतुष्टाय । शिवपुष्टाय । शिवशिष्टाय । शिवस्मृतये । शिवकान्तिमते । शिववीरेन्द्रवरदाय । शिवशूलधराय । शिवपञ्चवक्त्राय । शिवशुक्लवर्णाय । शिवानुत्तमाय । शिवभक्तनिधये । शिवदयामूर्तये । शिवगुरुमूर्तये । शिवगुणनिधये । शिवपरमाय नमः । ५४०

शिवपावनाकृतये नमः । शिवदिव्यविग्रहाय । शिवादित्रयमूर्तये । शिवज्ञानतरवे । शिवयोगिने । शिवनिर्भेदाय । शिवाद्वैताय । शिवाद्वैतवर्जिताय । शिवराजराजेश्वराय । शिवराज्यवल्लभाय । शिवस्वामिने । शिवदीक्षिताय शिवदक्षिणामूर्तये । शिवनामपारायणप्रियाय । शिवतुङ्गाय । शिवचक्रस्थिताय । शिवस्कन्दपित्रे । शिववर्त्मासनाय । शिवभैरवाय । शिवनादरूपाय नमः । ५६०

शिवतेजोरूपाय नमः । शिवबहुरूपाय । शिवगायत्रीवल्लभाय । शिवव्याहृतये । शिवभावज्ञाय । शिवच्छन्दसे । शिवगम्भीराय । शिवगर्विताय । शिवकेवलाय । शिवकैवल्याय । शिवकैवल्यफलप्रदाय । शिवसाधवे । शिवधर्मवन्दिताय । शिवज्ञानमूर्तये । शिवधर्मबुद्धये । शिवज्ञानगम्याय । शिवाद्भुतचरित्राय । शिवगंधर्वार्चिताय । शिवोद्दामवैभवाय । शिवव्यवहारिणे नमः । ५८०

शिवप्रकाशात्मने नमः । शिवकारणाय । शिवकारणानन्द-विग्रहाय । शिवभूतात्मने । शिवविद्येशाय । शिवपुरजयाय । शिवभीमाय । शिवपराक्रमाय । शिवात्मज्योतिषे । शिवचञ्चलाय । शिवेशानमूर्तये । शिवतत्पुरुषाय । शिवाघोरमूर्तये । शिववामदेवाय । शिवसद्योजातमूर्तये । शिववेदाय ।

शिवज्योतिष्मते । शिवतिमिरापहाय । शिवद्विजोत्तमाय । वकाररूपाय नमः । ६०० 

वाचामगोचराय नमः । वनमालिने । वननर्तकाय । वह्निनेत्राय । वभ्रकाय । वारिनिधये । वटुकाद्यष्टरूपाय । वर्षित्रे । वयोवृद्धाय । वदनपङ्कजाय । वक्त्रपञ्चधराय । वलाहकाय । वह्निगर्भाय । वामागमप्रियाय । वासनार्चिताय । वाराहीप्रियनन्दनाय । वह्निस्वरूपाय । वसन्तकालप्रियाय । वसन्तोत्सवाय । वलयवाणिज्याय नमः । ६२० 

वसिष्ठार्चिताय नमः । वामदेवाय । वसुदेवप्रियाय । वास्तुमूर्तये । वारिवस्कृताय । वर्याय । वपये । वनजासनाय । वरदायकाय । वसुरुद्रार्करूपाय । वक्त्रे । वसुमते । वातपित्तादिरूपाय । वनमालिकाय । वातुळागमपूजिताय । वचस्याय । वर्गोत्तमाय । वाचस्पतये । वनक्रीडाविनोदिताय । वाग्वादिनीपतये नमः । ६४० 

वनदारुकाभिक्षाटनाय नमः । वराहदर्शिताय । वाणीशमराळदर्शिताय । वाजिमेधदशकात्मभूप्रसन्नाय । वनौषधये । वामाचारवियुक्ताय । वरमूर्तये । वरप्रियाय । वरप्रकाशाय । वज्रेश्वराय । वसुधात्रे । वामदीक्षिताय । वस्तुत्रयगुणात्मकाय । वर्गत्रयनिलयाय । वशित्वसिद्धये । वासुकीकर्णभूषणाय । वाजिविक्रयिकाय । वातपुरीशाय । वाराणसीपतये । वर्चसे नमः । ६६० 

वपुषे नमः । वज्रसन्निभाय । वज्रवल्लीप्रियाय । वास्तुपुरुषाय । वाजिवहनाय । वाजिवज्जंबुकवेष्टिताय । वंदिताखिललोकाय । वारिराजव्रतप्रियाय । वसनवर्जिताय । वाजिमेधप्रियाय ।

वरवेषधराय । वर्णोत्तमाय । वरकामिने । वाक्यसमावृताय । वामपाशाय । वाराङ्गनार्चिताय । वामागमपूजिताय । वशित्वसिद्धये । वपुरकृताय । वसुगुणराशये नमः । ६८०

वरगुणाकराय नमः । वनानन्दाय । वचोवादिने । वरोन्मत्तवेषाय । वरतारकाय । वसुयोगिने । वरशाश्वताय । वाहनादिविशेषिताय । वस्तुत्रयविशेषिताय । वासवाद्यर्चिताय । वसनागमाय । वस्तुधर्महितवे । वास्तुगताय । वस्त्रादिरत्नप्रवर्तकाय । वरवीरश्रवसे । वरदात्मभुवे । वनकल्पाय । वसुप्रीताय । वाग्विचक्षणाय । वरवारेशाय नमः । ७००

वरदेवासुरगुरवे नमः । वरदेवात्मने । वरदात्मशंभवे । वरश्रेष्ठाय । वसुधर्मचारिणे । वासनादिप्रियाय । वत्सपयोधराय । वनचन्दनलेपिताय । वसुमङ्गळवासिने । वनकान्तवासिने । वटारण्यपुरीशाय । वास्तुत्रिशूलधराय । वास्तुस्ववशाय । वासश्मशानदेवाय । वरदाक्षराय । वनधूर्जटिने । वरदक्षारये । वसुघनाय । वाससकलाधाराय । वरमृडाय नमः । ७२०

वरपूर्णाय नमः । वरपूरयित्रे । वाक्पुण्याय । वरसुलोचनाय । वरदानन्दाय । वसद्गतये । वसवत्कृतये । वाशान्ताय । वसद्भूतये । वरलोकबंधवे । वाचाक्षयाय । वरद्युतिधराय । वराग्रगण्याय । वरेश्वराय । वरविशोकाय । वाक्शुद्धाय । वारिगुणाधीशाय । वरनिर्मोहाय । बीरनिर्विघ्नाय । वरप्रभवाय । ७४०

वरपूर्वजाय नमः । वासदत्ताय । वरसत्वविदे । वाणीशशिरश्छेत्रे । वर्तिने । वह्निदर्पविघातिने । वल्मीकाय । वायुदर्पविघातिने । वल्मीकवासिने । वरूथिने । वल्मीकलिङ्गाय । वामपाशाय । वर्णिने । वटवृक्षगाय । वामाचारप्रयुक्ताय ।

वनपतये। वागीशाय। वर्णाश्रमविभेदिने। वदनानेकविशेषिताय। वाग्विलासाय नमः। ७६०

वाचालकाय नमः। वासुकिभूषणाय। वशंकराय। वत्सराय। वैद्येश्वराय। वयःक्रमविवर्जिताय। वांछितार्थप्रदाय। वह्नीशाय। वषट्काराय। वास्तवपुरुषाय। वसनदिशाधराय। वल्लभेशजनकाय। वाचस्पत्यर्चिताय। वयोऽवस्थाविवर्जिताय। वस्तुत्रयस्वरूपाय। वलित्रयविशेषिताय। वसुंधराय। वातात्मजार्चिताय। वर्ज्यावर्ज्यस्वरूपाय। वरीयसे नमः। ७८०

वरदाय नमः। वंद्याय। वटवे। वागीशाय। वर्णाश्रमगुरवे। वर्णावर्णितरूपाय। वायुवाहनाय। वायुदर्पापहाय। वसुमनसे। वररुचये। वाचस्पतये। वसुश्रवसे। वसुमते। वसन्ताय। वराहशिशुपालकाय। वज्रहस्ताय। वसुरेतसे। वर्णाश्रमविधायिने। वन्दारुजनवत्सलाय। वदनपञ्चसमन्विताय नमः। ८००

वह्निहस्ताय नमः। वह्निवासिने। वामदेवाय। वज्रायुधभेदिने। वरदादिवंदिताय। वाग्विभेदिने। वसुदाय। वर्णरूपिणे। वायुस्वरूपिणे। वाग्विशुद्धाय। वज्ररूपाय। वरेण्याय। वराहभेदिने। वर्त्मातिक्रान्ताय। यकाररूपाय। यज्ञपतये। यज्ञांगाय। यज्वने। यज्ञाय। यज्ञवाहनाय नमः। ८२०

यात्राय नमः। यशस्विने। याकिन्यंबार्धरूपिणे। यज्ञस्वरूपाय। यज्ञप्रियाय। यज्ञकर्त्रे। यजमानस्वरूपिणे। यद्विशुद्धाय। यस्यज्ञानिने। यस्यबुद्धाय। यत्पूर्वजाय। यस्यानन्दमूर्तये। यत्सूक्ष्माय। यद्विश्वात्मने। यदात्मलाभाय। यल्लोकनाथाय। यद्व्योमकेशाय। यच्छूलहस्ताय। यद्वामदेवाय। यद्वीरभद्राय नमः। ८४०

यावद्गुरवे नमः । यत्कामनाशाय । यद्वैद्याय । यत्कालरूपाय । यत्प्रणवरूपाय । यत्केदाराय । यदन्तकासुरभेदिने । यद्भक्तहृदिस्थिताय । यस्यापगल्भाय । यदघोराय । यजुर्वेदस्वरूपिणे । यच्चतुर्वेदार्चिताय । यत्सुदेहाय । यद्विषाशनाय । यदनाथरक्षकाय । यस्य धर्मशत्रवे । यत्पञ्चवक्त्राय । यस्याजातशत्रवे । यदेकवर्णाय । यावद्बहुवर्णाय नमः । ८६०

यद्वासवेशाय नमः । यत्सर्वलोकेशाय । यद्विश्वसाक्षिणे । यदेकादशरुद्राय । यत्साक्षिवर्जिताय । यत्कैवल्याय । यत्कर्मफलदायकाय । यत्पद्मासनाय । यद्योनये । यदुत्तमाय । यत्कुबेरबन्धवे । यत्सुखदायिने । यद्गिरिधन्वने । यद्विभवे । यत्पारिजाताय । यत्स्थाणवे । यद्विधात्रे । यत्तरुणाय । यत्पञ्चयज्ञाय । यद्विधात्रे नमः । ८८०

यद्विशिष्टाय नमः । यत्सन्तुष्टाय । यत्प्रहर्त्रे । यत्सुभगाय । यदादित्यतपनाय । यत्तत्पुरुषाय । यस्यानघाय । यदनादिनिधनाय । यस्यामराय । यद्भूतधारिणे । यस्यकृताय । यत्परशुधारिणे । यदच्छात्राय । यस्याजिताय । यस्यशुद्धाय । यस्याणिमादिगुणज्ञाय । यत्पुण्यशालिने । यद्विरक्ताय । यद्विचित्राय । यत्परमेशाय नमः । ९००

यत्सुशीलाय नमः । यत्पद्मपराय । यदहङ्काररूपाय । यत्कामरूपिणे । यद्वृषश्रवसे । यत्त्विषीमते । यावत्तत्वाधीशाय । यत्पद्मगर्भाय । यावत्तत्वस्वरूपाय । यत्सलीलाय । यस्यदीर्घाय । यस्यघोरमूर्तये । यद्ब्रह्मरूपिणे । यत्कळंकाय । यन्निष्कळंकाय । यत्कलाधराय । यत्तत्वविदे । यत्पञ्चभूताय । यदनिर्विण्णाय । यत्पापनाशाय नमः । ९२०

यदनंतरूपाय नमः । यदगण्याय । यत्सुगण्याय । यत्प्रतापाय । यत्पौरुषाय । यद्विश्वचक्षुषे । यदर्कचक्षुषे । यदिन्दुचक्षुषे । यद्वह्निचक्षुषे । यस्यानुत्तमाय । यस्यभक्तप्रियाय । यदद्भुतचरित्राय । यस्यभूतनाथाय । यद्वीतरागाय । यद्विशुद्धपतये । यत्कुलेशाय । यज्जीववरदाय । यद्द्विजकुलोत्तमाय । यस्यवह्निभृते । यद्बहुरूपाय नमः । ९४०

यदनन्तरूपाय । यच्चन्द्रशेखराय । यच्चन्द्रसंजीवनाय । यत्प्रसन्नाय । यज्ञभोक्त्रे । यद्विश्वपालाय । यद्विश्वगर्भाय । यद्देवगर्भाय । यद्वीरगर्भाय । यावदर्थसिद्धये । यावत्काम्यार्थसिद्धये । यावन्मोक्षार्थसिद्धये । यावन्मन्त्रसिद्धये । यावद्यन्त्रसिद्धये । यावत्तन्त्रसिद्धये । यत्तेजोमूर्तये । यावदाश्रमस्थापनाय । यद्वर्णविचित्राय । यावच्छास्त्रपारंगताय । यावत्कालज्ञानिने नमः । ९६०

यावत्संगीतपारंगताय नमः । यावत्पुराणदेहाय । यद्वेदान्तसारामृताय । यद्विचित्रमायिने । यच्छारदापतये । यद्विशिष्टात्मने । यदलङ्करिष्णवे । यस्याष्टमूर्तये । यावद्ज्ञानार्थरूपिणे । यदंबिकापतये । यत्सत्याय । यदसत्यखंण्डिताय । यत्प्रियनित्याय । यत्सुतत्वाय । यद्वेदान्तपारंगताय । यत्कृतागमाय । यत्श्रुतिमते । यदश्रोत्राय । यदेकवादाय । यदेकवादविग्रहाय नमः ९८०

यद्विमलाय नमः । यदमूर्तये । यदन्तर्यामिणे । यत्प्रेरकाय । यत्सर्वहृदिस्थाय । यत्पुराणपुरुषाय । यत्प्रभावकराय । यद्विषयसञ्चाराय । यत्रसर्वाय । यद्यत्सर्वांगाय । यद्यत्तेजसे । यद्विभवे । यत्कर्पूरदेहाय । यत्तत्संसारपारगाय । यद्विश्वव्यापिने ।

यद्बहुव्यापिने । यदन्तर्व्यापिने । यन्निष्क्रियाय । यदर्ककोटि-प्रकाशाय। यदिन्दुकोटिशीतलाय नमः। १०००

यावन्मलविमोचकाय नमः। यस्यदिशांपतये। यद्विश्वनाभये। यत्प्राणिहृदयाय। यशोमूर्तये। यत्प्रचेतसे। यदर्धनारीश्वराय। यदनर्थवर्जिताय। यद्विचित्रभुवनाय। यदग्रगण्याय। यद्बधीशफलप्रदाय। यत्पञ्चतनवे। यावन्मातृरूपाय। याचिताय। यत्कर्मेन्द्रियाय। यद्भुवनेन्द्रियाय। यदिन्द्रियनिग्रहाय। यद्विषयात्मने। यच्चामुण्डजनकाय। यक्षत्वविनाशिने नमः। १०२०

यत्कात्यायनीपतये नमः। यदाकाशनगरेशाय। यत्कामधेन्वर्चिताय। यत्पुरूरवप्रसन्नाय। यच्छ्वेतवराहमुमुक्षिताय। १०२५

श्री सुन्दरकुचांबासमेत तेजिनीनगरनायकाय नमः।
एवं नामसहस्राणि योऽर्चयेच्छिवमौलिनि।
सर्वकामफलं भुङ्क्ते अन्त्यं सायुज्यमाप्नुयात्॥

*___*___*

# श्री तेजिनीवनेश्वराष्टोत्तरशतनामावलिः

## (पञ्चाक्षरादिः)

ओङ्काररूपाय नमः। ओङ्कारनिलयाय। ओङ्कारबीजाय। ओङ्कारसारसहंसकाय। ओङ्कारमदमध्याय। ओङ्कारमन्त्रवाससे। ओङ्काराध्वरदक्षाय। ओङ्कारवेदोपनिषदे। ओङ्कारपरसौख्यदाय। ओङ्कारमूर्तये। ओङ्कारवेद्याय। ओङ्कारभूषणाय। ओङ्कारवर्णभेदिने। ओङ्कारपदप्रियाय। ओङ्कारब्रह्ममयाय। ओङ्कारमध्यस्थाय। ओङ्कारनन्दनाय। ओङ्कारभद्राय। ओङ्कारविषयाय। ओङ्कारहराय नमः। २०

ओङ्कारेशाय नमः । ओङ्कारताण्डवाय । ओङ्कारभूमये । ओङ्कारोदकाय । ओङ्कारवह्नये । ओङ्कारवायवे । ओङ्कारनभसे । ओँशिवाय । नकाररूपाय । नन्दिविद्याय । नरसिंहगर्वहराय । नानाशास्त्रविशारदाय । नवीनाचलनायकाय । नवावरणाय । नवशक्तिनायकाय । नवयौवनाय । नवनीतप्रियाय । नन्दिवाहनाय । नटराजाय । नष्टशोकाय नमः । ४०

नर्मालापविशारदाय नमः । नयदक्षाय । नयनत्रय धराय । नवाय । नवनिधिप्रियाय । नवग्रहरूपिणे । नव्याव्ययभोजनाय । नगाधीशाय । मकाररूपाय । मन्त्रज्ञाय । महिताय । मन्दारकुसुमप्रियाय । मधुरावासभूमये । मन्ददूराय । मन्मथनाशनाय । मन्त्रविद्याय । मन्त्रशास्त्राय । मलविमोचकाय । मनोन्मनीपतये । मत्ताय नमः । ६०

मत्तधूर्तशिरसे नमः । महोत्सवाय । मङ्गळाकृतये । मण्डलप्रियाय । महादेवाय । महानन्दाय । महासत्वाय । महेशाय । शिकाररूपाय । शिवाय । शिक्षितदानवाय । शितिकण्ठाय । शिवाकान्ताय । शिंशुमारशुकावताराय । शिवात्मसुतचक्षुषे । शिपिविष्टाय । शीतभीताय । शिखिवाहनजन्मभुवे । शिशुपालविपक्षेन्द्राय । शिरःकृतसुरापगाय नमः । ८०

शिलीमुखकृतविष्णवे नमः । शिखिभोगसन्तुष्टाय । शिवाच्युतैकभावाय । शिवकेतनाय । शिवसिद्धिवासिने । शिरश्चन्द्रभूषणाय । शिवालयाय । शिखामणये । वकाररूपाय । वाग्वादिनीपतये । वनपनसवासिने । वरवेषधराय । वराभयहस्ताय । वामाचारप्रयुक्ताय । वामदक्षिणहस्तोक्ताय । वरुणार्चिताय । वारुणीमदविह्वलाय । वज्रमकुटधारिणे । वह्निसोमार्कनयनाय । वासवार्चिताय नमः । १००

वल्लीनाथपित्रे नमः । वचनशुद्धये । वागीश्वरार्चिताय । वायुवेगाय । वसन्तोत्सवप्रियाय । वज्रशक्तिप्रहरणाय । वशित्वाद्यष्टसिद्धये । वर्णभेदिने । यकाररूपाय । यागाधीश्वराय । यजुर्वेदार्चिताय । यत्कर्मसाक्षिणे । यत्तन्निर्विघ्नाय । यजमानस्वरूपिणे । यदाकाशनगरेशाय । यत्कात्यायनीपतये । यद्वृषभवाहनाय । यत्कर्मफलदायकाय । याज्ञिकादिप्रवर्तकाय । यमान्तकाय । यावदक्षरनायकाय । यावन्मन्त्रस्वरूपिणे । यक्षस्वरूपाय । यज्ञांगाय । यज्ञभोक्त्रे । यस्यदयाभोक्त्रे । यत्साधुसंगमप्रियाय । यावन्नक्षत्रमालिने । यावद्भक्तहृदिस्थिताय । याचकवेषधराय १३० ।

श्री सुन्दरकुचांबासमेत तेजिनीवनेश्वरस्वामिने नमः



॥ श्रीः ॥

# ॥ शिवदण्डकः ॥

जय जय जगदीश काशीपुराधीश केशीकृताकाश संपूर्णलोकेश सुत्राम-कीनाश - हस्तोल्लसत्पाश-निः शेषवित्तेश-मुख्यामराधीश संसारदुष्पाश-जालावलीनाश-पूर्वत्वदभ्याश-वासप्रद श्रीमदुद्यद्यशोधाम-फालोल्लसत्सोम-देवद्विषां भीम-वर्ष्माविहन् कामदेहं दहन् काममापूरयन् कामदेवस्त्रिया वामनेत्रालसद्धाम-गात्रासुरस्तोम-वित्रासनोमा-कलत्रानडुन्नाथ-पत्रारविन्दाभ-नेत्रातिमात्रं पवित्रं गुणग्रामपात्रं वदाम्येष गोत्रं मदीयं च गोत्रं यथा स्यात्पवित्रं तथा धेहि शंभो प्रपन्नोऽहमम्भोजपत्राक्ष ।

दम्भोलिभर्त्राऽपि जम्भो हतोऽभूददम्भोक्तिनुत्याऽस्मि डिम्भोऽस्मि ते देव कुम्भोद्भवस्तुत्य किं भोगिभूषामणे मय्युपेक्षां करोषि त्वमेतन्न जानासि किं दुःखपाथोधिमग्नं हृषीकौघभुग्नं भवत्पादलग्नं मदीयाघबृन्देन दूरीकृतोऽसि त्वमेतद्वचस्ते न युक्तं महादेव।

हा दैवमेतन्मदीयं यतः सर्वदेवैकवन्द्यादपि श्रैष्ठ्यमेनोगणस्येति यन्नामजापादघानां ततीनां विनाशोऽथ निन्द्यप्रचण्डापि चण्डालजातिः शिवेत्युक्तिमात्रेण निर्धूतनिःसीमपापव्रजा स्यात्तया संवदेत्संवसेच्चेति वेदानि वाक्यान्यपि व्यर्थतामापुरित्यादि बाहुल्यमत्याहितस्यास्य कात्यायनीकान्त भृत्यावन ब्रूहि।

सत्यानि चेद्वेदवाक्यानि कस्मादथ त्वं ममैनःसमूहेन दूरीकृतः केऽपि लोके न चेदुद्धृताः स्युस्त्वया नैव याचेऽहमप्यप्रसिद्धेस्तदा कुम्भजः कौशिको गीष्पतिर्भार्गवो नन्दसूनुः शुको रावणारिर्दधीचो मृकण्डोः सुतो गौतमः शक्रदुर्वासमुख्या अमी शैवमुख्याः पुराणे प्रसिद्धास्त्वयैवोद्धृता मां कुतो नोद्धरस्युग्र।

चेद्यत्र सूर्यो न भात्येष चन्द्रो न तारा न विद्युत्कुतो ह्यग्निरुद्यत्प्रभा-मण्डलव्याप्त-सूर्या-वलीकोटि-कोटिप्रकाशं पदं तत्कथंकारमीष्टे भवान् द्रष्टुमित्यस्ति ते चेतसि श्रूयतां तत्र लोके न केषामपि श्रीपदं दृष्टिगं स्यान्न चापीष्टमापादनं तद्यतः सर्वलोकैरदृष्टस्य सद्भाव एव व्यलीको भवेन्नैवमेतद्यतो ब्रह्मविष्ण्वादिभिर्दृश्यते चेत्पदं केन तत्कारणं, नेति पृच्छामि।

तत्तप्यमानं तपस्तत्र चेत्कारणं, किं तपस्तद्यदाचक्ष्व, चान्द्रायणं तप्तकृच्छ्रं तथा सप्ततन्तुव्रजो भूरिवर्षेषु निर्भोजनं, तत्र

पृच्छामि, सर्वेषु तेषु स्वकीयं मनोऽसंनिरुध्य स्थितं चेत्, कुतस्तप्यमानैस्तपोराशिभिर्नो फलं जायते, चित्तरोधोऽपि चेत्तत्र हेतुस्तदा कुत्र रोधस्तदाचक्ष्व।

चेत्त्वत्स्वरूपे न रूपं मनोगोचरो नापि वेदोऽपि निर्वक्तुमीशो, यतस्तत्र रूपं, रसो नापि गन्धो, न च स्पर्शशब्दौ, न चक्षुर्न कर्णौ न मूर्धा, न वक्त्रं, न जिह्वा, न पाणी, न पादौ, न कुक्षिर्न वक्षो, न कक्षो, न कण्ठो, न पीनं, कृशं नापि, दीर्घं, न खर्वं, न नीचं, न चोच्चं, न नारी, न षण्डो, न ना, नापि नाना, नचैकं न सन्नाप्यसत् सत्तदीदृक्स्वरूपं, कथं चित्तरम्यं कथं वेदगम्यं, ततः सर्वधर्मान्परित्यज्य, नाम त्वदीयं, सदा जप्यमेतस्य धर्मस्य सर्वेऽपि धर्माः कलां षोडशीमप्यतिक्रान्तुमीशा न, यद्यप्यनीशान शंभो महादेव शूलिन्पिनाकिन्विभो नीलकण्ठ त्रयीगम्य शीतांशुमौले भवानीकलत्र त्रिलोकीपते देवचूडामणे॥

पुरहर हर साम्ब गङ्गाधर त्र्यम्बक क्षेमकारिन् कपर्दिन् हरे दक्षयज्ञप्रणाशिन् पुरारे विरूपाक्ष दन्तावलारे शिवेत्यादिनाम्नां न चान्तोऽस्त्यथापि, त्वदीयैकनाम स्मरन् वापि मुक्तिं व्रजत्येव, तत्ते शिवेति स्मरन्तं कथं मां पदं नेतुमीशान संदेग्धि, भूयो भवानेतदाचक्ष्व, कश्चित्समस्ते समस्तेऽपि भूमण्डले नास्ति, तस्मान्नमस्ते करोमि।

प्रसीदानुकम्पालवाल, प्रभो कालकालावनीपाल-संघानल व्यालकीलज्जटाजाल नेत्रस्फुरज्ज्वाल गौरीपते बालचन्द्रस्फुरत्फाल मुण्डावलीमाल भूतावलीपाल कालानलप्रख्य-हालाहलस्फीत-कोलाहलान् नाकपालादिकान् लोकपालानभित्यक्तमन्थानकान् दग्धढक्कानकान् शुष्कवक्त्राम्बुजांस्त्यक्तपित्रग्रजान् दानवैस्ताडि-

ताभिर्भरं पीडितान् गारलात्साध्वसात् प्रत्नरत्नान्यपि त्यक्तुमिच्छून् पुनः स्वीयदारानपि त्यक्तुमिच्छून् निजप्राणसंरक्षणैकप्रवीणान् कृतं कर्म पूर्वं निजं निन्दतस्तात मातर्मम भ्रातरत्र स्थितं मां विहायैव किं धावसे, पश्य दीनं, विषज्वालजालावृतं तात तातेति विक्रोशतोऽपि स्वकांस्त्यक्तुकामान् भृशं धावमानान् विसृष्टावमानान् सुरान् भूसुरान् यक्षरक्षोगणानत्र हा हा कथं नो गतिः स्यादकूपाररूपादमुष्मात् कथं कालकूटाद्वयं याम पारं परं चिन्तयानानदः प्राह देवाधिदेवो हरिः ।

भो सुरा भूसुरा भूतनाथो भवो भक्तिभाजां भयं हन्त्यभीष्टं च भूयो ददाति स्वतः शंकरस्याङ्घ्रिसत्पङ्कजातं नृणां शंकरं मन्मुखैः कौङ्कुमैश्चन्दनैः पङ्किलं निर्मितं पङ्कबृन्दघ्नमुट्टङ्कनं मूलतः संकटस्यातिवैशङ्कटस्यापि तत्कङ्कटीकाङ्घ्रियुग्मं कुरुध्वं हृदि, क्ष्वेलकीलावलीजालनाशाय गोपालवाचामृतं तन्निशम्यैव ते संनिधिं ते विभो चिन्तयन्तः सुरा अन्तरङ्गे विषैः संतपन्तो मखस्यान्तकारिंस्तव द्वारमागत्य सद्द्वारपालावृतं वारयोषिद्गणैः कीरवाग्भिर्युतं मारहन्तुर्गणैर्वीरभद्रादिभिर्दूरदूरे समुत्सारयद्भिः सुरांस्तारयास्मादकूपारमध्यान्न इत्यारवं कुर्वतस्तारतारेण ते गारदावाग्निसंतारणं नः कथंकारमेतद्भवेदित्यभिज्ञाय निःसारसंसारपारप्रदं नाम विज्ञाय कंजातसंजातमुख्यामरा जञ्जपूका विभो साम्ब शंभो मृड त्वं प्रसीदापदब्धेरमुष्मान् झटित्युद्धरेति स्थितास्तत्परिज्ञाय, सर्वान्तरङ्गज्ञ दृष्ट्वाऽतिकष्टां दशामप्यमीषां कृपालो तदैवाविरासीद्भवांस्तत्र । काकोलसंज्वालजालावलीलीढ साद्रिद्रुमद्वीपपाथोधिमुर्वीं सफट्फड्वं संस्फुटन्तीं भुवर्मुख्यलोकाधिपान् कीलमाला-परिम्लानवक्त्रारविन्दानपि प्रेक्ष्य वीक्षाकटाक्षामृतेनैव संशाम्य

तत्क्ष्वेलबृन्दं करे बिन्दुसंकाशमावेश्य तद्भक्षयन् निर्जरान् पालयन् नीलकण्ठादिशब्दैरकुण्ठौजसा भूरि वैकुण्ठनाथादिबृन्दारकौघेन तोष्टूय्यमानो निजं धाम कैलाससंज्ञं तदा निर्गतस्तादृशस्यापि चापत्समूहस्य नाशो भवन्नाममात्रेण जातः शिवातस्त्वदीयेन नाम्नैव सम्यक्स्मृतेनापदम्भोधयो गोष्पदत्वं भजन्ते, महादेव तत्तादृशं नाम, शंभो शिवेत्यादि तेऽनारतं वा सकृद्वोच्चरामीति, निर्धूतपापे मयि त्वं दयां देहि भोः ॥

इति यदि शिव शङ्कसे, कंचिदन्यं प्रपद्यस्व, मत्तोऽधिकं त्वद्रतेः संप्रदातेति, तत्रापि चेदं समाधानमाकर्णय त्वं यथाबुद्धि वक्ष्यामि, शंभो मदीयेन वाक्येन कोपो न तेऽस्तु, त्वमेवासि नाथस्त्वमेवासि तातस्त्वमेवासि माता, त्वमेवासि बन्धुस्त्वमेवासि मित्रं, त्वमेवाखिलं यच्च, भूतं च भव्यं, तदित्यब्जमौले रुषा वच्मि किंचित्तदीश क्षमस्वेति, विज्ञापयाम्यादितस्त्वत्त ईशान को वा त्रिलोक्यां महानस्ति तुल्योऽपि च, ।

व्यर्थमेतद्वचस्तथ्यभिन्नं कुतो भाषसे, दन्धनेनामुना नात्र कोऽपि भ्रमात्त्यक्तुमीष्टे पदाम्भोरुहे ते, महादेव, नैतादृशोऽहं सुरह्रादिनीमुख्यसेत्वन्तपानीयपायी यतोऽस्मि, स्थितिर्वा, मृतिर्वा, भवत्वीश संसाधयाम्येव, पादारविन्दद्वयं न त्यजाम्येव चेद्दाक्षिणात्यो भवेयं, त्यजेयं, पुनर्विद्धि मामौत्तराहं ततस्त्वं, परामृश्य, दुर्दन्धनेनैव मा वञ्चयस्व ।,

प्रभो किंच सर्वाकृते, पञ्च वक्त्राणि ते संचितानि, त्वया चञ्चदुद्यन्महश्चञ्चलाक्षीदृशामञ्चलैरीषदुत्कुञ्चितै राजितैश्चञ्चरी-कालिवत्पञ्च वक्त्राम्बुजान्यञ्चितानीश चेन्नचञ्चतां मादृशानां चिरं

कूजतां दीनवाक्यानि किं कर्णमायान्ति ते स्वर्णरेतः सदाऽपर्णयालिङ्गिताभ्यर्णगांस्त्वद्गुणान् वर्णयानान् स्फुरद्वर्णवाणीन् नरांस्तूर्णमायाहि, चाकर्णयैषां वचः पूर्णमीशान, ते पूर्णता हीयते किं, मया याचितस्य प्रदानेन तद्बन्धनेनैव वाग्बन्धनं हंसि, मद्बन्धनं नेक्षसे, ह्यन्ध एवासि।

किं गन्धदन्तिद्विषन्नन्धतामिस्रहन् सत्यमेतद्वचो, नेति चक्षुर्द्वयं पूर्वमुक्तं मयैवेति यद्वा सहस्राक्षशब्देन संस्तूयसे, किं च पञ्चोत्तरा पङ्क्तिरक्ष्णां तवेति, त्रिनेत्रेति साहस्रशीर्षत्वतस्त्वीक्षणानां सहस्रत्रयं दृश्यते, तन्मिथो वेदवाचां विरोधस्तवानेत्रतामन्तरा युज्यते नो निराकर्तुमन्धस्य या काचिदप्यर्हतामेति संख्येक्षणानां त्रिनेत्रश्चतुर्लोचनः पञ्चनेत्रः षडक्षः शताक्षः सहस्रेक्षणो लक्षनेत्रोऽमिताक्षोऽपि चेत्यादिनाम्नाऽत्र वैदं वचोऽचक्षुरश्रोत्रमित्यस्ति तात्पर्यनिर्णायकं च प्रमाणं तथा श्रोत्रसत्तापि दत्तोत्तरैवेति, बाधिर्यमप्यस्ति, मूकत्वमप्यस्त्यधर्मित्वमप्यस्ति पङ्ग्वन्धमूकस्य धर्मेऽधिकारप्रहाणस्य षष्ठे कृतान्तीकृतत्वेन दोषाकरप्रीतिमत्त्वं च धूर्तप्रियत्वं भवत्यस्ति,।

हा बुद्धमेतन्मया, लुब्धता बाधते त्वां, भृशं त्वं तु दातुं समर्थोऽसि नो चेदनन्ताण्डकोटीशतायां स्फुरन्त्यामपि त्वय्यतिब्रघ्नकान्तिप्रवेकाणि भूरीणि रम्यस्थलानि प्रहाय श्मशानानि भूयः कपूयान्यपूतानि पूतीनि भस्मव्रजच्छन्नभूमीनि संसेवसे, किंच वासांसि भूयांसि संत्यज्य कौलीनभीतिं समुत्सृज्य पादान्तरे लम्बमानेन मेढ्रेण योषित्समूहेषु नो लज्जसे संचरन्, किं न कौपीनमात्रं कृशं कर्पटं लभ्यते, राङ्कवं तन्त्रकं दिव्यपत्रोर्णमुत्सृज्य कृत्त्युत्तरीयं कथं देव धत्से,

विरक्तोऽहमित्युच्यते चेत्त्वया कीदृशं ते विरक्तत्वमेतद्यतो, भागलोपं तनोरप्युरीकृत्य, नित्यं जगन्मातरं शैलकन्यां बिभर्षि, त्वमेनां त्यज, व्यर्थमेतत्तवास्त्यूर्ध्वरेतस्त्वमेवं, वृथा मारहन्तृत्वमप्यद्रिराजः प्रसिद्धः सुवर्णैकपूर्णोऽमराणां निवासो, यतो रेतसा निर्मितः,

किंच किं ते सदा ।। शिव भुवनपते दरिद्रत्वमेतादृशं मण्डकान् लड्डुकान् संपरित्यज्य, भिक्षाटने प्रेम धत्सेऽस्तु भिक्षाटनं, तत्र किं दुर्मिलं दिव्यपात्रं तव, प्रेतभूताधिप प्रेतभूतस्य मर्त्यस्य खेटां करोटीं बिभर्षि, स्रजं वापि तत्तादृशीं त्वं विहाय व्यसुप्राणिमस्ताञ्चितां किं दधासि, द्विपाश्वादिवाहान् परित्यज्य वृद्धे गवि प्रीयसे, तेन लुब्धोऽसि, तत्रापि यः कुत्सितस्तत्र कप्रत्ययः शिष्यते, लुब्धकत्वं तु ते सुप्रसिद्धं विभो, तत्र साक्षी पुनः, सव्यसाची भवद्भक्तियुक्ताग्रगण्योऽस्ति, हा दैव, हा हा बलीयोऽसि, यो मेऽधिनाथः पिता, ताततातश्च, तस्यैव बाधिर्यधर्मेतरित्वान्ध्य-मूकत्वलुब्धत्वमुख्येन दोषव्रजेनावृतिः साम्ब, दुःखादिदं वच्मि, कोपो न ते कार्य इत्युक्तमेवास्ति, भूयः शृणुष्वेश मे भाषितं, वस्तुतस्त्वं भवान्निस्तुलः, सद्गुणैरस्ति को वाऽपरो यस्तुलां तावकीं गन्तुमीशो मरुत्वन्मुखो, देवतानां गणो, विष्णुरेकोऽस्ति वेदैकवेद्यो विभुः सोऽपि धातुः क्षुतान्निर्गतस्य क्षुपाख्यस्य भूमिक्षितः पक्षपातं दधानो दधीचर्षिणा साम्बभक्तेन युद्धं चकाराथ चक्रेण नारायणास्त्रेण तं ताडयामास, सर्वेऽपि देवा हरेश्चित्ततोषाय रोषाविलास्तं निजैरस्त्रजातैर्मुहुस्ताडयामा-सुरेतत्परिज्ञाय विप्रो गृणन्नाम यौष्माकमादाय दर्भस्य मुष्टिं शिवेत्युच्चरन् क्रुद्ध एकैकदर्भेण सर्वास्त्रजातं निजघ्ने, हरेरस्त्रजातं तु हुंकारमात्रेण संस्तम्भयामास पश्चान्मुकुन्दो निजाद्देहतः

शंभुवृन्दानि लालाटनेत्राणि चन्द्रार्धमौलीनि काकेलकण्ठानि देवासुराणां गणानप्यजो निर्ममे तन्निरीक्ष्येश भक्तस्तव स्वीय देहाद्गदाशङ्ख चक्राम्बुजाभासि हस्तानि सत्कौस्तुभोद्भासिवक्षः स्थलानीन्दिरालिङ्गितानि स्वयं दर्शयामास गोविन्दबृन्दानि, वेधोमुखान्निर्जराणां गणानप्यदो वीक्ष्य नारायणो निर्जितो लज्जितस्तं ननाम, स्तुवन् स क्षुपोऽपि स्वकीयां प्रतिज्ञां द्विजाब्यर्थभूतां समुद्वीक्ष्य सख्ये स्थितः, ।

किंच विष्णोर्विधेरप्यभूत्संविवादो महानुत्तमत्वे हरिर्वक्त्यहं श्रेष्ठ इत्यब्जयोनिस्त्वहं श्रेष्ठ इत्याह तद्वादशान्त्यै कृपाकन्द तत्राविरासीद्भवानुत्तमत्वं मयीत्यूचिवांस्तन्निशम्यैव तौ कुद्धरूपावभूतां भवन्मायया मोहितौ वेदबृन्दं प्रति प्रष्टुमिच्छू गतौ, तत्र वेदैश्चतुर्भिः पृथक्शंभुरेवोत्तमः किं वृथा कत्थनं वामिति प्रोक्तमेतन्निशम्यैव तौ जातबोधौ परिभ्रष्टमोहौ भवत्पादयुग्मेऽञ्जसा पेततुः, ।

किं च कृष्णः पुराणप्रणेता पुरा नैमिशे प्राह मौने सदस्यूर्ध्वबाहुर्हृषीकेश एवोत्तमो न त्रिनेत्रादयो निर्जराः, इत्थमाकर्ण्य वैयासिकं वाक्यमाहुर्द्विजा गच्छ वाराणसीं व्यास ते विभ्रमस्तत्र विभ्रंशमेष्यत्यहो इत्यदो वाक्यमाकर्ण्य वाराणसीमागतस्तत्र पूर्वोक्तवाक्यं मुनिर्व्याहरत्तत्क्षणादेव सर्वे द्विजा यौगपद्येन तं भर्त्सयामासुरप्येष नन्दी भवत्पार्श्वगो निर्गतः स्तम्भयामास बाहुं तदीयं तथैवाविमुक्ताद्बहिः कारयामास गौरीपतेर्नीचतावादिनामत्र वासो न युक्तो यतो मुक्तिदेयं पुरी मुक्तिबाह्यास्तु तेऽथो स संतप्तचित्तोऽस्तवीत्त्वां ततः सोऽनुजग्राह नन्दीश्वरस्तद्भवन्तं विनान्यं न पश्यामि कंचित्परं काशिकाधीश विश्वेश्वरालोकय त्वं कृपार्द्रेक्षणैः ।।

।। इति श्रीभास्कररायकृतः शिवदण्डकः समाप्तः ।।

# ।। वटारण्यमाहात्म्यम् ।।

मुकुलाम्बासमेत वटेश्वरो मङ्गलमातनोतु ।।

नैमिशाख्ये वने पूर्वं शौनकाद्या महर्षयः ।
द्वादशाब्दं क्रतुं चक्रुः शिवभक्त्या महोदयाः ।। १

तत्राजगाम धर्मात्मा सूतः पौराणिकोत्तमः ।
त्रिपुण्ड्राङ्कितसर्वाङ्गं रुद्राक्षाभरणैर्युतम् ।। २

शिवक्षेत्रविदां श्रेष्ठं शिवभक्तिमतां वरम् ।
शिवतत्वविचारज्ञं शिवकीर्तनतत्परम् ।। ३

सोपचारैस्समभ्यर्च्य सर्वशास्त्रार्थकोविदम् ।
मन्त्रयन्त्रार्थतत्वज्ञं तीर्थक्षेत्रविशारदम् ।। ४

शैववैष्णवसारज्ञं सर्वशास्त्रविशारदम् ।
नदीनां च गिरीणां च वनानां महतामपि ।। ५

वैभवं च महाभाग वद नस्तत्वमञ्जसा ।
सेवायां वा विवाहे वा तथा कार्यान्तरेष्वपि ।। ६

सङ्कीर्तनं ये कुर्वन्ति शिवस्य गिरिजापतेः ।
साङ्गं भवति तत्कर्म ते धन्याः नात्र संशयः ।। ७

यस्मिन् गृहे वा ग्रामे वा न शृण्वन्ति कथां पराम् ।
शिवस्य देवदेवस्य प्राणमूर्तेस्सदा नराः ।। ८

ते वै निरयभागास्स्युः शून्यं तद्भवति ध्रुवम् ।
कुर्वन्ति ये महाधन्याः शिवरूपा न संशयः ।। ९

तस्मात् श्रावय सर्वज्ञ गिरिजानाथवैभवम् ।
इत्युक्तस्तु तदा सूतः पुलकाङ्कितविग्रहः ।। १०

समुत्तस्थौ महातेजाः ऋषिमध्ये महायशाः ।
यूयं धन्यतमाः लोके यूयमेव शिवात्मकाः ॥ ११

सारज्ञाः यूयमेवात्र युष्माकं चोपदेशतः ।
धन्योऽहं नात्र सन्देहः सत्यं सत्यं महर्षयः ॥ १२

निमिषं निमिषार्द्धं वा गिरिजानाथवैभवम् ।
ये शृण्वन्ति शिवक्षेत्रवैभवं ते ह वै शिवाः ॥ १३

यो वै पठति सद्भक्त्या शिववैभवमञ्जसा ।
सोऽपि शङ्करसायुज्यं प्राप्नोति शिव एव सः ॥ १४

तस्माद्वक्ष्यामि माहात्म्यं शिवस्य गिरिजापतेः ।
कावेरीसरितस्तीरे दक्षिणे पुण्यसञ्चये ॥ १५

वाञ्छेश्वरस्य पूर्वे तु पूर्वाम्भोधेस्तु पश्चिमे ।
शौरिराजस्य वायव्ये वटारण्यं शुभास्पदम् ॥ १६

आदिसिद्धमिदं क्षेत्रं पापारण्यदवानलम् ।
स्थानानामुत्तमं क्षेत्रमपुत्राणां सुपुत्रदम् ॥ १७

पुत्रकामार्थदं तीर्थं सदा मङ्गलदायकम् ।
ततः परं वटारण्यं गयाकोटिफलप्रदम् ॥ १८

वटारण्यसमं स्थानं न भूतं न भविष्यति ।
गोकोटिफलदं प्रोक्तं बहुपादपसंवृतम् ॥ १९

वकुलाशोकपुन्नागलिकुचैः सालपोतकैः ।
नीपश्रीवृक्षपूगैश्च तिन्त्रिणीदाडिमैर्वृतम् ॥ २०

रसालपाटलीनागपुन्नागद्रुमभूषितम् ।
इङ्गुदीपिप्पलाद्यैश्च कासारैश्च सुशोभितम् ॥ २१

जाजीकमलवासन्तीमल्लिकाकुसुमोत्करम्।
देवबृन्दस्तुतं यक्षसिद्धगन्धर्वपूजितम्॥ २२

ब्रह्मविष्ण्वर्कसोमेन्द्रमरुद्गणसमर्चितम्।
अचिरेण तपस्सिद्धिदायकं ऋषिसत्तमाः॥ २३

वटारण्यं शुभक्षेत्रं गन्तुकामो नरो द्विजाः।
यावन्ति क्रमते भूमौ पदानि मुनिसत्तमाः॥ २४

तावद्वर्षसहस्राणि शिवलोके महीयते।
यमो यमानुगान्नित्यं ब्रूते भीतः सदा द्विजाः॥ २५

वटारण्यस्य परितो मा गच्छध्वं प्रमादतः।
ते शैवाश्शिवरूपाश्च युष्मांस्ते ताडयन्ति च॥ २६

इति ब्रूते सदा दूतांस्तस्मात्सर्वोत्तमं स्थलम्।
पुत्रकामार्थदं दृष्ट्वा पुनर्जन्म न विद्यते॥। २७

वृश्चिकस्थे कठोरांशौ भार्याबन्धुसमन्वितः।
पुत्रकामप्रदे तीर्थे स्नात्वा नियमसंयुतः॥ २८

पुत्रकामेश्वराज्ञां च सङ्गृह्यानेन शौनक।
देवदेव दयासिन्धो गङ्गाधर शिव प्रभो॥ २९

ममाभीष्टं पूरयस्व भक्तोऽहं भक्तवत्सल।
इत्युक्त्वा तं परिक्रम्य स्फाटयेन्नारिकेळकम्॥ ३०

दीपमुज्वाल्य पिष्टस्य गोघृतेन समन्वितम्।
यावदागमनन्तावत् दीपमुज्ज्वलयेच्छुभम्॥ ३१

तत्र स्नात्वा तु तीर्थेऽस्मिन् नत्वा गङ्गाधरं शिवम्।
लक्षबिल्वैश्च संपूज्य धुत्तूरैर्द्रोणपुष्पकैः॥ ३२

वटवृक्षन्तथा पूज्य बिल्वैर्दूर्वासुमैश्शुभैः ।
रात्रौ जागरणं कृत्वा मृगाङ्कदिवसे द्विज ।। ३३

चतुर्यामेषु सम्पूज्य प्रभाते कृतमज्जनः ।
द्वादश ब्राह्मणान् दिव्यपायसैष्षड्रसायनैः ।। ३४

ये भोजयन्ति ते धन्याः वटनाथप्रसादतः ।
शुष्कार्द्रपञ्चकानां च पापानां नाशमाप्नुयात् ।। ३५

किं दुर्लभं भवेत्तेषां शङ्करा एव नान्यथा ।
पुत्रकामेश्वरं नित्यं सेवन्ते शिवरूपिणः ।। ३६

कलौ कलुषचित्तानां नराणां पापशालिनाम् ।
शम्भौ सञ्जायते भक्तिस्सर्वदेशाधिपो भवेत् ।। ३७

स्थिरवारे तु न्यग्रोधं गोक्षीरैरभिषिच्य च ।
दिव्याक्षतैस्समभ्यर्च्य कृतकृत्यो भवेन्नरः ।। ३८

चतुः प्रदक्षिणं कृत्वा दत्वा चूतफलानि च ।
अत्र संपूज्य देवेशं वराहवदनो हरिः ।। ३९

ब्रह्माधिक्यमनुप्राप्तो न्यग्रोधेशप्रसादतः ।
पुरा कृष्णस्सभार्यश्च प्राप्य कैलासमन्दिरम् ।। ४०

शिवेनोक्तस्सुसम्पूज्य पुत्रकामेश्वरस्थलम् ।
सम्प्राप्य पुत्रं प्रद्युम्नं चिरं रेमे यदूद्वहः ।।
मनोऽभीष्टप्रदं पुंसां भूकैलासं शिवालयम् ।। ४१

इति प्रथमोऽध्यायः

* * *

## अथ द्वितीयाध्यायः

शौनकः-

सूत सूत महाप्राज्ञ व्यासशिष्य महामते।
कैलासं शङ्करस्थानं किमर्थं प्राप्तवान् हरिः ॥ १

तस्माद्वटवनं केन हेतुना प्राप्तवान् सुतम्।
कया स्वभार्यया साकं प्राप्तवान्सुतमुत्तमम् ॥ २

एतद्विस्तार्य मे ब्रूहि दिव्यां कृष्णकथां पराम्।

सूतः-

शृणुष्व मुनिशार्दूल कृष्णस्य चरितं महत्।
यस्य स्मरणमात्रेण मनोऽभीष्टमवाप्नुयात् ॥ ३

ब्रह्माद्यैरर्चितो विष्णुरदित्या कश्यपेन च।
हिताय पाण्डवानां च देवक्याः पुत्रतां गतः ॥ ४

स्थापितो वसुदेवेन नन्दगोपालये शुभे।
दुर्गां संगृह्य शयने यथावत्समकारयत् ॥ ५

श्रुत्वा कंसेन कोपेन हन्यमाना तु साऽवदत्।
वृथा हिंसयसे मूढ मृत्युस्तेऽन्यत्र वर्द्धते ॥ ६

मूढ मां हिंससे कस्मात् इत्युक्त्वा च गता क्षणात्।
विमुच्य निगलं कंसस्तयोः पादं प्रणम्य च ॥ ७

पूतनां च तृणावर्तं शकटाक्षं न्ययोजयत्।
श्रुत्वा हतान्महादैत्यान् तृणावर्तादिकान् बहून् ॥ ८

अक्रूरेणानयामास सबलं कृष्णमच्युतम्।
सोऽप्यागत्य च चाणूरं शलकोसलमल्लकान् ॥ ९

हत्वा कंसं च मुदितः पितरावभिवन्द्य च।
उग्रसेनं नृपं चक्रे सर्वलोकमहेश्वरः ॥ १०

चक्रे च सबलो गत्वा गुरुं सान्दीपिनिं प्रभुः।
सर्वशास्त्रार्थनिपुणो बभूव ह्यचिरेण च॥ ११

सर्वज्ञोऽपि महाविष्णुः क्रीडते प्राकृतो यथा।
मधुरामागतं श्रुत्वा मागधं च जरासुतम्॥ १२

श्रुत्वा कोपानलात् कृष्णस्ससैन्यं बहुधाऽहनत्।
पुनस्समागतं श्रुत्वा विश्वकर्मकृते शुभे॥ १३

द्वारकाख्ये समवसत्सर्वलोकनमस्कृतः।
एतस्मिन् समये विप्रः कृष्णं प्राप्य च सत्वरम्॥ १४

नत्वा ह्युवाच वचनं भैष्मी नमनपूर्वकम्।
त्वद्भक्ता त्वद्गतप्राणा त्वदालोकनतत्परा॥ १५

त्वद्दासभावकरणे नियुङ्क्ष्व कमलापते।
कृत्वा दयालो वचनं दृष्ट्वा मद्दत्तपत्रिकाम्॥ १६

यदत्रानन्तरं कृत्वा कृपां कुरु मम प्रभो।
इत्यर्थं लिखितं पत्रं द्विजवाक्यं तदाऽशृणोत्॥ १७

द्विजोऽपि पत्रिकां दत्वा यथोक्तं तत्तथाऽकरोत्।
ततस्संपूज्य तं विप्रं भोजयित्वा प्रियातिथिम्॥ १८

द्विजेन सह सुप्रीतो रथमारुह्य शौनक।
क्षणेन नगरं प्राप्य कुण्डिनं सर्वसुन्दरम्॥ १९

द्विजः पूर्वं तदा भैष्मीं गत्वा कृष्णागमं वदत्।
एतस्मिन्नन्तरे देवी इन्द्राणीं गिरिजामपि॥ २०

सम्पूज्य द्वारदेशे तु निरीक्षन्ती हरिं सदा।
ज्ञात्वा तस्य ह्यभिप्रायं रथमारुह्य सत्वरम्॥ २१

तत्रागत्य घृणामूर्तिर्भैष्म्याः पाणिं समग्रहीत्।
श्रुत्वा तच्चैद्यपक्षा ये मागधाद्यास्ससैनिकाः॥ २२

अनुजग्मुस्तदा कृष्णं कृष्णेनैव पराजिताः।
पलायनपरास्सर्वे चैद्येन सह ते गताः॥ २३

स्वं स्वं पुरं तथा जग्मुर्विरक्ताः पाणिसङ्ग्रहे।
पुरे भोजकटाख्ये तु ह्युवास ऋषिसत्तम॥ २४

कृष्णोऽपि द्वारकां प्राप्य रुक्मिणीमुदवाहयत्।
ततस्सत्यां च सम्प्राप्य जाम्बवत्यादिकाः स्त्रियः॥ २५

स्त्रियस्सर्वास्समुद्वाह्य पारिजातमुपाहरत्।
द्वारकायां यदुश्रेष्ठो महिष्यष्टकसंयुतः॥ २६

सहस्रषोडशस्त्रीभिः चिरं रेमे रमापतिः।
ततः कदाचिद्देवेशस्सर्वज्ञो जगदीश्वरः॥ २७

रत्नदीपोज्ज्वले शुभ्रे शयने रत्नमण्डपे।
वितानचित्रशोभाढ्ये दिव्यधूपविराजिते॥ २८

मल्लिकादामशोभाढ्ये दिव्यस्त्रीपरिसेविते।
भैष्म्या सह विशालाक्षो रेमे रमयतां वरः॥ २९

सर्वज्ञोऽपि तदा कृष्णः लोकानुग्रहकाम्यया।
कृष्णमाह पतिं देवमच्युतं भुवनेश्वरम्॥ ३०

कर्तारं सर्वलोकानां दातारं सर्वसम्पदाम्।
सुरासुरेन्द्रजनकं सृष्टिस्थित्यन्तकारणम्॥ ३१

देवदेवारविन्दाक्ष कृष्ण विष्णो जगत्पते।
धिग्जन्म कष्टं मे देव सर्वलोकवराऽभवम्॥ ३२

श्रिया कीर्त्या समायुक्ता पुत्रहीना कथं हरे।
पुत्रहीनं गृहं नष्टं पुत्रहीना क्रिया वृथा॥ ३३

तथा कौशेयवस्त्राणि कम्बलादीनि सर्वशः।
नष्टं सौभाग्यमतुलं तथा धान्यं वृषादयः॥ ३४

कुञ्जरादीनि सर्वाणि नष्टानि निरपत्यतः।
रथाश्वभूमिगोरत्नजातानि सकलान्यपि॥ ३५

अपुत्रस्य गतिर्नास्ति अपुत्रस्य क्रतुर्वृथा।
भोजनाच्छादनादीनि नष्टानि मम नित्यशः॥ ३६

ताम्बूलगन्धमाल्यानि नष्टानि निरपत्यतः।
दानं भक्तिश्च वैराग्यं नापुत्रस्य च विद्यते।
कोशानि भूमिग्रामाणि नष्टानि निरपत्यतः॥ ३७

तस्मादपत्यं देवेश सर्वकामसमृद्धये।
मोक्षाय कीर्त्यै धर्माय परलोकहिताय च॥ ३८

स्त्रीणां पुत्रवतीनां च भाग्यहीना यतो ह्यहम्।
सर्वासामुपरिष्ठाऽपि हीनाऽहं निरपत्यतः॥ ३९

येन केन प्रकारेण पुत्रसम्पादनं वरम्।
त्वया सह महाभाग करिष्ये व्रतमुत्तमम्॥ ४०

तथा करोमि देवेश दयां कुरु मयि प्रभो।
इत्युक्तः प्रियया कृष्णः प्रियामाह शुभाक्षरम्॥ ४१

एवमेव मम स्वान्तं कृतं ते नित्यमेव च।
विस्मृतोऽहं च सकलं निरपत्यतया शुभे॥ ४२

इत्युक्त्वा रुक्मिणीं देवीं ध्यात्वा चापि मुहूर्तकम्।
ज्ञात्वाऽभीष्टप्रदं शम्भुं वरदं सर्वदेहिनाम्॥ ४३

लोकानुग्रहणार्थाय भैष्मीमाह हसन् प्रभुः।
कैलासो भूधरः श्रेष्ठः स्मरणात्सर्वसिद्धिदः॥ ४४

ज्ञानं भक्तिश्च मुक्तिश्च दृष्ट्वा भवति नान्यथा।
तस्मिन् गिरिवरे रम्ये नन्दिभृङ्गिरिटादिभिः॥ ४५

आराधितपदो देवो रत्नसिंहासने भवः।
वर्तते भक्तरक्षार्थं सर्वसिद्धिविधायकः॥ ४६

तमन्तराऽऽवयोः पुत्रदातारं न हि लक्षये।
तमेव शरणं यामि त्वया सह सुमध्यमे॥ ४७

सर्वलोकस्य कर्तारं गुणपूर्णं महाप्रभुम्।
ज्योतिर्मयं महानन्दं महादेवं वृषध्वजम्॥ ४८

सेवित्वा द्वादशाब्दं वा पुत्रं सम्पादये भृशम्।
इत्थं निश्चित्य देवेशः भैष्म्या साकं खगध्वजः॥ ४९

एकरूपोऽपि सततं कैलासं शङ्करालयम्।
रुक्मिणी सहितः श्रीमान् नियमेन समन्वितः॥
ययौ खगध्वजो भक्त्या निलयं शङ्करस्य तु॥ ५०

इति द्वितीयोऽध्यायः

## अथ तृतीयाध्यायः

तत्र गत्वा जगन्नाथं देवदेवमुमापतिम्।
रुक्मिणीसहितः कृष्णो ववन्दे वृषभध्वजम्॥ १

भक्त्यास्तौषीत्स्वकार्यार्थं पुरान्तकमुमापतिम्।
नमो नमस्सद्गुणवल्लभाय समस्त कल्याणवरप्रदाय॥ २

शान्ताय चिद्रूपनिराश्रयाय भवाब्धिपोताय नमश्शिवाय।
सुरासुरेन्द्रप्रभवाय शम्भो शिवार्धदेहाय सदाशिवाय॥ ३

भक्ताधिनाथाय सदाकराय निरञ्जनानन्तफलप्रदाय।
पापाचलच्छेदकराय नित्यं गङ्गाधरायाथ नमश्शिवाय॥ ४

गिरीश शम्भो प्रणतार्तिहारिन् नतोऽस्म्यहं नित्यनिरञ्जनाय।
नमो नमस्ते भुवनाधिनाथ कारुण्यरूपाय नमश्शिवाय॥ ५

पिता गुरुस्त्वं भवतापहारिन् पितामहादिस्तुतिसन्नतोऽपि।
पितामहाद्यर्चितदिव्यमूर्ते शुभाय नित्याय निरञ्जनाय॥ ६

कामाय कामरूपाय कामितार्थप्रदायिने।
भवाग्नितापसंहर्त्रे दिव्यमङ्गळमूर्तये॥ ७

निरवद्याय घोराय मङ्गलाय नमो नमः।
पूर्णषाड्गुण्यरूपाय भक्ताभीष्टप्रदायिने॥ ८

इति स्तुतो भवो देवः कृष्णं कमललोचनम्।
मेघ गम्भीरया वाचा प्रहसन्निदमब्रवीत्॥ ९

शिवः।
त्वं लोकनाथस्त्वं श्रीमान् भक्तरक्षणतत्परः।
त्वमेवाहं न सन्देहस्सत्यं सत्यं वदाम्यहम्॥ १०

आवयोरन्तरं नास्ति भेदज्ञो निरयं व्रजेत्।
अज्ञानान्मोहनार्थाय धर्मस्थापनहेतवे॥ ११

कीर्तिं पुत्रवतां दातुं प्रार्थ्यसे मां यदूद्वह।
पुत्रेण किं भवेद्देव ह्यावयोर्नित्यतृप्तयोः॥ १२

पुत्रं प्रार्थयसे यस्मात्तस्माद्वक्ष्यामि साम्प्रतम्।
शृणु कृष्ण मम स्थानं भूमौ मोक्ष प्रदायकम्॥ १३

चिन्तार्थफलदं शुद्धं सर्व मङ्गलदं नृणाम्।
यशश्श्रियः प्रदं पुण्यं भक्तिवैराग्यवर्द्धनम्॥ १४

कावेर्या दक्षिणे तीरे पूर्वांभोधेश्च पश्चिमे।
सोमनाथस्य पूर्वे तु वटारण्यं महद्वनम्॥ १५

दात्यूहबृन्दसंयुक्तं चक्रवाकोपशोभितम्।
तीर्थराजसमायुक्तं सत्यलोकप्रदं नृणाम्॥ १६

मुनिप्रवरसंयुक्तं सिद्धसाध्यसमन्वितम्।
वालिना पूजितं स्थानं वालिवृद्धिप्रदायकम्॥ १७

कृष्ण तस्य समं क्षेत्रं न भूतं न भविष्यति।
क्षेत्राणामुत्तमं क्षेत्रं मम प्रीतिकरं सदा॥ १८

बहुसाहस्रवर्षे तु क्रीडास्थानं ममैव तत्।
येऽत्र स्थानं विशन्त्यज्ञाः पुरुषा ज्ञानिनोऽपि वा॥ १९

स्त्रीरूपास्ते भवन्त्यद्धा इत्युक्तं मे पुरा हरे।
एवं दत्वा वरं तस्य कैलासमगमं तदा॥ २०

तत्र तत्र ह्यटन् जातिमाश्रितो मर्कटोत्तमः।
रममाणस्तु सम्प्राप्तः स्त्रीरूपो ह्यभवत्तदा॥ २१

दृष्ट्वा स्वदेहं स्त्रीरूपं भीतियुक्तस्तदाह्यभूत्।
स्त्रीरूपां तां तदा दृष्ट्वा देवराजश्शतक्रतुः॥ २२

तत्राजगाम द्वीपान्ते रमयामास माधव।
तदा सुतं स्वानुरूपं दत्वा स्वपुरमाप्तवान्॥ २३

एतस्मिन्नन्तरे तस्मिन् द्वीपान्ते तपनोऽपि च।
चकमे रूपसम्पन्नां वानरीं काममोहितः॥ २४

सोऽपि पुत्रं स्वानुरूपं दत्वा लोकं ययौ पुनः।
पुत्रद्वयं च सङ्गृह्य द्वीपबाह्योऽभवत्कपिः ॥ २५

यथापूर्वमभूद्देहः पुरुषस्य यदूद्वह।
अपत्ययुग्मं संगृह्य वटारण्यं महद्वनम् ॥ २६

कल्पभेदेन शिथिलं पूजितं क्रोडरूपिणा।
आदिसिद्धमिदं क्षेत्रं पुण्यदं सर्वदेहिनाम् ॥ २७

पुत्राभ्यां तत्र सहितो ह्युवास प्लवगोत्तमः।
जेष्ठस्तस्य सुतो वाली द्वितीयः कपिसत्तमः ॥ २८

सुग्रीव इति विख्यातः कपीनां प्रवरावुभौ।
महाबलौ महाबाहू फलानि विविधानि च ॥ २९

भक्षयित्वा तदारण्ये यौवनं समुपागतौ।
कदाचित्तस्य चोत्पन्ना मतिश्शुद्धा च माधव ॥ ३०

कपीनामहमेवाग्र्यः सदा स्वजन पोषकः।
स्वजनान् पालयेद्यस्तु धनरत्नाम्बरादिकैः ॥ ३१

स एव धन्यो लोकेऽस्मिन् अन्यथा शव एव सः।
स्वजनान् पोषकं देवा नयन्ति शिवमन्दिरम् ॥ ३२

स्वजनाद्यो विरुद्धचेत तस्य जन्म निरर्थकम्।
अमात्यबन्धु सहितः स्त्रीरत्नसुतसंयुतः ॥ ३३

स्वजनान् पोषयेद्यस्तु स एव पुरुषोत्तमः।
किं करोमि क्व गच्छामि कथमेतद्भवेन्मम ॥ ३४

इत्थं वाली सदा चिन्तां चकार कपिसत्तमः।
इत्येवं चिन्त्यमानस्य नारदो ऋषिसत्तमः ॥ ३५

आजगाम स धर्मात्मा वालिनं कपि सत्तमम्।
उवाच प्लवगश्रेष्ठ अत्र तेऽभीप्सितं फलम्॥ ३६

सिध्यत्येव न संदेहः सत्यं सत्यं न संशयः।
दृष्टमात्रेण पापघ्नं चिन्तितार्थफलप्रदम्॥ ३७

मम सिद्धिरभूत्पूर्वमत्रैव प्लवगोत्तम।
मुनिलिङ्गमिति ख्यातं मनोऽभीष्टप्रदायकम्॥ ३८

मुनिलिङ्गं पूजयस्व भक्त्या बिल्वैश्शुभैर्दलैः।
धुत्तूरैर्द्रौणिशामन्तिमल्लिकाजातिचम्पकैः॥ ३९

अक्षैश्च चणकैश्शम्भुं बोधायनविधानतः।
पुत्रकामप्रदे तीर्थे स्नात्वा मकरसङ्क्रमे॥ ४०

मुनितीर्थे तथा शम्भुं पूजयित्वा विधानतः।
गच्छति ब्रह्मणः स्थानं नात्र कार्या विचारणा॥ ४१

मकरस्थे कठोरांशौ स्नात्वा तु मुनितीर्थके।
भक्त्या मुनीश्वरं दृष्ट्वा न पुनर्जायते भुवि॥ ४२

इत्युक्त्वा मुनिलिङ्गं च पूजयित्वाऽथ भक्तितः।
मुनितीर्थे मुनिस्स्नात्वा ब्रह्मलोकं जगाम हि॥ ४३

गते तु नारदे वाली नारदोक्तविधानतः।
भस्मोद्धूलित सर्वाङ्गो रुद्राक्षाभरणैर्युतः॥ ४४

स्वस्य भूपत्वसिद्ध्यर्थं मुनितीर्थे निमज्ज्य च।
मुनिलिङ्गं महारुद्रैरभिषिच्य विधानतः॥ ४५

दिव्यपत्रफलैः पुष्पैर्नैवेद्यैर्बहुविस्तरैः।
मुकुलाम्बापतिं देवं सर्वलोकैकनायकम्॥

भक्त्याऽस्तौषीत् कपिश्रेष्ठो वटेश्वरमुदारधीः ॥ ४६

वाली ।

नमो नमोऽ गण्यगुणैकधाम्ने निस्सीम नित्याव्यय निर्विकार ।
सृष्ट्यादिकर्त्रे विधिसोमशक्रसूर्यादिकानां स्वपदप्रदात्रे ॥ ४७

समस्तवेदागम शास्त्रयोनये कृपासमुद्राय नमश्शिवाय ।
यज्ञाय यज्ञीयफलप्रदात्रे नमोऽपवर्गाय नमश्शिवाय ॥ ४८

नमस्ते ह्यपवर्गाय कारणाय नमो नमः ।
कपर्दिने नमस्तुभ्यं गीरीशाय नमो नमः ॥ ४९

करुणाय नमस्तुभ्यं भानवे भार्गवाय च ।
देवाय श्रीमते तुभ्यं महादेवाय शम्भवे ॥ ५०

कल्याणदात्रे कल्याणमूर्तयेऽस्तु नमो नमः ।
इति स्तुतो महादेवो वालिना चन्द्रशेखरः ॥

मेघगम्भीरनादेन प्रहसंस्त्वब्रवीदिदम् ॥ ५१

इति तृतीयोऽध्यायः

## ॥ अथ चतुर्थाध्यायः ॥

शिवः -

पूजया प्लवगश्रेष्ठ प्रीतोहं नात्र संशयः ।

तवेप्सितं प्रदास्यामि वरय त्वं मनोगतम् ॥ १

वाली-

देवदेव नमश्शम्भो धन्योहं तव दर्शनात् ।
जीवितं सफलं मन्ये त्वद्दर्शननिमित्ततः ॥ २

त्वद्दर्शन सुधाम्बोधौ स्नातस्य मम शङ्कर।
न कांक्षास्ति महादेव वरादिषु मम प्रभो ॥ ३

त्वद्दर्शनादपि वरं किमस्ति जगतीतले।
तथापि कांक्षये देव त्वदाज्ञाधारको ह्यहम् ॥ ४

समस्तानां कपीनां च भूपत्वं मे प्रदापय।
निग्रहानुग्रहित्वं च कपीनां मे प्रदापय ॥ ५

मम स्थानं दर्शयस्व अन्ते दापय ते पदम्।
इत्युक्तश्शङ्करो देवो वालिनं प्राह माधव ॥ ६

प्लवगेन्द्र महाबाहो त्वयोक्तं सकलं तथा।
भवेदेव न सन्देहो नात्र कार्या विचारणा ॥ ७

तवान्ते रामरूपेण प्रदास्ये पदमुत्तमम्।
प्रतिवर्षं समागत्य मामत्रार्चय भक्तितः ॥ ८

मकरस्थे च मार्ताण्डे प्रथमे दिवसे शुचिः।
एतस्मिन्नन्तरे मर्त्यास्सेवन्ते मत्परायणाः ॥ ९

तेषां दास्यामि विपुलां सम्पदं नात्र संशयः।
इत्युक्तः प्लवगश्रेष्ठस्तथा चक्रे तथाऽभवत् ॥ १०

तदाप्रभृति तत्क्षेत्रं वालीवनमिति स्मृतम्।
वालीवनं सकृत् गत्वा शिवलोकं व्रजन्ति ते ॥ ११

जीर्णं तेनोद्धृतं यस्माद्वालिना यदुसत्तम।
तत्दृष्ट्वा कृतकृत्यास्स्युर्मर्त्या भूमौ सुरांशकाः ॥ १२

क्षणं तत्तीर्थतीरे तु वासमाचरतां नृणाम्।
कैलासोऽत्र न सन्देहः स्नाने किमुत तद्भवेत् ॥ १३

वालीश्वरं सकृद्दृष्ट्वा मनोभीष्टं लभेद्ध्रुवम्।
दुर्घटो वापि भवति एकवारे तु सेवनात्॥ १४

तत्र त्वं लोकरक्षार्थं पुत्रार्थं पूजयस्व माम्।
पुत्रकामनया यस्मात् पूजयिष्यसि मां हरे॥ १५

तस्मान्नाम भवेल्लोके पुत्रकामेश्वरस्त्विति।
इत्युक्तस्सहभार्यश्च कृष्णो योगीश्वरः प्रभुः॥ १६

आजगाम महातेजा वालीवनमनुत्तमम्।
वकुलाशोकपुन्नागनागतालनगैर्युतम्॥ १७

नीपलोध्रकपित्थैश्च यवाम्रामलकैर्युतम्।
जम्बीरपनसाद्यैश्च हिन्तालार्जुनकैर्वृतम्॥ १८

पाटलीमल्लिकाजाजीचम्पकैः कुसुमैर्वृतम्।
कोकिलारावसंघुष्टं मयूरनिकरैर्वृतम्ः॥ १९

मुनिसिद्धगणोपेतं सुरसङ्घनिषेवितम्।
गन्धर्वचारणोपेतमप्सरोगणसेवितम्॥ २०

दृष्ट्वा वटवनं देवो रुक्मिण्या सह भार्यया।
पुळकाङ्कितसर्वाङ्गः कृष्णः कमललोचनः॥ २१

नत्वा वनं तद्वनेशं सिद्धतीर्थे सुभक्तितः।
कृतस्नानस्सभार्यश्च दिव्यपीताम्बरावृतः॥ २२

तत्रत्यमुनिबृन्दैश्च संयुक्तस्सह भार्यया।
लोकसङ्ग्रहणार्थाय सृष्टिस्थितिनियामकः॥ २३

संसारबद्धवद्देवो योगीशः कमलापतिः।
पूजयामास तं शम्भुं बोधायनविधानतः॥ २४

पूजयामास सत्पुष्पैः फलैर्नीराजनादिकैः ।
नैवेद्यैर्बहुविस्तारैर्गोपुरालयमण्टपैः ॥ २५

मुकुलाम्बाभिधां गौरीं चण्डेशं च विनायकम् ।
नन्दीश्वरं च विधिवन्न्यग्रोधेशं सुभक्तितः ॥ २६

नित्यशः पूजयामास सभार्यस्सादरं मुदा ।
काञ्चनैश्शतपत्रैश्च शुभैः कोकनदैरपि ॥ २७

नीलोत्पलैः पाटलाद्यैः पुन्नागैर्नागपञ्चकैः ।
दिव्यैर्बिल्वदलैश्चापि द्रोणदूर्वांकुरैस्सह ॥ २८

अर्चयामास सततं पुत्रप्रार्थनया युतः ।
सिद्धतीर्थे शुद्धमनाः भार्यया सह माधवः ॥ २९

न्यग्रोधं स्थापयामास वर्धितश्च सदा शुभः ।
इन्द्रनीलसमाभासस्सर्वमङ्गलदायकः ॥ ३०

नृणामभीष्टदो नित्यमष्टैश्वर्य प्रदायकः ।
तद्दर्शनाद्भवेन्मुक्तिः स्पर्शनादीप्सितं लभेत् ॥ ३१

तत्समालिङ्गनाद्वन्ध्या सूते पुत्रं न संशयः ।
तच्छायास्पर्शमात्रेण ब्रह्मरक्षोमुखा ग्रहाः ॥ ३२

पलायनं प्रकुर्वन्ति सत्यं सत्यं न संशयः ।
ध्यात्वा पञ्चमुखं रुद्रं स्फटिकाभं निरञ्जनम् ॥ ३३

चिद्घनं सृष्टिकर्तारं पूर्णचन्द्रनिभाननम् ।
गुणपूर्णं कृपापूर्णं पूर्णानन्दं सदाशिवम् ॥ ३४

पुत्रकामप्रदं नित्यं वालीशं प्रार्थयन् सदा ।
जीर्णपर्णाशिनो दान्तो द्वादशाब्दं समावसत् ॥
कदाचिद् द्वादशाब्दान्ते स्तोतुमारभते हि सः ॥ ३५

इतिचतुर्थोऽध्यायः

## अथ पञ्चमाध्यायः ॥

कृष्णः -

जय जय जय गङ्गाधार शान्तस्वरूपिन्
जय जय जय देवैस्सत्पुराणैकवेद्य।
जय जय जय नाथ प्राप्तलोकार्तिहारिन्
जय जय जय शम्भो वेदवेदान्तवेद्य ॥ १

नमस्ते नमस्ते शशाङ्कार्धमौले
नमस्तेनमस्तेऽस्तु लोकैकनाथ।
नमस्ते नमस्ते भवाम्भोधिपोत
नमस्ते नमस्ते चिदानन्दरूपिन् ॥ २

नमो नमस्तेऽखिलसद्गुणाय नमो नमस्तेऽखिलवल्लभाय।
नमो नमस्ते विधिशक्रसूर्यवन्द्याय शम्भो गिरिजार्धविग्रह ॥
नमो नमस्ते करुणाकराय नमो नमस्ते भुवनानन्तराय ॥ ३

चिदानन्दाय पूर्णाय गुणातीताय वेधसे।
पराय परलोकार्थदायिने सिद्धिदायिने ॥ ४

मायातीताय मायाय मायाच्छेदकराय च।
निरवद्याय वैद्याय भैरवाय नमो नमः ॥ ५

सर्वशक्तिस्वरूपाय शिवाय शिवरूपिणे।
पिनाकिने प्रपन्नार्तिहारिणे भूयसे नमः ॥ ६

क्रतवे क्रतुसंहर्त्रे कारणाय पराय च।
यज्वने वेदवेद्याय वेदान्ताय नमो नमः ॥ ७

कामाय कामभङ्गाय कामपूर्तिकराय च।
योगनाथाय योगाय योगिवर्याय ते नमः ॥ ८

रक्ष रक्ष कृपापूर्ण रक्ष रक्ष त्रिलोचन।
रक्ष रक्ष सदा शम्भो रक्ष रक्ष शिवापते ॥ ९

मां पालय मनोभीष्टं पूरयस्वाष्टविग्रह।
पुत्रहीनं सभार्यं मां रक्ष रक्ष कृपानिधे ॥ १०

द्वादशाब्दमभूदत्र वृद्धौ च पितरौ मम।
उग्रसेनादयस्सर्वे शोचन्ति किल शङ्कर ॥ ११

तस्मादभीष्टदानेन मामुद्धर दयानिधे।

सूतः-

जगतां मोहनार्थाय एकरूपोऽपि शौनक ॥ १२

वालीश्वरं जगन्नाथं प्रणनाम मुहुर्मुहुः।
इत्युक्तश्शङ्करस्साक्षाद्वालीशो वृषवाहनः ॥ १३

उवाच कृष्णं गोविन्दं मोहयन् लोकमञ्जसा।
शिवः।

जाने त्वां लोककर्तारं चिदानन्दघनं प्रभुम् ॥ १४

भूभारहरणार्थाय वसुदेवकुलोद्भवम्।
तस्मात्तेऽहं प्रदास्यामि पुत्रसम्पदमुत्तमाम् ॥ १५

अन्तरं चावयोर्नास्ति योऽन्तरज्ञः पतेदधः।
तस्माद्दाता पालकश्च कार्यकारणरूपवान् ॥ १६

दातृत्वव्यपदेशेन ग्राहकत्वेन माधव।
गच्छस्व लोकरक्षार्थं सभार्यः पुत्रलाभवान् ॥ १७

इत्युक्तश्शङ्करेणैव प्रणतार्तिहरो हरिः।
एतद्वनस्य मन्नाम भवेदिति वचोऽब्रवीत् ॥ १८

तथास्त्विति भवो देव उवाच किल माधवम्।
पुत्रकामप्रदं क्षेत्रं पुत्रकामेश्वरं शिवम्।। १९

कृष्णक्षेत्रं पुत्रनाथं विमानं कामितप्रदम्।
येऽत्रागत्य क्षणं देवं वसित्वा सेवयन्ति च।। २०

ते यान्ति शिवसायुज्यं कैलासेशप्रसादतः।
तथास्त्विति शिवेनोक्तः कृष्णः कमललोचनः।। २१

पुत्रकामेश्वरं नत्वा क्षेत्रस्यापि वरं ददौ।
क्षणार्धमत्र ये मर्त्या ह्यागत्य शिवमञ्जसा।। २२

प्रपूजयन्ति ते मर्त्याश्शिवा एव न संशयः।
मया संस्थापिते वृक्षमूले संवसतां नृणाम्।। २३

सर्वार्थास्सम्भवंत्वद्धा नात्र कार्या विचारणा।
पुत्रकामेश्वरं दृष्ट्वा वालीश्वरमथापि वा।। २४

ते यान्ति शिवसायुज्यं तेषां सर्वफलं लभेत्।
अद्य प्रभृति लोकेऽस्मिन् वटारण्यं शुभास्पदम्।। २५

वालीश्वरस्य देवस्य वटारण्येश्वरं परम्।
तस्माद्वटवनं नाम्ना कीर्तयन्ति सुरादयः।। २६

क्रीडित्वा द्वादशाब्दन्तु तत्रैव किल शौनक।
प्रययौ स्वपुरीं देवः जगन्मङ्गलमङ्गलः।। २७

खगध्वजस्सिद्धजनाभिवन्द्यस्समस्तलोकैकनिदानमूर्तिः।
गत्वा पुरं स्वीयजनैरभिष्टुतो रेमे स्वपुर्यां वसुदेवसूनुः।। २८

ततः कदाचिद्दिवसे शुभास्पदे सुतं कुलोत्तारणदक्षमव्ययम्।
प्रद्युम्ननामानमधोक्षजो हरिर्लेभे सभार्यश्शुशुभे यदूद्वहः।। २९

इति पञ्चमोऽध्यायः

## ॥ अथ षष्ठाध्यायः ॥

एतादृशे महाक्षेत्रे कृष्णस्यापि वरप्रदे।
क्षणमात्रं वसेद्यस्तु स मुक्तो नात्र संशयः ॥ १

देवस्येशानभागे तु तीर्थस्योत्तरतः शुभः।
कृष्णेन स्थापितो वृक्षो वटो मङ्गळदायकः ॥ २

वटमूलं समाश्रित्य तिष्ठन्ति विबुधर्षभाः।
कांक्षन्ते पितरस्तस्मिन् पिण्डदानादिकं परम् ॥ ३

तेन ते तृप्तिमायान्ति कल्पकोटिशतेष्वपि।
अक्षय्याख्ये वटे श्राद्धं कृत्वा यत्फलमाप्नुयात् ॥ ४

ततश्शतगुणं चात्र श्राद्धकर्ता लभेत् फलम्।
तन्मूले वसतां नृणां क्षणमात्रं च शौनक ॥ ५

वाञ्छन्ति करसंस्पर्शं देवाश्चेन्द्रपुरोगमाः।
जन्मान्तरतपोयोगात् तीर्थस्नाने मतिर्भवेत् ॥ ६

भवेन्न्यग्रोधवृक्षस्य दर्शनं नान्यथा भवेत्।
न्यग्रोधदर्शनात्सद्यः क्षीयन्ते पापराशयः ॥ ७

वन्दनान्मुक्तिमाप्नोति पूजनाच्छङ्करो भवेत्।
प्रदक्षिणात् भूक्रमणफलं प्राप्नोति मानवः ॥ ८

कृष्णन्यग्रोधमूले तु दानं दद्यात् द्विजातये।
मधु तैलं पयः कृष्णतिलान् धेनुं पयस्विनीम् ॥ ९

एकैकं कोटिगुणितं भवत्येव न संशयः।
रोगा विलयमायान्ति क्षयापस्मारलूतकाः ॥ १०

काशश्वासज्वरा मेहाः मूत्रकृच्छ्रभगंन्दराः।
लालारोगादयश्चैव शाम्यन्ति वटदर्शनात् ॥ ११

एतज्जन्मकृतं पापं जन्मान्तरकृतं तथा।
मातामहकृतं पापं भगिनीक्रयजं तथा॥ १२

प्रियायाः कुलजं पापं गुरुवंशकृतं तथा।
मित्रभृत्यकृतं पापं नश्यते वटदर्शनात्॥ १३

श्राद्धकाले गयाध्यानं वटारण्ये च दर्शनम्।
पञ्चाक्षरजपश्चैव भूतिरुद्राक्षधारणम्॥ १४

सदा शम्भुस्मृतिश्चैव तद् भृत्यानां च सङ्गमः।
अन्नदानकृतौ बुद्धिरनाथानां च रक्षणम्॥ १५

मासे मासे शिवव्रतं शिवसेवनमंजसा।
सोमवारव्रतं चैव प्रदोषे पूजनं तथा॥ १६

शिवालयोद्धारणं च शङ्करोत्सवसेवनम्।
शङ्करोत्सवनिर्वाहः शम्भोरुत्सवनिर्गमः॥ १७

शम्भुदासैश्च सल्लापस्तत्कथाश्रवणं तथा।
न्यग्रोधगमनं तद्वद्वटस्यापि प्रदक्षिणम्॥ १८

तद्वटालिङ्गनं चैव नाल्पस्य तपसः फलम्।
अस्थिलग्नं महत्पापं रोमकूपगतं तथा॥ १९

कायेन मनसा वाचा यत्कृतं पापमुल्बणम्।
तत्सर्वं विलयं याति न्यग्रोधेश प्रसादतः॥ २०

न शोको न च वै मोहो न तन्द्री वटदर्शनात्।
दैवादागतमात्रस्य वटच्छायान्तु शौनक॥ २१

सर्वरोगोपशमनं सर्वदारिद्र्यनाशनम्।
न्यग्रोधेशप्रसादेन यशो विद्या धृतिः क्षमा॥ २२

पूर्णायुः पूर्णसम्पत्तिः शङ्करस्य सखा भवेत्।
त्रिरात्रं पञ्चरात्रं वा सप्तरात्रं च शौनक ॥ २३

दशरात्रं ह्युत्क्रमेण तद्वटस्य प्रदक्षिणात्।
पुत्रान् पशून् यशो विद्यां धनधान्यादिकं तथा ॥ २४

यं यं कामयते कामं तं तमाप्नोति दर्शनात्।
ब्रह्महत्या समं पापं सुरापानसमं तथा ॥ २५

गुरुस्त्रीगमनं पापं स्वर्णस्तेयसमं तथा।
संयोगपातकसमे उपपातकजं तथा ॥ २६

परदाररतो यस्तु दुर्दानानां प्रतिग्रही।
दुरालापी दुष्टसङ्गी पिशुनः कितवश्शठः ॥ २७

नास्तिको वा शिवद्रोही गुरुद्रोही च वीरहा।
गरदोऽप्यग्निदो वापि वटेश्वरनिषेवणात् ॥ २८

निर्मुक्तश्शङ्करपदं प्राप्नुयान्नात्र संशयः।
एको वास्मत्कुले जातो वटारण्यसमागतः ॥ २९

वृश्चिके सोमवारे तु शिवभक्तिपरश्शुचिः।
पुत्रकामप्रदे तीर्थे स्नात्वा नियतमानसः ॥ ३०

वटवृक्षं परिक्रम्य पुत्रकामेशसन्निधौ।
वटारण्येश्वरं शम्भुं कामितार्थप्रदायकम् ॥ ३१

दृष्ट्वा नत्वा तदा स्तुत्वा कृष्णस्तुत्या च शौनक।
पिष्टदीपन्तु प्रज्वाल्य शिवपूजनतत्परः ॥ ३२

स्नात्वा विप्रान् भोजयित्वा तत्र वासं करोति च।
वयं च तेन पुण्येन कृतार्थाः पितरस्तदा ॥ ३३

भविष्यामो न संदेहः किमत्र हि विशिष्यते ।
श्रुत्वा स धर्मराजोऽपि स्वदूतान्नित्यमेव तु ।। ३४

मा यात यात मा यात वटारण्यगतं नरम् ।
आजन्ममरणं पापं नश्यते वटदर्शनात् ।। ३५

इति ब्रूते सदा दूतान् यमश्शङ्करभीतितः ।
केन वा वर्णितुं शक्यं चतुर्दशजगत्स्वपि ।। ३६

वेदिकां तद्वटस्यैव यः करोति नरो भुवि ।
धन्यस्स एव विज्ञेयश्शङ्करश्च स एव तु ।। ३७

शुक्रभौमारवारेषु गुरुवारे विशेषतः ।
वटप्रदक्षिणात्सद्यो मुक्तो भूयान्न संशयः ।। ३८

कृष्णाष्टम्यां वटस्यास्य सकृदालिङ्गनान्मुने ।
आजन्ममरणान्तं च पापं तस्य विनश्यति ।। ३९

एकादश्यां त्रयोदश्याममायां पूर्णिमादिने ।
शिवरात्रौ विशेषेण प्रदोषे वा सकृन्नरः ।। ४०

कृत्वा प्रदक्षिणं नत्वा वटस्य शिवसन्निधौ ।
इह जन्मनि सौख्यं च पुत्रपौत्रप्रपौत्रकैः ।। ४१

तिलयुक्तं मधोदानं सगुडान् तिलपिण्डकान् ।
वटमूले स्थिरे वारे दत्वा भूपत्वमाप्नुयात् ।। ४२

प्रदक्षिणेन ताम्बूलं शुक्रवारे द्विजातये ।
दत्वा वटस्य मूले तु पुत्रवान् पशुमान् भवेत् ।। ४३

माषापूपं गुडापूपं भौमवारे सुभक्तितः ।
वटमूले तु यो दद्यादष्टैश्वर्यं लभेन्नरः ।। ४४

दत्वा तु आयुरारोग्यं सर्वान् कामानवाप्नुयात् ॥
फलानि मूलानि पयो घृतं च वटस्य मूले शिवभक्तिसंयुतः ।
दत्वा गुरौ यो द्विजपुङ्गवेभ्यो यशश्श्रियम् मङ्गलमातनोति ॥ ४५

वटस्य मूले शिवदीक्षितो नरो रुद्राक्षमालाभरणैश्च संयुतः ।
शिवस्य संकीर्तनपूर्वकं मुने सदा शिवे भक्तिसमन्वितश्च ॥ ४६

हयं गजं धान्यमथोग्रदानं दत्वा भवेच्छङ्कर एव नान्यथा ॥ ४७

इति वटमहिमानं शृण्वतां वै नराणाम्
अनुदिनशिवभक्त्या मूलमाश्रित्य पुण्यम् ।
भगवति त्रिपुरेशे भक्तिभावेन नम्रः
सुतधनसकलार्थान् प्राप्नुयात् कीर्तिलक्ष्मीम् ॥ ४८

इति षष्ठोऽध्यायः

* * *

## अथ सप्तमाध्यायः ।

शौनकः-

सूत सूत महाप्राज्ञ सर्वशास्त्रविशारद ।
माहात्म्यमतुलं शम्भोर्वटारण्यस्य वैभवम् ॥ १

श्रोतुमिच्छामि भद्रं ते पुनश्शङ्कर वैभवम् ।
सिद्धतीर्थमिति ख्यातिः किमर्थं तद्वदस्व मे ॥ २

मुनिलिङ्गमिति ख्यातिः कुतो वा कारणान्मुने ।
एतद्वदस्व तत्तीर्थस्नातानां यत्फलं वद ॥ ३

कति तीर्थानि तत् क्षेत्रे वदस्व दयया विभो ॥ ४

सूतः -

हन्त ते कथयिष्यामि सर्वपातकनाशनम्।
सर्वरोगोपशमनं सर्वमङ्गलदायकम्॥ ५

मुनिलिङ्गमिति ख्यातिर्येनासीत्तच्छृणुष्व भो।
पितामहाङ्गजः पूर्वं देवर्षिप्रवरो द्विज॥ ६

कदाचिदब्जजं देवं पितरं करुणाकरम्।
नत्वा ज्ञानं शिवे भक्तिश्शिवसेवा तथैव च॥ ७

सदा भूयान्मम स्वामिन् सर्वत्र ख्यातिरेव च।
सर्वदेशाटने त्राणं स्यान्मे केन वदस्व भो॥ ८

ब्रह्मा -

इत्युक्तः कञ्जसम्भूतः स्वपुत्रं नारदं ऋषिम्।
शृणुष्व मुनिशार्दूल हितं वक्ष्यामि साम्प्रतम्॥ ९

ज्ञानाद्यभीष्टदं पुत्रसर्वसिद्धिप्रदं शुभम्।
सदा सङ्कीर्तने शम्भोर्दिव्यनामानुकीर्तने॥ १०

तवेष्टसिद्धिर्भवति नान्यथा मम भाषितम्।
ब्रह्मध्रुङ्मद्यपः स्त्रीघ्नो मातृहा पितृहा तथा॥ ११

गुरुदाररतो मूर्खो धूर्तो वेदविवर्जितः।
परान्नाशी निरग्निश्च पिशुनो लम्पटश्शठः॥ १२

गोघ्नो ब्रह्मस्वहारी च देवब्राह्मणदूषकः।
सकृच्छङ्करसन्नामकीर्तनात्सर्वपातकैः॥ १३

मुच्यते नात्र सन्देहस्सत्यं सत्यं न संशयः।
जन्मप्रभृति यत्पापं यत्पापं पूर्वजन्मनि॥ १४

तत्सर्वं नाशमायाति सदा रुद्राक्षधारणात्।
वेतालरक्षोबालघ्नवैनायकमुखा ग्रहाः ॥ १५

पलायनं प्रकुर्वन्ति भूतिधारणमात्रतः।
ज्ञानं भक्तिस्तथा कीर्तिः श्रीस्सदा वर्धते गृहे ॥ १६

भूतिधारणमात्रेण सार्वभौमो भवेद्ध्रुवम्।
अज्ञानोन्मादहरणं सर्वरोगहरं परम् ॥ १७

शरीरसौष्ठवं शम्भोर्भूतिधारणमात्रतः।
शिवतत्वपरो यस्तु शिवार्चनरतः सदा ॥ १८

शिवभक्तेषु सद्भक्तिश्शैवागम विशारदः।
भूतिरुद्राक्षधारी च सोमवारव्रती नरः ॥ १९

बिल्वार्चनपरो मर्त्यः प्रदोषव्रततत्परः।
शिवध्यानरतो नित्यं मुक्तिभागी न संशयः ॥ २०

शुद्धस्फटिकसङ्काशं चिदानन्दं सदाशिवम्।
स्मृत्वा सकृन्नरो भक्त्या सर्वपापैः प्रमुच्यते ॥ २१

सकृत् बिल्वार्चनाच्छम्भुः स्वसायुज्यं ददाति च।
देवदेवमुमानाथं चन्द्रार्धकृत मौलिनम् ॥ २२

मनसा भावयेन्मर्त्यः स एव किल शङ्करः।
तस्मात्सर्वप्रयत्नेन शिवभक्तिपरो भवेत् ॥ २३

तेन ते सर्वसिद्धिश्च भवत्येव न चान्यथा।
तत्र किञ्चिद्रहस्यं च तव वक्ष्यामि पुत्रक ॥ २४

यत्र कुत्रापि वा शम्भुं स्मृतिमात्रेण शङ्करम्।
किमु क्षेत्रनिवासेन कैवल्यं लभते नरः ॥ २५

शृणुष्व मे देवऋषे स्थानं परमशोभनम्।
वटारण्यमिति ख्यातं श्रीकृष्णस्य वरप्रदम्॥ २६

कैलाससदृशं भूमौ आदिसिद्धं सुसिद्धिदम्।
भक्ताभीष्टप्रदो यत्र वर्ततेऽद्यापि नारद॥ २७

तं गच्छ देवदेवेशं शङ्करं लोकशङ्करम्।
तमन्तरा न जानेऽहं तवाभीष्टप्रदं स्थलम्॥ २८

सृष्टिकर्तृत्वसामर्थ्यसिद्ध्यै किल नारद।
कावेरीतीरमाश्रित्य दण्डकारण्यभागतः॥ २९

तत्रास्ते भगवान् शम्भुः पूर्वाभिमुखमाश्रितः।
निर्मितं च मया तत्र तीर्थं मन्नामतो मुने॥ ३०

गङ्गादिसर्वतीर्थानां सान्निध्यं सर्वदाऽर्थदम्।
तथासीत्सर्वतीर्थानां सान्निध्यं सर्वदा मुने॥ ३१

तस्य तीर्थस्य तीरे तु श्रीवृक्षः स्थापितो मया।
तन्मूले शङ्करमनुं जप्त्वा स्नात्वा यथाविधि॥ ३२

एवं वै वर्तमानस्य घृणामूर्तिः शिवो मम।
नन्दिभृङ्गिरिटाद्यैश्च पार्षदैः परिवारकैः॥ ३३

हंसस्योदयकाले तु हंसकोटिसमच्छविः।
प्रत्यक्षोऽभूदुमानाथः पूर्वाभिमुखमाश्रितः॥ ३४

तं दृष्ट्वा वृषवाहं च गङ्गाधरमनामयम्।
तेनापि दत्तं तत्रैव मनोऽभीष्टं हि नारद॥ ३५

तत्क्षेत्रमद्य शिथिलं कल्पभेदेन वर्तते।
तत्रादरात् त्वं गत्वा तु माकरे सङ्क्रमे शिवम्॥ ३६

पूजयस्व मनोऽभीष्टं भवो दद्यान्न संशयः ।
यदेतत् परमम् पुत्र पुत्रत्वात्ते प्रकाशितः ।। ३७

न दाम्भिकाय वक्तव्यं तथा पण्डितमानिने ।
कामिने ह्यर्थलुब्धाय न वक्तव्यं त्वया मुने ।। ३८

तत्स्थानसदृशं स्थानं न भूमौ विद्यतेऽधुना ।
इत्युक्तो ब्रह्मणा सत्ये देवर्षिर्भुवमागतः ।। ३९

वाञ्छेश्वरपुरोभागे वायव्ये शौरिनायकात् ।
कावेर्या दक्षिणे तीरे दृष्ट्वा शैथिलमञ्जसा ।। ४०

देवस्य वायुदिग्भागे ब्रह्मणा निर्मितं पुरा ।
संस्थाप्य ब्रह्मतीर्थस्य दक्षिणे बिल्वसन्निधौ ।। ४१

पूजयामास विधिना मकरे सङ्क्रमे परे ।
संस्तुवन्नित्यमेवाथ शिवगङ्गाधरं हरम् ।। ४२

स्वाभीष्टं प्रार्थयामास महादेवं वृषध्वजम् ।
सन्तुष्टः पार्वतीनाथो नारदाय महात्मने ।। ४३

कामितार्थ प्रदश्चासीत्सर्वसिद्धिप्रदो यतः ।
जीर्णोद्धारं यतस्तीर्थं नारदेन महात्मना ।। ४४

कृतं तीर्थं महाभाग मुनितीर्थमिति स्मृतम् ।
इत्येतत् क्षेत्रमाहात्म्यं पुण्यं पापप्रणाशनम् ।। ४५

ब्रह्मेन्द्रगुर्वर्कदिनेशविष्णुगीर्वाणवर्यार्चितपादपद्मम् ।
योगीन्द्रवर्यार्चितदिव्यविग्रहं वटाटवीनाथमहं प्रपद्ये ।। ४६

इति सप्तमोऽध्यायः ।

## ।। अथाष्टमाध्यायः ।।

श्री सूतः -

अथातः सम्प्रवक्ष्यामि तीर्थवैभवमञ्जसा।
यस्य स्मरणमात्रेण मुच्यते नात्र संशयः ।। १

देवस्याग्नेयभागे तु श्रीकृष्णेन कृतं पुरा।
पुत्रकामप्रदं नाम्ना तीर्थं परमपावनम्।। २

तीर्थानामुत्तमं तीर्थं सर्वलोकेषु विश्रुतम्।
दृष्ट्वा स्पृष्ट्वा च संस्नात्वा कीर्तनाद्वा सकृन्नरः ।। ३

सर्वपापविनिर्मुक्तः शिवकैलासमाप्नुयात्।
ऋषिर्ब्रह्मा महातेजा देवता शङ्करः स्वयम्।। ४

हेरम्बो रक्षकस्तस्य वटस्तत्र महातरुः।
भैरवस्तीर्थमध्यस्थो नत्वैतान् स्नानमाचरेत्।। ५

स्नानकाले महाभाग मनसा भावयेदमून्।
वटनाथ महाशम्भो देवदेव त्रिलोचन।। ६

स्नानार्थं देहि मेऽनुज्ञां युष्मत्तीर्थोत्तमोत्तमे।
ज्ञानं भक्तिं च मे देहि चतुर्वक्त्र सुरोत्तम।। ७

पातकं नाशय क्षिप्रं ममाभीष्टं प्रपूरय।
उमाङ्कमलसम्भूत ज्येष्ठ स्वामिकुमारक।। ८

कुमारगुरवे तुभ्यं नमोऽस्त्वद्य विनायक।
इत्थं सम्प्रार्थयन्मर्त्यो नत्वा चैव पृथक् पृथक्।। ९

महिषं वृषभं नीलं पयो धेनुं तिलान्मधु।
फलानि शाकं लवणं कन्यां छत्रं च कम्बलम्।। १०

ताम्बूलं रजतं स्वर्णं घृतं वा नवनीतकम्।
दासीदासं च भवनं धान्यं वा शर्करां शुभाम्॥ ११

तिलयुक्तमधोर्दानं गुप्तदानं तथैव च।
कल्पवृक्षप्रदानं च तण्डुलं मुद्गमेव च॥ १२

पादुकापुस्तकं तूलं दद्याद्भक्तिसमन्वितः।
सर्वाभावे महाभाग शर्कराखण्डसंयुताः॥ १३

वलक्षाश्च तिला देयाः सर्वदानफलं लभेत्।
वलक्षतिलदानेन सर्वाभीष्टं समश्नुते॥ १४

माकरे संक्रमे यस्तु पुत्रकामप्रदे शुभे।
तीर्थे स्नात्वा सकृद्वापि कृतकृत्यो भवेन्नरः॥ १५

वटमूले पञ्चवर्णं जप्त्वा वै शङ्करो भवेत्।
वटमूले शिवदिने पुत्रकामप्रदे शुभे॥ १६

स्नात्वा धृत्वा च रुद्राक्षं प्राप्नोतीशमसंशयः।
शय्यादानं च तत्तीर्थतीरे यस्तु समाचरेत्॥ १७

वटमूले सकृद्वापि स गिरीशपदं लभेत्।
पुत्रकामप्रदे तीर्थे कार्तिके सोमवासरे॥ १८

वटनाथप्रसादस्य पात्रभूतो भवेद्ध्रुवम्।
रुद्राक्षधारणं भस्मधारणं च कलौ युगे॥ १९

शिवलिङ्गप्रदानं च पञ्चाक्षरजपस्तथा।
शिवदीक्षा शिवे भक्तिस्तद्भक्तानां च सङ्गमः॥ २०

शिवसङ्कीर्तनं चैव शिवदर्शनमेव च।
शिवालयोद्धारणं च शिवपूजा तथैव च॥ २१

पुत्रकामप्रदे तीर्थे माकरे मज्जनं तथा।
वटारण्यनिवासश्च दर्शनं च तदर्चनम्॥ २२

भागीरथ्यवगाहश्च पञ्चाक्षरजपस्तथा।
सोमवारव्रतं चैव मासरात्रिव्रतं तथा॥ २३

प्रदोषे दर्शनं शम्भोः प्रदोषव्रतमेव च।
सदा शङ्करसल्लापो नित्यं भक्तिसमन्वितः॥ २४

प्रयागमरणं चैव भूतिदानं तथैव च।
शम्भोरुत्सवनिर्वाहः शम्भोरुत्सवसेवनम्॥ २५

शम्भोः पूजापदार्थानां दानं सर्वार्थसाधनम्।
रामायणस्य श्रवणं जन्मान्तरतपःफलम्॥ २६

पुत्रकामप्रदे तीर्थे कृष्णाष्टम्यान्तु यश्चरेत्।
स्नानं दानं जपं चैव स गिरीशपदं लभेत्॥ २७

पुत्रकामप्रदे तीर्थे कृष्णभौमाष्टमीदिने।
स्नात्वा तु सर्वरोगेभ्यो मुच्यते नात्र संशयः॥ २८

पुत्रकामप्रदे तीर्थे शिवभक्तिसमन्वितः।
निर्धनो धनमाप्नोति अपुत्रो लभते सुतम्॥ २९

अज्ञानी ज्ञानमाप्नोति रोगी रोगात् प्रमुच्यते।
विद्याकामो लभेद्विद्यां सर्वाभीष्टमवाप्नुयात्॥ ३०

स्नात्वा तु कुजपञ्चम्यां पुत्रकामप्रदे शुभे।
शिरोरोगात् प्रमुच्येत नात्र कार्या विचारणा॥ ३१

स्नात्वा वापि सकृन्मर्त्यो भक्त्या दानं यथोदितम्।
वटस्याष्टोत्तरशतं कृत्वा चापि प्रदक्षिणम्॥ ३२

ततस्तं च समालिङ्गच्य तन्मूलेऽन्नप्रदानतः।
कोटिजन्मकृतं पापं नश्यत्येव न संशयः ॥ ३३

पुत्रकामप्रदे तीर्थे चन्द्रसूर्योपरागयोः।
यः स्नाति कुष्ठरोगाद्यैर्मुच्यते नात्र संशयः ॥ ३४

लूतारोगोपशमं सर्वदारिद्र्यनाशनम्।
क्षयापस्मारकुष्ठादिसर्वरोगनिवारणम् ॥ ३५

पुत्रकामप्रदस्नानं सदा सर्वार्थदायकम्।
कीर्तिं विद्यां धनं धान्यं पशून् पुत्रान् लभेन्नरः ॥ ३६

पुत्रकामप्रदे तीर्थे भूत्वा नियतमानसः।
यः स्नाति माकरे पुत्र एको वाऽस्मत्कुलोद्भवः ॥ ३७

तिलाञ्जलिप्रदाता स्यात् वयं शिवमवाप्नुमः।
इत्थं नन्दन्ति पितरस्तोयस्नानं ततश्चरेत् ॥ ३८

वटदर्शनमात्रेण शिवो भूयान्न संशयः।
तज्जलस्पर्शमात्रेण तिर्यग्वा शिवमाप्नुयात् ॥ ३९

यथा पुरा पतङ्गस्तु शाखालम्बी च व्याधतः।
तत्तीर्थवारिसंस्पृष्टः कैलासं प्राप्तवान् खगः ॥ ४०

इति अष्टमोऽध्यायः

## ॥ अथ नवमोऽध्यायः ॥

शौनकः -

सूत सर्वज्ञ मे ब्रूहि शाखालम्बी च व्याधतः।
तत्तीर्थजलसंस्पृष्टः पक्षी कश्चन कुत्रगः ॥ १

केन पापेन तज्जन्म कथं तत्तीर्थमागतः।
इत्युक्तो व्यासशिष्योऽपि सूतः पौराणिकोत्तमः ॥ २

वक्तुं प्रचक्रमे तीर्थमाहात्म्यं पापनाशनम्।
मध्यदेशे द्विजः कश्चित् ग्रामे कांपिल्यनामके ॥ ३

विद्वज्जनसमाकीर्णे चातुर्वर्णसमन्विते।
अग्निहोत्रपरैश्शान्तैर्धर्माधर्म विचक्षणैः ॥ ४

इतिहासपुराणज्ञैः स्मृतिज्ञैर्वेदपारगैः।
सम्भूय कुत्रचिद्देशे शिवं नत्वा च स द्विजः ॥ ५

सर्वशास्त्रार्थसम्पन्नो वेदवेदाङ्गपारगः।
निर्धनो बहुपुत्राढ्यः सदाचारविवर्जितः ॥ ६

विहाय सर्वकर्माणि सदा स्वोदरपूरकः।
धारापूर्वं ददात्यद्धा गङ्गास्नानमतन्द्रितः ॥ ७

नाम्ना गङ्गाधरः पापी भृतकाध्यापको ह्यभूत्।
षोडशान्नं च प्रेतान्नं प्रेतवस्त्रं निरन्तरम्॥ ८

रुद्राक्षमालिकाः पापी विक्रेता नित्यमेव तु।
भूतिनाभ्यादिविक्रेता शिवनिन्दापुरस्सरः ॥ ९

विष्णुभक्तोऽहमित्युक्त्वा वैष्णवानां सभासु च।
शैवोत्तमसभायां च तेभ्यस्सङ्गृह्य वित्तकम्॥ १०

कुटुम्बपोषको भूत्वा मिथ्यावादपरायणः।
इत्थं वै वर्तमाने तु शिवरात्रिस्समागमत्॥ ११

स्वोदरम्भरणासक्तः शिवनाभं प्रपूजयेत्।
शिवालये तु तत्रत्या ह्येनं विप्रोत्तमं विदुः ॥ १२

सर्वशास्त्रार्थसम्पन्नः शिवभक्तिपरायणः।
तत्र सर्वे मुनिश्रेष्ठाः समाहूय परस्परम्॥ १३

तं दृष्ट्वा भक्तिसंयुक्तास्तत्रत्याश्च धनादिकैः ।
अर्चयामासुरेनं ते तत्र कश्चिद् द्विजोत्तमः ॥ १४

विश्वेशो नाम सर्वज्ञो वेदस्मृतिविचक्षणः ।
निकरं शिवनाभानां दृष्ट्वा चैवोत्तमोत्तमम् ॥ १५

अदृष्टपूर्वं कुत्रापि शिवभक्तिपरायणः ।
विक्रेतारमयोग्यं च स ज्ञात्वा तमयाचत ॥ १६

द्विजश्रेष्ठ महाभाग शिवभक्तिपरायण ।
याचमानाय मे देहि शिवनाभवरं शुभम् ॥ १७

शिवरात्रौ प्रदानेन शिव एव भविष्यसि ।
अशीतिवर्षवृद्धोऽहं पूजितं नित्यमेव तु ॥ १८

मम नाभं पूर्वदिने चोरग्रस्तमभूद् द्विज ।
शिवनाभविहीना या कृता पूजा तु निष्फला ॥ १९

तस्मात् तु शिवनाभं मे प्रदातुं त्वमिहार्हसि ।
दत्वा द्रव्यं विप्रमुखाद्यो गृह्णाति च सोऽसुरः ॥ २०

यो नाभिपूजया हीनो भुङ्क्ते ह्येकदिनेऽपि वा ।
तदन्नं मांसतुल्यन्तु तज्जलं सुरया समम् ॥ २१

नाभिपूजनया हीनं तत् गृहं नाभिवर्धते ।
द्विपात्पशुस्स विज्ञेयो नाभिपूजनहीनकः ॥ २२

नाभिपूजनकर्तारं पूजयन्ति सुरासुराः ।
नित्यं नाभिं पूजयतश्शङ्करस्य द्विजोत्तम ॥ २३

वाञ्छन्ति तस्य संस्पर्शं ब्रह्मविष्णवर्कदेवताः ।
कोटयो ब्रह्महत्यानामगम्यागम कोटयः ॥ २४

दहत्यालोकमात्रेण शिवनाभस्य वै सकृत्।
नाभस्य पूजनफलं शिवो वेत्ति न चापरः ॥ २५

तस्मान्मे शिवनाभैकं ददस्व शिवसत्तम।
इत्युक्तः क्रोधताम्राक्षो दन्तान् कटकटापयन्॥ २६

द्विजाय तु न दास्यामि शिवनाभं विमुक्तिदम्।
वाचं ते क्षालय क्षिप्रं न दास्याम्यहमुत्तमम्॥ २७

शिवनाभप्रदातुश्च गतिर्नास्ति न संशयः।
तस्मादहं न दास्यामि शिवनाभं द्विजाधम॥ २८

एते मे सम्प्रदास्यन्ति धनानि च वसूनि च।
त्वं मे ददस्वेति वचो वृथा वदसि वै द्विज।
विक्रेताऽहं क्रयं दत्वा ग्राहयस्व शिवं द्विज॥ २९

दरिद्रस्य कुतः पापं दरिद्रस्य कुतो भयम्।
दरिद्रस्य कथं धर्मो दरिद्रस्य कुतः सुखम्॥ ३०

दरिद्रस्य कुतो मित्रं दरिद्रस्य कुतो दया।
दरिद्रस्य घृणा नास्ति दरिद्रस्य कुतो व्रतम्॥ ३१

तस्मान्न दास्ये ते शम्भुं येन केन प्रकारतः।
दत्वा धनं गृहीतव्यं नोचेत् गच्छ यथासुखम्॥ ३२

इत्युक्तः क्रोधताम्राक्षो दन्तान् कटकटापयन्।
किमर्थं क्षणिक देहाश्रितस्त्वं ब्राह्मणाधम॥ ३३

शिवनाभं विक्रीणीषे तेन द्रव्येण भुज्यते।
ये द्विजाश्शिवनाभं च गां वा पुस्तकमेव च॥ ३४

गङ्गास्नानफलं चैव सेतुस्नानफलं तथा।
शिवसेवाफलं वापि शिवरात्रिफलं तथा॥ ३५

प्रदोषसम्भवं पुण्यं सोमवारफलन्तु वा।
मासरात्रफलं चैव अन्यस्वं कारयन्ति च ।। ३६

श्वानत्वं च खरत्वं च सूकरत्वं च तत्तथा।
मर्कटत्वं तथा गृध्रशाखालम्बित्वमेव च ।। ३७

अवाप्य जातिकाकत्वं सर्वं नरकमण्डलम्।
अनुभूय क्रमेणैव शाखालम्बी ततः परम्।। ३८

शिवनाभिक्रयं यस्तु वाचाऽप्युद्धाटयन्नरः।
यश्शृणोति क्रयं तस्य शाखालम्बी ह् जायते ।। ३९

विक्रीय शिवनाभन्तु तेन द्रव्येण जीवति।
तदन्नं मलतुल्यं स्यात् तज्जलं मूत्रसन्निभम्।। ४०

तस्मात् गच्छस्व शीघ्रेण श्वानत्वं चैव काकताम्।
खरत्वं कुक्कटत्वं च गच्छ त्वं ब्राह्मणाधम ।। ४१

भजस्व चान्तिमत्वं च कावेर्या दक्षिणे तटे।
वटारण्येशसान्निध्ये वटशाखासमाश्रितः ।। ४२

पुत्रकामप्रदं नाम्ना तीर्थमस्ति द्विजाधम।
तस्योत्तरस्थन्यग्रोधे शाखामालम्ब्य संवस ।।

ततः कतिपये काले कश्चिद्व्याधस्समागतः।
स्वकुक्षिभरणार्थाय ह्यामिषार्थी जिघांसति ।। ४४

तत्तीर्थजलमध्ये त्वं पतिष्यसि न संशयः।
तज्जलस्पर्शमात्रेण शापभङ्गो भविष्यति ।। ४५

दिव्यदेहं समाश्रित्य दिव्याम्बरविभूषितः।
दिव्यं विमानमारुह्य दिव्यदेवैरभिष्टुतः ।। ४६

प्राप्नोषि शाम्भवं स्थानं पुनरावृत्तिवर्जितम्।
येन केन प्रकारेण शिवनाभं सुपूजितम्।। ४७

तेन ते भवति क्षेत्रवासश्च भुवि दुर्लभः।
तत्तीर्थजलसंस्पर्शः शिवरात्रौ सुपूजनात्।। ४८

तस्मिन् क्षेत्रे शिवदिने क्षणमात्रं वसेच्च यः।
स एव शिवसायुज्यं प्राप्नोति च न संशयः।। ४९

निमिषं निमिषार्धं वा शिवरात्रौ शिवालये।
यो वसेत्तं सुरश्रेष्ठाः पूजयन्ति न संशयः।। ५०

तस्मात् क्षेत्रालये पुण्यतीर्थे वा गुरुसद्मनि।
शिवरात्रौ क्षणं वासान्निशि मुक्तो न संशयः।। ५१

तस्मात् क्षेत्रालये वाञ्छ शिवरात्रौ यतो निशि।
शिवस्थाने निवासश्च शिव एव न संशयः।। ५२

इत्युक्तस्स द्विजः पापी त्रपानम्रो बभूव हि।
गच्छमानो बहिर्देशे चोरग्रस्तोऽभवदा।। ५३

हृतं सर्वं नाभजालं स्वच्छन्दादेव ते गताः।
तैर्वध्यमानो विप्रोऽपि पञ्चत्वं समुपागतः।। ५४

अनुभूय महाघोरान् नरकानेकविंशतिम्।
श्वानत्वादि समस्तं च दुर्योनित्वं ययौ द्विजः।। ५६

अन्तिमे जन्मनि तथा शाखालम्बित्वमासवान्।
पुत्रकामप्रदे तीर्थ कूले शाखासमाश्रितः।। ५६

तदामिषार्थी व्याधश्च कश्चिद्गहनगोचरः।
धनुर्बाणधरः पापी शाखालम्बनमाहनत्।। ५७

हन्यमानोऽपतत्तीर्थे शाखालम्बी ह शौनक ।
विमानवरमारुह्य शिवलोकं ययौ तदा ॥ ५८

एतादृशोऽयं महिमा तीर्थस्य किल शौनक ।
पठेच्छृणोति सद्भक्त्या शिवो भवति नान्यथा ॥ ५९

इति नवमोध्यायः ॥

* * *

## ॥ अथ दशमाध्यायः ॥

सूतः -

यः स्नाति सिद्धतीर्थे तु मनोभीष्टं च विन्दति ।
पुरा किल महेन्द्रस्तु निश्रीकः ऋषिशापतः ॥ १

वटारण्यमनुप्राप्य पुत्रकामप्रदे शुभे ।
स्नात्वा भक्तिसमायुक्तः पञ्चाक्षरपरायणः ॥ २

दत्वा दानानि विप्रेभ्यः षोडशापि महामतिः ।
गुरुप्रसादात्तीर्थस्य स्नानाद्दानाच्च शौनक ॥ ३

शम्भोरनुग्रहाच्चापि महदैश्वर्यमाप्तवान् ।
सिद्धगन्धर्वसाध्यैश्च किन्नरैरपि संयुतः ॥ ४

अप्सरोभिस्सुताद्यैश्च ऋषिभिश्च समन्वितः ।
वसुभिश्चैव दिक्पालैः पार्षदैर्वाहनादिभिः ॥ ५

वटारण्येश्वरं नत्वा तत्तीर्थस्नानपूर्वकम् ।
वटप्रदक्षिणं कृत्वा पञ्चाक्षरजपं चरन् ॥ ६

भूत्यलङ्कृतगात्रश्च रुद्राक्षाभरणैर्युतः ।
शिवसङ्कीर्तनश्चैव सम्प्रणम्य वटेश्वरम् ॥ ७

वैशाखे मेषगे भानौ शुक्लपक्षे शुभावहे ।
ध्वजमारोप्य देवस्य बोधायनविधानतः ॥ ८

सायं प्रातः प्रतिदिनं वाहनांदोलिकादिभिः ।
माषापूपादिकैश्चापि तथा चित्रान्नकैरपि ।। ९

दध्यन्नैश्चित्रशाकैश्च खाद्यैश्चैव रसायनैः ।
लड्डुकैस्सत्फलाद्यैश्च ताम्बूलैस्समपूजयत् ।। १०

शम्भुनैवेद्यशेषेण शाम्भवान् समपूजयत् ।
एवमष्टदिनं कृत्वा शङ्करस्य महात्मनः ।। ११

देवेन्द्रो देवदेवस्य यथावन्नवमेऽहनि ।
रथोत्सवं तथा चक्रे दिव्यरत्नसमन्वितम् ।। १२

चित्रध्वजपताकैश्च नन्दिनागसमन्वितम् ।
शम्भोश्चिह्नसमायुक्तं नवरत्न विचित्रितम् ।। १३

नानावस्त्रसमायुक्तं नानादामविभूषितम् ।
रत्नस्तंभसहस्राढ्यं चतुर्द्वारोपशोभितम् ।। १४

रत्नपुत्तलिकायुक्तं रशनादामभूषितम् ।
पूगेक्षुकदलीस्तंभनारिकेल समन्वितम् ।। १५

नानाफल समायुक्तं नानावाद्यविभूषितम् ।
स्वर्णदात्यूहनिकरचक्रवाकोपशोभितम् ।। १६

सिंहशार्दूलचित्राढ्यं रत्नदीपायुतैर्वृतम् ।
मल्लिकामालतीजातीयूथिकासुमशोभितम् ।। १७

चामरव्यजनोपेतं प्रभामण्डलशोभितम् ।
देवदेवं जगन्नाथं त्रिलोचनमुमापतिम् ।। १८

चिदानन्दरसं पूर्णं ब्रह्मेन्द्रसुरपूजितम् ।
तस्मिन् रथे समारोप्य मुनिबृन्दसमन्वितः ।। १९

वेदघोषसमायुक्तं सुरबृन्दसमन्वितः ।
चकार विधिवद्दैवमभिषेकमुमापतेः ।। २०

तथैव पूर्णिमायान्तु वैशाख्यां दशमे दिने।
वृषवाहं समुद्वाह्य सुरबृन्दसमन्वितः ॥ २१
वेदघोषसमायुक्तश्चाप्सरोगणसेवितः।
उत्सवावभृथं चक्रे गङ्गास्नानयुतं फलम् ॥ २२
पुत्रकामप्रदे तीर्थे शिवभक्त्या शतक्रतुः।
तत्काले ये नराःस्नान्ति ते धन्या नात्र संशयः ॥ २३
पौण्डरीकाश्वमेधादिकोटियज्ञफलं विदुः।
सुरा भवन्ति कैलासं प्राप्नुवन्तीह सम्पदः ॥ २४
एवं त्ववभृथं कृत्वा भोजयामास वै द्विजान्।
वस्त्राभरणजालैश्च पूजयामास वै द्विजान् ॥ २५
इत्थं महोत्सवं शम्भोः कृत्वा भक्तिसमन्वितः।
प्राकारगोपुराराममण्डलादीनि शौनक ॥ २६
कृतानि पावनादीनि शम्भोराभरणानि च।
वस्त्राणि देवदेवस्य रत्नानि विविधानि च ॥ १७
पुरं च निर्ममे तत्र नित्योत्सवमथाचरत्।
वटारण्यपतिं शम्भुं पुत्रकामेश्वरम् प्रभुम् ॥ १८
देवदेवमनुज्ञाप्य ययौ स्वर्गं शतक्रतुः।
अदृश्योऽद्यापि चागत्य चैत्रोत्सवदिदृक्षया ॥ १९
दृष्ट्वा दिव्योत्सवं शम्भोः निवृत्य पुरमेष्यति।
ये नरा शिवभक्ताश्च वटारण्येश्वरं प्रभुम् ॥ ३०
पूजादिकं प्रकुर्वन्ति तेषां वासस्त्रिविष्टपे।
य उत्सवस्य निर्वाही स देवो नात्र संशयः ॥ ३१
द्रष्टुमिच्छन्ति ये मर्त्या इन्द्रोत्सवमघापहम्।
तेषामपि च कैलासे वासः स्यान्नात्र संशयः ॥ ३२

श्रीशैलाद्धाटकस्थानात् गोकर्णान्मधुरापुरात् ।
ब्रह्मेश्वराज्जटानाथात् काशीक्षेत्राच्चिदम्बरात् ।। ३३

केदाराच्च गजस्थानात् शिवकाञ्चीमहापुरात् ।
चम्पकाद्विपिनाच्चैव वृद्धकाशीपुरादपि ।। ३४

छायावनात् प्रपन्नार्तिहरस्थानाच्च शङ्कर ।
हरिशङ्करसंस्थानात् बदरीविपिनादपि ।। ३५

ऋषयश्च महात्मानः शिवपूजापरायणाः ।
वटारण्यमनुप्राप्य दृष्ट्वा तत्क्षेत्र वैभवम् ।। ३६

तत्रैव वासं चक्रुस्ते एवमेव सुरा अपि ।
न तत्क्षेत्रसमं भूमौ विद्यते शाङ्करं स्थलम् ।। ३७

तत्तीर्थसदृशं तीर्थं मनोभीष्टप्रदापने ।
शैवसारं महाक्षेत्रं वटारण्यं न संशयः ।। ३८

निमिषं निमिषार्द्धं वा वटारण्ये वसन्ति ये ।
ते धन्या नात्र सन्देहस्सत्यं सत्यं हि शौनक ।। ३९

भूमौ पुण्यप्रदान्यद्धा वटारण्यसमानि नो ।
वटारण्येश्वरे मर्त्यस्सकृत्स्मरणमात्रतः ।। ४०

ब्रह्मघ्नो वा सुरापो वा स्वर्णस्तेयी च पापकृत् ।
वटतीर्थं वटारण्यपतिं यस्तु परिक्रमेत् ।। ४१

भूप्रदक्षिणजं पुण्यं प्राप्नोति न च संशयः ।
नित्यं यस्तु वटारण्यपतिं सन्ध्यामुखे शिवम् ।। ४२

यः पूजयति सद्भक्त्या स मुक्तो नात्र संशयः ।
व्याजेनापि वटारण्यपतिं शम्भुं प्रसेवते ।।
सार्वभौमो भवेत् भूमौ कीर्तिं मङ्गलमाप्नुयात् ।। ४३

— इति दशमोऽध्यायः —

## अथैकादशाध्यायः ।

अथातस्सम्प्रवक्ष्यामि तीर्थमाहात्म्यमुत्तमम् ।
यस्य स्मरणमात्रेण सर्वपापैः प्रमुच्यते ॥ १

पुत्रकामप्रदं तीर्थं सर्वकामफलप्रदम् ।
तीर्थमस्ति महापुण्यं जगद्दुरितनाशनम् ॥ २

पातालगङ्गासंज्ञं च स्मृतमात्रेण कीर्तितम् ।
पुरा भागीरथी गङ्गा सर्वलोकैकपावनी ॥ ३

विरिञ्चिलोकं सम्प्राप्य ववन्दे चतुराननम् ।
देवदेव जगन्नाथ प्रणतार्तिहार प्रभो ॥ ४

मयि स्नात्वा पापयुक्ता नरा गच्छन्त्यकल्मषाः ।
तेषां पापैश्च लिप्तास्मि निष्कृतिं वद भो मम ॥ ५

तद्वदस्वाधुना देव त्वद्भक्ताऽहं मम प्रभो ।
घृणानिधिर्यतस्त्वं हि रक्षस्व शरणागताम् ॥ ६

इत्युक्तः कञ्जजो ध्यात्वा मुहूर्तं दैवतैस्सह ।
पुळकाङ्कितसर्वाङ्गो गङ्गां प्रोवाच शौनक ॥ ७

गच्छ देवि महाभागे भूमौ पापहरं शुभम् ।
शिवस्थानं महापुण्यं सर्वमङ्गलदायकम् ॥ ८

पुत्रकामप्रदे देवि स्नात्वा नियतमानसा ।
त्वद्रूपतीर्थपयसा वटारण्येश्वरं शिवम् ॥ ९

अभिषेकं प्रकुर्वन्ती तेन त्वं हतकिल्बिषा ।
इत्युक्ता सा त्रिपथगा वटारण्यस्थलं ययौ ॥ १०

पुत्रकामप्रदे स्नात्वा जाह्नवी लोकपावनी ।
प्रवाहरूपा सा गङ्गा स्नपयामास शङ्करम् ॥ ११

तदाप्रभृति तत्तीर्थं पवित्रं पुण्यदायकम्।
पातालगङ्गासंज्ञं च महापातकनाशनम्।। ११

ज्येष्ठमूले तु ये तत्र स्नानं कुर्वन्ति वै नराः।
कृष्णाङ्गारचतुर्दश्यां मेषमासे भृगोर्दिने।। २३

कार्तिके सोमवारे वा स्नानकृच्छिवमाप्नुयात्।
स्नानकाले गुहं तीर्थरक्षकं मनसा स्मरेत्।। २४

ध्यात्वा वटेश्वरं शम्भुं देवतात्वेन भावयेत्।
भैरवं तीर्थमध्यस्थं नत्वा स्नात्वा ततः परम्।। २५

न्यग्रोधतरुमूले तु दानं दद्याद्यथोचितम्।
अन्नं दधि पयः सर्वं कललं कनकं तथा।। १६

सर्वाभावे धेनुदानं दातव्यं चेष्टसिद्धये।
तस्य दक्षिणदिग्भागे तीर्थं मङ्गलदायकम्।। १७

वटारण्यपतेः शम्भोराग्नेय्यां नातिदूरतः।
तीर्थमस्ति महापुण्यं बहुकल्मषनाशनम्।। १८

कश्यपस्तु पुरासर्गे पुरा किल शिवस्थलम्।
वटारण्यं तदा प्राप्य देवदेवमुमापतिम्।। १९

नत्वा स्नात्वा वटं चैव तीर्थे स्नात्वा सुभक्तितः।
प्रजासर्गं ततश्चक्रे तत्तीर्थस्नानमात्रतः।। २०

मनोऽभीष्टमवाप्नोति नात्र कार्या विचारणा।
बिल्बो वृक्ष ऋषिर्ब्रह्मा वटेशस्तीर्थदेवता।। २१

नन्दीश्वरस्तीर्थपालः स्नानकाले तु शौनक।
एतान्नत्वा ततो दानमाचरेन्मधुसर्पिषी।। २२

गजदानं च गोदानं मुक्तादानं विशेषतः।
तस्य तीर्थस्य पूर्वे तु बाणत्रयविदूरतः।। २३

शमीतीर्थमिति ख्यातं दुर्लभं भुवनत्रये।
पाण्डवास्तु पुरा कृष्णप्रेरिताः शंकरस्थलम्॥ २४
दुर्योधनवधार्थाय मुकुलाम्बापतिं शिवम्।
प्रणम्य कृष्णस्तुत्या च शमीतीर्थेऽतिपावने॥ २५
स्नात्वा सुयोधनवधं चक्रुर्नात्रास्ति संशयः।
कृष्णेन निर्मितं तीर्थं शमीसंज्ञं मनोहरम्॥ २६
द्रुहिणो ह्यधिदेवः स्यादेतान्नत्वा च शौनक।
नवरत्नं वृषं दासीं कन्यां तत्र प्रदापयेत्॥ २७
शमीवृक्षस्य मूले तु कृतं यदणुमात्रकम्।
मेरुमन्दरतुल्यं स्यान्नात्र कार्या विचारणा॥ २८
मार्गशीर्षे च सप्तम्यां रविवारो यदा भवेत्।
शुक्लपक्षे विशेषेण तस्मिन् स्नात्वा च शौनक॥ २९
पञ्चपापैः प्रमुच्येत तथाऽभक्ष्यस्य भक्षणात्।
वटारण्यपतेश्शम्भोरुत्तरे तीर्थमुत्तमम्॥ ३०
वर्तते पापनाशाख्यं महामङ्गलदायकम्।
सूर्योदयं समारभ्य यः कुर्यात् स्नानमञ्जसा॥ ३१
स्वर्णस्तेयादिपापैश्च गोहत्याद्युपपातकैः।
मुच्यते नात्र सन्देहस्सत्यं सत्यं न संशयः॥ ३२
दुरन्नभक्षणात् पापात् दुर्दानस्य प्रतिग्रहात्।
पुण्यविक्रयपापाच्च मुच्यते नात्र संशयः॥ ३३
यो नित्यमाचरेत् स्नानं पापनाशनसंज्ञिते।
त्रिकुलं त्रायते ब्रह्मन् सर्वपापात् प्रमुच्यते॥ ३४
शुक्रभौमार्कवारेषु पर्वणोस्संक्रमेषु च।
शम्भुरात्रिदिने मर्त्यस्तत्र स्नानेन शुध्यति॥ ३५

विषुवायनसत्पुण्यदिने स्नानाद्विशुध्यति ।
देवता तस्य वृक्षस्य वटारण्येश्वरः प्रभुः ॥ ३६
देवता भार्गव ऋषिर्भृंगी तत्तीर्थरक्षकः ।
प्रणम्यैतान्महाभागान् स्नानं तत्र समाचरेत् ॥ ३७
कन्यां हयं च नाभं च रुद्राक्षान् भूतिमेव च ।
तैलं लोहं माहिषं च घृतं रत्नानि दक्षिणाम् ॥ ३८
ताम्बूलं च घटं दद्यात्सर्वाभीष्टाप्तये नरः ।
वटारण्यपतेश्शम्भोः पश्चिमे नातिदूरतः ॥ ३९
शक्तितीर्थं महापुण्यं सर्वशक्तिप्रदं नृणाम् ।
निर्मितं वटनाथेन गुहशक्तिविवृद्धये ॥ ४०
पञ्चपातकसंहारकारणं भूतिदायकम् ।
कलिदोषहरं पुण्यं महापातकनाशनम् ॥ ४१
अघोरो देवता तस्य चण्डेशस्तीर्थरक्षकः ।
भास्करो ह्यधिदेवः स्यात् स्मृत्वा स्नानं समाचरेत् ॥ ४२
महिषीं मृत्युहारीं च तिलान् धेनुं पयो दधि ।
फलानि तत्र दत्वा तु पञ्चाक्षरमनुं जपेत् ॥ ४३
श्रीवृक्षस्तत्र विज्ञेयस्तन्मूले किल नारद ।
वैशाखे शुक्लपक्षे तु तृतीयां तु शौनक ॥ ४४
तत्तीर्थस्नानमात्रेण मुच्यते सर्वपातकैः ।
कर्णाङ्गहीनो यो मर्त्यो बधिरः काण एव च ॥ ४५
तत्तीर्थस्नानमात्रेण साङ्गो भवति मानवः ।
श्रियं कीर्तिं पशून् पुत्रान् प्राप्नोति स्नानमात्रतः ॥ ४६
वायव्यदेशे देवस्य बाणमात्रे सुपावनम् ।
तीर्थमस्ति महापुण्यं ज्ञानसंज्ञं शिवप्रदम् ॥ ४७

ज्ञानतीर्थे सकृत् स्नात्वा ज्ञानी भवति नान्यथा।
व्यासेन निर्मितं तत्तु ह्यज्ञानां ज्ञानदायकम्॥ ४८
यतस्तस्माच्च तत्तीर्थं व्यासतीर्थमिति स्मृतम्।
ध्येयः पञ्चमुखो रुद्रस्तस्मिन् तीर्थेऽतिपावने॥ ४९
ज्ञानार्थी ह्यधिदैवं च इन्द्रन्नत्वा ततः परम्।
ब्रह्माणं च ऋषिं ध्यात्वा स्नात्वा दानं समाचरेत्॥ ५०
नीपवृक्षस्य मूले तु सालग्रामं कमण्डलुम्।
दार्सीं दासंच शय्यां च वस्त्राणि तिलसर्पिषी॥ ५१
शिवलिङ्गं प्रदायापि अक्षमालास्तथैव च।
सर्वाभावे लिङ्गदानं सर्वदानफलं विदुः॥ ५२
चतुर्दश्यां कृष्णपक्षे ग्रहणे चन्द्रसूर्ययोः।
स्नात्वा लिङ्गप्रदानेन सत्ज्ञानं प्राप्नुयान्नरः॥ ५३
शिवरात्रौ सकृत् स्नात्वा शिवो भवति नान्यथा।
स्नात्वा तु कुजपंचम्यां रोगी रोगात् प्रमुच्यते॥ ५४
तस्मिन् तीर्थवरे स्नात्वा पुत्रान् पौत्रान् पशून् लभेत्।
सर्वाभीष्टमवाप्नोति सप्ततीर्थनिषेवणात्॥ ५५
एकस्मिन् दिवसे यस्तु शिवानुज्ञां प्रगृह्य च।
पुत्रकामप्रदे तीर्थे स्नात्वा नियतमानसः॥ ५६
कृत्वा प्रदक्षिणं भक्त्या न्यग्रोधस्य तु मानवः।
कृत्वा दीपं शालिपिष्टे देवदेवस्य सन्निधौ॥ ५७
तीर्थस्नानं क्रमात् कृत्वा शिवभक्तिसमन्वितः।
कोटियज्ञफलं पुण्यं भूप्रदक्षिणजं फलम्॥ ५८
कोटिकन्यादानफलं प्राप्नोति शिवमन्दिरम्।
सप्ततीर्थं महापुण्यं सप्तलोकप्रदायकम्॥ ५९

अनेन सदृशं लोके न भूतं न भविष्यति ।
एतद्व्यासात् श्रुतं पुण्यं तव चैव प्रकाशितम् ।। ६०
सकृत् श्रुत्वा वटारण्यवैभवं सकलार्थदम् ।
पौण्डरीकसहस्रस्य अश्वमेधशतस्य च ।। ६१
यत्फलं प्रोच्यते सद्भिस्तत्फलं श्रवणात्सकृत् ।
गोसहस्रप्रदातॄणां अन्नदानशतात्तथा ।। ६२
यत्फलं समवाप्नोति तत्फलं श्रवणाद्भवेत् ।
गङ्गासागरसङ्गे तु दुर्भिक्षे कोटिभोजनात् ।। ६३
तत्फलं लभते मर्त्यः माहात्म्यश्रवणात्सकृत् ।
लिखितं पुस्तकं यस्य गृहे तिष्ठति सर्वदा ।। ६४
यो दद्यात्पुस्तकं दानं वटारण्यसुवैभवम् ।
तस्य गेहे महालक्ष्मीर्वर्द्धते शुक्लचन्द्रवत् ।। ६५
नाभक्ताय प्रदातव्यं सुभक्ताय प्रदापयेत् ।
इत्येतद्वैभवं श्रुत्वा शौनकाद्या महर्षयः ।।
सूतं सर्वपुराणज्ञं पूजयामासुरंजसा ।। ६६

इति स्कान्दे महापुराणे क्षेत्रवैभव विस्तारे उपरिभागे
वटारण्यमाहात्म्ये एकादशोऽध्यायः ।

।। हरिः ओम् ।।

# श्रीकण्ठत्रिशतीनामावलिः

ऋषयः ऊचुः-

सूत सूत महाभाग सर्वशास्त्रविशारद।
रहस्यं श्रोतुमिच्छामो लोकानां मोक्षदायकम्॥ १

श्रीसूत उवाच—

शृणुध्वं मुनयः सर्वे सावधानेन चेतसा।
पुरा संप्रार्थिता गौरी कुमारेण महात्मना॥ २

यद्रहस्यमुवाचैतत् पुत्रस्नेहेन संयुता।
तदेवेदं महादेव्या नाम्नां त्रिशतमुत्तमम्॥ ३

गुरोः प्रसादाद् व्यासस्य पुरा भक्त्या मया श्रुतम्।
यथाश्रुतं प्रवक्ष्यामि सर्वलोकहिताय तत्॥ ४

ध्यानम्—

चन्द्रोपरिष्टात्संबद्ध पद्मासनविराजितम्।
चन्द्रवर्णं स्रवद्दिव्यामृतचन्द्रकलाधरम्॥ ५

योगमुद्राक्षसंबद्धाधरहस्तद्वयान्वितम्।
अमृतापूर्णकनककलशाक्षकरद्वयम्॥ ६

सोमसूर्याग्निनेत्रं च बद्धपिङ्गजटाधरम्।
नागाभरणसंभूषं नागयज्ञोपवीतिनम्॥ ७

व्याघ्रचर्माम्बरधरं देवं भक्तानुकम्पिनम्।
भस्मानुलेपितं रुद्रं मृत्युञ्जयमिमं नुमः॥ ८

श्री श्रीकण्ठाय नमः । महादेवाय । वृषकेतवे । महेश्वराय । मृत्युञ्जयाय । चन्द्रचूडाय । पार्वतीशाय । कपालभृते । अष्टमूर्तये । अनेकात्मने । त्रिणेत्राय । प्रमथाधिपाय । शिवाय । रुद्राय । विषधराय । मृडाय । शम्भवे । जटाधराय । भस्मोद्धूलितसर्वाङ्गाय । नागाभरण भूषिताय नमः । (२०)

व्याघ्रचर्माम्बरधराय । व्यालयज्ञोपवीतवते । रुद्राक्षमालाभरणाय । त्रिपुण्डाङ्कितमस्तकाय । शुद्धस्फटिक-संकाशाय । केतकीशापदायकाय । गङ्गाधराय । वृषारूढाय । शूलपाणये । शिवाप्रियाय । पञ्चवक्त्राय । दशभुजाय । सच्चिदानन्दविग्रहाय । मदनारये । कालकालाय । दक्षाध्वरहराय । अव्ययाय । सद्योजाताय । वामदेवाय । गिरिशाय नमः (४०)

नीललोहिताय नमः । अघोरमूर्तये । ईशानाय । उग्राय । तत्पुरुषाय । हराय । दिगम्बराय । रामपूज्याय । व्योमकेशाय । नटेश्वराय । जलन्धरारये । अव्यक्ताय । त्रिपुरारये । गणेश्वराय । पिनाकिने । मेरुकोदण्डाय । कपर्दिने । गजचर्मवते । कुमारजनकाय । भर्गाय नमः (६०)

भूरथाय नमः । भक्तवत्सलाय । कल्याणसुन्दराय । शर्वाय । भवाय । भीमाय । भयापहाय । विष्णुचक्रप्रदात्रे । दारुकारण्य संश्रिताय । अन्धकारये । विरूपाक्षाय । कङ्कालाय । विष्णुवल्लभाय । ऊर्ध्वरेतसे । गजारातये । वेदाश्वाय । ब्रह्मसारथये । शूराय । पशुपतये । स्थाणवे नमः ।। ८०

सूर्यचन्द्राग्निलोचनाय । कैलासवासिने । भीमेशाय । दक्षिणामूर्तये । ईश्वराय । विघ्नेशवरदाय । श्रीमते । शाश्वताय । तारकेश्वराय । गणेशताताय । शान्तात्मने । निर्मलाय । निरुपद्रवाय । निरामयाय । निरालम्बाय । निर्ममाय ।

नित्यवैभवाय। निर्गुणाय। निष्कलाय। नित्याय नमः। (१००)

निर्वैराय नमः । नीतिपारगाय । निरञ्जनाय । नित्यशुद्धाय। निस्सङ्गाय । निर्मलात्मकाय । विश्वेश्वराय । वीरभद्राय। भैरवाय। भाग्यदायकाय। भूतेश्वराय। महाकालाय। चण्डिकेशवरप्रदाय। अनन्तगुणगम्भीराय। मार्कण्डेयवरप्रदाय। संहारकृते। महायोगिने। वज्रदेहाय। दुर्जयाय। निराकाराय नमः (१२०)

नित्यतुष्टाय नमः । निष्कामाय । नागकुण्डलाय । निष्पापाय। नागवलयाय। कार्यत्रयविधायकाय। ऊर्ध्वकेशाय। चारुहासाय । विष्णुब्रह्मेन्द्रवन्दिताय । नागेन्द्रहाराय । फालाक्षाय। वरदाय। विश्वरूपधृते। विश्वरक्षाय। परब्रह्मणे। शिपिविष्टाय । चिरन्तनाय । पूज्याय । ब्रह्मशिरश्छेत्रे । मन्दराद्रिस्थिताय नमः (१४०)

प्रभवे नमः । निगमागमसंवेद्याय । त्रिगुणात्मने । त्रयीतनवे। अर्धनारये। हरिहराय। महालिङ्गोद्भवाय। महते। वासुकीज्याय । शिवतराय । शरभाय । अनन्तरूपधृते । कृत्तिवाससे । बाणपूज्याय । मृगधारिणे । सनातनाय । अनाहताब्जपीठस्थाय। श्रेष्ठाय। कलिविनाशनाय। नववीरपित्रे नमः। १६०

शुद्धाय नमः। भगवते। बन्धमोचकाय। सतीकान्ताय। जगत्पूज्याय । हरिकेशाय । शुभप्रदाय । कालाग्निरुद्राय । विश्वात्मने। नन्दीशाय। भगनेत्रहृते। त्र्यम्बकाय। खण्डपरशवे। शङ्कराय। भूतवाहनाय। सामप्रियाय। स्वरमयाय। कठोराय। पापनाशनाय। हिरण्यरेतसे नमः (१८०)

दुर्धर्षाय नमः । जगद्व्यापिने । सदाशिवाय । नीलकण्ठाय । विषहराय । सहस्राक्षाय । सहस्रपदे । सहस्रशीर्षाय । पुरुषाय । तारकाय । परमेश्वराय । ओङ्काररूपाय । सर्वज्ञाय । धूर्जटये । पूषदन्तभिदे । चैतन्यरूपाय । धर्मात्मने । जगदाधारमूर्तिमते । कुबेरमित्राय । चिद्रूपाय नमः (२००)

चिन्मयाय नमः । जगदीश्वराय । सत्यव्रताय । सत्यशीलाय । सत्यात्मने । विश्वतोमुखाय । पृथ्वीरूपाय । तोयरूपाय । तेजोरूपाय । अनिलात्मकाय । नभोरूपाय । सूर्यरूपाय । चन्द्ररूपाय । महाबलाय । ब्रह्मण्याय । यजमानात्मने । रुण्डमालाविभूषिताय । अणोरणुतराय । सूक्ष्माय । स्थूलाय नमः (२२०)

स्थूलतराय नमः । शुचये । किरातरूपाय । भिक्षाटाय । कुण्डोदरवरप्रदाय । हालास्यनाथाय । गिरीशाय । महात्मने । माधवप्रियाय । यज्ञप्रियाय । यज्ञरूपाय । परस्मैज्योतिषे । परात्पराय । भवरोगहराय । धीराय । तेजस्विने । मोहिनीप्रियाय । कृशानुरेतसे । धर्मज्ञाय । मुनिवन्द्याय नमः (२४०)

स्तुतिप्रियाय नमः । कामेश्वराय । विराड्रूपाय । कामरूपाय । कलानिधये । सभापतये । नादरूपाय । दहराकाशगाय । परस्मै । भृङ्गिनाट्यप्रियाय । देवाय । भस्मासुरवरप्रदाय । अहिर्बुध्न्याय । भटाक्षीराय । सोमास्कन्दाय । जयिने । विभवे । चण्डकोपिने । जगद्रक्षाय । निषङ्गिणे नमः ।। (२६०)

क्षेत्रपालकाय नमः । खट्वाङ्गिने । शास्तृजनकाय । साम्बमूर्तये । दृगायुधाय । चराचरात्मकाय । कालनियन्त्रे । अजाय । वृषाकपये । अनादिनिधनाय । दान्ताय । विधात्रे ।

लिङ्गरूपभृते। घोटिकाय। प्रणवान्तःस्थाय। पार्थपाशुपतास्त्रदाय। अपस्मारशिरोनृत्यते। विष्णुनेत्राब्जपूजिताय। कवचिने। पुष्पवच्चक्षुषे नमः (२८०)

विष्णुबाणाय। अजैकपदे। रेरिहाणाय। टङ्कधराय। पञ्चविंशतिरूपवते। शतरुद्रस्वरूपाढ्याय। श्मशानस्थाय। अस्थिभूषणाय। नादबिन्दुकलातीताय। नामतारकमन्त्रदाय। एकादशात्मने। लोकेशाय। भूतभव्यभवत्प्रभवे। पञ्चब्रह्मस्वरूपाय। घण्टाकर्णप्रपूजिताय। राजराजेन्द्रवरदाय। वेदात्मने। बिल्वकेश्वराय। कृष्णपुत्रप्रदात्रे। करुणारससागराय नमः (३००) नमो नीलकण्ठाय नमः। (ब्रह्माण्ड पुराणतः)

## मृत्युञ्जय चतुःषष्टिनामावलिः

मृत्युञ्जयाय नमः। नीलकण्ठाय। महादेवाय। शङ्कराय। उग्राय। पिनाकिने। भीमाय। पशुपतये। शूलपाणये। कपर्दिने। वृषभध्वजाय। पार्वतीप्रियाय। अरूपाय। अम्बिकापतये। स्थाणवे। रुद्राय। कैलासवासिने। अमृतमृत्युञ्जयाय। गङ्गाधराय। कृपानिधये नमः (२०)

नित्याय नमः। निर्मलाय। कालान्तकाय। निष्कारणाय। भक्तिप्रियाय। हृदयकमलवासिने। निर्वाच्याय। निर्गुणाय। चन्द्रसूर्याग्निलोचनाय। निरवधये। पाशधराय। फालनेत्राय। उमामहेश्वराय। वामदेवाय। चन्द्रवर्णस्वरूपाय। पूर्णकलशधराय। नागाभरणभूषिताय। चन्द्रशेखराय। तत्वस्वरूपाय। नृत्तस्वरूपाय नमः ॥ ४०

भिक्षाटनाय नमः। कामारये। जलन्धरहराय। पिनाकिने। विरूपाक्षाय। कठोराय। अजाय। पाशविमोचनाय। गिरीशाय। अनघाय। अव्ययाय। हरये। भर्गाय। गिरिधन्वने। कृत्तिवाससे। हरोद्धाय । श्रीवृक्षस्वरूपाय । मुक्तिसादाख्यस्वरूपाय । शिवसादाख्य स्वरूपाय। मूर्तिसादाख्य स्वरूपाय। कर्तृसादाख्य स्वरूपाय। कर्मसादाख्यस्वरूपाय। शिवशक्तिस्वरूपाय। ओं जुं सः महामृत्युञ्जयाय नमः (६४)

## शिवाष्टनामानि।

शिवो महेश्वरश्चैव रुद्रो विष्णुः पितामहः।
संसारवैद्यः सर्वज्ञः परमात्मेति चाष्टकम्॥

शिवाय नमः। महेश्वराय। रुद्राय। विष्णवे। पितामहाय। संसारवैद्याय। सर्वज्ञाय। परमात्मने नमः।

शर्वाय क्षितिमूर्तये नमः। भवाय जलमूर्तये नमः। रुद्राय तेजोमूर्तये नमः। उग्राय वायुमूर्तये नमः। भीमाय आकाशमूर्तये नमः। पशुपतये यजमानमूर्तये नमः। ईशानाय सूर्यमूर्तये नमः। महादेवाय सोममूर्तये नमः।

सर्वज्ञाय नमः। उग्राय। शङ्कराय। शिवाय। शम्भवे। ईशानाय। महोग्राय। भूताधिपतये नमः।

## महादेवाद्येकादशरुद्राः

महादेवाः शिवो (हरो) रुद्रः शङ्करो नीललोहितः।

ईशानो विजयो भीमा देवदेवो भवोद्भवः।

कपाली चेति विज्ञेया रुद्रा एकादशाभिधाः।

महादेवाय नमः । शिवाय (हराय) । रुद्राय । शङ्कराय । नीललोहिताय । ईशानाय । विजयाय । भीमाय । देवदेवाय । भवोद्भवाय । कपालिने नमः ।

## मृत्युञ्जयाष्टादशनामावलिः

महेश्वराय नमः । ईश्वराय । कामरूपाय । हराय । त्रिपुरान्तकाय । भवाय । गङ्गाधराय । महादेवाय । पशुपतये । पिनाकिने । शिवाय । शितिकण्ठाय । विरूपाक्षाय । त्रिणेत्राय । रुद्राय । शर्वाय । चन्द्रमौलये । ओं जुं सः मृत्युञ्जयाय नमः ॥ (१८)

## महादेवादि द्वादशनामानि

महादेवो महेशानः शङ्करो वृषभध्वजः ।
शूलपाणिः कामहन्ता श्रीकण्ठः पार्वतीप्रियः ।
ईश्वरश्च शिवो रुद्रो देवदेवश्च द्वादश ।

## वेदोक्तानि एकादश नामानि ।

वामदेवाय नमः । ज्येष्ठाय नमः । श्रेष्ठाय नमः । रुद्राय नमः । कालाय नमः । कलविकरणाय नमः । बलविकरणाय नमः । बलाय नमः । बलप्रमथनाय नमः । सर्वभूतदमनाय नमः । मनोन्मनाय नमः ।

## पञ्चनामानि

सद्योजाताय नमः । वामदेवाय नमः । अघोराय नमः । तत्पुरुषाय नमः । ईशानाय नमः ।

## मृत्युञ्जयाष्टोत्तरशतनामावलिः ।

शान्ताय नमः । भर्गाय । कैवल्यजनकाय । पुरुषोत्तमाय । आत्मरम्याय । निरालम्बाय । पूर्वजाय । शम्भवे । निरवद्याय । धर्मिष्ठाय । आद्याय । कात्यायनीप्रियाय । त्र्यम्बकाय । सर्वज्ञाय । वेद्याय । गायत्रीवल्लभाय । हरिकेशाय । विभवे । तेजसे । त्रिणेत्राय नमः (२०)

विदुत्तमाय नमः । सद्योजाताय । सुवेषाढ्याय । कालकूटविषाशनाय । अन्धकासुरसंहर्त्रे । कालकालाय । मृत्युञ्जयाय । परमसिद्धाय । परमेश्वराय । मृकण्डुसूनुनेत्रे । जाह्नवीधारणाय । प्रभवे । अनाथनाथाय । तरुणाय । शिवाय । सिद्धाय । धनुर्धराय । अन्त्यकालाधिपाय । सौम्याय । बालाय नमः (४०)

त्रिविष्टपाय नमः । अनादिनिधनाय । नागहस्ताय । खट्वाङ्गधारकाय । वरदाभयहस्ताय । एकाकिने । निर्मलाय । महते । शरण्याय । वरेण्याय । सुबाहवे । महाबल पराक्रमाय । बिल्वकेशाय । व्यक्तवेदाय । स्थूलरूपिणे । वाङ्मयाय । शुद्धाय । शेषाय । लोकैकाध्यक्षाय । जगत्पतये नमः ।। ६०

अभयाय नमः । अमृतेशाय । करवीरप्रियाय । पद्मगर्भाय । परस्मै ज्योतिषे । नीरपाय । बुद्धिमते । आदिदेवाय । भव्याय । दक्षयज्ञविघाताय । मुनिप्रियाय । बीजाय । मृत्युसंहारकाय । भुवनेशाय । यज्ञगोप्त्रे । विरागवते । मृगहस्ताय । हराय । कूटस्थाय । मोक्षदायकाय नमः । ८०

आनन्दभरिताय नमः । पीताय । देवाय । सत्यप्रियाय । चित्रमायिने । निष्कलङ्काय । वर्णिने । अम्बिकापतये ।

कालपाशनिघाताय । कीर्तिस्तम्भाकृतये । जटाधराय । शूलपाणये। आगमाय । अभयप्रदाय । मृत्युसङ्घातकाय । श्रीदाय। प्राणसंरक्षणाय। गङ्गाधराय। सुशीताय। फालनेत्राय नमः (१००)

कृपाकराय नमः । नीलकण्ठाय । गौरीशाय । भस्मोद्धूलित-विग्रहाय। पुरन्दराय। शिष्टाय। वेदान्ताय। ओंजुः सः मूलकाय नमः ॥ (१०८)

## मृत्युञ्जयस्तोत्रम्

मृत्युञ्जयाय रुद्राय नीलकण्ठाय शम्भवे।
अमृतेशाय शर्वाय महादेवाय ते नमः ॥

कालेश्वरं महाकालं कालञ्जरनिवासिनम्।
कालकृत्कालवेत्तारं प्रणतोऽस्मि सदा शिवम्॥

नमस्ते बोधरूपाय कालान्तक नमोऽस्तु ते।
कालाधिप नमस्तेऽस्तु सर्वकालप्रवर्तक ॥

कलासकलरूपेण कलाभिर्विश्वरूपधृत्।
विश्वेश्वर नमस्तेऽस्तु आदिकालप्रवर्तक ॥

जय श्वेतनिमित्तोग्र मृत्युदेहनिपातन।
जयाशेषसुरावास काममोहित शैलज ॥

